


THE

# YAS'ASTILAKA

OF

## SOMADEVA SÛRI.

WITH THE COMMENTARY OF S'RUTADEVA SÛRI.

PART II.

EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA,
Head Paṇḍit and Superintendent, Sanskṛit Department,
Oriental College, Lahore,

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED
BY
TUKÂRÂM JÂVAJÎ,
PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S 'NIRṆAYA-SÂGARA' PRESS.
BOMBAY.

1903.

*Price 2¾ Rupees.*






काव्यमाला. ७०.

श्रीसोमदेवसूरिविरचितं

# यशस्तिलकम् ।

श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम् ।

## उत्तरखण्डम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादात्मज-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१९०३



मूल्यं २॥। रूप्यकाः ।




# काव्यमाला।

## श्रीसोमदेवसूरिविरचितं

## यशस्तिलकचम्पूकाव्यम्।

श्रीश्रुतसागरसूरिकृतया व्याख्यया समेतम्।

चतुर्थ आश्वासः।

श्रीमानस्ति समस्तवस्तुविषयव्यापारपारंगमः
पारेऽशेषतमःपयोधि कृतधीर्मध्येगुणाम्भोनिधिः।
किं चान्यद्भुवनत्रयस्य पतयो यस्मिन्नवाप्तोदये
जायन्ते प्रतिचारका इव पुरश्छत्रत्रयं बिभ्रतः॥ १॥

---

अथामृतमतिमहादेवीदुर्विलसनं नामाश्वासमारभमाणः श्रीसोमदेवभट्टारक आदिमङ्गलनिमित्तं श्रीमानित्याद्याह—**श्रीमानित्यादि**। अस्ति विद्यते। कोऽसौ। श्रीमान् अभ्युदयनिःश्रेयसलक्षणा श्रीः लक्ष्मीर्विद्यते यस्य स श्रीमान् असंभवद्बाधकप्रमाणत्वात् श्रीमद्भगवदर्हन् सर्वज्ञः वीतरागोऽस्ति विद्यते। एवं श्रीमानिति जिनसेनाचार्यकृतसहस्रनाममध्ये प्रथमं नाम गृहीत्वा नमस्कारमाह। श्रीमान् कथंभूतः। समस्तवस्तुविषयव्यापारपारंगमः समस्तानि समग्राणि च तानि वस्तूनि जीवाजीवाश्रवबन्धसंवरनिर्जरामोक्षपुण्यपापलक्षणा नवपदार्था इत्यर्थः, तेषां विषये व्यापारो गोचरत्वपरिज्ञानं तस्य पारंगमः पारं प्राप्तः। पारेऽशेषतमःपयोधि अशेषं समग्रं यत्तमोऽज्ञानं तदेव पयोधिः समुद्रोऽपर्यन्तत्वात् अशेषतमःपयोधिः, अशेषतमःपयोधेः पारे दूरवर्ती पारेऽशेषतमःपयोधि। 'पारेमध्येऽग्रतः षष्ठ्या वा' इत्यनेन सूत्रेण अव्ययीभावसमासः। 'सनपुंसकलिङ्गं स्यात्' इति वचनान्नपुंसकत्वम्। पुनः कथंभूतः। कृतधीः कृतं पुण्यं सद्वेद्यशुभायुर्नाम गोत्रलक्षणं तस्मिन् धीर्बुद्धिर्यस्य स कृतधीः। पूर्वजन्मोपार्जिततीर्थंकरनामेत्यर्थः। पुनः कथंभूतः। मध्येगुणाम्भोनिधिः गुणाः अनन्तज्ञानानन्तदर्शनानन्तवीर्यानन्तसुखास्तित्ववस्तुत्वप्रमाणप्रमेयत्वादयः त एवाम्भोनिधयः समुद्रा एकैकस्यानन्तत्वात्, गुणाम्भोनिधीनां मध्ये मध्यवर्ती। चरमशरीरप्रमाणत्वात् मध्येगुणाम्भोनिधिः। अत्रापि अव्ययीभावसमासः। किंच अन्यत् विशेषस्वरूपं तस्य श्रीमतो भगवतः कथयामि। यस्मिन् श्रीमति अवाप्तोदये सति

तद्ध्यानत्विषि जातकल्मषमुषि प्रादुर्भवज्ज्योतिषि
त्रैलोक्यक्षुभि दत्तयात्रककुभि स्वर्गिस्मृतानुष्टुभि ।
यस्मिन्नच्युति सर्वलोकमहति स्तोत्रोन्मुखश्रीकृति
श्रेयोभाजनतां जनः परमगात्स स्ताच्छ्रिये वो जिनः ॥ २ ॥

अहो स्वकीयप्रतापोद्रेकमुद्रितसमस्तसमुद्र कुवलयानन्दनचन्द्र, अन्यदा

---

न च केवलज्ञानादिलक्ष्मीप्राप्ते सति भुवनत्रयस्य पतयः इन्द्रधरणेन्द्रादयः पुरोऽग्रतः छत्रत्रयं बिभ्रतः आतपत्रत्रयं धारयन्तो जायन्ते । कीदृशा जायन्ते । प्रतिचारका इव । रूपकोपमालंकारः ॥

**तद्ध्यानत्विषीत्यादि** । स जिनो वो युष्माकं श्रिये अभ्युदयनिःश्रेयसलक्ष्म्यर्थं स्तात् भवतु । स कः । यस्मिञ्जिने जनो लोकः परं निश्चयेन श्रेयोभाजनतां कल्याणपरम्परामत्रत्वमगात्प्राप्तः । कथंभूते यस्मिन् । तद्ध्यानत्विषि सा सर्वकर्मनिर्मूलिनी ध्यानत्विट् ज्योतिः श्रुतं वृत्तं वा यस्य स तथा तस्मिन् । इत्यनेन पदेन पृथक्त्ववितर्कविचारं एकत्ववितर्काविचारं च शुक्लध्यानद्वयमुक्तं भवति । पुनः कथंभूते । जातकल्मषमुषि कल्मषं मुष्णातीति कल्मषमुट्, जात उत्पन्नश्चासौ कल्मषमुट् जातकल्मषमुट् तस्मिन् । इत्यनेन पदेन ध्यानबलेन कृत्वा घातितकर्मत्रिषष्टिप्रकृतिक्षयमुक्तो भगवत इति ज्ञातव्यम् । पुनः कथंभूते । प्रादुर्भवज्ज्योतिषि प्रादुर्भवत् उत्पद्यमानं ज्योतिः केवलज्ञानलक्षणं तेजो यस्य स तथा तस्मिन् । इत्यनेन पदेन घातितसंघातघातने सति केवलज्ञानमुत्पन्नं भगवत इति सूचितं भवति । पुनः कथंभूते । त्रैलोक्यक्षुभि क्षोभणं (क्षुप्) इन्द्रादीनामासनकम्पनम्, त्रैलोक्यस्य क्षुप् चलनं यस्मात् स तस्मिन् । इत्यनेन पदेन स्वर्गलोके घण्टानादः, ज्योतिर्लोके सिंहनादः, व्यन्तर्लोके पटहध्वनिः, भवनवासिलोके शङ्खध्वनिरभूत् इति सूचितं भवति । पुनः कथंभूते । दत्तयात्रककुभि दत्ता कृता यात्रा भगवत्केवलज्ञानपूजार्थं गमनं ककुप्सु दिक्षु यस्य स तस्मिन् । इत्यनेन पदेन देवागमः सूचितो भवति । पुनः कथंभूते । स्वर्गिस्मृतानुष्टुभि स्वर्गिभिरिन्द्रादिभिर्देवैः स्मृताः चित्तीकृताः अनुष्टुबादिछन्दोभिः स्तुतयो गद्यपद्यादयो यस्य स तस्मिन् । इत्यनेन पदेन समवसरणस्थितो भगवान् कथितः । पुनः कथंभूते । अच्युति न च्यवते न चलति अच्युत्तस्मिन्नच्युति । इत्यनेन पदेन विहारानन्तरं योगनिरोधः सूचितः । पुनः कथंभूते । सर्वलोकमहति सर्वेषां लोकानां सर्वेषु लोकेषु वा महान् परमगुरुः सर्वलोकमहान् तस्मिन् । इत्यनेन पदेन भगवान् सिद्धो बभूवेति सूचितम् । पुनः कथंभूते । स्तोत्रोन्मुखश्रीकृति स्तोत्रेषु उन्मुखा बद्धोत्कण्ठास्तेषां श्रियं सर्वोक्तलक्षणं करोतीति स तस्मिन् । इत्यनेन पदेन भगवतः परिनिर्वृत्तकल्याणनिद्रादिभिः कृतं भवतीति सूचितम् । अतिशयालंकारः ॥

अहो स्वकीयप्रतापोद्रेकमुद्रितसमस्तसमुद्र स्वकीयेन प्रतापोद्रेकेणाधिकेन मुद्रिताः



तु वियद्वनविकासोद्वेल्लत्कङ्केलिपल्लवोल्लासलालसे गगनकाननप्रबोधप्रधाविघातकीप्रसवपेशलत्विषि प्रचेतःपुरकान्तारस्मेरताजिह्मब्रह्मतरुप्रसूनसंदोहसुन्दरे त्रिदिवोद्यानान्तरालनिलीनोन्मीलल्लाङ्गलीलतान्तकान्तरुचि पश्चिमाचलस्थलविलासिनीशिखण्डमण्डनोत्तंसविकसत्काश्मीरकुसुमकेसरासरालाभोगभङ्गे अहर्पतिपथानुसारिदिवसलक्ष्मीपिण्डालक्तकरसप्रसाधितचरण-

---

चिह्निताः समस्ताश्चत्वारो समुद्रा येन स तथा तस्य संबोधनं यशस्तिलकेन क्रियते हे तथोक्त हे मारदत्त महाराज । हे कथंभूत । कुवलयानन्दनचन्द्र कुवलयस्य पृथ्वीवलयस्यानन्दने हर्षजनने चन्द्रः स तथा तस्य संबोधनं हे तथोक्त । कुवलयानामुत्पलानामानन्दने चन्द्रमा भवति । अन्यदा तु अन्यस्मिन् अवसरे चरणमार्गेणैव महादेवीभवनद्वारं अमृतिमतिमहादेवीहर्म्यद्वारं अहमपि उपागतोऽस्मि । इति क्रियाकारकसंबन्धः । कस्मिन् सति महादेवीभवनद्वारं उपागतोऽस्मि । संध्यारागमहसि सति । कथंभूते संध्यारागमहसि । वियद्वनविकासोद्वेल्लत्कङ्केलिपल्लवोल्लासलालसे वियदेव वनं वियद्वनं तस्य विकासेनोत्फुल्लनेनोद्वेल्लन्तः कम्पमानाः ये कङ्केलिपल्लवास्तेषां उल्लासेन लालसा वा अत्याकाङ्क्षा यस्य तत्तथोक्तं तस्मिन् । उक्तं च—'वेल्लिताप्रेङ्खिताधूतचलिताकम्पिता धुते' इति । तथा च—'प्रतीक्षा लालसा द्वयोः' । पुनः कथंभूते । गगनकाननप्रबोधप्रधाविघातकीप्रसवपेशलत्विषि गगनमेव काननं तस्य प्रबोधाय उद्योताय प्रधाविनी शीघ्रगमनशीला सा चासौ घातकी...............................................प्रसवपेशला त्विट् यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । प्रचेतःपुरकान्तारस्मेरताजिह्मब्रह्मतरुप्रसूनसंदोहसुन्दरे प्रचेतसो वरुणस्य यत्पुरं तस्य संबन्धि यत् कान्तारं तस्य संबन्धि स्मेरताजिह्मानि विकाशप्रगुणानि अमन्दानि यानि ब्रह्मतरुप्रसूनानि पलाशपुष्पाणि तेषां संदोहस्तद्वत् सुन्दरं मनोहरं तत्तथोक्तं तस्मिन् । पुनः कथंभूते । त्रिदिवोद्यानान्तरालनिलीनोन्मीलल्लाङ्गलीलतान्तकान्तरुचि त्रिदिवः स्वर्गस्तस्योद्यानं तस्यान्तराले निलीना स्थिता या उन्मीलन्ती विकसन्ती लाङ्गली जलपिप्पली तस्या लतान्तानि पुष्पाणि तद्वत् कान्ता रक्तत्वेन मनोहरा रुक् दीप्तिर्यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । पश्चिमाचलस्थलविलासिनीशिखण्डमण्डनोत्तंसविकसत्काश्मीरकुसुमकेसरासरालाभोगभङ्गे ............ ..............................तत्र तस्य च या विलासिन्यः तासां शिखण्डास्तेषां मण्डनं यत् उत्तंसं मुकुटं तत्र विकसन्ति यानि काश्मीरकुसुमानि केसरपुष्पाणि तेषां केसरः किंजल्कस्तस्य असरालः प्रचुरो योऽसावाभोगो विस्तारस्तद्वद्भङ्गो रचना यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । अहर्पतिपथानुसारिदिवसलक्ष्मीपिण्डालक्तकरसप्रसाधितचरणमार्गनिर्गमद्युति अहर्पतिः श्रीसूर्यस्तस्य पन्था मार्गः अहर्पतिपथः तमनुसरति पृष्ठतो गच्छतीत्येवंशीला अहर्पतिपथानुसारिणी सा चासौ दिवसलक्ष्मीस्तस्याः

मार्गनिर्गमद्युति खरकरानुव्रजनपराम्बरचरचमूरचितारुणमणिविमानप्रभा-
पटलतुलने त्रिपुरदाहोर्जितधूर्जटिनिटिललोचनानलज्वलद्दानवनगरनीति-
निकटे सुरासुरसमरमेदिनीद्रवद्रुधिरपूरप्रकाशिनि दिनकृत्करकृपाणपाति-
तदैत्यचिताचक्रवालानुकूले मातृमण्डलक्रीडाकीलालकुण्डकान्तिनिकेतिनि
रविरथतुरगवेगखरखुरोदस्तास्तमस्तकमनःशिलाधूलिलीले चण्डीशताण्डवा-
डम्बरावसरसुरप्रसारितसुवर्णमण्डपश्रिणि तमस्तमालारामप्रथमताराविर्भूत-

---

पिण्डालक्तकरसेन पिण्डप्रायलाक्षारसेन प्रसाधितौ मण्डितौ चरणौ तयोः मार्गनिर्गमः
पदवीनिर्गमस्तद्वत् द्युद्दीप्तिर्यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । खरकरानुव्रजनपरा-
म्बरचरचमूरचितारुणमणिविमानप्रभापटलतुलने खरकरः श्रीसूर्यस्तस्यानुव्रजनपरा पृष्ठतो
गमनतत्परा या अम्बरचरचमू देवसेना तया रचितानि निर्मितानि अरुणमणिविमानानि
पद्मरागव्योमयानानि तेषां प्रभा तस्या यत्पटलं समूहस्तस्य तुलना उपमा यस्य संध्याराग-
महसस्तत्तथोक्तं तस्मिन् । पुनः कथंभूते । त्रिपुरदाहोर्जितधूर्जटिनिटिललोचनानलज्वलद्दान-
वनगरनीतिनिकटे त्रिपुरो नाम दैत्यविशेषस्तस्य दाहो भस्मीकरणं तस्मिन् ऊर्जितो
बलवत्तरोऽप्रतिहतव्यापारो योऽसौ धूर्जटिः श्रीमहादेवस्तस्य निटिलं ललाटपट्टस्तत्र यत्
लोचनं तृतीयं नयनं तस्यानलेन ज्वलन्ति यानि दानवनगराणि त्रिपुरपुराणि तेषां नीति-
रुपमा सा निकटे यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । सुरासुरसमरमेदिनीद्रवद्रुधिर-
पूरप्रकाशिनि सुराश्च असुराश्च सुरासुरास्तेषां समरमेदिनी तत्र द्रवन्ति प्रवहन्ति यानि
रुधिराणि तेषां पूरस्तद्वत् प्रकाशते इत्येवंशीलं तत्तथोक्तं तस्मिन् । पुनः कथंभूते । दिनकृ-
त्करकृपाणपातितदैत्यचिताचक्रवालानुकूले दिनकृत् तस्य करो हस्तस्तत्र योऽसौ कृपा-
णस्तेन पातिता मारिता ये दैत्यास्तेषां चिताचक्रवालं मृतकाग्निमण्डलं तस्य अनुकूलं
सदृशं यत् तत्तथोक्तं तस्मिन् । पुनः कथंभूते । मातृमण्डलक्रीडाकीलालकुण्डकान्ति-
निकेतिनि मातॄणां मण्डलं तस्य क्रीडाकीलालकुण्डं तस्य कान्तिस्तस्या निकेतो गृहं
उपमा विद्यते यस्य तत्तथोक्तं तस्मिन् । उक्तं च—'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी
तथा । वाराही चैव चेन्द्राणी चामुण्डा सप्त मातरः ॥' पुनः कथंभूते । रविरथतुरगवेग-
खरखुरोदस्तास्तमस्तकमनःशिलाधूलिलीले रविरथस्य ये तुरगास्तेषां वेगेनोपलक्षिताः
खरास्तीव्रतरा ये खुराः पादाग्राणि तैरुदस्ता उत्कृष्टा अस्तमस्तकस्य अस्ताचलशिखरस्य
या मनःशिलाधूलिस्तस्या लीला यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । चण्डीशताण्डवा-
डम्बरावसरसुरप्रसारितसुवर्णमण्डपश्रिणि चण्डीशस्य ताण्डवस्तस्याडम्बरस्तस्यावसरे सुरैः
प्रसारितो योऽसौ सुवर्णमण्डपस्तस्य श्रीः शोभा यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते ।
तमस्तमालारामप्रथमताराविर्भूतकिशलयस्तम्बाडम्बरे तमोऽन्धकारस्तदेव तमालारामस्तमा-
लतरुवणं तस्मात्प्रथमतरं पूर्वमेव आविर्भूतो योऽसौ किशलयस्तम्बः पल्लवसमूहस्तद्वत् आड-



किशलयस्तम्बाडम्बरे अपरगिरिशिखराश्रयाश्रमावासतापसावानवितानित-
धातुजलपाटलपटप्रतानस्पृशि पूर्वेतराकूपारतीरावतरत्तपनस्यन्दनातिथेयक्रि-
योत्तालजलधिजलदेवताप्रकल्पितप्रवालाङ्कुरोपचारव्यतिकरे सकलविषयिव-
श्यतावेशविजृम्भिष्यमाणमनसिजैश्वर्यपर्याप्तपत्रसिन्दूरमुद्रोद्रेकरोचिषि नव-
यौवनरसवशाङ्गनापयोधरभराविर्भविष्यन्मदनद्रुमकन्दलकदम्बविडम्बिनि
रतिकलहकृतिकुतूहलबहलविलासिजनसैनिकशृङ्गारसंगरसंभावनोत्तरङ्गान्त-
रङ्गानङ्गविस्तारितातिरक्तसंकेतकेतुकमनीये मिथुनचरपतङ्गरागापहारादिव

---

म्बरो यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । अपरगिरिशिखराश्रयाश्रमावासतापसावा-
नवितानितधातुजलपाटलपटप्रतानस्पृशि अपरगिरिरस्ताचलस्तस्य शिखरं तस्मिन् आश्रयः
स्थितिर्येषां आश्रमावासानां निवासगृहाणां तत्र ये तापसास्तेषां अवाना अंशुका आर्द्रा
वितानिताः चन्द्रोपकीकृताः शोषयितुं मुक्ताः..........................................
पाटलाः श्वेतरक्ताः पटाः कापटाः तेषां प्रतानो विस्तारः तं स्पृशति तदुपमां धरति यत्
संध्यारागमहः तत्तथोक्तं तस्मिन् । पुनः कथंभूते । पूर्वेतराकूपारतीरावतरत्तपनस्यन्दनाति-
थेयक्रियोत्तालजलधिजलदेवताप्रकल्पितप्रवालाङ्कुरोपचारव्यतिकरे पूर्वेतराकूपारः पश्चिमस-
मुद्रः तस्य तीरे तटे अवतरन् आगच्छन् योऽसौ तपनस्यन्दनः सूर्यरथस्तस्यातिथेयक्रिया
प्राघूर्णकक्रिया तस्यामुत्ताला उत्सुका या जलधिजलदेवतास्ताभिः प्रकल्पितो रचितो योऽसौ
प्रवालाङ्कुरोपचारः पल्लवाङ्कुरपूजा तस्य व्यतिकरः प्रघट्टक उपमा यस्य तत्तथोक्तं तस्मिन् ।
पुनः कथंभूते । सकलविषयिवश्यतावेशविजृम्भिष्यमाणमनसिजैश्वर्यपर्याप्तपत्रसिन्दूरमुद्रोद्रे-
करोचिषि सकला ये विषयिणः कामुकास्तेषां वश्यतावेशे वशीकरणप्रदेशे विजृम्भिष्यमाणं
प्रसरत् यत् मनसिजस्य ऐश्वर्यं कन्दर्पसंपत् तस्य पर्याप्ता परिपूर्णा या पत्रसिन्दूरमुद्रा लेख-
स्थितसिन्दूरचिह्नं तस्या उद्रेक उत्कटता आधिक्यं तद्वद्रोचिः दीप्तिर्यस्य संध्यारागमहसस्तत्त-
थोक्तं तस्मिन् । पुनः कथंभूते । नवयौवनरसवशाङ्गनापयोधरभराविर्भविष्यन्मदनद्रुमकन्दल-
कदम्बविडम्बिनि नवं च तत् यौवनं तस्य रसः तत्र वशा परवशा पराधीना या अङ्गनाः कमनी-
यकामिन्यस्तासां पयोधरभरास्तेभ्य आविर्भविष्यन् मदनद्रुमकन्दलानि कामतरुनवाङ्कुरास्तेषां
कदम्बः समूहस्तं विडम्बते तिरस्करोति उपमां धरतीत्येवंशीलं तत्तथोक्तं तस्मिन् । पुनः
कथंभूते । रतिकलहकृतिकुतूहलबहलविलासिजनसैनिकशृङ्गारसंगरसंभावनोत्तरङ्गान्तरङ्गान-
ङ्गविस्तारितातिरिक्तसंकेतकेतुकमनीये रतिकलहकृतिः संभोगकलहविधानं तत्र कुतूहलं
कौतुकं तस्मिन् बहलं प्रचुरं यत् विलासिजनानां कामुकसमूहानां सैनिकानां सेनासमवे-
तानां योऽसौ शृङ्गारसंगरः सुरतसंग्रामस्तस्य संभावना सम्यग्रुचिस्तस्यामुत्तरङ्गमुत्कटं यद-
न्तरङ्गं मनस्तत्र अनङ्गेन कन्दर्पेण विस्तारिता उद्धृता अतिरक्ता अतीव लोहिता ये संकेतकेतवः
संकेतध्वजास्तद्वत् कमनीयं मनोहरं तत्तथोक्तं तस्मिन् । पुनः कथंभूते । मिथुनचरपतङ्ग-

दरदकन्दरपरागसंगमादिव दाडिमीकुसुमकुड्मलपरिमलनादिव द्युनदीती-
रतपोधनोन्मुक्तरक्तचन्दनवन्दनादिव कनककेतकीरजोरञ्जनादिव वृक्षोत्प-
लमञ्जरीमकरन्दस्यन्दादिव च नितान्तं लोहितायति निजारुणिमरञ्जितव-
रुणपुरपुरंध्रिकाधरदले सति संध्यारागमहसि,

तरसरसिकराक्षसक्षोभसमीक्षयारुणतोद्रेकदुर्दिनहृदयरक्षावेक्षणादिव अ-
धोक्षजविपक्षोत्क्षीबदानवावस्कन्धभीतेर्दितिसुतशत्रुकलत्रपरित्राणचरित्रेणेव

---

रागापहारादिव दरदकन्दरपरागसंगमादिव दाडिमीकुसुमकुड्मलपरिमलनादिव द्युनदीतीरत-
पोधनोन्मुक्तरक्तचन्दनवन्दनादिव कनककेतकीरजोरञ्जनादिव वृक्षोत्पलमञ्जरीमकरन्दस्य-
न्दादिव च नितान्तं लोहितायति निजारुणिमरञ्जितवरुणपुरपुरंध्रिकाधरदले नितान्तमति-
शयेन लोहितायति रक्तत्वसंगतया उपलक्षितो योऽसौ निजः स्वकीयः अरुणिमा अव्यक्त-
रागत्वं तेन रञ्जितानि विद्रुमवर्णानि कृतानि वरुणपुरपुरंध्रीणां पश्चिमदिक्पालनगरस्त्रीणां
अधरदलानि येन संध्यारागमहसा तत्तथोक्तं तस्मिन् । नितान्तं लोहितायति कस्मात् ।
उत्प्रेक्ष्यते—मिथुनचरपतङ्गानां चक्रवाकीचक्रवाकपक्षिणां रात्रिनिकटतया तद्वियोगेन
रागापहारादिव तद्रागमोचनादिव । पुनश्च कस्मात् । ..............................
.......................... । पुनश्च कस्मात् । दाडिमीनां करकतरूणां कुसुमकुड्मलानि
मुकुलानि तेषां परिमलनादिव विमर्दनादिव । पुनश्च कस्मात् । द्युनदीतीरयोर्गङ्गातटयोर्ये
तपोधनाः ग्राम्यमुनयः तैरुन्मुक्तानि ऊर्ध्वं क्षिप्तानि सूर्यपूजनार्थं यानि रक्तचन्दनानि
कुचन्दनानि तेषां वन्दनादिव संगमादिव । पुनश्च कस्मात् । कनककेतक्यस्तासां रजांसि
परागास्तेषां रञ्जनादिव रागसंयोगाद्दिव । पुनश्च कस्मात् । वृक्षोत्पलाः कर्णिकारवृक्षास्तेषां
पुष्पाण्यपि वृक्षोत्पलानि तेषां मञ्जरीणां वल्लरीणां योऽसौ मकरन्दस्तस्य स्यन्दादिव स्रव-
णादिव । उत्प्रेक्षालंकारः ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । स्थूलनलिनखण्डे............
.............................................. । कथंभूते । संकोचोदञ्चत्पुट-
प्रकाण्डे संकोचेन संवरणेन उदञ्चन्ति उद्गच्छन्ति पुटप्रकाण्डानि पत्रसमूहा यस्य स तथो-
क्तस्तस्मिन् । कमलपुष्पपत्राणां संकोचोऽपि कस्मात् इत्याह—तरसरसिकराक्षसक्षो-
भसमीक्षया तरसे अपक्वमांसे रसिका आकाङ्क्षका ये राक्षसास्तेभ्यः क्षोभ उच्चलनं
तस्य समीक्षया अवलोकनेन अरुणतोद्रेकदुर्दिनहृदयरक्षावेक्षणादिव अरुणताया रक्तत्वस्य
योऽसावुद्रेक आधिक्यं तेन दुर्दिनानि सहितानि सयुक्तामिच्छन्ति यानि हृदयानि
तेषां रक्षावेक्षणं रक्षणकाङ्क्षणं तस्मादिव । अत्रायं भावः—कमलैश्चिन्तितं अस्माकं हृदयानि
रक्तानि वर्तन्ते, तानि च मांसमिति मत्वा राक्षसा मा भक्षयन्त्विति शङ्कया हृदयसंवरणं
कमलैः कृतमिति भावः । पुनश्च केन संयुक्ता संकुचिता इत्याह—अधोक्षजविपक्षोत्क्षीबदा-



जराजिह्मब्रह्मासनस्खलनसंभावनया सर्वतस्तदवष्टम्भसंभ्रमादिव च संको-
चोदञ्चत्पुटप्रकाण्डे स्थूलनलिनखण्डे,

अतिमात्रवारुणीसमागमादिव मन्दरगिरिशिखरजवनिकानिवेदितसर्वा-
नवसरेऽपि घनघुसृणारुणितसुरसुन्दरीकपोलच्छविनि वितप्यमानतपनी-
यतलिकाकृतिमनोहरे भुवनान्तरप्रयाणकर्मणि पुनर्दर्शनादरादिव कम-
लिनीकुलकुड्मलप्रणामाञ्जलिकारके तमोरातिमण्डले,

पुनरावृत्तिभयात्तदवतरणपथमुदीक्षितुमिव विनतविश्वंभरावकाशदेश-

---

नवावस्कन्धभीतेः अधोक्षजः श्रीनारायणस्तस्य विपक्षाः शत्रवः उत्क्षीबा अतिमत्ता ग-
र्विता वा दानवा दैत्यास्तेषामवस्कन्धः रात्रिसंबन्धिनी धाटी तस्माद्भीतिर्भयं तस्याः भीतेः
भयकारणात् दितिसुतशत्रुकलत्रपरित्राणचरित्रेणेव दितिसुतशत्रुः श्रीनारायणः तस्य
कलत्रं लक्ष्मीस्तस्य परित्राणं रक्षणं तस्य चरित्रेणेव । लक्ष्मीरक्षणार्थं संकुचिता इत्यर्थः ।
पुनश्च कस्मात् संकोचिता इत्याह—जराजिह्मब्रह्मासनस्खलनसंभावनया जरया वार्ध-
क्येन जिह्मो मन्दः शक्तिहीनो योऽसौ ब्रह्मासनं ध्यानं तस्य स्खलनं भङ्गस्तस्य संभावना
रक्षा तया हेतुभूतया सर्वतस्तदवष्टम्भसंभ्रमादिव सर्वतः सर्वदिक्षु तदवष्टम्भः ब्रह्मणो
अवष्टम्भनं वृद्धत्वात् मा पतदिति संभ्रमादिव आदरादिव । अयमपि उत्प्रेक्षालंकारः ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । तमोरातिमण्डले श्रीसूर्ये सति ।
कथंभूते तमोरातिमण्डले । मन्दरगिरिशिखरजवनिकानिवेदितसर्वानवसरे मन्दरगिरिरस्ता-
चलस्तस्य शिखरं तदेव जवनिका पटकुटी तया निवेदितः सूचितः सर्वेषां अनवसरो
प्रस्तावो येन तत्तथोक्तं तस्मिन् । कस्मात् अनवसरः । उत्प्रेक्षते—अतिमात्रवा-
रुणीसमागमादिव अतिमात्रमतिशयेन वारुणीसमागमो मद्यपानम्, पक्षे पश्चिमा दिक्,
तस्याः समागमादिव । पुनः कथंभूते । घनघुसृणारुणितसुरसुन्दरीकपोलच्छविनि
घनं प्रचुरं घुसृणं काश्मीरजन्मकेसररसस्तेनारुणिता अव्यक्तरागीकृता ये सुरसुन्दरीणां
कपोलास्तेषां छविः शोभा यस्य तमोरातिमण्डलस्य तत्तथोक्तं तस्मिन् । पुनः कथं-
भूते । वितप्यमानतपनीयतलिकाकृतिमनोहरे वितप्यमाना अग्नितापं प्राप्यमाणा या
तपनीयतलिका काञ्चनकटाहिका तस्या आकृत्या आकारेण मनोहरस्तस्मिन् । पुनः
कथंभूते । भुवनान्तरप्रयाणकर्मणि भुवनान्तरमपरविदेहक्षेत्रं तत्र प्रयाणकर्म यस्य तत्तथा
तस्मिन् । पुनः कथंभूते । कमलिनीकुलकुड्मलप्रणामाञ्जलिकारके कमलिनीनां कुलानि
वनानि तेषां कुड्मलानि तान्येव प्रणामाञ्जलिकारकानि । उत्प्रेक्षते—पुनर्दर्शनादरादिव
पुनर्दर्शनमस्त्विति संभ्रमादिव । अयमपि उत्प्रेक्षालंकारः ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । तिमिरनिकरे सति अन्धकार-
समूहे सति । किं कृतवति तिमिरनिकरे । महीरुहगहनानि श्रितवति सति । कथंभूतानि
महीरुहगहनानि । विनतविश्वंभरावकाशदेशरोहिणि विनता नम्रा ये विश्वंभरावकाश-

रोहिणि महीरुहगहनानि श्रितवति दरजरच्चिकुरनिकुरम्बानुकारिणि तिमिरनिकरे,

चीवरोपरागनिरतान्तःकरणेनापरगिरिशिखरान्तरविहारिणा मुनिकुमारनिकायेन करचापलादिव परिमुषितबहलतरपाटलिम्नि पुनर्मुहूर्तमात्रमतिपुराणकपिलपनलीलातुल्यतामनुशील्य क्षणादुपशान्तवयसि समस्तसंध्यारागतेजसि,

सुरनदीसंभेदरेखारुचिकान्तेषु च समन्ततो वियत्पर्यन्तेषु,

बहुलीभवन्तीष्विव च योषितामलकधूपधूमेषु, वलयितास्विवावतंसकु-

---

देशाः पृथिवी··· अवकाशप्रदेशास्तत्र रोहन्ति प्रादुर्भवन्ति इत्येवंशीलानि त[illegible]तानि । तिमिरनिकरे कस्मान्महीरुहगहनानि श्रितवति । पुनरावृत्तिभयात् श्रीभा[illegible]ः पुनरागच्छति इति भयात् तदवतरणपथं श्रीसूर्यस्य आगमनमार्गं उदीक्षितुमिव उद्धूयोद्धूय विलोकितुमिव । कथंभूते तिमिरनिकरे । दरजरच्चिकुरनिकुरम्बानुकारिणि द[illegible]षज्जरन्तः शुक्लीभवन्तो ये चिकुराः केशास्तेषां निकुरम्बः समूहस्तमनुकरोति त[illegible]पमां धरतीत्येवंशीलं तत्तथा तस्मिन् ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । समस्तसंध्यारागतेजसि सर्वसंध्यारागमहसि क्षणात् मुहूर्तात् उपशान्तवयसि सति विनष्टतारुण्ये सति । मन्दतेजसीत्यर्थः । किं कृत्वा पूर्वमुपशान्तवयसि । पुनर्भूयोऽपि मुहूर्तमात्रं अल्पकालेन अतिपुराणकपिलपनलीलातुल्यतामनुशील्य अतिजराशीर्णमर्कटमुखशोभोपमामभ्यस्य । कथंभूते समस्तसंध्यारागतेजसि । मुनिकुमारनिकायेन कर्मन्दिकुमारसमूहेन परिमुषितो बहलतरः पाटलिमा रक्तत्वं यस्य संध्यारागमहसस्तत् परिमुषितबहलतरपाटलिमन् तस्मिन् । उत्प्रेक्षते—करचापलादिव हस्तपारिप्लवादिव । कथंभूतेन मुनिकुमारनिकायेन । चीवरोपरागनिरतान्तःकरणेन चीवरस्य गैरिकरक्तवस्त्रस्य उपरागो रक्तता तस्मिन् निरतं तत्परं भ्रान्तिप्राप्तं अन्तःकरणं यस्य स तथोक्तस्तेन । पुनः कथंभूतेन । अपरगिरिशिखरान्तरविहारिणा अपरगिरिरस्ताचलः तस्य शिखराणि तेषामन्तरेषु मध्येषु विहरति पर्यटति इत्येवंशीलः स तथा तेन ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । समन्ततः सर्वत्र वियत्पर्यन्तेषु सत्सु । कथंभूतेषु वियत्पर्यन्तेषु । सुरनदीसंभेदरेखारुचिकान्तेषु सुरनदीसंभेदः गङ्गायमुनयोः सङ्गस्तस्य रेखारुचयः आवलीशोभास्तद्वत् कान्ता मनोहरास्तेषु । दिवसशेषत्वात् उज्ज्वलकृष्णेष्वित्यर्थः ॥

पुनश्च कासु सतीषु महादेवीभवनद्वारमुपागतोऽस्मि । तमःपयोधिवीचिषु अन्धकारलहरीसमुद्रलहरीषु सतीषु । कथंभूतासु तमःपयोधिवीचिषु । योषितामलकानां कुन्तलानां चूर्णकेशानां च संबन्धी योऽसौ धूपस्तस्य ये धूमाः पर्यायान्तरास्तेषु अलकधूपधूमेषु बहुलीभवन्ती-



वलयेषु, स्खलितवेगास्विव कृष्णागुरुपिञ्जरितकर्णपालीषु, प्रवृत्तप्रवाहास्विव घुसृणरसविच्छुरितभ्रूलतालेखासु, प्रसरन्तीष्विव लोचनाञ्जनमार्गेषु, स्तिमितायमानास्विव ताम्बूलकृष्णिकाश्यामलिताधरदलेषु, घनभावमुपगतास्विव स्तनाभोगलिखितमृगमदपत्रभङ्गेषु, लब्धावकाशास्विव सान्द्रसुरभितनाभिकुहरेषु, पयोधरपथप्रस्थितास्विव तमालदलधूलिधूसरितरोमराजिनिर्गमेषु, मन्थरप्रकारास्विव मेखलामणिकिंकिणीजालवदनेषु, विहितावतारास्विव नीलोपलतुलाकोटिषु, मुक्ताफलदन्तुरास्विव निर्मार्जितचरणनखपरम्परासु, पर्यस्तविद्रुमवनास्विव यावकपुनरुक्तकान्तिप्रभावेषु पादपल्लवेषु,

---

ष्विव प्रचु[illegible]सु संजायमानास्विव । पुनः कथंभूतासु । अवतंसकुवलयेषु अवतंसाः योषितां कर्णपूराः तेषु कुवलयेषु इन्दीवरेषु वलयितास्विव वेष्टनं प्राप्तास्विव । पुनः कथंभू[illegible] । कृष्णागुरुणा पिञ्जरिता विलिप्ता कर्णपाल्यः कर्णलतास्तासु कृष्णागुरुपिञ्जरितक[illegible]लीषु स्खलितवेगास्विव भग्नरयास्विव । निश्चलास्वित्यर्थः । पुनः कथंभूतासु । [illegible]णरसविच्छुरितभ्रूलतालेखासु घुसृणरसेन दलेन विच्छुरिता या भ्रूलतालेखाः पिल्लीवल्लीलेखास्तासु प्रवृत्तप्रवाहास्विव प्रवृत्तश्चलितः प्रवाहो यासां तमःपयोधिवीचीनां ताः प्रवृत्तप्रवाहास्तास्विव । पुनः कथंभूतासु । लोचनाञ्जनमार्गेषु नयनकज्जलपथेषु प्रसरन्तीष्विव । पुनः कथंभूतासु । ताम्बूलकृष्णिकाश्यामलिताधरदलेषु ताम्बूलस्य या कृष्णिका कृष्णत्वं तया श्यामलितानि कृष्णीकृतानि यान्यधरदलानि तेषु स्तिमितायमानास्विव निश्चलीभवन्तीष्विव । पुनः कथंभूतासु । स्तनाभोगलिखितमृगमदपत्रभङ्गेषु स्तनानामाभोगा विस्तारास्तेषु लिखिता न्यस्ता ये मृगमदपत्रभङ्गाः कस्तूरिकापत्रवल्लीरचनास्तेषु घनभावमुपगतास्विव काठिन्यभावं मूर्तिमत्त्वं उपगतास्विव प्राप्तास्विव । पुनः कथंभूतासु । सान्द्रसुरभितनाभिकुहरेषु सान्द्राणि प्रचुराणि सुरभितानि सुगन्धीकृतानि यानि नाभिकुहराणि तेषु लब्धावकाशास्विव संप्राप्तप्रवेशास्विव । पुनः कथंभूतासु । तमालदलधूलिधूसरितरोमराजिनिर्गमेषु तमालदलानि तेषु धूलिस्तया धूसरिता ईषत्पाण्डुरीकृता या रोमराजयस्तासां निर्गमाः निःसरणानि तेषु पयोधरपथप्रस्थितास्विव आकाशमार्गकृतप्रस्थानास्विव । पुनः कथंभूतासु । मेखलामणिकिंकिणीजालवदनेषु मेखलानां कटिमेखलानां मणिकिंकिण्यः रत्ननिर्मितक्षुद्रघण्टिकास्तासां जालवदनेषु मन्थरप्रकारास्विव मन्थरः मन्दगमनरूपः तस्य प्रकारास्विव । पुनः कथंभूतासु । नीलोपलतुलाकोटिषु नीलोपलानां नीलमणीनां यास्तुलाकोटयः पादाङ्गवृत्तयस्तास्विव विहितावतारास्विव कृतवेशास्विव । उक्तं च—'पदेऽङ्गदं तुलाकोटिर्मञ्जीरो नूपुरस्तथा । हिञ्जीरश्च' इति । पुनः कथंभूतासु । निर्मार्जितचरणनखपरम्परासु निर्मार्जिता नखलुना तनूकृता उद्वर्तिता ये चरणनखाः पादकामाङ्कुशास्तेषां परम्परासु मुक्ताफलदन्तुरास्विव शौक्तिकेयदन्तसहितास्विव । पुनः कथंभूतासु । पादपल्लवेषु

पूर्वदिगन्तादितस्ततो धावन्तीषु कृष्णलामुखमलिनरुचिषु तमःपयोधिवीचिषु,

सर्वं विष्णुमयं जगदिति सत्यतां नयतीव प्रतिक्षणं कृष्णतां पुष्णति विष्वद्रीचिभुवनेषु संजाते च प्रदोषसमये,

तदनु कामिनीप्रसाधनेष्विव यथास्थानमुपसरत्सु वनमृगेषु, प्रवसितेष्विव वासराश्रयोन्मुखेषु चिकिरनिकरेषु, वारवनितास्विव स्ववासाङ्गणभागिनीषु शार्दूलसमितिषु, कितवकटित्रेष्विव विमुच्यमानेषु संध्योपासनाञ्जलिमुकु-

---

चरणप्रान्तेषु पर्यस्तविद्रुमवनास्विव पर्यस्तानि स्रस्तानि विद्रुमवनानि याभिः प्रवालरत्नवनानि यास्तास्तास्विव । कथंभूतेषु पादपल्लवेषु । यावकपुनरुक्तकान्तिप्रभावेषु यावकेन लाक्षारसेन पुनरुक्तो द्विगुणीकृतः कान्तिप्रभावो येषां ते तथा तेषु । किं कुर्वतीषु तमःपयोधिवीचिषु । पूर्वदिगन्तात् ऐन्द्रादिदिक्पर्यन्तात् इतस्ततो यत्र तत्र धावन्तीषु वेगवत् गमनं कुर्वतीषु । पुनः किं कुर्वतीषु । कृष्णलामुखमलिनरुचिषु रक्तिकावक्त्रकालकान्तिषु । उपमालंकारः ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । प्रदोषसमये रजनीमुखे संजाते सति । किं कुर्वति प्रदोषसमये । विष्वद्रीचिभुवनेषु विश्वगञ्चतीति विश्वद्र्यङ् तस्मिन् विश्वद्रीचि। 'विश्वग्देवयोरद्र्यञ्चतौ कौ'। सर्वस्मिन् पृथ्वीमण्डले प्रतिक्षणं कृष्णतां पुष्णति पुष्टिं नयति सति । पुनश्च किं कुर्वति प्रदोषसमये । इति ईदृशं वचनं सत्यतां नयतीव । इतीति किम् । सर्वं विष्णुमयं जगत् । एतावता किमुक्तं भवति । सर्वं विष्णुमयं जगदित्यसत्यं कवेरिति भावः ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । वनमृगेषु वनश्वापदेषु सत्सु । किं कुर्वत्सु वनमृगेषु । यथास्थानं यथात्मीयस्थितिस्तत्र उपसरत्सु सत्सु । कथम् । तदनु तत्पश्चात् । प्रदोषसमयादनन्तरमित्यर्थः । पुनः कथंभूतेषु वनमृगेषु । कामिनीप्रसाधनेष्विव यथा कामिनीनां प्रसाधनानि उद्वर्तनस्नानधूपनानुलेपनादीनि परिकर्माणि यथास्थानमुपसरन्ति । पुनश्च केषु सत्सु । चिकिरनिकरेषु चिकिराणां पक्षिणां निकरेषु समूहेषु सत्सु । कथंभूतेषु चिकिरनिकरेषु । वासराश्रयोन्मुखेषु वासरः शयनयोग्यः स चासावाश्रयो मालकादिस्तत्र उन्मुखास्तत्परास्तेषु । पुनः कथंभूतेषु । प्रवसितेष्विव यथा प्रवसिताः पथिकाः वासराश्रयोन्मुखा भवन्ति । पुनश्च कासु सतीषु । शार्दूलसमितिषु व्याघ्रसंततिषु(कसन्तिषु)(?) । कथंभूतासु । स्ववासाङ्गणभागिनीषु स्वेषां वासाङ्गणानि तानि भजन्ते इत्येवंशीलाः स्ववासाङ्गणभागिन्यस्तासु । कास्विव । वारवनितास्विव वारः सेवावसरस्तस्य संबन्धिन्यो या वनिता वारवनिताः । वेश्या इत्यर्थः । तास्विव । यथा वारवनिताः स्ववासाङ्गणभागिन्यो भवन्ति । पुनश्च केषु सत्सु । संध्योपासनाञ्जलिमुकुलेषु संध्योपासनस्य यानि अञ्जलिमुकुलानि



लेषु, कुमुदकुड्मलेष्विव विघटमानेषु चक्रवाकमिथुनेषु, मुनिद्रुमदलेष्विव संकोचनोचितेषु पल्लवकलोकसृपाटीपटेषु, प्रदीपकलिकास्विवोन्मिषन्तीषु विरहिणीनां मदनशिखिशिखासु, सुरभोगिभुजिष्यागणेष्विवाभिनयोन्मुखेषु द्विरदनकुलेषु,

समुच्छलति च पुरदेवतानां प्रासादपरिसरेषु चामरधारिणीनां रणन्मणिमञ्जीरमणितमनोहारिणि मृदङ्गानकशङ्खकोलाहले, मुखरीभवत्सु मध्यमानेष्वर्णवार्णःस्विवाभ्यर्णतर्णकस्वनाकर्णनोदीर्णेन धेनुष्याणां दीर्घरम्भितारवेण

---

करयुग्मकुड्मलानि तेषु । कथंभूतेषु । विमुच्यमानेषु परितप्यमानेषु । संध्यावन्दनेषु समाप्तेष्वित्यर्थः । पुनः कथंभूतेषु । कितवकटित्रेष्विव द्यूतकारवस्त्रेष्विव । यथा कितवकटित्राणि संध्यायां मुच्यमानानि भवन्ति । पुनश्च केषु सत्सु । चक्रवाकमिथुनेषु । किं कुर्वाणेषु चक्रवाकमिथुनेषु । विघटमानेषु वियोगं प्राप्नुवत्सु । केष्विव । कुमुदकुड्मलेष्विव। यथा कुमुदकुड्मलानि कैरवमुकुलानि विघट्यमानानि विकाशं प्राप्नुवन्ति विकसितानि भवन्ति । पुनश्च केषु सत्सु। पल्लवकलोकसृपाटीपटेषु पल्लवकलोकाः विद्वांसः तेषां सृपाटीपटेषु पुस्तकावयवेषु । कथंभूतेषु पल्लवकलोकसृपाटीपटेषु। संकोचने संपाटने संकेतने उचिता योग्यास्तेषु। केष्विव । मुनिद्रुमदलेष्विव । यथा रात्रौ पतितायां अगस्तिवृक्षपर्णानि संकोचं प्राप्नुवन्ति । पुनश्च कासु सतीषु । विरहिणीनां मदनशिखिशिखासु कामाग्निज्वालासु सतीषु । किं कुर्वतीषु मदनशिखिशिखासु। उन्मिषन्तीषु उद्दीप्यमानासु । कास्विव । प्रदीपकलिकास्विव । यथा प्रदीपकलिकाः रात्रावुन्मिषन्ति । पुनश्च केषु सत्सु । द्विरदनकुलेषु गजकुलेषु सत्सु । कथंभूतेषु द्विरदनकुलेषु । अभिनयोन्मुखेषु अभिनयः पूर्ववृत्तानुकरणं शिखाग्रहणं तत्र उन्मुखेषु तत्परेषु । केष्विव । सुरभोगिभुजिष्यागणेष्विव सुरभोगिनां देवकामुकानां भुजिष्यागणा वेश्यासमूहास्तेषु । यथा सुरभोगिभुजिष्यागणाः अभिनयोन्मुखाः शय्यागमनतत्पराः भवन्ति ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । पुरदेवतानां प्रासादपरिसरेषु चैत्यालयानां प्राङ्गणेषु मृदङ्गानकशङ्खकोलाहले मृदङ्गाश्च आनकाश्च पटहाः शङ्खाश्च कम्बवस्तेषां कोलाहलो वादित्रध्वनिः तस्मिन् मृदङ्गानकशङ्खकोलाहले समुच्छलति उद्गच्छति सति । कथंभूते मृदङ्गानकशङ्खकोलाहले । चामरधारिणीनां प्रकीर्णवाजिकानां रणन्तः शब्दायमाना ये मणिमञ्जीरा रत्नघटितनूपुरास्तेषां मणितं रतिकूजितं तद्वत् मनोहारिणि चित्तानुरञ्जिके । पुनश्च केषु सत्सु। गोपुरमुखेषु नगरप्रतोलीद्वारेषु सत्सु । किं कुर्वत्सु । धेनुष्याणां उत्तमगवां दीर्घरम्भितारवेण दीर्घं उच्चैस्तरं दूरव्यापकं यद्रम्भितं गोध्वनिस्तस्य आरवेण शब्दितेन मुखरीभवत्सु वाचालीभवत्सु । कथंभूतेन दीर्घरम्भितारवेण । अभ्यर्णतर्णकस्वनाकर्णनोद्गीर्णेन अभ्यर्णा समीपतरा ये तर्णका वत्सास्तेषां स्वनास्तेषां आकर्णनं तेनोदीर्णं उत्कृष्टस्तथा तेन । कथंभूतेषु गोपुरमु-

गोपुरमुखेषु, दिग्विजयमाचरितुमिच्छतामसमशरसैनिकानां दधिचन्दनतिलकेष्विव च नयनविषयतामवतरत्सु नक्षत्रबिम्बेषु,

इतश्च दुश्च्यवनदिशि चिरमवेक्षितसुधासूतिसाहायकेन तदासन्नतरागमनविलोकनादिव पुरःसत्वरमुदयगिरिशिखरान्तरालादुच्चलमानेन मदनसैन्येन दलितकर्पूरतरुगर्भधूलिनिकर इव, शिरःपिण्डकण्डूयनमिषोदस्तहस्तेन हरिहस्तिना मुहुर्मुहुरुपरिविकीर्यमाणकरवारिशीकरोत्करागम इव, गगनपुरप्रवेशमाचरतः खण्डपरशुचूडामणेः पुरस्तादुडुपुरंध्रिकाभिरुदीर्यमाणलाजाञ्जलिप्रकर इव, विभावरीवधूवदनदर्शनायासीदतो निशीथिनीनाथस्यान्तराप्रसा-

---

खेषु । अर्णवार्णःस्विव समुद्रजलेष्विव । कथंभूतेषु अर्णवार्णःसु । मथ्यमानेषु सुरासुरैर्विलोड्यमानेषु । यथा अर्णवार्णांसि मथ्यमानानि मुखरीभवन्ति । पुनश्च केषु सत्सु । नक्षत्रबिम्बेषु सत्सु तारामण्डलेषु सत्सु । किं कुर्वत्सु नक्षत्रबिम्बेषु । नयनविषयतामवतरत्सु लोचनगोचरत्वमागच्छत्सु । कथंभूतेषु । असमशरसैनिकानां कन्दर्पसेनासमवेतानां दधिचन्दनतिलकेष्विव दध्ना संमिश्रं चन्दनं दधिचन्दनं तस्य तिलकेष्विव विशेषकेष्विव । किं कुर्वताम् असमशरसैनिकानाम् । दिग्विजयं आचरितुं कर्तुमिच्छतां वाञ्छताम् ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । इतश्च एकस्मिन् पार्श्वे दुश्च्यवनदिशि इन्द्रदिशायां पूर्वस्यां दिशि किरणजाले चन्द्रमारश्मिसमूहेषु दृष्टिपथं अवतरति गच्छति सति । किरणजाले किं कुर्वति सति । उत्प्रेक्षां संकल्पमर्हति प्राप्नुवति सति । किरणजाले कीदृशि उत्प्रेक्षामर्हतीत्याह—मदनसैन्येन दलितकर्पूरतरुगर्भधूलिनिकरे इव दलिता ये कर्पूरतरवस्तेषां गर्भधूली तस्या निकरे इव । किं कुर्वाणेन मदनसैन्येन । पुरोऽग्रतः सत्वरं शीघ्रं उदयगिरिशिखरान्तरालात् पूर्वपर्वतमस्तकमध्यात् उच्चलमानेन संमुखं गच्छता । 'उदश्च उ' इत्यात्मनेपदम् । चन्द्रस्य मित्रत्वात् । पुनः कथंभूतेन मदनसैन्येन । चिरं अवेक्षितसुधासूतिसाहायकेन अवेक्षितं वाञ्छितं सुधासूतेश्चन्द्रस्य साहायकं सहायत्वं येन तत्तथा तेन । उच्चलनमपि कस्मात् कृतम् । उत्प्रेक्षते—तदासन्नतरागमनविलोकनादिव तस्य सुधासूतेरासन्नतरं निकटतरं यदागमनं मासस्तस्य विलोकनादिव दर्शनादिव । पुनः कथंभूते किरणजाले । हरिहस्तिना ऐरावणगजेन शिरःपिण्डकण्डूयनमिषोदस्तहस्तेन शिरःपिण्डौ मस्तककुम्भौ तयोः कण्डूयनं खर्जनं तस्य मिषेण छद्मना उदस्त उत्क्षिप्तो योऽसौ हस्तः शुण्डादण्डः तेन कारणभूतेन मुहुर्मुहुर्वारंवारं उपरिविकीर्यमाणा ये करवारिशीकराः शुण्डाजलकणास्तेषां उत्करागमे इव । पुनः कथंभूते किरणजाले । गगनपुरप्रवेशं आकाशनगरप्रवेशं आचरतः कुर्वतः खण्डपरशुचूडामणेः खण्डपरशुः श्रीमहादेवस्तस्य चूडामणिः तस्य खण्डपरशुचूडामणेश्चन्द्रस्य पुरस्तादग्रतः उडुपुरंध्रिकाभिर्नक्षत्रकान्ताभिः उदीर्यमाणा उत्क्षिप्यमाणा ये लाजाञ्जलय आर्द्रतण्डुलप्रभृतयस्तेषां प्रकरे समूहे इव । पुनः कथंभूते किरणजाले । विभावरीवधूवदनदर्शनायासीदत आगच्छतो



रितसितदुकूलमुखपटप्रसर इव, निजसुहृज्जन्मोत्सवविजृम्भितस्य जलराशेरुद्दण्डलहरिकोत्तम्भितफेनपुञ्जोच्छ्रय इव, उष्णकराभितापदुःखितस्य धरणिधरकुटुम्बिग्रामस्य शिशिरकरमहीपतेः प्रसादावलोकनोदय इव, उत्प्रेक्षामर्हति विरहिणीकपोलपाण्डुरे पुरंदरपुरपुरंध्रिकास्मितसितचोरिणि हसितसितपताकांशुकाडम्बरे विडम्बितकेतकीरजःपटलकान्तिनि दृष्टिपथमवतरति सरस्वतीकटाक्षवलक्षतासराले किरणजाले,

ततः प्रथमतरमचिरहतमतङ्गजरुधिरजलजडिमानमुपनेतुमिच्छुना करिवैरिकिशोरकेण मण्डलितसटाचक्रवालहारिणि समीपतराशोकतरुण-

---

निशीथिनीनाथस्य चन्द्रस्य अन्तरा मध्ये प्रसारितः तिरस्करणीकृतो योऽसौ सितदुकूलमुखपटः शुक्लक्षौमवस्त्रमुखपटस्तस्य प्रसरे विस्तारे इव । पुनः कथंभूते किरणजाले । निजसुहृत् चन्द्रमाः समुद्रस्य सुहृत् तस्य जन्मोत्सवः तेन विजृम्भितस्योल्लसितस्य जलराशेः समुद्रस्य उद्दण्डा उल्लोला या लहरिकाः कल्लोलास्ताभिरुत्तम्भित उच्चलितः फेनपुञ्जोच्छ्रय इव समुद्रकफराशिस्तस्योच्छ्रये इव उन्नताविव । पुनः कथंभूते किरणजाले । उष्णकरः श्रीसूर्यस्तस्याभितापस्तेन दुःखितस्य धरणिधरकुटुम्बिग्रामस्य पर्वतकणबीजिसमूहस्य शिशिरकरमहीपतेश्चन्द्रनरेन्द्रस्य प्रसादावलोकनोदये इव प्रसादस्य प्रसन्नीभवनस्यावलोकनं निरीक्षणं तस्योदय इव प्रादुर्भावे इव । पुनः कथंभूते किरणजाले । विरहिणीकपोलपाण्डुरे विरहिणी विप्रयोगिनी स्त्री तस्याः कपोलवत् गण्डस्थलवत् पाण्डुरे उज्ज्वले । उक्तं च—'अनेककार्यव्यासङ्गावस्या नागच्छति प्रियः । तस्या नाम सुदुःखार्ता विरहोत्कम्पिता मता ॥' पुनः कथंभूते । पुरंदरपुरपुरंध्रिकास्मितसितचोरिणि पुरंदरपुरमिन्द्रनगरं तस्य पुरंध्रिकाः स्त्रियस्तासां स्मितं हास्यं ईषद्धसितं तस्य सितं उज्ज्वलत्वं तं चोरयति तिरस्करोतीत्येवंशीलं तत्तथोक्तं तस्मिन् । पुनः कथंभूते । हसितसितपताकांशुकाडम्बरे हसितस्तिरस्कृतः सितपताकांशुकानां उज्ज्वलवस्त्राणां आडम्बरो येन तत्तथा तस्मिन् । पुनः कथंभूते । विडम्बितकेतकीरजःपटलकान्तिनि विडम्बिता तिरस्कृता केतकीरजःपटलकान्तिर्येन किरणजालेन तत्तथा तस्मिन् । पुनः कथंभूते । सरस्वतीकटाक्षवलक्षतासराले सरस्वत्याः श्रुतदेवतायाः ये कटाक्षाः नेत्रप्रान्तास्तेषां वलक्षता उज्ज्वलता तया असरालेऽपर्यन्ते ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । कुमुदचक्षुषि चन्द्रे सति । कुमुदेषु चक्षुर्दृष्टिर्यस्य स कुमुदचक्षुरिति विग्रहे कुमुदचक्षुषः पुंस्त्वम् । किं क्रियमाणे कुमुदचक्षुषि । क्षणं मुहूर्तमेकं उपतर्क्यमाणे सति । कासावुत्प्रेक्षा इति चेत् उच्यते—कथंभूते कुमुदचक्षुषि । ततस्तदनन्तरं किरणजाले दृष्टिपथमवतीर्णे सति प्रथमतरं उदयमात्रं यथा भवत्येवं अचिरहतमतङ्गजरुधिरजलजडिमानं अचिरकालं हता ये मतङ्गजास्तेषां रुधिरजलस्य जडिमानं जडत्वं उपनेतुं ग्रहीतुं इच्छुना इच्छता करिवैरिकिशोरकेण सिंहबालकेन मण्डलितं कुण्डलीकृतं यत् सटाचक्रवालं स्कन्धकेसरमण्डलं तत् हरति तिरस्करोति तदुपमां धरति इ-

पल्लवरुचि कपिशकुसुमस्तबकसुन्दरे कुसुम्भांशुकपिहितगौरीपयोधरविडम्बिनि धूर्जटिजटाज्योतिरमन्दमन्दाकिनीडिण्डीरपिण्डहृदयंगमे पुरुहूतनिकेतकेतुरक्ताञ्चलकलितकलधौतकलशलक्ष्मीलिहि रोहिणीमुखचुम्बनसंगलितजतुरसारुणिताङ्गनिर्माणे क्षणमुपतर्क्यमाणे, पुनरनतिचिरादेव निकटगतगगनापगातरङ्गसंगमादिव मनसिजोत्सवप्रसाधितसितातपत्ररोचिषि, योषिदौषधीनामधरदलेषु रागसंक्रमादिव पितामहमौलिमनोहरत्विषि, नि-

---

त्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । समीपतराशोकतरुणपल्लवरुचि समीपतरा अर्थात् चन्द्रस्य निकटवर्तिनो ये अशोकानां तरुणपल्लवाः प्रत्यग्रकुम्पलानि तद्वत् रुक् दीप्तिः रक्तत्वं यस्य स तथा तस्मिन् । पुनः कथंभूते । कपिशकुसुमस्तबकसुन्दरे कपिशः श्यावः धूसरारुणः पाण्डुररक्तो योऽसौ कुसुमस्तबकः अर्थात् अशोकपुच्छगुलुञ्छकः तद्वत् सुन्दरो मनोहरस्तस्मिन् । पुनः कथंभूते । कुसुम्भांशुकपिहितगौरीपयोधरविडम्बिनि कुसुम्भेन रागद्रवेण उपलक्षितं यदंशुकं सूक्ष्मवस्त्रं तेन पिहित आवृतो योऽसौ गौरीपयोधरः तं विडम्बयति तिरस्करोति इत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । धूर्जटिजटाज्योतिरमन्दमन्दाकिनीडिण्डीरपिण्डहृदयंगमे धूर्जटेः श्रीमहादेवस्य जटाज्योतिभिरमन्दः प्रचुरो योऽसौ मन्दाकिनीडिण्डीरपिण्डः गङ्गानदीफेनपिण्डस्तद्वत् हृदयंगमे मनोहरे । मनाग्रक्त इत्यर्थः । पुनः कथंभूते । पुरुहूतनिकेतकेतुरक्ताञ्चलकलितकलधौतकलशलक्ष्मीलिहि पुरुहूत इन्द्रः पूर्वदिक्स्वामी तस्य निकेतः प्रासादस्तत्र ये केतवो ध्वजास्तेषां रक्ताञ्चलैः कलितो वेष्टितो योऽसौ कलधौतकलशः कनककुम्भः रूप्यकलशो वा । 'कलधौतं रूप्यहेम्नोः कलाधौतं कलध्वनौ' । तस्य या लक्ष्मी रक्तत्वं तां लेढीति आस्वादयतीति स तथा तस्मिन् । पुनः कथंभूते । रोहिणीमुखचुम्बनसंगलितजतुरसारुणिताङ्गनिर्माणे रोहिणी कुमुदचक्षुषो भार्या तस्या मुखस्य चुम्बनेन संगलितो निर्गलितो योऽसौ जतुरसः तेनारुणितमव्यक्तरागीकृतं अङ्गनिर्माणं शरीरनिर्मितं यस्य स तथोक्तस्तस्मिन् । पुनः कथंभूते । पुनरपि अनतिचिरादेव शीघ्रमेव रक्तत्वादनन्तरं मनसिजोत्सवप्रसाधितसितातपत्ररोचिषि मनसिजस्य उत्सवे महोत्सवे प्रसाधितमुद्धृतं यत् सितातपत्रं शुक्लच्छत्रं तद्वद्रोचिः शोभा यस्य स तथा तस्मिन् । उज्ज्वलतां प्राप्त इत्यर्थः । कस्मात् । उत्प्रेक्षते—निकटगतगगनापगातरङ्गसंगमादिव निकटगता समीपवर्तिनी या गगनापगा वियद्गङ्गा तस्यास्तरङ्गा महान्तः कल्लोलास्तेषां संगमादिव संसर्गादिव । पुनः कथंभूते । पितामहमौलिमनोहरत्विषि पितामहस्तस्य मौलिः मस्तकस्तद्वत् मनोहरा उज्ज्वला त्विट् कान्तिर्यस्य स तथा तस्मिन् । एवंविधं शुक्लत्वं चन्द्रे कुत आगतमित्याह—योषिदौषधीनामधरदलेषु रागसंक्रमादिव योषितामधरेषु औषधीनां दलेषु पल्लवेषु रागस्य रक्तिम्नः संक्रमात् संचरणात् इव । यथासंख्योत्प्रेक्षालंकारः । रक्तत्वं



खिलजगद्धामधवलनसुधाकुम्भे, रतिविनोदविद्योपदेशिनि, मदनरदिमदोद्दीपनपिण्डे, सुरतश्रमाम्भःकणलुण्ठिनि, पौलोमीविलासदर्पणे, क्रमेण च नमुचिरिपुदिगन्तपर्वतानां पादस्थलाङ्गुलीषु नखमणिभूयमुपगम्य संविश्य मेखलासु नायकमणिगणितिमनुभूयोपकण्ठदेशेषु कुण्डलमणिश्रियमाश्रित्य च शिरःश्रेणिषु शिखण्डमण्डनमणिभावं को नु खलु सकलभुवनोपकारबद्धकक्षाणामेकान्तस्थितिबहलैरेभिरचलैः सह संगमक्रम इति विचिन्त्येवानवरतमुदयाचलाग्रसरसः कलहंस इवाकाशदेशनिश्रेणिमुपेयुषि कुमुदचक्षुषि,

---

तत्र क्षिप्तमिति भावः । पुनः कथंभूते । निखिलजगद्धामधवलनसुधाकुम्भे निखिलं यज्जगत् तदेव धाम प्रासादस्तस्य धवलने सुधाकुम्भः श्वेतद्रव्यकवलः चूर्णकुम्भ इत्यर्थस्तस्मिन् । पुनः कथंभूते । रतिविनोदविद्योपदेशिनि रतेर्या विनोदविद्या क्रीडाविज्ञानं तामुपदेशयतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । मदनरदिमदोद्दीपनपिण्डे मदन एव रदी हस्ती तस्य मदोद्दीपने पिण्डं जीवनं मदनरदिमदोद्दीपनपिण्डस्तस्मिन् । उक्तं च—'पिण्डो वृन्दे जपापुष्पे गोले बोलेऽङ्गसिह्लयोः । कवले पिण्डं तु वेश्मैकदेशे जीवनायसोः ॥ बले सान्द्रे पिण्ड्यलाबूखर्जूर्योस्तगरेऽपि च' । पुनः कथंभूते । सुरतश्रमाम्भःकणलुण्ठिनि सुरतश्रमस्य ये अम्भःकणाः तान् लुण्ठतीत्येवंशीलः स तथा तस्मिन् । पुनः कथंभूते । पौलोमीविलासदर्पणे पौलोमी पूर्वदिक्पालदेवेन्द्रपत्नी तस्या विलासदर्पणः क्रीडामुकुरस्तस्मिन् । कुमुदचक्षुषि कथंभूते सति । आकाशदेशनिश्रेणिं आकाशदेशे एव निश्रेणिरधिरोहणी तां उपेयुषि आरूढवति । गतवतीत्यर्थः । किं कृत्वा पूर्वं निश्रेणिमुपेयिवान् । इति अमुना प्रकारेण अनवरतं विचिन्त्येव पर्यालोच्येव । इतीति किम् । नु इति वितर्के । कः खलु पतिरचलैः सह संगमक्रम एभिः प्रत्यक्षीभूतैः । खलैर्हेदयाचलैः सह संगमोक्तक्रमश्चेदित्यर्थः । केषां संगमक्रमोऽयुक्त इत्याह—सकलभुवनोपकारबद्धकक्षाणां सकलस्य भुवनस्य समग्रस्य पृथ्वीमण्डलस्य उपकारे बद्धा कक्षा प्रीतिर्यैस्ते तथा तेषाम् । कथंभूतैरचलैः । एकान्तस्थितिबहलैः एकान्तेन सर्वथा स्थितौ बहला स्थानप्रचुरास्ते तथा तैः । कथंभूतः कुमुदचक्षुः । उदयाचलाग्रसरसः कलहंस इव यथा उदयाचलाग्रसरोवरात् कलहंस उड्डीय आकाशमुपैति । किं कृत्वा पूर्वं आकाशमुपेयिवान् । क्रमेण अनुक्रमेण नमुचिरिपुदिगन्तपर्वतानां पादस्थलाङ्गुलीषु नखमणिभूयमुपगम्य नमुचिरिपोः पूर्वदिगिन्द्रस्य दिगन्तस्य पूर्वदिक्प्रान्तस्य ये पर्वतास्तेषां पादस्थलाङ्गुलीषु नखमणिभूयं नखमणित्वं उपगम्य प्राप्य । पुनश्च किं कृत्वा पूर्वम् । मेखलासु नायकमणिगणितिं संविश्य नमुचिरिपुदिगन्तपर्वतानां मेखलासु कटिनीषु नायकमणिगणितिं मध्यमणिगणनां संविश्य प्रविश्य । पुनश्च किं कृत्वा पूर्वमाकाशदेशनिश्रेणिमुपेयिवान् । नमुचिरिपुदिगन्तपर्वतानामुपकण्ठदेशेषु शिखराधोभूमिभागेषु कुण्डलमणिश्रियं कर्णवेष्टनमाणिक्यशोभां अनुभूय लब्ध्वा । पुनश्च किं कृत्वा पूर्वम् । नमुचिरिपुदिगन्तपर्वतानां शिरःश्रेणिषु शिखण्डमण्डनमणिभावं शिरोरत्नत्वं आश्रित्य लब्ध्वा ॥

विजृम्भमाणासु च बालसखीष्विव पयोधिवेलानाम्, उपकल्पितपारणास्विव चकोरकुलकामिनीनाम्, उपाध्यायिकास्विव युवतिरतिकैतवानाम्, गतिनियन्त्रणमन्त्रसिद्धिष्विवाभिसारिकाभुजङ्गीनाम्, तिमिरतिरस्कारसितशलाकास्विव च भुवनलोचनमार्गाणाम्, अमृतधौतातसतन्तुसंतानमन्थरायाममिव व्योम निर्मापयन्तीषु शिशिरकरकिरणपरम्परासु,

प्रकटीभवति च लोकान्तरादिहानुसरतो रोहिणीपतेर्विरहविनोदनाय निजाङ्गनालिङ्गनव्यतिकरादिव हृदयप्रतिबिम्बितस्तनतमालरसलिखितपत्रस्पृहणीये, हंसांसविलग्नशैवलविलासिनि, अपहसितविरहिणीकपोलतल-

---

पुनश्च कासु सतीषु महादेवीभवनद्वारमुपागतोऽस्मि । शिशिरकरकिरणपरम्परासु चन्द्रमयूखश्रेणिषु सतीषु । किं कुर्वाणासु शिशिरकरकिरणपरम्परासु । विजृम्भमाणासु प्रसरन्तीषु । पुनः कथंभूतासु । पयोधिवेलानां समुद्रोर्मीणां बालसखीष्विव बालवयस्यास्विव । पुनः कथंभूतासु । चकोरकुलकामिनीनां चकोराणां जीवाजीवपक्षिणां कुलानि समूहास्तेषां कामिनीनां उपकल्पितपारणास्विव । पुनः कथंभूतासु । युवतिरतिकैतवानां युवतीनां रतिकैतवानां संभोगकपटानां उपाध्यायिकास्विव गुरुभार्यास्विव । पुनः कथंभूतासु । अभिसारिकाभुजङ्गीनां परपुरुषलम्पटस्त्रीसर्पिणीनां गतिनियन्त्रणमन्त्रसिद्धिष्विव गतेर्गमनस्य नियन्त्रणं निषेधः तस्य मन्त्रसिद्धिष्विव । पुनः कथंभूतासु । भुवनलोचनमार्गाणां जगत्त्रयनयनपथानां जगति स्थितप्राणिगणलोचनपद्धतीनां तिमिरतिरस्कारसितशलाकास्विव तिमिरस्य चक्षूरोगस्य तिरस्कारे विनाशने सितशलाकास्विव उज्ज्वलशलाकास्विव । किं कुर्वतीषु शिशिरकरकिरणपरम्परासु । व्योम आकाशं निर्मापयन्तीषु । कथंभूतं व्योम । अमृतधौतातसतन्तुसंतानमन्थरायामम् अतसीनामिमे आतसास्ते च ते तन्तवः सूत्राणि अमृतेन धौता उज्ज्वलीकृता ये आतसतन्तवस्तेषां संतानः आतानस्तेन मन्थरो मन्दगामी आयामो दैर्घ्यं यस्य व्योम्नस्तत्तथोक्तम् ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । लाञ्छने मृगाकारचन्द्रस्य लक्ष्मणि प्रकटीभवति स्फुटीभवति सति । कथंभूते लाञ्छने । रोहिणीपतेः हृदयप्रतिबिम्बितस्तनतमालरसलिखितपत्रस्पृहणीये चन्द्रस्य हृदये प्रतिबिम्बितं स्थासकवत्स्थितं स्तनतमालरसेन लिखितं यत्पत्रं पत्रावली तद्वत् स्पृहणीयं मनोहरं तस्मिन् । किं कुर्वतो रोहिणीपतेः । लोकान्तरात्पूर्वविदेहात् इह अस्मिन् भारते अनुसरतः आगच्छतः विरहविनोदनाय विरहविनाशनाय निजाङ्गनालिङ्गनव्यतिकरादिव निजा स्वकीया या अङ्गना रोहिणी तस्या आलिङ्गनं आश्लेषणं तस्य व्यतिकरादिव प्रघट्टादिव । उत्प्रेक्षा । पुनः कथंभूते लाञ्छने । हंसांसविलग्नशैवलविलासिनि हंसस्य अंसः पक्षमूलं तत्र विलग्नं यत् शैवलं तद्वत् विलसति शोभत इत्येवंशीलं तथा तस्मिन् । पुनः कथंभूते । अपहसितविरहि-



विलम्बमानालकभङ्गे, कुमुदोदरनिलीनालिकुलस्पर्धिनि, मघवन्मातङ्गकटनिकटमदलेखारेखे, सुधासिन्धुप्रफुल्लनीलाम्बुजशङ्किनि, प्रसूनस्तबकान्तरोद्गतहरितच्छदच्छायाच्छुपि लाञ्छने,

न खल्वसमानविग्रहः पुरुषाणामनारभ्य कांचिन्महतीमापदमुपशाम्यतीति मनीषयेव निजान्वयबीजसंरक्षणाय परं केषुचिन्नीचावृतगहनप्रकाशदेशेषु निभृत्य स्थितिकुशले च तमःपटले,

भवत्सु च मधुगन्धलुब्धमधुपसंबाधनिरुध्यमानविधुदीधितिप्रसरेषु विलासिनामुदवसितवातायनविवरेषु,

---

णीकपोलतले विप्रलब्धस्त्रीगण्डस्थले विलम्बमानः लसमानः अलकभङ्गो येन तत्तथा तस्मिन् । पुनः कथंभूते । कुमुदोदरनिलीनालिकुलस्पर्धिनि कुमुदं कैरवं तस्योदरे मध्ये निलीनमुपविष्टं यदलिकुलं तेन स्पर्धते उपमां धरति इत्येवंशीलं तत्तथा तस्मिन् । पुनः कथंभूते । मघवन्मातङ्गकटनिकटमदलेखारेखे मघवान् इन्द्रस्तस्य मातङ्ग ऐरावणस्तस्य कटो गण्डस्थलं तस्य निकटे समीपे उपरितनभागे या मदलेखा दानरेखा तद्वत् रेखा उपमा यस्य लाञ्छनस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । सुधासिन्धुप्रफुल्लनीलाम्बुजशङ्किनि सुधासिन्धौ क्षीरोदसागरे प्रफुल्लत् विकसत् नीलाम्बुजं इन्दीवरं तद्वत् शङ्का उपमा विद्यते यस्य तत्तथा तस्मिन् । पुनः कथंभूते । प्रसूनस्तबकान्तरोद्गतहरितच्छदच्छायाच्छुपि प्रसूनानामुज्ज्वलपुष्पाणां स्तबको गुलुञ्छस्तस्यान्तरे मध्ये उद्गत उत्पन्नो योऽसौ हरितच्छदो नीलपत्रं तस्य छायां शोभां छुपति स्पृशति तदुपमां धरति तत्तथा तस्मिन् ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । तमःपटले सति । कथंभूते तमःपटले । परं केवलं केषुचित् निपतेषु नीचावृतगहनप्रकाशदेशेषु निभृत्य प्रच्छन्नीभूय स्थितिकुशले स्थानकरणविचक्षणे नीचाश्च निम्ना आवृताश्च आवरणसहिता गहनाश्च अविज्ञातपरभागाश्च प्रकाशाश्च कदाचिदपि अप्राप्तसूर्यादितेजसः ते च ते देशाः प्रदेशास्तेषु । तमःपटले स्थितिकरणे किमर्थम् । निजान्वयबीजसंरक्षणाय । यथा उत्प्रेक्षते—इति मनीषया इव ईदृश्या बुद्ध्या इव । इतीति किम् । असमानविग्रहः महद्भिः सह युद्धं खलु निश्चयेन पुरुषाणां कांचित् विवक्षितां महतीं गुरुतां आपदं विपदं अनारभ्य अकृत्वा न उपशाम्यति ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । विलासिनां उदवसितवातायनविवरेषु सत्सु उदवसितानि गृहाणि तेषां वातायनानि गवाक्षजालानि तेषां विवरेषु छिद्रेषु सत्सु । कथंभूतेषु उदवसितवातायनविवरेषु । मधुगन्धलुब्धमधुपसंबाधनिरुध्यमानविधुदीधितिप्रसरेषु भवत्सु संजायमानेषु सत्सु मधु मद्यं तस्य गन्धः तस्मिन् लुब्धा

करविलम्बितकुसुमसरसौरभसुभगेषु स्रगाजीविनामापणरङ्गभागेषु,

परिवर्तमानकाश्मीरमलयजागुरुपरिमलोद्गारसारेषु सौगन्धिकानां विपणिविस्तारेषु,

ससंभ्रममितस्ततः परिसर्पता संभोगोपकरणाहितादरेण पौरनिकरेण निजविलासदर्शनाहंकारिमनोरथाभिरवधारितविटमुधाप्रश्नसंकथाभिः स्मर-

---

लोभं गता ये मधुपास्तेषां संबाधो मेलापकस्तेन निरुध्यमानः आघ्रियमाणो(?)[1] विधोश्चन्द्रस्य दीधितीनां किरणानां प्रसरो व्याप्तिर्येषां उदवसितवातायनविवराणां तानि तथोक्तानि तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । स्रगाजीविनां मालाकारिणां आपणरङ्गभागेषु सत्सु हट्टाग्रभागेषु सत्सु । कथंभूतेषु आपणरङ्गभागेषु । करविलम्बितकुसुमसरसौरभसुभगेषु करेषु करैर्वा विलम्बिता उच्चलिता ये कुसुमसरा पुष्पहारास्तेषां सौरभेण परिमलेन सुभगा अतिमनोहरास्तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । सौगन्धिकानां विपणिविस्तारेषु गन्धद्रव्यविक्रयिणां वणिजां हट्टाप्रसरेषु सत्सु । कथंभूतेषु विपणिविस्तारेषु । परिवर्तमानकाश्मीरमलयजागुरुपरिमलोद्गारसारेषु काश्मीरदेशे भवं कुङ्कुमं काश्मीरम्, मलयपर्वते जातं चन्दनं मलयजम्, अगुरु न गुरु अगुरु कृत्रिमतया लघुत्वगुणसहितं राजार्हापरनामकं लोहसंज्ञमगुरूच्यते, काश्मीरमलयजागुरूणि परिवर्तमानानि पलव्यमानानि यानि काश्मीरमलयजागुरूणि तेषां परिमलोद्गारा गन्धप्रादुर्भावास्तैः सारा अतिमनोहरा ये विपणिविस्तारास्ते तथा तेषु ॥

पुनश्च केषु सत्सु महादेवीभवनद्वारमुपागतोऽस्मि । राजवीथीमण्डलेषु राजमार्गसमूहेषु सत्सु । कथंभूतेषु राजवीथीमण्डलेषु । पौरनिकरेण नगरलोकसमूहेन समाकुलेषु व्याप्तेषु । किं कुर्वता पौरनिकरेण । ससंभ्रमं सादरं इतस्ततो यत्र तत्र परिसर्पता समन्ताद्गच्छता पर्यटता । कथंभूतेन पौरनिकरेण । संभोगोपकरणाहितादरेण संभोगस्य उपकरणानि पर्यङ्कहंसतूलपद्महताम्बूलपटलिकापुष्पचन्दनादीनि तेषु आहितः कृत आदरः प्रयत्नो येन स तथा तेन । न केवलं पौरनिकरेण समाकुलेषु राजवीथीमण्डलेषु, अपि तु पण्याङ्गनासमितिभिः वेश्यासमूहैः समाकुलेषु । कथंभूताभिः पण्याङ्गनासमितिभिः । निजविलासदर्शनाहंकारिमनोरथाभिः निजानां विलासानां हावभावविभ्रमादीनां दर्शनेन कामुकानां विलोकनकरणेन अहंकारिणः सदा मनोरथा दोहदानि यासां तास्तथोक्ताभिः ।पुनः कथंभूताभिः । अवधारितविटमुधाप्रश्नसंकथाभिः अवधारिता विटानां कामुकानां मुधाप्रश्नसंकथा फल्गुनयोगसंकथनानि वार्ताः ताभिस्तथोक्ताभिः । ये ये फल्गुना निरर्थकेन इच्छन्ति किं ग्रहिष्यसीति प्रश्नं कुर्वन्ति तान् प्रति संभाषणं वेश्या न कुर्वन्ति । तासां वैलक्षण्यात् ये ये अर्थिनः सन्ति पृच्छन्ति तान्

---

[1] 'आक्रियमाणः' इति स्यात्.



कुरङ्गक्रीडावनवसतिभिः पण्याङ्गनासमितिभिरात्मपतिसंदिष्टघटनाकुलितहृदयेनावधीरितसखीजनसंभाषणोत्तरदानसमयेन संचरता संचारिकानिकायेन च समाकुलेषु समन्ततो राजवीथीमण्डलेषु,

प्रवृत्तासु च दिवसव्यापारद्विगुणितानुरागवेगवृत्तासु नगरमिथुनानामनङ्गरसरहस्यगोष्ठीषु,

निखिलजनमनोनलिनसंभव सकलभुवनोत्पत्तिप्रजापते रतिरमण प्रियतमाधरामृतवर्षावग्रहादकाण्डजन्मनः कृशानुकणगर्भानिव करान्विकिरतोऽमुष्मादुत्पातरविमण्डलाच्चन्द्रात्स्वयमेव शुष्कशरःकमलिनीवनादपि कष्ट-

---

संभाषणं प्रविदधतीत्यर्थः । उक्तं च—'आचार्ये च नटे धूर्ते व्यासवेश्याचिकित्सके । मायां तत्र न प्रकुर्वीत माया तैरेव निर्मिता ॥' पुनः कथंभूताभिः । स्मरकुरङ्गक्रीडावनवसतिभिः स्मरः कन्दर्पः स एव कुरङ्गः । चपलस्वभावत्वात् भयप्रकृतित्वात् च । तस्य क्रीडावनवसतिभिः क्रीडायाः संबन्धिन्यो वनवसतयो वनस्थानानि ताभिः । न केवलं पण्याङ्गनासमितिभिः समाकुलेषु, अपि तु संचारिकानिकायेन च दूतीसमूहेन च । कथंभूतेन संचारिकानिकायेन । आत्मपतिसंदिष्टघटनाकुलितहृदयेन आत्मपतिना निजस्वामिना संदिष्टा उपदिष्टा शिक्षिता या घटना मेलरचना तया आकुलितं भृतं हृदयं यस्य संचारिकानिकायस्य स तथा तेन । पुनः कथंभूतेन । अवधीरितसखीसंभाषणोत्तरदानसमयेन अवधीरितः अनादृतः सखीजनसंभाषणस्य परस्परभाषणस्य उत्तरदानसमयः प्रत्युत्तरदानावसरो येन संचारिकानिकायेन स तथा तेन । किं कुर्वता संचारिकानिकायेन । संचरता विवक्षितगृहप्रवेशं कुर्वता ॥

पुनश्च कासु सतीषु महादेवीभवनद्वारमुपागतोऽस्मि । नगरमिथुनानां उज्जनीपत्तनस्त्रीपुरुषद्वन्द्वानां अनङ्गरसरहस्यगोष्ठीषु प्रवृत्तासु कामरसगोप्यतत्त्ववार्तासु च प्रवृत्तासु । कथंभूतासु । दिवसव्यापारद्विगुणितानुरागवेगवृत्तासु दिवसव्यापारैः सेवाकृषिवाणिज्यादिदिननियोगैर्द्विगुणितः पुनरुक्तो योऽसौ अनुरागवेगो अकृत्रिमस्नेहो औत्सुक्यं तेन वृत्तास्तथोक्तासु ॥

पुनश्च कस्मिन् सति महादेवीभवनद्वारमुपागतोऽस्मि । प्रवसितपथिकवनिताभिर्विप्रलब्धोत्तमनायिकाभिः इति अमुना प्रकारेण कुसुमधनुषि कन्दर्पे कामदेवे उपालभ्यमाने निन्दायुक्त उपालम्भवचनं प्राप्यमाणे च सति । इतीति किम् । हे निखिलजनमनोनलिनसंभव सर्वलोकहृदयकमलसमुत्पन्न, हे सकलभुवनोत्पत्तिप्रजापते सकलस्य भुवनस्य पृथ्वीमण्डलस्य तत्रस्थितस्त्रीपुरुषादिसमाने उत्पत्तेः संभवस्य प्रजापते सृष्टिकर्तः ब्रह्मन्, हे रतिरमण हे रतिवल्लभ, विरहिणीजने विप्रलब्धपुरंध्रीसमूहे पञ्चभिरपि बाणैरुन्मादमोहनसंतापनशोषणमारणाभिधानैः पञ्चभिरपि शरैः प्रहर्तुं निष्ठुरप्रहारान् दातुं भवतस्तव किं युक्तं किं योग्यमिदं कार्यम् । कथंभूते सति विरहिणीजने । स्वय-

तरमवस्थान्तरमुपगतवति विरहिणीजने किं पञ्चभिरपि बाणैर्भवतः प्रहर्तुं युक्तमिति प्रवसितपथिकवनिताभिरुपालभ्यमाने च कुसुमधनुषि,

अहमपि तदाहो मनसिजातिशायिशरीरपरिकर कामिनीमुखकमलमधुकर विभ्रमदिदृक्षयेव विलासिनीनां नयनेषु प्रतिफलन्तीभिः लावण्यरसपिपासयेव कपोलेषु विलुण्ठमानाभिश्चुम्बनाभिलाषधिषणयेवाधरेषु परिस्फुरन्तीभिः परामर्षमनीषयेव स्तनतटेषु चोद्दण्डया प्रवृत्ताभिरमृतमरीचिदीधितिभिराज्याहुतिभिरिव संधुक्ष्यमाणमदनदहनः, रतिरहस्यवय-

---

मेव आत्मनैव शुष्कशरःकमलिनीवनादपि कष्टतरमवस्थान्तरमुपगतवति सति । किं तु अमुष्मात् प्रत्यक्षीभूतात् चन्द्रात् च कष्टतरमवस्थामुपगतवति सति । कथंभूतात् अमुष्मात् चन्द्रात् । उत्पातरविमण्डलात् अयं चन्द्रो न भवति किं तु विरहिणीनां उत्पातरविमण्डलो वर्तते । पुनः कथंभूतात् । प्रियतमाधरामृतवर्षावग्रहात् प्रियतमस्य कान्तस्य यदधरामृतं ओष्ठपानपीयूषं तस्य वर्षो वृष्टिः तस्य अवग्रहः प्रतिबन्धः वृष्टिरोधो यस्मिन् चन्द्रे स तथोक्तस्तस्मात् । उक्तं च—'वृष्टिर्वर्षं तद्विघातेऽवग्रहावग्रहौ समौ ।' कथंभूतादमुष्मात् । अकाण्डजन्मन उत्पातोद्भवात् । किं कुर्वतः अमुष्मात् । करान्किरणान्विकिरतः विक्षिपतः । कथंभूतान् । कृशानुकणगर्भानिव अग्निचूर्णसंभृतमध्यप्रदेशानिव उत्पातरविमण्डलादिव । विशेषणमनुपपन्नमपि उपपन्नमेव । तदाह—'अभिधेयस्यातिथ्यं तदनुपपन्नं ········ । यत्र स्युर्वक्राणामुन्मादीत्यर्थमुक्तं वा ॥'

तदा तस्मिन् चन्द्रोदये काले अहो मनसिजातिशायिशरीरपरिकर मनसिजात् कन्दर्पादपि अतिशायी अतिशयवान् शरीरपरिकरः कायसमुदायो यस्य मारदत्तमहाराजस्य स तथोक्तस्तस्य संबोधनं हे तथोक्त हे मारदत्तमहाराज, हे कामिनीमुखकमलमधुकर कामिनीनामुत्तमनायिकानां मुखान्येव कमलानि तन्मकरन्दास्वादने मधुकरो भ्रमरः तस्य संबोधनं हे तथोक्त, अहमपि महादेवीभवनद्वारमुपागतोऽस्मि । अहं कथंभूतः । अमृतमरीचिदीधितिभिः चन्द्रकिरणैः संधुक्ष्यमाणमदनदहनः संधुक्ष्यमाण उद्दीपीक्रियमाण मदन एव कन्दर्प एव दहनो यस्य स तथोक्तः । कथंभूताभिरमृतमरीचिदीधितिभिः । आज्याहुतिभिरिव घृतस्य आहुतिभिरिव । कथंभूताभिराज्याहुतिभिः । विलासिनीनां नयनेषु प्रतिफलन्तीभिः प्रतिबिम्बमागच्छन्तीभिः । किमर्थं प्रतिफलन्तीभिः । विभ्रमदिदृक्षयेव भ्रूक्षेपशोभादर्शनेच्छया इव । पुनः किं कुर्वन्तीभिराज्याहुतिभिः । विलासिनीनां कपोलेषु विलुण्ठमानाभिः विलुण्ठन्तीभिः । किमर्थं विलुण्ठमानाभिः । लावण्यरसपिपासयेव लावण्यमेव रसः तस्य पिपासया इव पानेच्छया इव । पुनः किं कुर्वन्तीभिराज्याहुतिभिः । विलासिनीनां अधरेषु परिस्फुरन्तीभिः समन्तात् चमत्कुर्वन्तीभिः । किमर्थं परिस्फुरन्तीभिः । चुम्बनाभिलाषधिषणयेव·············· । पुनः किं कुर्वन्तीभिराज्याहुतिभिः । विलासिनीनां स्तनतटेषु उद्दण्डया प्रवृत्ताभिः ·····



स्याभिरिव शिथिलीक्रियमाणमानबन्धनः, प्रत्यायनदूतिकाभिरिव संपाद्यमानप्रियतमासमागमः, कुसुमशरप्रवेशोत्सवपताकिकाभिरिव सूच्यमानतदाराधनक्रमः, शृङ्गारजलधिविजृम्भमाणवात्याभिरिव प्रसर्पमाणमनःकल्लोलः, सुरतसूत्राकर्षणसूचिभिरिव पूर्यमाणवक्षःस्थलः, प्रतीहारवेत्रलताभिरिव निवेद्यमानसभाविसर्जनकालः,

कोमल एव निशीथिन्याः प्रथमाष्टमभागेऽर्धपरिसमाप्त एव च सेवावसरे विसृज्य भ्रूलतोल्लासेन प्रणामावर्जितमौलिमणिमकरिकामरीचिपरिवेषपुनरुक्तपादपीठक्षितीन्सामन्तमहीपतीन् अवलोकनप्रसाददानेन मन्त्रि-

---

·················· । किमर्थं प्रवृत्ताभिः । परामर्शमनीषयेव स्तनस्पर्शबुद्ध्येव । पुनः कथंभूतोऽहम् । शिथिलीक्रियमाणमानबन्धनः । काभिरिव । रतिरहस्यवयस्याभिरिव रतेः संभोगक्रीडाया रहस्यवयस्याभिर्गोप्यतत्त्वशिक्षादायिसखीभिरिव । पुनः कथंभूतोऽहम् । संपाद्यमानप्रियतमासमागमः संपाद्यमानः प्रियतमाया इष्टवनितायाः समागमो मेलापको यस्य स तथोक्तः । कथंभूताभिरिव । प्रत्यायनदूतिकाभिरिव । पुनः कथंभूतोऽहम् । सूच्यमानतदाराधनक्रमः सूच्यमानः अवाग्भिरपि कथ्यमानस्तस्याः प्रियाया आराधनक्रमः संसेवनपरिपाटीकः । कथंभूताभिरिव । कुसुमशरप्रवेशोत्सवपताकिकाभिरिव कुसुमशरस्य प्रवेशे आगमने उत्सवपताकिकाभिरिव महोत्सवध्वजाभिरिव । पुनः कथंभूतोऽहम् । प्रसर्पमाणमनःकल्लोलः प्रसर्पमाणा प्रसार्यमाणा मनसः चित्तस्य कल्लोलाः संकल्पलक्षणा यस्य स तथोक्तः । कथंभूताभिरिव । शृङ्गारजलधिविजृम्भमाणाभिः प्रसरन्तीभिर्वात्याभिरिव वातमण्डलीभिरिव । पुनः कथंभूतोऽहम् । पूर्यमाणवक्षःस्थलः पूर्यमाणं प्रचीयमानं वक्षःस्थलं यस्य स तथोक्तः । कथंभूताभिरिव । सुरतसूत्राकर्षणसूचिभिरिव सुरतसूत्राणि निधुवनतन्तवस्तेषां आकर्षणे आगमने सूचिभिरिव । पुनः कथंभूतोऽहम् । निवेद्यमानसभाविसर्जनकालः निवेद्यमानो ज्ञाप्यमानः सभाया विसर्जनकालो यस्य स तथोक्तः । कथंभूताभिरिव । प्रतीहारवेत्रलताभिरिव प्रतीहाराणां द्वारपालानां वेत्रकरकम्बाभिरिव ॥

पुनश्च किं कृत्वा पूर्वं महादेवीभवनद्वारमुपागतोऽस्मि । निशीथिन्या रात्रेः कोमले एव मृदावेव प्रथमाष्टमभागे प्रथमप्रहरस्यार्धभागे गते सति सामन्तमहीपतीन् सेवागतनरेन्द्रान् भ्रूलतोल्लासेन विसृज्य विसर्जनं कृत्वा । कस्मिन् सति विसृज्य । सेवावसरे अर्धपरिसमाप्ते एव अर्धमिलितसभाजने एव । कथंभूतान् सामन्तमहीपतीन् । प्रणामावर्जितमौलिमणिमकरिकामरीचिपरिवेषपुनरुक्तपादपीठक्षितीन् प्रणामेन आवर्जिता नम्रीकृता ये मौलयो मुकुटानि मस्तकानि वा तत्र या मणिमकरिकाः सुवर्णघटितरत्नजटितनक्रिया आभरणविशेषास्तासां मरीचयः किरणास्तेषां परिवेषो मण्डलं तेन पुनरुक्ता द्विगुणीकृता पाद-

परिषदम् आलापसंभ्रमेण बलमुख्यान् उपासनोपचारेण पुरोधसम् उप-
भोगपारितोषिकेण राजकुमारकान् पादवन्दनेन पितृपितामहसंबन्धवती-
र्जरतीः अनुव्रजनविनयेन च गुरून्, आसन्नचरचामरधारिणीभुजशिरसि
विन्यस्तवामबाहुः, अपरकराङ्गुलिनिदेशेन विनोदरदीनामुपान्तवर्तिनो जनस्य
मन्दिराणि दर्शयन्, दृष्टिप्रदानसंभावितान्तःपुरसमारक्षकलोकः, स्मरनि-
शितविशिखाग्रभागानिवोपहसता विडम्बयतेव विद्रुमोद्भेदशिखाडम्बरमु-
ल्लासयतेव सहविहरन्तीनां विलोचनानि विस्तारयतेव दशनरश्मीनुपचि-

---

पीठक्षितिः चरणावशेषपीठभूमिः यैस्ते तथोक्तास्तान् । पुनश्च किं कृत्वा । अवलोकनप्रसाद-
दानेन मन्त्रिपरिषदं सचिवसभां विसृज्य अवलोकनं संमुखनिरीक्षणं तेनोपलक्षितं प्रसाददानं
वस्त्राभरणादिसमर्पणं तेन अवलोकनप्रसाददानेन । पुनश्च किं कृत्वा । बलमुख्यान् सेनापतीन्
आलापसंभ्रमेण आभाषणादरेण विसृज्य । पुनश्च किं कृत्वा । पुरोधसं त्रिकालज्ञानिनं
पूज्यब्रह्माणं उपासनोपचारेण पादपतनादिसेवाव्यवहारेण विसृज्य । उक्तं च—'वेदवेदा-
ङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादपरो नित्यमेष राज्यपुरोहितः ॥' पुनश्च किं
कृत्वा । उपभोगपारितोषिकेण वस्त्राभरणताम्बूलपुष्पचन्दनाद्युपभोगस्य पारितोषिकेण
हर्षप्रदानेन राजकुमारकान् राजपुत्रान् विसृज्य । पुनश्च किं कृत्वा । पादवन्दनेन
चरणावलग्नेन जरतीः वृद्धस्त्रीः विसृज्य । कथंभूता जरतीः । पितृपितामहसंबन्धवतीः पितु-
र्यशोर्घमहाराजस्य पितामहस्य यशोबन्धुरमहाराजस्य संबन्धः संगधाता(?)विद्यते यासां ताः
पितृपितामहसंबन्धिन्यस्तास्तथोक्ताः । पुनश्च किं कृत्वा । गुरून् उपाध्यायादीन् अनुव्रज-
नविनयेन पृष्ठतो गमनपूजनेन विसृज्य। पुनः कथंभूतोऽहम् । आसन्नचरचामरधारिणीभुज-
शिरसि विन्यस्तवामबाहुः आसन्नचरचामरधारिणीनां स्त्रीणां समीपचरप्रकीर्णकवीजनव-
तीनां स्त्रीणां भुजशिरसि स्कन्धप्रदेशे समारोपितसव्यभुजदण्डः । पुनः किं कुर्वन्नहम् । अपरक-
राङ्गुलिनिदेशेन विनोदरदीनां क्रीडागजानां उपान्तवर्तिनो जनस्य भिण्टादेर्मन्दिराणि गृह-
स्थानानि दर्शयन् यूयमत्र तिष्ठतेति कथयन् । पुनः कथंभूतोऽहम् । दृष्टिप्रदानसंभावितान्तः-
पुरसमारक्षकलोकः दृष्टिप्रदानेन संमुखावलोकनेन संभावितोऽनुकूलितः अन्तःपुरस्य संब-
न्धी समारक्षकाणां लोकस्त्रीणां समूहो येन स तथोक्तः । पुनः कथंभूतोऽहम् । कर्पूरतै-
लप्रबोधितेन प्रज्वालितेन करदीपिकाचक्रवालेन करैरुद्धतानां दीपिकानां चक्रवालेन
मण्डलेन परिवृतो वेष्टितः । किं कुर्वता करदीपिकाचक्रवालेन । स्मरनिशितविशिखाग्र-
भागान् उपहसता तिरस्कुर्वता इव । स्मरस्य निशिता तीक्ष्णा ये विशिखाग्रभागास्तान्
उपहसता इव । पुनः किं कुर्वता । विद्रुमोद्भेदशिखाडम्बरं विडम्बयता इव तिरस्कुर्वता
इव विद्रुमाणां प्रवालवृक्षाणां उद्भेदा अङ्कुरास्तेषां शिखानामग्राणां आडम्बरमाटोपं हसता
इव । पुनः किं कुर्वता । सहविहरन्तीनां सहगच्छन्तीनां स्त्रीणां विलोचनानि उल्लासयतेव ।



न्वतेवाधरदलानि स्पन्दयतेव वदनलावण्यमवस्फारयतेव वक्षोजमण्डलानि
तरलयतेव त्रिवलितरङ्गान्गम्भीरयतेव नाभीकुहराणि दीर्घयतेव नखशुक्तीः
समन्तात्प्रभापटलपल्लवितानिव च कुर्वताभरणमणीन्कर्पूरतैलप्रबोधितेन
करदीपिकाचक्रवालेन परिवृतः, तारागणमध्यगतः शर्वरीपतिरिव, कल्पव-
ल्लरीप्रवालपरिवारितः सुरतरुरिव, कनककेतकीकुड्मलान्तरालविलासरसः
कलहंस इव, तत्कालोचितालापनपेशलैर्नर्मकेलिकिलैर्मुहुर्मुहुरुपगृह्यमाणप्र-
सादपरम्परः, मदान्धसिन्धुर इव पुरश्चारिदौवारिकनिवेद्यमानमार्गभूमिश्च-
रणमार्गेणैव महादेवीभवनद्वारमुपागतोऽस्मि ।

तस्मिंश्चामृतमतिमहादेवीलावण्यशेषादिवोत्पन्नया भ्रूविजृम्भितेनान्त-

---

पुनः किं कुर्वता । सहविहरन्तीनां दशनरश्मीन् विस्तारयता इव । पुनः किं कुर्वता । सह-
विहरन्तीनां अधरदलानि ओष्ठपल्लवानि उपचिन्वतेव पुष्णता इव । पुनः किं कुर्वता । सह-
विहरन्तीनां स्त्रीणां वदनलावण्यं मुखकान्तिं स्पन्दयतेव किंचिच्चलयतेव । पुनः किं कुर्वता ।
सहविहरन्तीनां वक्षोजमण्डलानि स्तनचक्रवालानि अवस्फारयतेव सन्ताद्वर्द्धयतेव । पुनः
किं कुर्वता । सहविहरन्तीनां त्रिवलितरङ्गान् त्रिवलिभङ्गान् तरलयतेव चपलयतेव ।
पुनः किं कुर्वता । सहविहरन्तीनां नाभीकुहराणि गम्भीरयतेव अस्ताधयतेव । पुनः
किं कुर्वता । सहविहरन्तीनां नखशुक्तीः नखमुक्तास्फोटान् दीर्घयतेव आयामयतेव ।
पुनः किं कुर्वता । सहविहरन्तीनां स्त्रीणां आभरणमणीन् समन्तात् सर्वत्र प्रभापटलपल्लवितान्
प्रभापटलैः पल्लविता उल्लसितास्तान् कुर्वतेव । पुनः कथंभूतोऽहम् । तारागणमध्यगतः श-
र्वरीपतिरिव । पुनः कथंभूतोऽहम् । कल्पवल्लरीप्रवालपरिवारितः सुरतरुरिव कल्पवल्लरीवेष्टितः
कल्पवृक्ष इव । पुनः कथंभूतोऽहम् । कनककेतकीकुड्मलान्तरालविलासरसः कलहंस इव सुव-
र्णकेतकीमुकुलानां मध्यगतरसः राजहंस इव । पुनः कथंभूतोऽहम् । तत्कालोचितालापनपेश-
लैः तदवसरयोग्यवचनभाषणमनोहरैर्नर्मकेलिकिलैर्वर्करक्रीडाचतुरैः मुहुर्मुहुः वारंवारं उपगृ-
ह्यमाणप्रसादपरम्परः उपगृह्यमाणा उपादीयमाना प्रसादपरम्परा उचितदानश्रेणिः यस्मात्
स तथोक्तः । पुनः कथंभूतोऽहम् । पुरश्चारिदौवारिकनिवेद्यमानमार्गभूमिर्मदान्धसिन्धुर इव
मदमत्तगजेन्द्र इव पुरश्चारिणो ये दौवारिकाः द्वारे नियुक्तास्तैर्निवेद्यमाना दर्श्यमाना मार्ग-
भूमिः पथिकभूमिका यस्य स तथोक्तः ॥

हे राजन् श्रीमारदत्तमहाराज, तस्मिंश्च मनसिजविलासनिवासभामरसनामनिवास-
भवने यन्त्रसुन्दरं पल्यङ्कं अन्वदिशं अहं अनुदिदेश पल्यङ्कं अलंचकार इति क्रियाका-
रकसंबन्धः । कथंभूतोऽहम् । प्रतीहारपालिकया यः प्रतीहारः द्वारं पालयति रक्षतीति
प्रतीहारपालिकया द्वारपालिकया मनागीषत् विलम्ब्यमानः कालक्षेपं कार्यमाणः । उक्तं

वैशिकानां चापकोटीरिव विफलयन्त्या, नयनविभ्रमेण बाणाडम्बरमिव च निराचक्षाणया, वचनसौष्ठवेन गोपुरपरिघानिव प्रत्यादिशन्त्या, स्तनाभोगेन कपाटयुगलमिवापकुर्वाणया, रोमराजिनिर्गमेन वेत्रलतामिवाधिक्षिपन्त्या, उरुभारेण तोरणस्तम्भानिव विजयमानया, मेखलाजालेन चन्दनमालामिव पुनरुक्तयन्त्या, चरणनखस्फुरितेन रङ्गवलिमणीनिवासहमानया, वैकक्ष्यकलक्ष्यदक्षिणेतरकक्षान्तरविनिक्षिप्तकौक्षेयिकया प्रतापानुगतयेव मन्मथकीर्त्या, भुजगाधिष्ठितयेव कल्पलतिकया, सतडिद्गुणयेव बलाहकमालया, लाञ्छनलेखालंकृतयेव चन्द्रकलया, मधु-

---

च—'द्वास्थैर्द्वारे प्रतीहारः'। कथंभूतया प्रतीहारपालिकया। अमृतमतिमहादेवीलावण्यशेषादिवोत्पन्नया अमृतमत्यैर्महादेव्याः लावण्यशेषात् उद्धरितलावण्यात् उत्पन्नया इव। मनाग् महादेव्या रूपं धरन्त्या इत्यर्थः। किं कुर्वत्या प्रतीहारपालिकया। भ्रूविजृम्भितेन व्यापारेण अन्तर्वंशिकानां राज्ञीनां रक्षे नियुक्तानां पुरुषाणां चापकोटीः धनुरग्राणि विफलयन्त्या तिरस्कुर्वत्या इव। पुनः किं कुर्वत्या। नयनविभ्रमेण लोचनशोभया अन्तर्वंशिकानां बाणाडम्बरं शराटोपं निराचक्षाणया इव। पुनः किं कुर्वत्या। वचनसौष्ठवेन वाक्प्रगल्भत्वेन वाग्बलेन गोपुरपरिघान् प्रतोलीद्वारार्गलानि प्रत्यादिशन्त्या इव निराकुर्वत्या इव। वचनेन पुरुषान् द्वारपालकान् चालयन्त्या इव। पुनः किं कुर्वत्या। स्तनाभोगेन स्तनोद्घाटनेन कपाटयुगलं अररद्वयं अपकुर्वाणया इव कपाटौ उद्घाटयन्त्या इव। पुनः किं कुर्वत्या। रोमराजिनिर्गमेन रोमराजीदर्शनेन अन्तर्वंशिकानां वेत्रलतामधिक्षिपन्त्या तिरस्कुर्वत्या इव। पुनः किं कुर्वत्या। उरुभारेण उरुस्थलेन तोरणस्तम्भान् विजयमानया इव निराकुर्वाणया इव। 'विपराभ्यां जेः' इत्यात्मनेपदम्। पुनः किं कुर्वत्या। मेखलाजालेन भगच्छादनवस्त्ररचनेन चन्दनमालां पुनरुक्तयन्त्या इव द्विगुणीकुर्वाणया इव। पुनः किं कुर्वत्या। चरणनखस्फुरितेन पादनखतेजसा कृत्वा रङ्गवलिमणीन् नानावर्णरत्नचूर्णरचितमण्डनविशेषान् असहमानया इव तिरस्कुर्वाणया इव। कथंभूतया प्रतीहारपालिकया। वैकक्ष्यकलक्ष्यदक्षिणेतरकक्षान्तरविनिक्षिप्तकौक्षेयिकया वैकक्ष्यवत्। तिर्यग्वक्षसि विक्षिप्तं वस्त्रं वैकक्ष्यकमुच्यते। वैकक्ष्यवत् लक्ष्येते वैकक्ष्यकलक्ष्ये ईदृशौ दक्षिणेतरकक्षान्तरयोः अपसव्यबाहुमूलमध्ययोर्विनिक्षिप्तौ उत्तरासङ्गवस्त्रवत् धृतौ कौक्षेयिकौ खड्गौ यया सा तथोक्ता तया। पुनः कथंभूतया। प्रतापानुगतया प्रतापसहितया मन्मथकीर्त्या इव। पुनः कथंभूतया। भुजगाधिष्ठितया स्वखड्गद्वययुक्तत्वात् सर्पद्वयावेष्टितया कल्पलतिकया इव श्रीचन्दनवल्ल्या इव। पुनः कथंभूतया। सतडिद्गुणया विद्युद्गुणसंयुक्तया बलाहकमालया इव मेघमालया इव। पुनः कथंभूतया। लाञ्छनलेखालं-



करकुलकलितयेव पारिजातमञ्जरिकया, विकृताकल्परामणीयकेन सकुतूहलमवलोकनीयया, निःशेषविषयभाषावेषधिषणया, प्रणयशठभावेनार्धमूर्धप्रणामगलितकर्णावतंसया प्रतीहारपालिकया मनाग्विलम्ब्यमानः 'किमकाण्डे कठिनहृदया देवी। यतस्त्वमेवं संवृतासि।' 'कथयामि। देवस्य किलाद्यापरैव काचित्प्रणयिन्यभूदिति निशम्य देवी महति कोपे कृतावेशेवास्ते। विज्ञापयत्यपि च मन्मुखेन—देवस्य तयैव पर्याप्तत्वादलमस्मासु

---

कृतया खड्गद्वयसहितत्वाच्चन्द्रकलया इव चन्द्रषोडशभागया इव। पुनः कथंभूतया। मधुकरकुलकलितया मधुकरवेष्टितया पारिजातमञ्जरिकया इव कल्पवृक्षवल्ल्या इव। पुनः कथंभूतया। सकुतूहलं कौतुकसहितं यथा भवत्येवं अवलोकनीयया निरीक्षणीयया। केन कृत्वा। विकृताकल्परामणीयकेन विकृतो विकारं प्राप्तः खड्गत्वात् आकल्पो वेषस्तस्य रामणीयकं सुन्दरत्वं तेन। पुनः कथंभूतया। निःशेषविषयभाषावेषधिषणया निःशेषाः समस्ता ये विषयाः देशास्तेषां भाषासु वेषेषु च धिषणा बुद्धिर्यस्याः सा तथोक्तया। तथा चोक्तम्—'मागध्यवन्तिका प्राच्या सौरसेन्यर्धमागधी। बाल्हीकी दाक्षिणात्या च सप्तभाषाः प्रकीर्तिताः॥' पुनः कथंभूतया। प्रणयशठभावेन स्तोकस्नेहदर्शनेन अर्धमूर्धप्रणामगलितकर्णावतंसया अर्धौ मनाक् योऽसौ मूर्धप्रणामो मस्तकमात्रनमनं तेन गलितो अधःपतितः कर्णावतंसः कर्णपूरो यस्याः सा तथा तया। तथोक्तम्—'धूर्तवर्त्तूरयोर्मध्यस्थितः पुंसि शवः स्मृतः'। पुनः कथंभूतया। इत्यमुना प्रकारेण सपरिहासं सवर्करं समुत्सृष्टगृहावग्रहणीदेशया समुत्सृष्टः परिहृतो गृहावग्रहण्या देहल्याः देशः प्रदेशो यया सा तथा तया। इतीति किम्। बलवान् खलु देवः बलवत्तरो नरेन्द्रस्त्वम्। खल्विति वाक्यालंकारे। अहं निवारयितुं अलं समर्था न भवामि। पुनः कथंभूतया। इत्यमुना प्रकारेण विदितानुगतभावया विदितो विज्ञातो राज्युपरि युक्तो भावः परिणामो(?) अनुरागो यया प्रतीहारपालिकया सा तथोक्ता तया। इतीति किम्। किमकाण्डे कठिनहृदया देवी हे प्रतीहारपालिके, अकाण्डे अप्रस्तावे देवी अमृतमतिमहादेवी किं कठिनहृदया वर्तते अकोमलमना वर्तते। किं महादेव्याः ममोपरि प्रेम न वर्तते इति राजा प्राह। यतो यस्मात् कारणात् त्वं प्रतीहारपालिका एवं अर्धमूर्धप्रणामा सती अनमनशीला संवृता मायाविनी च असि। प्रतीहारपालिका प्राह—देव, कथयामि अहं ब्रवीमि। कस्य। देवस्य भवतो ब्रवीमि। देवः शृणोतु मम वचनम्। तथा हि—अद्य इदानीं देवी महति गुरुतरे कोपे क्रोधे कृतावेशेव आस्ते तिष्ठति। किं कृत्वा पूर्वम्। इत्यमुना प्रकारेण निशम्य कुतश्चित् श्रुत्वा। इतीति किम्। देवस्य किल अद्य अपरैव काचित् स्त्री प्रणयिनी स्नेहिनी अभूद्बभूव। न केवलं देवी महति कोपे कृतावेशेवास्ते, किं तु इत्यमुना प्रकारेण अपि च तथा च मन्मुखेन मम मुखेन देवस्य विज्ञापयति। इतीति किम्। देवस्य भवतस्तयैव कयाचित्

कितवोपचारवैशिकेन—इति सचाटुकारं देव, देवस्योपरि प्रसादनाय देव्याः पादयोः पतितायास्तदलक्तिकाविलं मे भालं किं न पश्यति देवः । अपि च—

नयननदनिदानैरेभिरश्रुप्रवाहैः
स्तनकलशमुखाग्रव्यग्रधारासहस्रैः ।
सुतनु हृदयमध्यस्थे प्रियेऽस्मिन्भवत्या
कथमिह बहिरेषा सज्यते मज्जनश्रीः ॥'

'खदिरिके, मामपि महादेवीं प्रत्येवमुपालभेथाः । ननु विदितमेवैतद्देव्याः यथा न स्वप्नेऽपि मे विप्रलम्भनकराः काश्चिदपि प्रवृत्तयः । किंतु तवैवेदमशेषं धूर्तविलसितम् । त्वं हि न भवसि सामान्येति किमहं न जाने । कुला-

---

प्रियया पर्याप्तत्वात् परिपूर्णत्वात् अस्मासु अस्माकं विषये कितवोपचारवैशिकेन कौटिल्योपचारमायया अलं पूर्णम् । तथा इत्यमुना प्रकारेण सचाटुकारं मिथ्यास्तवनं यथा भवत्येवं हे देव हे राजन्, देवस्योपरि तवोपरि देव्याः प्रसादनाय प्रसन्नीकरणाय मे मम पादयोः पतितायाः देव्याश्चरणकमलयोर्लग्नायाः तदलक्तिकाविलं देव्यलक्तकचरणलाक्षारसेन आविलं लिप्तं मे मम भालं ललाटं किं न पश्यति देवः किं न निरीक्षसे इति सचाटुकारम् ॥

अपि च । **नयननदेत्यादि** । हे सुतनु हे शोभनकाये हे अमृतमतिमहादेवि, अस्मिन् प्रत्यक्षीभूते तव प्रिये प्राणवल्लभे हृदयमध्यस्थे सति अदूरवर्तिनि सत्यपि भवत्या त्वया इह अस्मिन् तव शरीरे वा एषा प्रत्यक्षीभूता अश्रुप्रवाहैः कृत्वा मज्जनश्रीः स्नानलक्ष्मीः बहिर्बाह्ये कथं केन प्रकारेण किमर्थं सज्यते । कथंभूतैः अश्रुप्रवाहैः । नयननदनिदानैः नयननदौ लोचनह्रदौ निदानं आदिकारणं येषामश्रुप्रवाहाणां ते नयननदनिदानास्तैः । पुनः कथंभूतैरश्रुप्रवाहैः । एभिः प्रत्यक्षीभूतैः । पुनः कथंभूतैः । स्तनकलशमुखाग्रव्यग्रधारासहस्रैः स्तनावेव कलशौ कान्तिप्रेमरसामृतरसाधारत्वात् तयोर्मुखयोरग्रे व्यग्रा व्यापृता धाराणां छटानां सहस्रा येषां अश्रुपातानां ते तथोक्तास्तैः । रूपकालंकारः ॥

राजा प्राह—हे खदिरिके धूर्ते, महादेवीं प्रति मामपि एवं मायाप्रकारेण उपालभेथाः सनिन्दावचनं त्वं ब्रवीथाः । ननु अहो धूर्ते खदिरिके, विदितमेव ज्ञातमेवैतत् देव्याः यथा स्वप्नेऽपि, आस्तां तावत् अतिस्वप्नेऽपि, मे मम विप्रलम्भनकराः वञ्चनकराः काश्चिदपि का अपि प्रवृत्तयो न वर्तन्ते । किंतु तर्हि तवैव भवत्या एव इदं प्रत्यक्षीभूतं अशेषं समग्रं धूर्तविलसितं वञ्चनाचेष्टितम् । त्वं भवती हि यस्मात् न भवसि सामान्या सर्वलोकस्य ईदृशी किमहं न जाने । अपि तु जानाम्येव । तव भवत्याः परनरश्च मल्लक्षणो लोकश्च



गतं च तव परनरप्रतारणे परमनैपुण्यम् । अयमपि च जनो नन्वशेषविटकुट्टिनीचूर्णघटितदेह एव न भवति भवत्याश्चेष्टितानां भूमिः । तदलमत्र मुधाप्रयासेन । गृहाणेदं मुखताम्बूलम् । इतः समागच्छ । भव पुरोवर्तिनी । मा भूरहस्त्रियामयोरिवावयोर्मध्ये संध्येव समागमविलम्बिनी' इति विदितानुगतभावया, 'बलवान्खलु देवः । नाहमलं निवारयितुम्' इति सपरिहासं समुत्सृष्टगृहावग्रहणीदेशया, निषिध्य च तिर्यक्प्रवृत्तकुण्डलमणिकिरणपल्लवितरत्नांशुवलयेनोत्तालतरलाङ्गुलिना हस्तेन मया सहागच्छन्तमखिलमनुचरबलमीषदाकेकरनिरीक्षणेन मनाग्रतिरहस्यगर्भसंभाषणेन च प्रतिपदमुल्लास्यमानमानसः, कक्षान्तराणि वशया वनगज इव च तया नीयमानः, सहेलमन्तःपुरप्रचारिभिरसद्दर्शनप्रवृत्तमनोनुरागवेगैः कुब्जवामनकिरातकञ्चुकीभिः कृ-

---

तस्य प्रतारणे परमनैपुण्यं कुलागतं च । न केवलं त्वमेव, अहमपि तथेत्याह—ननु अयमपि जनः अशेषविटकुट्टिनीचूर्णघटितदेह एव अशेषाश्च ते विटाः कामुकाः कुट्टिन्यश्च तासां चूर्णैर्घटितदेहो निष्पादितकाय एव वर्तते । भवत्याः चेष्टितानां वञ्चनक्रियाणां भूमिः पात्रं न भवति न संजायते । अयमपि जन इति शेषः । तत्तस्मात् कारणात् अलं पूर्णं अत्र अस्मादृशे जने मुधाप्रयासेन निष्फलवञ्चनकरणप्रयासेन । गृहाण स्वीकुरु इदं प्रत्यक्षीभूतं मुखताम्बूलं मम मुखताम्बूलोद्गारम् । इत एतस्मात् स्थानात् सम्यगक्षिसंमुखं आगच्छायाहि । पुरोवर्तिनी अग्रगामिनी च भव संजायस्व । आवयोर्मध्ये अमृतमतियशोधरमहाराजयोरन्तराले समागमविलम्बिनी मेलापकशीलका त्वं मा भूः मा भव । आवयोः कयोरिव । अहस्त्रियामयोरिव अहर्दिवसं त्रियामा रात्रिरहस्त्रियामे तयोरहस्त्रियामयोरिव । यथा अहस्त्रियामयोर्मध्ये संध्या समागमविलम्बिनी भवति तथा त्वं मा भव । कथंभूतोऽहम् । ईषत् मनाक् आकेकरनिरीक्षणेन कटाक्षावलोकनेन कृत्वा मनाक् रतिरहस्यगर्भसंभाषणेन च संभोगगोप्यतत्त्वगर्भसंभाषणेन च कृत्वा आलपेन च कृत्वा प्रतिपदं पादारोपणं प्रति उल्लास्यमानमानसः आह्लाद्यमानमनाः । किं कृत्वा पूर्वम् । मया सह आगच्छन्तं आयान्तमखिलं समस्तमनुचरबलं किंकरसमूहं हस्तेन कृत्वा निषिध्य निवार्य च अत्रैव तिष्ठतु भवानिति । कथंभूतेन हस्तेन । प्रतीहारपालिकाकरेण । तिर्यक्प्रवृत्तकुण्डलमणिकिरणपल्लवितरत्नांशुवलयेन तिर्यक्प्रवृत्ता चक्रप्रवृत्ता ये कुण्डलमणिकिरणाः तैः पल्लवितानि रत्नांशुभिर्वलयानि कङ्कणानि यस्मिन् हस्ते स तथोक्तस्तेन । पुनः कथंभूतेन हस्तेन । उत्तालतरलाङ्गुलिना उत्ताला उत्सुकास्तरला अङ्गुलयः करशाखा यस्य हस्तस्य तथा तेन । पुनः कथंभूतोऽहम् । तया प्रतीहारपालिकया कक्षान्तराणि नीयमानः गेहप्रकोष्ठकेषु प्राप्यमाणः । क इव । वनगज इव यथा वनगजः वशया हस्तिन्या कक्षान्तराणि वनान्तराणि नीयते । पुनः कथंभूतोऽहम् । कुब्जवामनकिरातकञ्चुकिभिः कृतेन विहितेन

तेन विकृतालापनर्तकैतवेन विकास्यमानलोचनः, समन्तादाकुलाकुलवि-रलीभवत्सकलपरिजने यक्षकर्दमखचितकर्पूरदलदन्तुरितजातरूपभित्तिनि मृगमदशकलोपलिप्तरजतवातायनविवरविहरमाणसमीरसुरभिते सान्द्रस्यन्द-संमार्जितामलकदेहलीशिरसि घुसृणरसारुणितमरकतपरागपरिकल्पितभूमि-तलभागे मनाङ्मोदमानमालतीमुकुलविरचितरङ्गवलिनि अनवरतदह्यमा-नकालागुरुधूपधूमधूसरितवितानपर्यन्तावलम्बितमुक्ताफलमाले कूर्चस्थान-

---

विकृतालापनर्तकैतवेन विकास्यमानलोचनः आह्लाद्यमाननयनः। कुब्जाश्च न्युब्जा गडुल-पर्यायाः, वामनाश्च खर्वा ह्रस्वपर्यायाः, निखर्वाश्च खदूराः कथ्यन्ते। किराताश्च भिल्लवेषाः, कञ्चुकिनश्च वृद्धाण्डाः कुब्जवामनकिरातकञ्चुकिनस्तैः। तत्र कुब्जानां विचित्रकृतम्, वामनानां आलापाः, किरातानां नर्तनानि, कञ्चुकिनां कैतवानि, विकृतानि च आलापाश्च नर्तनानि च कैतवानि च विकृतालापनर्तकैतवं तेन विकास्यमानलोचनः उल्लास्यमाननयनः। कथंभूतै-स्तैः। सहेलं युगपत् सलीलं वा अन्तःपुरप्रचारिभिः शुद्धान्तमध्ये प्रवर्तिभिः। पुनः कथं-भूतैः। अस्मद्दर्शनप्रवृत्तमनोनुरागवेगैः अस्मद्दर्शनेन अस्माकं विलोकनेन प्रवृत्ताः संजाताः मनोनुरागवेगा हृदयकृत्रिमस्नेहोत्सुकत्वानि येषां कुब्जादीनां ते तथा तैः। कथंभूते वासभ-वने। समन्तादाकुलाकुलविरलीभवत्सकलपरिजने समन्तात् सर्वत्र आकुलाकुलोऽतिव्याकुलः सन् विरलीभवत् दूरीभवत् सकलः परिजनः यत्र वासभवने तत्तथोक्तं तस्मिन्। पुनः कथंभूते। यक्षकर्दमखचितकर्पूरदलदन्तुरितजातरूपभित्तिनि। 'कङ्कोलागुरुकर्पूरकस्तूरीयक्ष-कर्दमः।' कुङ्कुमश्रीखण्डद्वयं चेति केचित्। यक्षकर्दमेन खचिता लिप्ताः कर्पूरदलैः कर्पूरखण्डैः दन्तुरिताः संजातदन्ता इव जाता जातरूपभित्तयः सुवर्णभित्तयो यस्य तत्तथोक्तं तस्मिन्। पुनः कथंभूते। मृगमदशकलोपलिप्तरजतवातायनविवरविहरमाणसमीरसुरभिते मृगमदस्य कस्तूरिकायाः शकलैः खण्डैरुपलिप्तानि उपदिग्धानि यानि रजतवातायनानि रूप्यमयगवा-क्षजालानि तेषां विवरेषु विहरमाणः संचरन् योऽसौ समीरस्तेन सुरभितं सुगन्धितं त-स्मिन्। पुनः कथंभूते। सान्द्रस्यन्दसंमार्जितामलकदेहलीशिरसि सान्द्रो विलेपनविशेषः तस्य स्यन्देन रसेन संमार्जितं लिप्तं आमलकस्य स्फटिकमणेर्देहलीशिरो गृहावग्रहिणीमस्तकं यस्य तत्तथा तस्मिन्। पुनः कथंभूते। घुसृणरसारुणितमरकतपरागपरिकल्पितभूमितलभागे घुसृणरसेन कुङ्कुमद्रवेणारुणितो अव्यक्तरागो योऽसौ मरकतपरागो नीलमणिचूर्णं तेन परिक-ल्पितो रचितो भूमितलभागो यस्य तत्तथा तस्मिन्। मरकतपरागशब्देनात्र धूलीशालवत् मरकतखण्डानि ग्राह्याणि। पुनः कथंभूते। मनाङ्मोदमानमालतीमुकुलविरचितरङ्गव-लिनि मनाक् ईषन्मोदमाना विकसन्ती या मालती जाती तस्या मुकुलानि कुड्मलानि तैः विरचिता शोभिता रङ्गवलिर्नानावर्णचूर्णरचितमण्डनविशेषो यत्र तत्तथा तस्मिन्। पुनः कथंभूते। अनवरतदह्यमानकालागुरुधूपधूमधूसरितवितानपर्यन्तावलम्बितमुक्ताफलमाले



विनिवेशितप्रसूतसमूहामोदमिलितालिकुलझङ्कारिणि संचारिमहेमकन्यका-सोत्तंसितमुखवासताम्बूलकपिलिके तुहिनतरुविनिर्मितवलीकान्तरमुक्त-कुसुमस्रक्सौरभाधिवास्यमानसुरतावसानिकोपकरणवस्तुनि मणिपिञ्जरोप-विष्टशुकसारिकामिथुनकथ्यमानमन्मथकथासनाथे सारसर्जितफलकोत्क्षे-पिणा प्रसाधितकुतपवादनचपलेन समुद्गकव्यञ्जनाचमनकविलोपिना कल-मूकलोकेन पर्याकुलितसौविदल्लपरिषदि विविधमणिमनोहराधिरोहिणीसर-णिके सप्ततलप्रासादोपरितनभागवर्तिनि मनसिजविलासहंसनिवासतामरस-

---

अनवरतं निरन्तरं दह्यमानो योऽसौ कालागुरुधूपः तस्य धूमेन पर्यायान्तरेण धूसरिता ईषत्पाण्डुरीकृता वितानपर्यन्तावलम्बितानां मुक्ताफलानां शौक्तिकेयानां माला हारा यस्मिन् तत्तथोक्तं तस्मिन्। पुनः कथंभूते। कूर्चस्थानविनिवेशितप्रसूतसमूहामोदमिलि-तालिकुलझङ्कारिणि कूर्चस्थानं संभोगोपकरणस्थापनप्रदेशस्तत्र विनिवेशिताः स्थापिता ये प्रसूतसमूहाः नानाविधपुष्पराशयः तेषामामोदैः परिमलैर्मिलितानि संभूतानि अलिकु-लानि तेषां झङ्कारः शब्दविशेषो यत्र तत्तथोक्तं तस्मिन्। पुनः कथंभूते। संचारिमहेम-कन्यकासोत्तंसितमुखवासताम्बूलकपिलिका यस्मिन् वासभवने तत्संचारिमहेमकन्यकासो-त्तंसितमुखवासताम्बूलकपिलिकं तस्मिन्। पुनः कथंभूते। तुहिनतरुविनिर्मितवलीकान्तर-मुक्तकुसुमस्रक्सौरभाधिवास्यमानसुरतावसानिकोपकरणवस्तुनि तुहिनं कर्पूरस्तस्य तरव-स्तेषां विनिर्मितानि घटितानि वलीकानि पट्टिकास्तेषामन्तरेषु मध्येषु मुक्ता बद्धा याः कुसु-मस्रजः पुष्पमालास्तासां सौरभेण सौगन्ध्येन अधिवास्यमानानि सुगन्धीक्रियमाणानि सुरतावसानिकानि मैथुनावसाने भवानि उपकरणवस्तूनि व्यञ्जनादीनि यस्मिन् तत्तथोक्तं तस्मिन्। पुनः कथंभूते। मणिपिञ्जरोपविष्टशुकसारिकामिथुनकथ्यमानमन्मथकथासनाथे मणिपिञ्जराणि रत्नघटितपक्षिगृहाणि तेषु उपविष्टानि स्थितानि शुकसारिकामिथुनानि कर-पादिकायुगलानि तैः कथ्यमानाः वाक्यप्रबन्धीक्रियमाणा या मन्मथकथाः कामकथास्ताभिः सनाथं सहितं तस्मिन्। पुनः कथंभूते। कलमूकलोकेन षण्डसमूहेन पर्याकुलिता सौविद-ल्लपरिषत् तस्मिन्। कथंभूतेन कलमूकलोकेन। सारसार्जितफलकोत्क्षेपि तेन। पुनः कथंभूतेन। प्रसाधितकुतपवादनचपलेन ........................................ । पुनः कथंभूतेन। समुद्गकव्यञ्जनाचमनकविलोपिना समुद्गकः संपुटको भूषणाद्यावापिधान(?), व्यञ्जनानि च तालवृन्तानि, आचमनकानि उदकपानानि समुद्गकव्यञ्जनाचमनकानि वि-लोपयति दूरीकरोतीत्येवंशीलः स तथा तेन। तेषु व्यापृतो लोकस्तिष्ठति विलम्बं करोति स तु स्थातुं न ददाति। पुनः कथंभूते। विविधमणिमनोहराधिरोहिणीसरणिके विविधैः श्वेतपीतहरितारुणकृष्णैः मणिभी रत्नैर्मनोहरा या अधिरोहिण्यो निश्रेणिकास्तासां

नामनि वासभवने, सरसचन्दनतरुस्तम्भिकाचतुष्टयमध्यावतीर्णमुल्लपत्पारा-
पतपतङ्गपेशलप्रतिपादोपरिविन्यस्तपादमण्डलं तरङ्गितदुकूलपटप्रसाधितहं-
सतूलिकमन्तरान्तरा हरिचन्दनस्थासकाङ्कितपर्यन्तमविरलोपान्तपरिकल्पित-
धूपकूपिकाविवरविसरद्धूमपटलमुभयपार्श्वोपदर्शितमणिप्रदीपिकमुपधानद्वयो-
त्तम्भितपूर्वापरभागमुत्फुल्लकमलाकरमिव सरोवरमम्बुधरपरिवारितमिव शं-
भुशिखरिणममरासुरगुरुमध्यवर्तिनमिव तुहिनकिरणमधरोत्तरसेतुबन्धावरु-

---

सरणिः मार्गो यस्मिन् वासभवने तत्तथा तस्मिन् । पुनः कथंभूते । सप्ततलप्रासादोप-
रितनभागवर्तिनि सप्ततलः सप्तभूमौ योऽसौ प्रासादो राजसदनं तस्य उपरितनभागे
स्वयमष्टमं भवत् वर्तते इत्येवंशीलं तत्तथा तस्मिन् । पुनः कथंभूते । मनसिजविलासहं-
सनिवासतामरसनामनि मनसिजविलासः कामसेवा स एव हंसः उभयपक्षशुद्धत्वात् तस्य
निवासाय स्थितये तामरसं कमलमीदृशं नाम यस्य वासभवनस्य तत्तथा तस्मिन् ।
कथंभूतं यन्त्रसुन्दरं शयनीयाग्रम् । सरसचन्दनतरुस्तम्भिकाचतुष्टयमध्यावतीर्णं सरसा
नवीना या चन्दनतरुस्तम्भिकाः श्रीखण्डवृक्षलघुस्तम्भास्तासां चतुष्टयम् । पादचतुष्टयमि-
त्यर्थः । तस्य मध्ये अवतीर्णं आगतम् । पुनः कथंभूतम् । उल्लपत्पारापतपतङ्गपेशलप्र-
तिपादोपरिविन्यस्तपादमण्डलम् उल्लपन्तः उत्कर्षेण अव्यक्तशब्दान् कुर्वन्तः पक्षिपक्षिणी-
क्रीडासु वर्तन्ते पारापतपतङ्गास्तैः पेशला मनोहरा ये प्रतिपादाः पादचतुष्टयाधःस्थितपादाः
प्रतिपादास्तेषामुपरि विन्यस्तं आरोपितं पादमण्डलं पल्यङ्कपादचतुष्टयं यत्र यन्त्रसुन्दरे
तत्तथोक्तम् । पारापतशब्दैः स्त्रीपुरुषयोः कामोद्रेक उत्पद्यत इति कारणादित्यर्थः । पुनः
कथंभूतम् । तरङ्गितदुकूलपटप्रसाधितहंसतूलिकम् तरङ्गिता लहरिता मीनविशेषेण निम्नोन्न-
तीभूता दुकूलपटप्रसाधिता पट्टकूलवस्त्ररचिता हंसतूलिका प्रास्तरणविशेषो यत्र तत्तथो-
क्तम् । पुनः कथंभूतम् । अन्तरान्तरा हरिचन्दनस्थासकाङ्कितपर्यन्तम् अन्तरान्तरा मध्ये
मध्ये हरिचन्दनस्थासकैः परमोत्तमचन्दनहस्तप्रतिबिम्बैरङ्किताश्चिह्नितः पर्यन्तः प्रान्तो
यस्य तत्तथोक्तम् । कथंभूतमिव । उत्फुल्लकमलाकरं विकसितकमलवनं सरोवरमिव । पुनः
कथंभूतम् । अविरलोपान्तपरिकल्पितधूपकूपिकाविवरविसरद्धूमपटलम् अविरला अविच्छि-
न्नानि कटनिकटवर्तिन्यः उपान्तेषु समीपेषु परिकल्पिता रचिता या धूपकूपिका धूपघटि-
कास्तासां विवरेभ्यो विसरन्ति प्रसरन्ति धूमपटलानि पर्यायान्तरसमूहा यत्र तत्तथोक्तम् ।
कथंभूतमिव । अम्बुधरपरिवारितं कालमेघपरिवेष्टितं शंभुशिखरिणं कैलासपर्वतमिव । पुनः क-
थंभूतम् । उभयपार्श्वोपदर्शितमणिप्रदीपिकम् उभयपार्श्वयोः वामदक्षिणसमीपयोरुपदर्शिते स-
मीपयोः स्थापिते मणिप्रदीपके रत्नप्रदीपिके यस्य तत्तथोक्तम् । कथंभूतमिव । अमरासुरगुरु-
मध्यवर्तिनं बृहस्पतिशुक्रमध्यस्थितं तुहिनकिरणमिव परिपूर्णचन्द्रमण्डलमिव । पुनः कथं-
भूतम् । उपधानद्वयोत्तम्भितपूर्वापरभागम् उपधानयोर्द्वयेन उच्छीर्षकयुगलेन उत्तम्भितौ



द्धमिव मन्दाकिनीप्रवाहमुच्छ्वसितमात्रेणापि तरलतरान्तरालविहितसुखसं-
वेशमनेकविस्मयनीयस्मरग्रहावेशकरं यन्त्रसुन्दरमन्वदिशम् ।

अतः शयनतलमलंकुर्वतीमपरामिव लक्ष्मीम्, अनिमिषनिवासान्नरलो-
कसुखतृष्णावतीर्णामिव सरस्वतीम्, अबलारूपपरिणतामिव कलासमि-
तिम्, उपात्तमानुषीभावामिव सागराम्बराम्, अतिरोहितात्मशरीरामिव
राज्याधिदेवताम्, अखिलसुखसारखानिमिव स्त्रीत्वमुपागताम्, अनङ्गतो-
रणस्रजमिव चरणपल्लवाभिरामाम्, अनङ्गभूषणावनिमिव स्फुरन्नखमणि-
परम्पराम्, अनङ्गशरधिमिव पूर्वानुवृत्तजङ्घाभोगाम्, अनङ्गमण्डपिकामि-

---

पूर्वापरभागौ शिरोगपादभागौ यस्य तत्तथोक्तम् । कथंभूतमिव । अधरोत्तरसेतुबन्धावरुद्धं
अधरभागे अधोभागे उत्तरस्मिन् पूर्वभागे सेतुबन्धाभ्यां अवरुद्धं निरुद्धं मन्दाकिनीप्रवाह-
मिव गङ्गानदीपूरमिव । यथासंख्योपमालंकारः । पुनः कथंभूतम् । उच्छ्वसितमात्रेणापि
उल्लसनमात्रेणापि तरलतरान्तरालेन चपलतरमध्येन विहितः सुखसंवेशो अनायाससुरतं
यत्र तरलतरान्तरालविहितसुखसंवेशम् । पुनः कथंभूतम् । अनेकविस्मयनीयस्मरग्रहावे-
शकरम् अनेकान् बहून् विस्मयनीयान् आश्चर्यकरान् स्मरग्रहावेशान् कामपिशाचप्रवे-
शान् करोतीति अनेकविस्मयनीयस्मरग्रहावेशकरम् ॥

अत एव एतस्मात् यन्त्रसुन्दरानुवेशादनन्तरं पल्यङ्के उपवेशादनन्तरं शयनतलं श-
य्यातलं अलंकुर्वतीं मम पल्यङ्कोपर्युपविशन्तीं तां प्रसिद्धां अमृतमतिमहादेवीं अमृतमति-
नाम्नीं पट्टमहिषीं अपश्यमहं ददर्श । कथंभूतां ताम् । अपरां द्वितीयां लक्ष्मीमिव राज्यश्री-
मिव । पुनः कथंभूतां ताम् । अनिमिषनिवासात् स्वर्गलोकात् नरलोकसुखतृष्णावतीर्णां मनु-
ष्यलोकसौख्याभिलाषेण आगतां सरस्वतीमिव । पुनः कथंभूताम् । अबलारूपपरिणतां स्त्री-
रूपेण संजातां कलासमितिमिव द्वासप्ततिकलाश्रेणिमिव । पुनः कथंभूताम् । उपात्तमानुषी-
भावां गृहीतमानुषीस्त्रीपर्यायां सागराम्बरामिव पृथ्वीमिव । पुनः कथंभूताम् । अतिरोहिता-
त्मशरीरां प्रकटस्वरूपकया राज्याधिदेवतामिव राज्यस्याधिष्ठायिकामिव । पुनः कथंभूताम् ।
स्त्रीत्वमुपागतां स्त्रीत्वं प्राप्तां अखिलसुखसारखानिमिव सर्वसौख्यसारोत्पत्तिभूमिमिव । पुनः
कथंभूताम् । चरणपल्लवाभिरामां मनोहरां अनङ्गतोरणस्रजमिव कंदर्पतोरणमालामिव । यथा
अनङ्गतोरणमाला पल्लवाभिरामा भवति । पुनः कथंभूताम् । स्फुरन्नखमणिपरम्पराम् देव्य-
दीप्यमानपादनखरत्नमालां अनङ्गभूषणावनिमिव । यथा अनङ्गभूषणावनिः स्फुरन्मणिपर-
म्परा भवति । पुनः कथंभूताम् । पूर्वानुवृत्तः क्रमेण गोपुच्छाकारेण संजातो जङ्घाभोगः
पिण्डिकापरिपूर्णता यस्याः सा तथा तां अनङ्गशरधिमिव अनङ्गस्य इषुधिमिव । पुनः कथं-

वोरुस्तम्भश्रिताम्, अनङ्गयोगाभ्यासभूमिमिव विशालजघनस्थलाम्, अनङ्गजयापताकामिव विततरोमराजिदण्डिकाम्, अनङ्गजलकेलिवापिकामिव गम्भीरनाभिमण्डलाम्, अनङ्गावतरणवसतिमिव वलिविराजिताम्, अनङ्गायुधयष्टिमिव मुष्टिमितमध्यभागाम्, अनङ्गशरासारवृष्टिमिव परिपूर्णपयोधराम्, अनङ्गवनवसुधामिव भुजलतानन्दिनीम्, अनङ्गादेशपत्रिकामिवालककलिपिलिखितभालमध्याम्, अभ्युत्तिष्ठन्तीमिव भ्रूलताविलासेन, स्वागतप्रणयिनीमिव बिम्बाधरस्फुरितेन, विहितासनप्रदानामिव नीवीनिवेशोल्लासेन, पाद्यक्रियोपयुक्तामिव कर्णकण्डूविनोदाडम्बरितह-

---

भूताम् । ऊरुस्तम्भश्रितां ऊरुस्तम्भाभ्यां शक्तिस्थूणाभ्यां श्रिता आश्रिता ऊरुस्तम्भश्रिता तां अनङ्गमण्डपिकामिव कंदर्पोपकारिकावसतिमिव । पुनः कथंभूताम् । विशालजघनस्थलाम् विशालं विस्तीर्णं जघनस्थलं कट्यग्रभागो यस्याः सा विशालजघनस्थला तां अनङ्गयोगाभ्यासस्य ध्यानानुशीलनस्य भूमिः स्थानमिव । पुनः कथंभूताम् । विततरोमराजिदण्डिकां वितता आयता रोमराजिदण्डिका रोमराजियष्टिर्यस्याः सा तथा ताम् अनङ्गजयापताकामिव ........................ । पुनः कथंभूताम् । गम्भीरनाभिमण्डलाम् ........................ । अनङ्गजलकेलिवापिकामिव कंदर्पजलक्रीडादीर्घिकामिव । पुनः कथंभूताम् । बलिविराजितां वलिविराजिता उदररेखा यत्र सा ताम् अनङ्गावतरणवसतिमिव कंदर्पावतारगृहमिव । पुनः कथंभूताम् । मुष्टिमितमध्यभागां मुष्टिना संकुचितकरेण मितो मापितो मध्यभागो शरीरमध्यप्रदेशो यस्याः सा तथा ताम् । मध्यक्षामामित्यर्थः । अनङ्गायुधयष्टिमिव कंदर्पधनुर्दण्डमिव । यथा कंदर्पधनुर्मध्यभागे मुष्टिमितं भवति । पुनः कथंभूताम् । परिपूर्णपयोधरां परिपूर्णौ नातिकृशौ नात्युन्नतौ नातिनिम्नौ परस्परं संलग्नौ पयोधरौ स्तनौ यस्याः सा तथा ताम् । अनङ्गशरासारवृष्टिमिव कंदर्पबाणसमूहवर्षणमिव । यथा पयोधरौ मेघौ जलवेगवद्वर्षणसहितौ भवतः । पुनः कथंभूताम् । भुजलतानन्दिनीं भुजलतामानन्दयतीत्येवं साधु भुजलतानन्दिनी बाहुवल्ल्यानन्दकारिणी तां अनङ्गवनवसुधामिव । यथा कंदर्पवनभूमिः लताभिरानन्दिनी भवति । पुनः कथंभूताम् । अनङ्गादेशपत्रिकामिवालककलिपिलिखितभालमध्यां अलकाश्चूर्णकुन्तलाः तेषां लिपिरक्षरविन्यासस्तया लिखितो भालमध्यो यस्याः सा तथा ताम् । यथा अनङ्गादेशपत्रिका शासनपत्रिका लिपिलिखितमध्या भवति तामिव । पुनः कथंभूताम् । भ्रूलताविलासेन नेत्रोपरिरोमराज्युल्लसनेन अभ्युत्तिष्ठन्तीमिव अभ्युत्थानं कुर्वतीमिव । पुनः कथंभूताम् । बिम्बाधरस्फुरितेन चलेन स्वागतप्रणयिनीमिव साध्वागता स्वामिव इति वदतीमिव । पुनः कथंभूताम् । नीवीनिवेशोल्लासेन स्त्रीकटीवस्त्रबन्धनं नीवी तस्या निवेशः स्थानं तस्योल्लासेन उन्नमनेन विहितासनप्रदानामिव मण्डितासन्दीविश्राणनामिव । पुनः कथंभूताम् । कर्णकण्डूविनो-



स्तनखप्रभाप्रवाहेण, अर्घमुत्क्षिपन्तीमिव प्रत्यङ्गनिर्गतरोमाञ्चकदम्बेन, संपादितमधुपर्कामिवालकवल्लरीव्यापारितबाहुमूलप्रदर्शनेन, आचामयन्तीमिव च शृङ्गाररसोत्तरङ्गितैः कटाक्षवीक्षितैः, धृतवासकसज्जिकास्थितिं **ताममृतमतिमहादेवीम**पश्यम् । अवलोक्य च ताम् अहो महाभाग, महारण्यनिर्गमनादिव तदा हि मे समुल्लसितं हृदयेन, दिव्याञ्जनोपदेहादिव प्रसन्नं चक्षुषा, अमृतवर्षाभिषेकादिव प्रशान्तं देहेन, सिद्धौषधिबन्धनादिव विरतं विरहज्वरेण, चिन्तामणिलाभादिव फलितं मनोरथैः, कामधेनुसमागमादिव चाभवत्कृतार्थागमः समस्तोऽपि प्रजापालनाश्रमः परिश्रमः ।

---

दाडम्बरितहस्तनखप्रभाप्रवाहेण कर्णस्य कण्डूः तस्याः विनोदाय विस्फोटनाय आडम्बरित उन्नामित उच्चालितो योऽसौ हस्तस्तस्य नखास्तेषां प्रभा तस्याः प्रवाहेण कृत्वा पाद्यक्रियोपयुक्तामिव पाद्यं पादप्रक्षालनोदकं तस्य क्रिया आचारस्तस्यामुपयुक्ता उद्यमपरा सा पाद्यक्रियोपयुक्ता ताम् । पुनः कथंभूताम् । प्रत्यङ्गनिर्गतरोमाञ्चकदम्बेन सर्वाङ्गसमुत्पन्नरोमहर्षणसमूहेन कृत्वा अर्घं पूजापात्रं उत्क्षिपन्तीमिव ददतीमिव । पुनः कथंभूताम् । अलकवल्लरीव्यापारितबाहुमूलप्रदर्शनेन अलकवल्ल्यां व्यापारितः प्रसारितो योऽसौ बाहुस्तस्य मूलप्रदर्शनेन कृत्वा संपादितमधुपर्कामिव संपादितो मधुपर्को दधिदूर्वाशमीपत्रश्रीखण्डकुङ्कुमाक्षतदानं दधिमधुघृतपाददानमपि यया संपादितमधुपर्का तामिव । पुनः कथंभूताम् । शृङ्गाररसोत्तरङ्गितैः शृङ्गारामृतरसेनोत्तरङ्गितैरुत्कल्लोलितैः कटाक्षवीक्षितैर्नेत्रापाङ्गविलोकितैः कृत्वा आचामयन्तीमिव उपस्पर्शयन्तीमिव आचमनं ददातीमिव अभ्युक्षणं प्रयच्छन्तीमिव वा । पुनः कथंभूतां ताम् । धृतवासकसज्जिकास्थितिं धृता कृता वासकसज्जिकायाः शृङ्गारकारिण्याः स्थितिः क्रिया यया सा तथा ताम् । तथा चोक्तम्—'उचिते वासके या तु रतिसंभोगलालसा । मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका ॥' अहो महाभाग अहो महापुण्य श्रीमारदत्तमहाराज, तां अमृतमतिमहादेवीं अवलोक्य च तदा तस्मिन् काले हि निश्चयेन मे मम हृदयेन जीवस्थानेन समुल्लसितं सम्यगुल्लसितं आनन्दं प्राप्तम् । कस्मात् । महारण्यनिर्गमनादिव दण्डकारण्यनिस्तरणादिव । तदा मे मम चक्षुषा इन्द्रियेण प्रसन्नं प्रसादः प्राप्तः । कस्मात् । दिव्याञ्जनोपदेहादिव अमानसौषधाञ्जनम्रक्षणादिव । तदा मे मम देहेन प्रशान्तं प्रशान्तिः प्राप्ता । कस्मात् । अमृतवर्षाभिषेकादिव पीयूषवृष्टिस्नानादिव । तदा मे मम विरहज्वरेण विरहसंतापेन विरतं विनाशः प्राप्तः । कस्मात् । सिद्धौषधिबन्धनादिव मन्त्रादिसिद्धिमूलादिबन्धनादिव । तदा मे मनोरथैरभिलाषैः फलितं फलं प्राप्तम् । कस्मात् । चिन्तामणिलाभादिव चिन्तारत्नैः प्राप्तिरिव । तदा मे समस्तोऽपि प्रजापालनाश्रमः राज्यप्रतिपालनक्षमः परि-

ततस्तच्छयनतले दक्षिणतः ससंबाधमुपविश्य तस्यास्ततस्तेन तेनार्धोक्तिसुभगेन मुग्धविदग्धभाषितेन मनागपरिसमाप्तव्यापारेण स्निग्धमधुरावलोकितेन ईषन्निषेधार्पणरसिकेन समालिङ्गितेनान्यैश्च तैस्तैरनङ्गनटरहस्योपदेशप्रगल्भवृत्तिभिर्विलासैस्तत्र तत्रावस्थान्तरं सुखस्रोतसि विजृम्भमाणमनःकलहंसः, वसन्त इव दक्षिणाशाप्रवृत्तमारुतः प्रवितर्क्य मनसिजरसो-

---

श्रमः खेदः कृतार्थागमः सफलोऽभवत् बभूव । कस्मात् । कामधेनुसमागमादिव च दिव्यगवीप्राप्त्या इव । समुच्चयालंकारः ॥

ततस्तदनन्तरं तच्छयनतले यन्त्रसुन्दरोपरि महादेवीपल्यङ्कोपरि निद्रामिव स्वापमिव अहं अकरवं चकार । किं कृत्वा पूर्वम् । दक्षिणतः अमृतमतिमहादेव्या अपसव्यपार्श्वेन ससंबाधं शरीरसंघट्टनसहितं यथा भवत्येवं उपविश्य स्थित्वा । ततस्तदनन्तरं तस्या अमृतमतिमहादेव्यास्तेन तेन कामिजनप्रसिद्धेन मुग्धविदग्धभाषितेन मुग्धं कोमलं अविज्ञातयथावत्स्वरूपं वा विदग्धं चतुरं यद्भाषितं वचनं तेन कृत्वा । तत्र तत्र तस्मिन् तस्मिन् अवस्थान्तरम् । कथंभूतोऽहम् । सुखस्रोतसि सुखप्रवाहे विजृम्भमाणमनःकलहंसः प्रसरन्हृदयराजहंसः । कथंभूतेन मुग्धविदग्धभाषितेन । अर्धोक्तिसुभगेन अर्धया उक्त्या मनोहरेण । न केवलं मुग्धविदग्धभाषितेन, अपि तु स्निग्धमधुरावलोकितेन स्निग्धं स्नेहसहितं मधुरं अमृतधारासमं अवलोकितं विलोकितं तेन । कथंभूतेन स्निग्धमधुरावलोकितेन । मनाक् ईषत् अपरिसमाप्तव्यापारेण अर्धविलोकितेन । न केवलं स्निग्धमधुरावलोकितेन, अपि तु समालिङ्गितेन च सम्यगाश्लेषणेन च । कथंभूतेन समालिङ्गितेन । ईषन्निषेधार्पणरसिकेन किंचिन्निषेधनं अङ्गार्पणं ताभ्यां रसिकेन स्रवता । न केवलं भाषितावलोकितसमालिङ्गितैः । अन्यैश्च अपरैश्च तैस्तैर्विदग्धकामुकजनप्रसिद्धैर्विलासैः विच्छोकैः । कथंभूतैर्विलासैः । अनङ्गनटरहस्योपदेशप्रगल्भवृत्तिभिः अनङ्गः स एव नटः नानानृत्यकारकत्वात् तस्य रहस्यस्योपदेशः कामगोप्यतत्त्वशिक्षोपदेशः तस्य प्रगल्भा प्रौढतरा वृत्तिः प्रवृत्तिर्येषु विलासेषु ते तथा तैः । पुनः कथंभूतोऽहं निद्रामकरवम् । दक्षिणाशाप्रवृत्तमारुतः पिङ्गलायां नाड्यां प्रवर्तमानश्वासोच्छ्वासवायुः । अहं क इव । वसन्त इव यथा वसन्तः दक्षिणाशाप्रवृत्तमारुतो भवति अपाग्दिक्प्रवर्तमानपवनो भवति । तथा चोक्तं स्वरोदयशास्त्रे—'दाक्षिणात्योऽनिलः श्रेयान्कामसंग्रामयोर्नृणाम् । क्रियास्वन्यास्वन्यः स्याद्वामनाडीप्रभञ्जनः ॥' किं कृत्वा पूर्वम् । स्मरमन्दिरप्रासादं प्रवितर्क्य । स्मरमन्दिरं हृदये धृत्वा इति भावः । केन कृत्वा स्मरमन्दिरप्रासादं वितर्क्य । लोचनद्वयेन । कथंभूतेन । तरलतारोदयेन तरलश्चपलः तार उज्ज्वल उदयो यस्य लोचनद्वयस्य तत्तथोक्तं तेन । कस्मात्तरलत्वं लोचनद्वयस्येत्याह—उत्प्रेक्षते—मनसिजरसोल्लासादिव मनसिजः कंदर्पः तस्य रसो रागजलं तस्योल्लासादिव उल्लसनादिव । यथा जलोल्लासेन



ल्लासादिव तरलतारोदयेन लोचनद्वयेन कामसमीरसमागमादिव सपारिप्लवेनाधरपल्लवेन शृङ्गारामृतपानादिव संजातोत्सेकेन कपोलपुलकेन मदनानलसंधुक्षणादिवोष्मलेन स्तनयुगलेनानन्यजपर्जन्याभिवर्षादिव च सान्द्रसङ्गेन तेनाङ्गेन संपादितहृदयोन्मादं स्मरमन्दिरप्रासादम्, प्रस्तुत्य च चाटुकारपरिभाषामनोहराः प्रणत्युपोद्धातविस्तारिणीर्दण्डप्रदानानुतन्त्रप्रवृत्ताः स्मरसूत्रविवरणवतीस्तास्ताः कथाः, पुनर्द्विरेफ इव मकरन्दपानेन, राजहंस

---

वस्तु तरलं तारं च भवति । पुनश्च केन कृत्वा । अधरपल्लवेन दन्तवासःप्रवालेन । कथंभूतेन । सपारिप्लवेन चपलत्वसहितेन । सस्फुरणेनेत्यर्थः । कस्मात् । उत्प्रेक्षते—कामसमीरसमागमादिव कंदर्पवायुसमागमादिव यथा समीरेण वस्तु सपारिप्लवं भवति पुनश्च केन कृत्वा । कपोलपुलकेन गण्डस्थलरोमहर्षेण । कथंभूतेन । संजातोत्सेकेन सम्यक् संभूताधिकेन । कस्मात् । उत्प्रेक्षते—शृङ्गारामृतपानादिव यथामृतपानात् कपोलयोः पुलकः संजायते । पुनश्च केन कृत्वा । स्तनयुगलेन । कथंभूतेन । उष्मलेन ऊष्मत्वसहितेन । कस्मात् । उत्प्रेक्षते—मदनानलसंधुक्षणादिव यथा अनलसंधुक्षणात् ऊष्मत्वं संजायते । पुनश्च केन कृत्वा । तेन कामुकजनप्रसिद्धेन अङ्गेन शरीरेण । कथंभूतेन । सान्द्रसङ्गेन सहस्वेदजलेन । कस्मात् । उत्प्रेक्षते—अनन्यजपर्जन्याभिवर्षादिव च अनन्यजः कंदर्पः स एव पर्जन्यो मेघः सर्वलोकानन्दकारित्वात् प्रह्लादकत्वात् स्मरभूमिसेचनत्वात् च तस्य अभिवर्षादिव समन्तात् वर्षणादिव । कथंभूतं स्मरमन्दिरप्रासादम् । संपादितहृदयोन्मादं सम्यग्विहितमनोहर्षम् । तथा चोक्तम्—'पारिप्लवं नयनयोरधरप्रकम्पः कामं कपोलफलके पुलकप्रबन्धः । ऊष्मागमः स्तनयुगे मकरन्दसङ्गः क्रीडाम्बुजे च नियतं वनितासु रागः ॥' पुनश्च किं कृत्वा निद्रामकरवम् । तास्ताः कामुकजनप्रसिद्धाः कथाः प्रस्तुत्य प्रस्तावमानीय । कथयित्वा इत्यर्थः । कथंभूताः कथाः । चाटुकारपरिभाषामनोहराः चाटुकाराः स्नेहनमिथ्याप्रशंसनानि । उक्तं च—'अस्त्री चाटुश्चटुः श्लाघा प्रेम्णा मिथ्याविकत्थनम् ।' चाटुकाराणां परिभाषा संभाषणं तेन मनोहराः हृदयानुरञ्जनाः । पक्षे अनियमे नियमकारिणी परिभाषा शास्त्रविशेषस्ते यथा मनोहरा भवन्ति । पुनः कथंभूताः । प्रणत्युपोद्धातविस्तारिणीः प्रणत्या पादपतनेन उप समीपे मस्तकताडनं प्रणत्युपोद्धातस्तेन विस्तारिणीः विस्तरवतीः । पक्षे कथाप्रारम्भे मङ्गलार्थं इष्टदेवतानमस्कारः प्रणतिस्तदनन्तरं उपोद्धातः विवक्षितवस्तुनोऽवतारणक्रमः ताभ्यां प्रणत्युपोद्धाताभ्यां विस्तारिण्यः कथा भवन्ति । पुनः कथंभूताः । दण्डप्रदानानुतन्त्रप्रवृत्ताः दण्डप्रदानादनन्तरं पुरुषकारेण दानादनन्तरं अनुतन्त्रे पश्चात्सुरते प्रवृत्ताः प्रवृत्तिं गताः । पक्षे दण्डप्रदानेन दक्षिणापथेन (?) अनुतन्त्रैर्वार्तिकैः प्रवृत्ताः । पुनः कथंभूताः । स्मरसूत्रविवरणवतीः ऊर्वोरुपरि ऊर्वोः स्थापनं स्मरसूत्रधारणं तस्य विवरणवतीः गोप्यस्थानप्रकटनवतीः । पक्षे

इव मृणालखण्डनेन, कुरङ्ग इव मृगीशृङ्गविलेखनेन, वनपादप इव लतावेष्टनेन, सिंह इव मेखलाधिरोहणेन, पुष्पाकर इव पिकवधूकूजितेन, उद्यावदिनपल्लव इव पूर्णकुम्भाश्रयणेन, करभ इव विटपाकर्षणेन, सरित्पतिरिवापगावर्तपरिवर्तकलनेन, मकर इव कल्लोलताडनेन, वनगज इव कमलिनीसरःपरिमलेन, द्रवन्निव विलीनयन्निव निमज्जन्निव विशन्निव निर्वापयन्निव च, तैस्तैरनन्यजन्मनो रसप्रसरैः प्रणयकोपसंवर्धितानुराग-

---

शास्त्रस्य मूलसूत्रविवरणं वृत्तिग्रन्थेन भवति । पुनश्च किं कृत्वा निद्रामकरवम् । तया अमृतमतिमहादेव्या सह संवेशसुखं सुरतसौख्यं अनुभूय भुक्त्वा । केन कृत्वा । पुनः मकरन्दपानेन अधरग्रहणेन सुरतसुखमनुभूय । क इव । द्विरेफ इव यथा द्विरेफो भ्रमरः पुष्परसपानेन सुखमनुभवति । पुनः केन कृत्वा । मृणालखण्डनेन अधरखण्डनेन । क इव । राजहंस इव यथा राजहंसः कलहंसः मृणालखण्डनेन सुखमनुभवति । पुनः केन कृत्वा । मृगीशृङ्गविलेखनेन.............. । क इव । कुरङ्ग इव यथा कुरङ्गः ...... ...................... । पुनः केन कृत्वा । लतावेष्टनेन बाह्वालिङ्गनेन । क इव । वनपादप इव यथा वनपादपो वल्लीवेष्टनेन सुखमनुभवति । पुनः केन कृत्वा । मेखलाधिरोहणेन.............. । क इव । सिंह इव यथा सिंहः..................... । पुनः केन कृत्वा । पिकवधूकूजितेन [कोकिलजाया]क्वणितेन कृत्वा । क इव । पुष्पाकर इव यथा पुष्पाकरो वसन्तः पिकवधूकूजितेन सुखमनुभवति । पुनः केन कृत्वा । पूर्णकुम्भाश्रयणेन स्तनपरामर्शेन । क इव । उद्यावदिनपल्लव इव यथा उद्यावदिनपल्लव उत्सवदिवसप्रवालः पूर्णकुम्भाश्रयणेन सुखमनुभवति । पुनः केन कृत्वा । विटपाकर्षणेन ताडनेन । क इव । करभ इव यथा करभः क्रमेलकः विटपाकर्षणेन कटप्राकर्षेण सुखमनुभवति । पुनः केन कृत्वा । आपगावर्तपरिवर्तकलनेन नाभिप्रदेशावलोकनेन । क इव । सरित्पतिरिव यथा सरित्पतिः समुद्र आपगानां नदीनां आवर्तपरिवर्तकलनेन भ्रमरधारणेन सुखमनुभवति । पुनः केन कृत्वा । कल्लोलताडनेन दोर्दण्डताडनेन । क इव । मकर इव यथा मकरो नक्रः समुद्रकल्लोलताडनेन सुखमनुभवति । पुनः केन कृत्वा । कमलिनीसरःपरिमलेन स्मरमन्दिरसुरतकरणेन । क इव । वनगज इव यथा वनगजः विन्ध्यकुञ्जरः कमलिनीसरःपरिमलेन पद्मिनीसंयुक्तसरोवरनिमज्जनेन सुखमनुभवति । ध्वनिरयमलंकारः । तथा चोक्तम्—'अन्यार्थवाचकैर्यत्र पदैरन्यार्थ उच्यते । सोऽलंकारो ध्वनिर्ज्ञेयो वक्तुराशयसूचनात् ॥' अहं किं कुर्वन् । द्रवन्निव क्षरन्निव । विलीनयन्निव तन्मयीभवन्निव । निमज्जन्निव तन्मध्ये प्रवेशं कुर्वन्निव । विशन्निव....... । निर्वापयन्निव च निर्वाणसुखमात्मनः प्रापयन्निव । क्रियासमुच्चयालंकारः । कथंभूतं संवेशसुखम् । तैस्तैः प्रसिद्धैरनन्यजन्मनः कामस्य रसप्रसरैः रसप्रवाहैः प्रणयकोपसंवर्धितानुरा-



मनुनयोपचारद्विगुणितस्नेहसङ्गमन्योन्यकलाकौशलोपचितरसवेगममर्यादमुल्लङ्घितक्रमास्पदमनपेक्षितवपुःखेदमपुनर्लभ्यमिवापश्चिमं तया सह संवेशसुखमनुभूय, उपान्तयन्त्रपुत्रिकोत्क्षिप्यमाणव्यजनपवनापनीयमानसुरतश्रमः,

गलिते नितम्बदेशात्काञ्चीगुणमण्डने नितम्बिन्याः ।
नखरेखाः पुनरधिकां शोभां जनयन्ति जघनस्य ॥
भवति कचग्रहयोगात्सरलत्वं कुन्तलेषु युवतीनाम् ।
तन्निक्षेपविधेरिव कुटिलाः श्वासास्तु जायन्ते ॥
दन्तक्षतमिदमधरे रमणीनां नेति मन्मनः किं तु ।
दग्धप्ररूढमन्मथतरोरयं पल्लवोल्लासः ॥

---

गम् । पुनः कथंभूतम् । अनुनयोपचारद्विगुणितस्नेहसङ्गम् अनुनयोपचारेण माननव्यवहारेण द्विगुणितः पुनरुक्तः स्नेहसङ्गः प्रीतिमेलो यत्र संवेशसुखे तत्तथोक्तम् । पुनः कथंभूतम् । अन्योन्यकलाकौशलोपचितरसवेगम् अन्योन्यं परस्परं कलाकौशलेन तद्विज्ञाननिपुणत्वेन उपचितो वृद्धिं गतो रसवेगो रागवेगो यत्र संवेशसुखे तत्तथोक्तम् । पुनः कथंभूतम् । अमर्यादमसंख्यम् । पुनः कथंभूतम् । उल्लङ्घितक्रमास्पदं अतिक्रान्तनिजस्थितिस्थानम् । पुनः कथंभूतम् । अनपेक्षितवपुःखेदं अगणितशरीरकष्टम् । पुनः कथंभूतम् । अपश्चिमं द्वितीयकम् । किमिव । अपुनर्लभ्यमिव पुनर्न लभ्यते अपुनर्लभ्यं तदिव । पुनः कथंभूतोऽहम् । उपान्तयन्त्रपुत्रिकोत्क्षिप्यमाणव्यजनपवनापनीयमानसुरतश्रमः उपान्तं समीपे उभयपार्श्वे वा यन्त्रपुत्रिका कलापुत्तलिका तया उत्क्षिप्यमाणः प्रेर्यमाणो योऽसौ व्यजनपवनस्तालवृन्तवातस्तेन अपनीयमानो दूरीक्रियमाणः सुरतश्रमः संभोगखेदो यस्य स तथोक्तः । पुनः कथंभूतोऽहं निद्रामकरवम् । इति अमुना प्रकारेण भगवतः श्रीमतः कुसुमशरस्य कंदर्पस्य चरितचिन्तासंतानस्तिमितान्तःकरणः चरितस्य चेष्टितस्य चिन्तासंतानेन समूहेन स्तिमितं निश्चलं अन्तःकरणं मनो यस्य मम सोऽहं चरितचिन्तासंतानस्तिमितान्तःकरणः ।

इतीति किम्—**गलित इत्यादि** । नितम्बिन्याः काञ्चीगुणमण्डने मेखलागुणाभरणे नितम्बदेशाद्गलिते सति जघनस्य नखरेखाः पुनर्भूयोऽपि अम्बिका(धिकां) शोभां जनयन्ति । संयुक्तशृङ्गाररसः ॥

**भवतीत्यादि** । युवतीनां कचग्रहयोगात् केशानां मुष्टिग्रहणयोगात् कुन्तलेषु सरलत्वं भवति । श्वासास्तु कुटिला जायन्ते । कस्मात् । उत्प्रेक्षते—तन्निक्षेपविधेरिव तस्य कुटिलत्वस्य निक्षेपविधेः परिहारदुःखात् इव ॥

**दन्तक्षतमित्यादि** । रमणीनां स्त्रीणां अधरे इदं प्रत्यक्षीभूतं दन्तक्षतं व्रणं न भवति । किं तर्हि । मन्मनः मदीयं चित्तं इति वर्तते । इतीति किम् । दग्धप्ररूढमन्मथतरोरयं

चक्षुषि लाक्षारागः कज्जलमधरे च मण्डनं कुरुते ।
दिग्वासस इव चित्रा वृत्तिर्मदनस्य विपरीता ॥
रमयति मनो नितान्तं स्वेदोद्गमबिन्दुमञ्जरीजालम् ।
लज्जित इव कुचमध्ये प्रविशति हारः पुरंध्रीणाम् ॥
उरसि नखक्षतपङ्क्तिर्वनितानां भाति सरसविनिवेशा ।
स्मरशरशल्यविनिर्गमजनितः प्रायेण मार्ग इव ॥
स्तनगलकपोलभुजगा राजन्ते करजराजयः कुटिलाः ।
मदनस्य युवतिवसतिषु निवासलिखिता प्रशस्तिरिव ॥

---

पल्लवोल्लासः दग्धः किल रुद्रेण भस्मीकृतः पश्चात् प्ररूढः प्रादुर्भूतः मन्मथतरोः कामवृक्षस्य अयं प्रवालोल्लासो वर्तते । अपह्नुतिरयमलंकारः ॥

**चक्षुषीत्यादि ।** चक्षुषि लोचने लाक्षारागः अलक्तको मण्डनं कुरुते शोभां विदधाति । अधरे च दन्तवाससि कज्जलं मण्डनं कुरुते । मदनस्य वृत्तिः यथेष्टितं चित्रा आश्चर्यकारिणी । कस्मादाश्चर्यकारिणी तद्धेतुगर्भितं विशेषणमाह—कथंभूता वृत्तिः । विपरीता विपर्यस्ता । कथं विपरीता । चक्षुषि कज्जलं विलोक्यते तत्तु अधरे, अधरे लाक्षारसो विलोक्यते स तु चक्षुषि, यतो वर्तते तेन कारणेन विपरीता वृत्तिः । कस्येव । दिग्वासस इव दिगम्बरस्येव । यथा दिग्वाससः ध्यानयोगेन चक्षुषि रक्तत्वं भवति, अधरे तु तृषायोगात् कृष्णत्वं भवति । इत्यनेन किं सूचितं भवति । पुरुषेण स्त्रीलोचनं चुम्बितम्, तत्र लाक्षारसस्ताम्बूलरसो वा लग्नः, लोचनस्य कज्जलं तु पुरुषस्य अधरे लग्नम् । दीपकोपमाहेत्वलंकारः ॥

**रमयतीत्यादि ।** पुरंध्रीणां स्वेदोद्गमबिन्दुमञ्जरीजालं प्रस्वेदबिन्दुवल्लरीसमूहो नितान्तं मनो रमयति । हारस्तु कुचयोर्मध्ये प्रविशति प्रवेशं करोति । हारः कथंभूतः । उत्प्रेक्षते—लज्जित इव मन्दाक्षं प्राग्भवं इव । रूपकोपमालंकारः ॥

**उरसीत्यादि ।** वनितानां उरसि नखक्षतपङ्क्तिः कामाङ्कुशव्रणराजिः भाति शोभते । कथंभूता नखक्षतपङ्क्तिः । सरसविनिवेशा तत्कालदत्ता । पुनः कथंभूता । उत्प्रेक्षते—स्मरशरशल्यविनिर्गमनोत्पादितः प्रायेण मार्ग इव भाति । उत्प्रेक्षादीपकालंकारः ॥

**स्तनगलेत्यादि ।** स्तनगलकपोलभुजगाः स्तनयोः कुचयोर्गले ग्रीवायां कपोलयोर्गण्डस्थलयोः भुजयोर्बाहुवल्ल्योः गच्छन्ति तिष्ठन्तीति स्तनगलकपोलभुजगाः एवंविधाः करजराजयः नखक्षतपङ्क्त्यो राजन्ते । कथंभूताः करजराजयः । कुटिला वक्राः । पुनः कथंभूताः । मदनस्य संबन्धिनीषु युवतिवसतिषु युवतिप्रासादेषु निवासलिखिता उत्कीर्णा



नार्थिनि मलिनमुखत्वं दातुः कस्यापि युज्यते कर्तुम् ।
स्तब्धमविवेकि कठिनं कुचयुग्मं कोऽपि किं त्यजति ॥
नीचैर्वृत्तिर्येषां त एव नन्दन्ति चिरतरं पुरुषाः ।
नूपुरवत्किं सुरते महोत्सवः केशकुसुमेषु ॥

अपि च ।

पुष्पेष्वस्तशिलीमुखावलिरभून्नीलालकश्रीरियं
नेत्रे श्रोत्रसमीपमाश्रितवती किंचिन्मिथो भाषितुम् ।
वक्त्रं चुम्बितुमुन्नताविव कुचावस्याः पुनः सुभ्रुवः
काञ्चिस्थानसमृद्धिमत्सरितया मध्यं कृशत्वं गतम् ॥

---

स्तिरिव । एकस्यापि प्रशस्तौ बहुवचनं सूचितं वर्तते, तेन विभिन्नलिङ्गवचनमिति दोषो नास्ति । समुच्चयरूपकोत्प्रेक्षालंकारः ॥

**नार्थिनीत्यादि ।** अर्थिनि पुरुषे कस्यापि दातुः दायकस्य मलिनमुखत्वं श्यामवदनत्वं कर्तुं विधातुं न युज्यते न युक्तं भवति । अमुमेवार्थं आक्षेपेण लक्षयति—कुचयुग्मं स्तनयुगलं कोऽपि कश्चित्पुरुषः उदरस्थितो बालकः सुरतारूढः पुरुषो वा किं त्यजति । अपि च कथंभूतं कुचयुग्मम् । स्तब्धं उन्नतं अविवेकि अघटितं कठिनं कर्कशम् । पक्षे स्तब्धं सगर्वं अविवेकि पात्रयदीक्षायामदक्षं कठिनं निर्दयं लब्धं वा । श्लेषाक्षेपालंकारः ॥

**नीचैरित्यादि ।** येषां पुरुषाणां नीचैर्वृत्तिः अनुद्धतत्वं भवति निकृष्टपदस्थितिर्भवति त एव पुरुषाः चिरतरं निरन्तरं नन्दन्ति वर्द्धन्ते । सुरते संभोगक्रियायां नूपुरवत् पादमञ्जीर इव केशकुसुमेषु शिरःस्थितपुष्पेषु किं महोत्सवो भवति । आक्षेपालंकारः ॥

**अपि च । पुष्पेष्वित्यादि ।** अस्याः प्रत्यक्षीभूतायाः सुभ्रुवः स्त्रियः इयं प्रत्यक्षीभूता नीलालकश्रीः कृष्णकेशलक्ष्मीरभूद्बभूव । कीदृशी अभूत् । पुष्पेष्वस्तशिलीमुखावलिः पुष्पेषुणा कंदर्पेण अस्ता प्रेरिता शिलीमुखावलिः बाणपङ्क्तिः तत्सदृशी अभूत् बभूव । कामस्य निर्वाणत्वं संजातमित्यर्थः । अथवा पुष्पेषु कुसुमेषु नीलालकश्रीः अस्तशिलीमुखावलिः भ्रमररहिता संजाता । कचग्रहवशात् अस्याः सुभ्रुवः नेत्रे द्वे लोचने श्रोत्रसमीपं आश्रितवती आश्रिते । आशिश्रियतुरित्यर्थः । किमर्थं श्रोत्रसमीपमाश्रितवती नेत्रे । किंचित् पूर्वं मिथः परस्परं भाषितुं कथयितुं अस्याः सुभ्रुवः कुचौ स्तनौ उन्नतौ संजातौ । किमर्थम् । वक्त्रं चुम्बितुमिव आश्लिष्टुमिव । अस्याः मध्यं शरीरं मध्यप्रदेशः कृशत्वं श्यामत्वं गतं प्राप्तम् । कया । काञ्चिस्थानसमृद्धिमत्सरितया काञ्चिस्थानस्य मेखलास्थानस्य समृद्धेरुन्नतस्य मत्सरितया शुभद्वेषितया । उत्प्रेक्षालंकारः ॥

किं च ।

मनसिजकलभोऽयं नूनमस्मिन्प्रदेशे
निवसति वनितानामूरुमूलप्रचारः ।
यदिह तनुजराजिव्याजतो नाभिवाप्यां
प्रसृतवपुरिवास्यालक्ष्यते हस्त एषः ॥

इति भगवतः कुसुमशरस्य चरितचिन्तासंतानस्तिमितान्तःकरणः स्तोकोन्मेषस्फुरितलोचनपर्यन्तो निद्रामिवाहमकरवम् ।

महादेवी तु मां स्वभावसुप्तमिवालक्ष्य, निभृतमाक्षिप्य मत्कण्ठदेशादुपधानीकृतं करम्, अवेक्ष्य मुहुर्मुहुराकुलाकुलविलोचना मदीयाननम्, उत्सृज्य शनैःशनैः शयनम्, उपविधायार्धमुहूर्तमात्रं बहिरन्तश्चाटनचापलत्वम्, अनुवितर्क्य निःसंचारतया शून्यतावन्ध्यमिव राजभवनमध्यम्, अ-

---

किं च विशेषमाह—**मनसिजकलभ इत्यादि**। अयं मनसिजकलभः कंदर्पचिक्कगजः । गजबालक इत्यर्थः । नूनं निश्चयेन अस्मिन् प्रदेशे वनितानां स्मरमन्दिरप्रदेशे निवसति निवासं करोति । कथंभूतो मनसिजकलभः । ऊरुमूलप्रचारः ऊर्वोः सक्थ्नोः मूले प्रचारः प्रवर्तनं यस्य स तथोक्तः । अत्र निवसतीति कथं ज्ञायते । यत् यस्मात् कारणात् इह अस्मिन् प्रदेशे तनुजराजिव्याजतः रोमावलीमिषेण अस्य मनसिजकलभस्य एष प्रत्यक्षीभूतो हस्तः शुण्डादण्डः आलक्ष्यते दृश्यते । कथंभूतो हस्तः । नाभिवाप्यां नाभिदीर्घिकायां प्रसृतवपुरिव दृश्यते प्रसृतं दैर्घ्यमागतं वपुः शरीरं यस्य हस्तस्य प्रसृतवपुः । वर्तमानालंकारः ॥

कथंभूतोऽहं निद्रामकरवम् । स्तोकोन्मेषस्फुरितलोचनपर्यन्तः स्तोक ईषदुन्मेषो मनाग्लोचनोद्घाटनं तेन स्फुरितः तेजसा व्याप्तः लोचनयोः पर्यन्तो प्रान्तो यस्य मम स तथोक्तः ।

हे मारदत्त महाराज, महादेवी तु पट्टमहिषी तु आशु शीघ्रं प्रस्थितवती चलिता । किं कृत्वा पूर्वम् । मां यशोधरं स्वभावसुप्तमिव आलक्ष्य दृष्ट्वा । पुनः किं कृत्वा । करं बाहुं मत्कण्ठदेशात् निभृतं शनैः आक्षिप्य आकृष्य । कथंभूतं करम् । उपधानीकृतं मया गण्डकीकृतम् । उच्छीर्षीकृतमिति यावत् । पुनः किं कृत्वा । आकुलविलोचना सती अतिव्याकुलविलोचना सती मुहुर्मुहुर्वारं वारं मदीयं मम आननं मुखं अवेक्ष्य दृष्ट्वा । पुनः किं कृत्वा । शनैः शनैः शयनं पल्यङ्कं उत्सृज्य परिहृत्य । पुनः किं कृत्वा । बहिर्बाह्ये अन्तश्च मनसि अटनचापलत्वं अर्धमुहूर्तमात्रं क्षणार्धं उपविधाय कृत्वा । पुनः किं कृत्वा । राजभवनमध्यं अनुवितर्क्य निःसंचारतया कस्यापि अप्रवेशतया शून्यतावन्ध्यमिव



वकीर्यात्मनः शीलमिव धम्मिल्लकुसुमानि, परामृश्य सच्चरितमिवाङ्गरागम्, अविज्ञाय हितोपदेशमिव कर्णाभरणम्, अवधीर्य मत्प्रणयमिव हृदयभूषणम्, अवधूय प्रियसखीमिव काञ्चीदाम, निर्भर्त्स्य बान्धवमिव नूपुरयुगलम्, अपहाय वैहायकोचितपतिकेव सकलं वलयादिकं मण्डनम्, अन्यच्च राजमहिषीयोग्यमाकल्पम्, अतित्वरितमुपात्तनिजासन्नचरचामरधारिणीवेषा विधाय किंचिदर्धोद्गलितमुपकरणमुत्सङ्गाधिकरणमसंधाय च कपाटपुटमाशु प्रस्थितवती । मयाप्यकृत्वा कालक्षेपम् 'अहो, महादेव्याः कोऽप्यपर एव महासाहसव्यवसायो लक्ष्यते । यदस्यामर्धरात्रदेश्यायां निश्येकाकिन्यसती-

---

शून्यतासहितमिव । पुनः किं कृत्वा । धम्मिल्लकुसुमानि संयतकेशपुष्पाणि अवकीर्य क्षरयित्वा । किमिव । आत्मनः शीलमिव निजब्रह्मचर्यमुज्ज्वलं विमुच्यते । पुनः किं कृत्वा । अङ्गरागं कर्पूरकस्तूरिकाचन्दनकुङ्कुमादिरसविलेपनं परामृश्य दूरीकृत्य । किमिव । सच्चरितमिव सदाचारमिव । पुनः किं कृत्वा । कर्णाभरणं कर्णकुण्डलादिकं अविज्ञाय अवगणय्य । कमिव । हितोपदेशमिव गुरुवचनमिव । पुनः किं कृत्वा । हृदयभूषणं मुक्ताफलादिहारादिकं अवधीर्य दूरीकृत्य । कमिव । मत्प्रणयमिव । पुनः किं कृत्वा । काञ्चीदाम कटिमेखलां अवधूय दूरीकृत्य । कामिव । प्रियसखीमिव स्निग्धालीमिव । पुनः किं कृत्वा । नूपुरयुगलं पादहिञ्जीरद्वयं निर्भर्त्स्य उत्तार्य । कमिव । बान्धवमिव । पुनः किं कृत्वा । सकलं समस्तं वलयादिकं करचरणकटकादिकं मण्डनमाभरणं अपहाय दूरीकृत्य । केव । वैहायकोचितपतिकेव विहायके करटके उचितो योग्यः पतिर्भर्ता यस्याः सा वैहायकोचितपतिका । रण्डेवेत्यर्थः । न केवलमेतत् । अन्यच्च राजमहिषीयोग्यं पट्टराज्ञ्युचितं आकल्पं वेषम् अपहाय । परिहृत्येत्यर्थः । कथंभूता प्रस्थितवती । अतित्वरितं अतिशीघ्रं यथा भवत्येवम् । कथंभूता सती प्रस्थितवती । उपात्तनिजासन्नचरचामरधारिणीवेषा उपात्तो गृहीतो निजासन्नचर्याः चामरधारिण्याः प्रकीर्णकवीजिकायाः वेष आकल्पो यया सा तथोक्ता । पुनश्च किं कृत्वा पूर्वं प्रस्थितवती । किंचित् उत्सङ्गाधिकरणं वैकक्षकादिकम् । अङ्के निक्षिप्तं वस्त्रं वैकक्षकमुच्यते । हृदये तिर्यग्धृतं वस्त्रं उपकरणं अर्धोद्गलितं अर्धलुप्तं विधाय कृत्वा । पुनश्च किं कृत्वा पूर्वं प्रस्थितवती । कपाटपुटं अररकक्षयुगलं असंधाय अदत्वा । हे मारदत्त महाराज, मयापि कालक्षेपं अकृत्वा अष्टवङ्कनामपदं अष्टवङ्कनामधेयं लेसिकापसदं हस्तिपकेषु यचि(?) अनुनयन्ती मानापयन्ती(?) महादेवी दृष्टा । उक्तं च—'कटिपादहस्तवक्षःपृष्ठाननकण्ठनिटिलदेशेषु । वक्रो यस्मात्तस्माद्विज्ञेयो ह्यष्टवङ्क इति ॥' कथंभूतेन मया । इति अमुना प्रकारेण अवसितचेतसा निश्चितचित्तेन । इतीति किम् । अहो हंहो जीव, महादेव्याः कोऽपि अनिर्वचनीयो अपर एव अपूर्व एव महासाहसव्यवसायो लक्ष्यते महाद्भुतकर्मोद्यमो दृश्यते । कस्मात् । यत्

जनोचिताचरणेव लघुतरमुच्चलिता । तदलमत्र चित्तभ्रमकारिणा विचार-चक्रेण । अवलोकयेयमहमेवास्यास्तावदाकूतपरिपाकम् ।' इत्यवसितचेतसा, सोत्तालं विहितनिजनिकटवर्तिखङ्गवहवेषेण गवेषयता च तत्पदवीम्, राजमन्दिरस्य प्रथमकक्ष्यायां दक्षिणस्यां दिशि युवराजविनोदहस्तिनो विजयमकरध्वजनामधेयस्यापाश्रयाविदूरवर्तिनि कटङ्करकुटीरके करिकवलावशिष्टयवसप्रस्तरविस्तरिण्यवगुण्ठितरज्जुपुञ्जपरिकल्पितशिरस्पदे निद्रायन्तम्, इभाभ्यङ्गकर्पटपिहितलज्जास्थानम्, अतिकठिनकचकण्टकोड्डमरमुण्डमण्डलम्, अनवानुपदीनापटलसमश्रवसम्, उत्तानकपिकराभोगनिभललाटम्, अङ्गारलिखितैकरेखासमानभ्रूकम्, उदञ्चनशुषिरातिशायिलोचनम्,

---

यस्मात् कारणात् अस्यां प्रत्यक्षीभूतायां अर्धरात्रदेश्यायां मनागपि समाप्तनिशीथवेलायां निशि एकाकिनी एकिका असतीजनोचिताचरणेव पुंश्चलीलोकयोग्यचेष्टितेव लघुतरं उच्चलिता उच्चचाल प्रस्थिता । तत्तस्मात् कारणात् अत्र विचारचक्रेण अलं पूर्णम् । कथंभूतेन विचारचक्रेण । चित्तभ्रमकारिणा हृदयसंदेहविधायकेन । अवलोकयेयं विलोकयामि अहमेव स्वयमेव तावत् पश्यामि । किं विलोकयेयम् । अस्याः महादेव्या आकूतपरिपाकं अभिप्रायावसानम् । अन्यकथितं नाहं मानयामीत्यर्थः । किं कुर्वता मया लेसिकापसदं अष्टवङ्कमनुनयन्ती दृष्टा । सोत्तालमुत्सुकतया विहितनिजनिकटवर्तिखङ्गवहवेषेण तत्पदवीं गवेषयता तस्या मार्गं अन्वेषयता विहितो निजनिकटवर्तिखङ्गवहवेषेण अङ्गरक्षकवेषेण तत्पदवीमन्वेषयता । किं कुर्वन्तमष्टवङ्कम् । कटङ्करकुटीरके निद्रायन्तं वृक्षशाखाकुत्सितकुट्यां स्वपन्तम् । कथंभूते कटङ्करकुटीरके । प्रथमकक्ष्यायां राजमन्दिरस्य प्रकोष्टके दक्षिणस्यां दिशि मन्दिरात् अवाक्ककुभि विजयमकरध्वजनामधेयस्य युवराजविनोदहस्तिनः यशोमतिकुमारक्रीडागजस्य अपाश्रयाविदूरवर्तिनि राज्यस्थानात् निकटवर्तिनि ईदृशे कुटीरके । पुनः कथंभूते । करिकवलावशिष्टयवसप्रस्तरविस्तरिणि करिणः कवलो ग्रासस्तस्मादवशिष्टं उर्वरितं यवसं घासस्तस्य प्रस्तर आस्तरणं विस्तरते विद्यते यत्र तत्तथोक्तं तस्मिन् । पुनः कथंभूते । अवगुण्ठितरज्जुपुञ्जपरिकल्पितशिरस्पदे अवगुण्ठितः कुण्डलीकृतः योऽसौ रज्जुपुञ्जः रज्जुसमूहस्तेन परिकल्पितः शिरस्पदः उच्छीर्षं यत्र तत्तथोक्तं तस्मिन् । कथंभूतं अष्टवङ्कम् । इभाभ्यङ्गकर्पटपिहितलज्जास्थानं इभानां हस्तीनां अभ्यङ्गकर्पटेन तैलक्षणवस्त्रेण पिहितं लज्जास्थानं कोशो येन स तथा तम् । पुनः कथंभूतम् । अतिकठिनकचकण्टकोड्डमरमुण्डमण्डलम् अतिकठिना भृशं कर्कशा ये कचकण्टकास्तैरुड्डमरं भयानकं मुण्डमण्डलं यस्य स तथोक्तस्तम् । पुनः कथंभूतम् । अनवा जीर्णा या अनुपदीना उपानत् तस्याः पटलसमे चर्मसदृशे श्रवसी कर्णौ यस्य स तथा तम् । पुनः कथंभूतम् । उत्तानकपिकराभोगनिभललाटम् उत्तानं स्फुटतटतलो योऽसौ कपिकरस्तस्याभोगो विस्तारस्तेन-



अर्धदग्धाजिनमलिनपक्ष्मपुटम्, अविषमभृतनलदण्डद्वयसदृशनासीरम्, उन्दुरविकर्तरितसंघाटतटतुलितोभयदशनवसनम्, अतिपुराणकुजकोटरप्रतिमल्लगल्लम्, असमस्थापितवराटकविकटदन्तम्, अजश्मश्रुदुर्दर्शचिबुकमध्यम्, ऐरण्डकाण्डविडम्बिधमनीलगल्लनालम्, अवालवीरणदलघटितकिटिकास्थपुटवक्षसम्, उल्लम्बितमृतगोनसानुकारिक्षिपस्तिनिर्गमम्, अनिलभृतभस्त्राध्मातजठरम्, उदूखलानुकारिकटीभागम्, अग्निलङ्घितस्थाणुगण-

---

निभः सदृशः ललाटो निटिलतटं यस्य स तथा तम् । पुनः कथंभूतम् । अङ्गारलिखितैकरेखासमानभ्रूकम् अङ्गारेण मलिना लिखितैकरेखो ताभ्यां समाने भ्रुवौ नेत्रोपरिरोमराज्यौ यस्य स तम् । पुनः कथंभूतम् । उदञ्चनं नालिकेरपलकरङ्कस्तस्य शुषिरवत् अतिशायिनी अतिशयेन विरूपके लोचने नेत्रे यस्य स तथा तम् । पुनः कथंभूतम् । अर्धदग्धाजिनमलिनपक्ष्मपुटम् अर्धदग्धं सामिदग्धं यदजिनं चर्म तद्वत् मलिनौ पक्ष्मपुटौ नेत्रपटले यस्य स तथा तम् । पुनः कथंभूतम् । अविषमभृतनलदण्डद्वयसदृशनासीरम् अविषमभृतं समं धृतं यत् नलदण्डद्वयं तेन सदृशं नासीरं नासिका यस्य स तथा तम् । पुनः कथंभूतम् । उन्दुरविकर्तरितसंघाटतटतुलितोभयदशनवसनम् उन्दुरैर्मूषिकैः विकर्तरिते विविधकरटिते ये संघाटतटे चर्णकूपककणौ ताभ्यां तुलिते उभये द्वे अपि दशनवसने ओष्ठौ यस्य स तथा तम् । पुनः कथंभूतम् । अतिपुराणकुजकोटरप्रतिमल्लगल्लम् अतिपुराणो जीर्णो योऽसौ कुजो वृक्षस्तस्य कोटरप्रतिम[ल्लः] कोटरसदृशो गल्लो गण्डो यस्य स तथा तम् । पुनः कथंभूतम् । असमस्थापितवराटकविकटदन्तम् असमस्थापिता पङ्क्तिरहिता ये वराटकाः कपर्दिकास्तद्वत् विकटा बहिर्निर्गता दन्ता यस्य स तथा तम् । पुनः कथंभूतम् । अजश्मश्रुदुर्दर्शचिबुकमध्यम् अजश्मश्रुवत् छागकूर्चवत् दुर्दर्शो दुर्निरीक्ष्यश्चिबुकमध्यो यस्य स तथा तम् । पुनः कथंभूतम् । ऐरण्डकाण्डविडम्बिधमनीलगल्लनालम् ..................

........................................................................................

पुनः कथंभूतम् । अवालवीरणदलघटितकिटिकास्थपुटवक्षसम् अवालानि बृहन्ति यानि वीरणदलानि गाण्डरकपर्णानि तृणविशेषपत्राणि तैर्घटितानि गुम्फिता या किटिका कुटी तद्वत् स्थपुटं उच्चावचं वक्षो हृदयं यस्य स तथा तम् । पुनः कथंभूतम् । उल्लम्बितमृतगोनसानुकारिक्षिपस्तिनिर्गमम् उल्लम्बितौ ऊर्ध्वमवलम्बितौ मृतगोनसौ उच्छूनसर्पौ तदनुकारी तत्सदृशः क्षिपस्त्योर्बाह्वोः निर्गमः प्रसरो यस्य स तथा तम् । पुनः कथंभूतम् । अनिलभृतभस्त्राध्मातजठरम् अनिलेन वातेन भृता पूरिता या भस्त्रा लोहकारधमनी तद्वत् ध्मातं वस्त्रतः पूरितं स्थापितं जठरं उदरं यस्य स तथा तम् । पुनः कथंभूतम् । उदूखलानुकारिकटीभागम् उदूखलानुकारी उदूखलसदृशः कटीभागः कटीप्रदेशो यस्य स तथा तम् । पुनः कथंभूतम् । अग्निलङ्घितस्थाणुगणनोरुकम् अग्निना वैश्वानरेण लङ्घितौ अर्धदग्धौ यौ

नोरुकम्, अतनुकूर्मकर्परप्रतिष्ठाष्ठीवत्प्रदेशम्, उच्छूनसिराग्रन्थिजटिलपिण्डिकम्, उन्निर्गतोत्कटघुण्टिकाकीकसम, अनेकविपादिकाविलविरलवक्राङ्गुलिफटत्कपाटम्, अघसंघातमिव दुर्निरीक्ष्यम्, अमङ्गलस्थानमिव नितरामुद्वेजनीयम्, अखण्डमण्डूरकुलमिव मनुष्यरूपेण परिणतम्, अखिलमिव वैरूप्यमवचित्य वेधसा निष्पादितम्, अतिस्थूलश्वासस्फूर्जत्कुक्षिपरिसरम्, उद्घोषणघोरणघोषघर्घरितदिग्विवरम्, उद्दृप्तनिद्राभरव्यादीर्णवदनकन्दरम्, उपलसंपुटनिष्पीडितमिव खर्वेतरपूर्वभागम्, उभयतः परिकृष्ट-

---

स्थाणू कीलकौ तयोर्गणना उपमा ऊर्वोः सक्थ्नोर्यस्य स तथा तम् । पुनः कथंभूतम् । अतनुकूर्मकर्परप्रतिष्ठाष्ठीवत्प्रदेशम् अतनुर्महान् कूर्मस्य कच्छपस्य कर्परप्रतिष्ठौ खर्परसदृशौ अष्ठीवतोर्जानुनोः प्रदेशौ स्थानके यस्य स तथा तम् । पुनः कथंभूतम् । उच्छूनसिराग्रन्थिजटिलपिण्डिकम् उच्छूना श्वयथुं प्राप्ता ये सिराग्रन्थयस्तासां जालानि तैर्जटिले सर्वत्रव्याप्ते पिण्डिके जङ्घे यस्य स तथा तम् । पुनः कथंभूतम् । उन्निर्गतोत्कटघुण्टिकाकीकसम् उन्निर्गते ऊर्ध्वे प्रकटिते उत्कटे उद्रिक्ते उल्बणे घुण्टिकयोर्गुल्फयोः कीकसे द्वे हड्डे यस्य स तथा तम् । पुनः कथंभूतम् । अनेकविपादिकाविलविरलवक्राङ्गुलिफटत्कपाटम् अनेकाभिर्बह्वीभिः विपादिकाभिर्विचर्चिकाभिः पादस्फोटैराविलौ व्याप्तौ विरलवक्राङ्गुली विरला अश्लिष्टा वक्रा अङ्गुलयो ययोस्तौ विरलवक्राङ्गुली ईदृग्विधौ फटत्कपाटौ स्फुटितौ चरणौ यस्य स तं तथोक्तम् । पुनः कथंभूतम् । दुर्निरीक्ष्यं दुःखेन महता कष्टेन निरीक्षितुं द्रष्टुं शक्यो दुर्निरीक्ष्यस्तम् । दुर्दर्शमित्यर्थः । कमिव । अघसंघातमिव पापसमूहमिव । पुनः कथंभूतम् । नितरामतिशयेन उद्वेजयति उद्वेगमुत्पादयतीति उद्वेजनीयस्तम् । 'कृत्यल्युटो बहुलम्' इति वचनात् कर्तर्यनीयः । किमिव । अमङ्गलस्थानमिव । श्मशानमिवेत्यर्थः । पुनः कथंभूतम् । अखण्डं अशकलं यन्मण्डूरकुलं लोहमलराशिः मनुष्यरूपेण परिणतमिव पर्यायमागतमिव । पुनः कथंभूतम् । अखिलं पर्याप्तं वैरूप्यं कुत्सितरूपतां अवचित्य गृहीत्वा वेधसा पूर्वजन्मपापकर्मणा निष्पादितमिव निर्मितमिव । पुनः कथंभूतम् । अतिस्थूलश्वासस्फूर्जत्कुक्षिपरिसरम् अतिस्थूलश्वासैः बृहद्भिः श्वासैः स्फूर्जन् अप्रातिहतव्यापारः कुक्षिपरिसरः उदयपर्यन्तभूमिप्रदेशो यस्य स तथोक्तस्तम् । पुनः कथंभूतम् । उद्घोषणघोरणघोषघर्घरितदिग्विवरम् उद्घोषणायाः उत्पटितनासिकाया ये घोरणघोषाः निद्राशब्दास्तैर्घर्घरितानि बधिरितानि जठरितानि दिग्विवराणि येन स तथा तम् । पुनः कथंभूतम् । उद्दृप्तनिद्राभरव्यादीर्णवदनकन्दरम् उद्दृप्तो हर्षं गतः उन्मादं प्राप्तो योऽसौ निद्राभरः प्रमीलाविषयस्तेन व्यादीर्णा विदारिता वदनकन्दरा मुखगुहा यस्य स तथोक्तस्तम् । पुनः कथंभूतम् । खर्वेतरपूर्वभागम् खर्वेतरो ह्रस्वः पूर्वकायो(भागो) यस्य स तथा तम् । उत्प्रेक्षते—



मिव दीर्घतरापरागम्, इह करिणिजनस्य दृष्टिविषमापतेदिति मषीपुण्ड्रकमिव द्विपसमीपविनियुक्तम्, अखिलगजोपजीविफेलाजीवनमष्टवङ्कनामपदं लेसिकापसदमूर्ध्वशुष्कशाल्मलीविटपकर्कशस्पर्शे स्थूले चरणाङ्गुष्ठमूले विनिवेश्य मत्प्रेमप्रासादपरिलोपोद्रङ्गवज्रानलस्फुलिङ्गमिव करमुत्थापयन्ती, पुनरुत्थितेन च तेन किंचिदश्लीलमालपता विधुंतुदमलिनेन वामहस्तेनाकृष्य कुरङ्गाङ्ककलङ्कसंकाशं केशपाशमङ्कुशप्रहारनिर्दयेन चेतरेण करेण हन्यमाना, 'अये प्रियतम, अलमलमनेनावेगेन । क्षमस्वैनमेकमनुचितसंब-

---

उपलसंपुटनिष्पीडितमिव पाषाणपटलद्वयं चम्पितमिव । पुनः कथंभूतम् । दीर्घतरापरागम् दीर्घतरं आयतं अपरागं कक्ष्याधः कायो यस्य स तथा तम् । उत्प्रेक्षते—उभयतः परिकृष्टमिव अपरकायोभयभागयोराताानितमिव । पुनः कथंभूतम् । द्विपसमीपविनियुक्तम् द्विपानां हस्तीनां समीपे निकटे विनियुक्तमविकृतम् । किमिव । मषीपुण्ड्रकमिव कज्जलतिलकमिव । किमर्थम् । इति एतस्मात् कारणात् । उत्प्रेक्षते—इह अस्मिन् द्विपसमीपे करिणिजनस्य हस्तिपकसमूहस्य दृष्टिविषं दृग्दोषं आपतेत् आपतिष्यतीति कारणात् । इति शब्दोऽत्र उत्प्रेक्षाद्योतकः । पुनः कथंभूतम् । अखिलगजोपजीविफेलाजीवनम् अखिलानां गजोपजीविनां मीठादीनां फेलानां उच्छिष्टं जीवनं भोजनं यस्य स तथा तम् । देवी अमृतमती किं कुर्वती दृष्टा । अष्टवङ्कस्य करं उत्थापयन्ती उच्चालयन्ती । कथंभूतं अष्टवङ्कस्य करम् । मत्प्रेमप्रासादपरिलोपोद्रङ्गवज्रानलस्फुलिङ्गमिव मदीयो योऽसौ प्रेम स्नेहो मत्प्रेम स एव प्रासादो राजसदनं तस्य परिलोपोद्रङ्गमिव महाकायाः वज्रानलस्य वज्राग्नेः स्फुलिङ्गमिव अग्निकणमिव । किं कृत्वा पूर्वम् । चरणाङ्गुष्ठमूले पादज्येष्ठसमीपे विनिवेश्य उपविश्य । कथंभूते चरणाङ्गुष्ठमूले । ऊर्ध्वशुष्कशाल्मलीविटपकर्कशस्पर्शे ऊर्ध्वशुष्को योऽसौ शाल्मलीविटपः कूटशाल्मलितरुकटप्रस्तद्वत् कर्कशः कठोरः स्पर्शो यस्य तस्मिन् चरणाङ्गुष्ठमूले । स्थूले महति । देवी इति अमुना प्रकारेण अनुनयन्ती दृष्टा । कथंभूता अनुनयन्ती दृष्टा । पुनः पुनरपि तेन अष्टवङ्केन लेसिकापसदेन उत्थितेन ऊर्ध्वीभूतेन किंचित् अपूर्वं अश्लीलं असत्यं वचनं आलपता वदता हन्यमाना ताड्यमाना । किं कृत्वा पूर्वम् । वामहस्तेन केशपाशं आकृष्य नामयित्वा । कथंभूतेन वामहस्तेन । विधुंतुदमलिनेन अभ्रपटलपिशाचवत्कालेन । कथंभूतं केशपाशम् । कुरङ्गाङ्ककलङ्कसंकाशं चन्द्रलाञ्छनसदृशं कृष्णवर्णम् । केन कृत्वा हन्यमाना । इतरेण दक्षिणेन च करेण च हन्यमाना । कथंभूतेन इतरेण करेण । अङ्कुशप्रहारनिर्दयेन सृणिनिष्ठुरघातवत् निष्कृपेण । देवी इत्यनुनयन्ती दृष्टा । इतीति किम् । अये इति आदरे वर्तते । उक्तं च—'संभ्रमे स्मरणे क्रोधे विषादे कथिते प्रिये ।' अये प्रियतम अहो स्वामिन्, अनेन प्रत्यक्षीभूतेन आवेगेन क्रोधेन अलं अलं पूर्णं पूर्णम् । एकं अद्वितीयं एनं प्रत्यक्षीभूतं अपराधं दोषं क्षमस्व सहस्व । कथंभूतम-

न्धमपराधम् । आकर्णय तावत् । एषास्मि तव दासी । धृतौ च ते मया पादौ । इयं च वासनेयी मम कुशलेन मा विभासीत्, यद्यहमात्मवशेनैव स्थितवती । किं तु हतविधिनाहं मन्दभागवती परवती विहिता । स च तपनः क्षणमपि दुष्टग्रह इवागत्य न मां मुञ्चति । तत्किं नु खलु करोमि । नन्वहं हताशा । बलीयश्च मे निर्भागिन्याः पुराकृतं दुष्कृतम्, येन त्वयि न शक्नोमि जीवितेशमनोनुरागवदनेन मुधागलल्लावण्यकेन कायेन सदा संनिधातुम् । तत्समागमसमये च यदि त्वामेव हृदये निधाय तेन सह नासे, तदास्यामेव निशि भगवती कात्यायनी मां खादतु । पृथिव्येनसां च भागिनी स्याम् । तत्प्रसीद । एष ते पादपतनं

---

पराधम् । अनुचितसंबन्धम् । अयुक्तमित्यर्थः । आकर्णय तावत् शृणु अनुक्रमेण । एषा अहं प्रत्यक्षीभूता तव भवने दासी कर्मकरी । अस्मिन् समये धृतौ च मया ते तव पादौ । तव पादयोः शपथं करोमीत्यर्थः । इयं च प्रत्यक्षीभूता वासनेयी रात्री मम कुशलेन क्षेमेन मा विभासीत् मैवं गमत्, यदि अहं आत्मवशेनैव स्वाधीनतया स्थितवती उत्सूर(?)कृतवती । किं तु हतविधिना निन्दितेन मृतेन वा ब्रह्मणा परवती विहिता पराधीनतां स्थितवती । कथंभूताहम् । मन्दभागवती अल्पपुण्या । स च तपनः कामः क्षणमपि मुहूर्तमपि दुष्टग्रह इव पिशाच इव आगत्य मां न मुञ्चति । तवाभिलाषेणैवाहं तिष्ठामीत्यर्थः । नु इति प्रश्ने । तत्तस्मात् कारणात् । खलु अनुनये वाक्यालंकारे वा । अहं किं करोमि मम को दोषः । विधेरेव दोष इत्यर्थः । नन्वहं हताशा विध्वस्तमनोरथा संजाता । उक्तं च—
'वाक्यालंकारवीप्सायां जिज्ञासानुनयेऽपि च । निषेधे खलुशब्दोऽयं विद्वद्भिरिह कथ्यते ॥
नन्वाक्षेपे परिप्रश्ने वाक्यारम्भेऽवधारणे । प्रत्युक्तमदनुज्ञाननिषेधेऽनुनयेऽपि च ॥'
अये प्रियतम, मे मम निर्भागिन्याः अपुण्यायाः दुष्कृतं पापं बलीयश्च बलवत्तरं वर्तते । कथंभूतं मे दुष्कृतम् । पुराकृतं पूर्वजन्मोपार्जितम् । येन दुष्कृतेन त्वयि विषये अनेन कायेन सदा सर्वकालं संनिधातुं निकटीभवितुं न शक्नोमि न समर्था भवामि । किंवत् । जीवितेशमनोनुरागवत् तव हृदयानुरागवत् । यथा त्वयि जीवितेशे मम मनोनुरागो वर्तते तथा कायेन समीपीभवितुं न शक्नोमीत्यर्थः । कथंभूतेन कायेन । मुधागलल्लावण्यकेन मुधा निरर्थकं निर्गलत्कान्तिकेन । तत्समागमसमये च यशोधरसुरतसमये च त्वामेव भवन्तमेव हृदये निधाय तेन सह यशोधरेण सार्धं यदि अहं नासे न तिष्ठामि, तदा अस्यामेव निशि रात्रौ भगवती परमेश्वरी कात्यायनी चण्डिका माता मां खादतु । पृथिव्येनसां पृथिवीपापानां च भागिनी च संबन्धवती च स्यां भवामि । तत्तस्मात् कारणात् प्रसीद प्रसन्नो भव । एष प्रत्यक्षीभूतस्ते प्रणयदण्डः प्रायश्चित्तकरणं पादपतन-



प्रणयदण्डः संभावय । इदमुपकरणम् । आलिङ्ग्य निर्वापयेमकान्यङ्गकानि । गतेनैव पर्याप्तमन्तरायेण ।' इत्यनुनयन्ती च दृष्टा ।

तदनु वडवानलपरिष्वङ्गमिव मे संसारसुखतरङ्गस्यापुनरागमनवेलजमिव विषयाभिलाषगजस्य तयोर्दुरभिसंधिमात्मसमक्षविधिमवेक्ष्य, आशुशुक्षणिककक्षीकृतः क्षितिरुह इव दह्यमानान्तर्देहः, च्युतमर्यादमुद्रः समुद्र इवानिवार्यकोपप्रसरः, सैंहिकेयगृहीतशिशिरकर इव विभिन्नाननकान्तिः, आसन्नमरणः प्राणिगण इव कम्पोत्तरलतरकरणः, छिद्यमानलवः पल्लव इव प्रवेपमाना-

---

मेव संभावय गृहाण । इदं उपकरणं कर्पूरकस्तूरिचन्दनविलेपनपुष्पादिकम् । इमकानि तुशितान्येतानि अङ्गकानि शरीराणि आलिङ्ग्य आलिङ्गनं दत्वा निर्वापय सुखितानि कुरु । गतेनैवान्तरायेण पर्याप्तम् । एतावता कालेन यदहं नागता तेनैव पूर्णमिति ॥

तदनु तत्पश्चात् तद्वधाय तस्य वधनिमित्तं कोशात् खड्गपात्रात् अर्धानुरोधं अर्धः अनुरोधः अनुवर्तनं यस्य असेः सः अर्धानुरोधस्तम् । अर्धनिर्गतमित्यर्थः । एवंविधं आसिं खड्गं अहं आकृष्टवान् अहमतानितवान्(?) । किं कृत्वा पूर्वम् । तयोरष्टवङ्कामृतमत्योर्दुरभिसंधिं दुष्टाभिप्रायं दुर्विलासं मे मम आत्मसमक्षविधिं आत्मनः प्रत्यक्षविधानं अवेक्ष्य दृष्ट्वा । कथंभूतस्य मे । संसारसुखतरङ्गस्य संसृतिशातकल्लोलस्य । कथंभूतं दुरभिसंधिम् । वडवानलपरिष्वङ्गमिव । यथा तरङ्गस्य समुद्रस्य कल्लोलस्य वडवानलपरिष्वङ्गः और्वानलसंबन्धः दुःखदायी भवति, तथा मम तयोर्दुरभिसंधिः दुःखदायी बभूवेत्यर्थः । पुनः कथंभूतस्य मे । विषयाभिलाषगजस्य । कथंभूतं दुरभिसंधिम् । अपुनरागमनवेलजमिव । यथा गजो येन द्वारेण पीडितो भवति तेन द्वारेण पुनर्नायाति तद्द्वारमपुनरागमनवेलजद्वारमुच्यते । तथा विषयाभिलाषद्वारगमनं रोचत इत्यर्थः । कथंभूतोऽहम् । दह्यमानान्तर्देहो भस्मीक्रियमाणचित्तः । जाज्वल्यमानहृदय इत्यर्थः । क इव । क्षितिरुह इव यथा क्षितिरुहो वृक्षः आशुशुक्षणिकक्षीकृतः आशुशुक्षणिना अग्निना कक्षीकृतः स्वीकृतो दह्यमानान्तर्देहो भवति । पुनः कथंभूतोऽहम् । अनिवार्यकोपप्रसरः अनिषेध्यक्रोधप्रवृत्तिः । क इव । समुद्र इव । कथंभूतः समुद्रः । च्युतमर्यादमुद्रः च्युता परिहता मर्यादा येन स्थितेर्मुद्रा आकारो येन स च्युतमर्यादमुद्रः यथा मर्यादारहितः अनिवार्यकोपप्रसरो भवति । पुनः कथंभूतोऽहम् । विभिन्नाननकान्तिः विभिन्ना दूरीकृता आननस्य मुखस्य कान्तिः प्रभा यस्य स तथा । क इव । सैंहिकेयगृहीतशिशिरकर इव सिंहिकाया अपत्यं पुमान् सैंहिकेयो राहुस्तेन गृहीतो गिलितश्चन्द्र इव । यथा अभ्रपिशाचगिलितः शशाङ्को विभिन्नकान्तिर्भवति । पुनः कथंभूतोऽहम् । कम्पोत्तरलतरकरणः कम्पेन वेपथुना उत्तरलतराणि चपलभराणि करणानि शरीरस्यावयवा यस्य स तथा । क इव । प्राणिगण इव । कथंभूतः प्राणिगणः । आसन्नमरणः । यथा प्राणिगणो जीववर्गो आसन्नमरणो निकटमृत्युस्तरलतर-

धरदलः, त्रिपुरदाहप्रवृत्तमतिः पार्वतीपतिरिव भ्रुकुटिभङ्गुरितभालमध्यः, ताप्यमानावगाहः कटाह इव लोहिततरवक्षःस्थलः, तिमिरवीचिकाभिरिवामर्षोत्कलिताभिरन्धीक्रियमाणलोचनस्तद्वधाय कोशादर्धानुरोधमसिमहमाकृष्टवान् । अभवच्च दैवात्तदैव मे प्रदीपबोधादिव मनस्तमस्तनुच्छेदः । आः किमिदमहो कर्माहमनुष्ठातुं व्यवसितः । न खलु नार्य इव शुभमशुभं वा कर्म सहसैवारम्भन्ते विनीतमतयः, नापि विपदि संपदि वा कृपणप्रकृतय इवाशु विक्रियां गच्छन्ति महानुभावाः, न चाल्पमेधसामिव महीयसामुपपन्ना भवन्ति कामचारेण प्रवृत्तयः, न चैतद्दूहनं(णं) किंतु

---

देहो भवति। पुनः कथंभूतोऽहम्। प्रवेपमानाधरदलः प्रवेपमानं कम्पमानं अधरदलं दन्तच्छदो यस्य स प्रवेपमानाधरदलः। क इव। पल्लव इव। कथंभूतः पल्लवः। छिद्यमानलवः छिद्यमानो द्विधाक्रियमाणो लवो विलासो यस्य सः। यथा पल्लवः भिद्यमानलवः प्रवेपमानदलो भवति। पुनः कथंभूतोऽहम्। भ्रुकुटिभङ्गुरितभालमध्यः भ्रुकुटिना भ्रूभङ्गेन भङ्गुरितो वक्रीकृतो भालमध्यो यस्य स तथा। क इव। पार्वतीपतिरिव रुद्र इव। कथंभूतः पार्वतीपतिः। त्रिपुरदाहप्रवृत्तमतिः त्रिपुरदाहे दैत्यविशेषस्य भस्मीकरणे प्रवृत्ता व्यापृता मतिर्यस्य स तथा। यथा त्रिपुरदाहप्रवृत्तमती रुद्रो भ्रुकुटिभङ्गुरितभालमध्यो भवति। पुनः कथंभूतोऽहम्। लोहिततरवक्षःस्थलः रक्तीभूतहृदयप्रदेशः। क इव। कटाहमि(इ)व लोहभाजनमिव। कथंभूतः कटाहः। ताप्यमानो जाज्वल्यमानः अवगाहो मध्यो यस्य सः। ताप्यमानावगाहः कटाहो लोहिततरो भवति। पुनः कथंभूतोऽहम्। अमर्षोत्कलिकाभिः क्रोधकल्लोलैरन्धीक्रियमाणलोचनः। कथंभूताभिरमर्षोत्कलिकाभिः। तिमिरवीचिकाभिरिव अन्धकारलहरीभिरिव। हे राजन् श्रीमारदत्तमहाराज, दैवात् कर्मयोगात् तदैव तस्मिन्नेव अस्याकर्षणकाले मे मम मनस्तमस्तनुच्छेदश्च चित्रस्थितक्रोधान्धकारकायच्छेदश्चाभवद्बभूव। कथंभूताद्दैवात्। प्रदीपबोधादिव प्रदीपप्रज्वलनादिव। कथं मनस्तमस्तनुच्छेदो बभूव। तदेव विचिन्तयति—आः संतापे। उक्तं च—'आः संतापप्रकोपयोः।' अहो आत्मन्, इदं कर्म तद्वयवधकर्म अहं यशोधरः अनुष्ठातुं कर्तुं व्यवसितः प्रवृत्तः। विनीतमतयः पुरुषाः विद्वांसो जनाः शुभमशुभं वा कर्म सहसैव आरभन्ते तथाविनीतमतयो नारभन्ते इत्यर्थः। क इव। नार्य इव। महानुभावाः महान्तः पुरुषाः विपदि संपदि च लक्ष्मीसद्भावे आशु शीघ्रं विक्रियां नापि न च गच्छन्ति प्राप्नुवन्ति। क इव। कृपणप्रकृतय इव मूर्खलोका इव। यथा कृपणप्रकृतयो लोका विपदि संपदि च आशु शीघ्रं विक्रियां गच्छन्ति तथा महानुभावा विक्रियां न गच्छन्तीत्यर्थः। महीयसां गरीयसां अतिमहतां पुरुषाणां कामचारेण प्रवर्तनं विचारेण विपृच्छया प्रवृत्तयश्चेष्टितानि उपपन्ना प्राप्ता न च भवन्ति न संजायन्ते। केषामिव। अल्पमेधसामिव। यथा अल्पमेधसः कामचारेण प्रवर्तन्ते तथा न गरीयांसो प्रवर्तन्ते इत्यर्थः। न चैतद्दूहणं किंतु प्रातः



प्रातर्मयैव लज्जावनतमस्तकेन शिरः पिधाय स्थातव्यम् । शोचितव्यं च मयैव प्रणयिनां पुरः पश्चात्तापदुःप्रतिष्ठानमिदमनुष्ठानम् । श्रोतव्या भविष्यन्ति मयैव कर्णकटुताकाराः पुरजनस्य धिक्काराः । सुष्ठु मलिनीकृतं स्यान्मयैवात्मीयं मामीयं च कुलम् । सोढव्या मयैव स्वदुष्कृतनिरुत्तरविधाश्चित्तशल्यस्पृशः कुलवृद्धानामभिधाः । अहमेवोदाहरणं भविष्यामि दुर्बुद्धीनां कुटुम्बविघटने । कलुषतामेष्यत्येषैवास्थाने विनियोजिता खड्गलता । स्त्रीवधादयमजनि तपस्वीति मृतस्यापि मे न दुर्यशः प्रशान्तिमर्हति । शोकातङ्के पतिष्यति च सापराधसवित्रीमृतिदुःखितो युवराजः । परं च बह्वपराधे हि देहिनि क्षणमात्रव्यथाशरणं मरणमनुग्रह इव । यदि पुनरनवेक्षणमुपस्थितस्य,

---

प्रभाते मयैव यशोधरेण राज्ञा लज्जावनतमस्तकेन लज्जया अपत्रपया अवनतं नम्रीभूतं मस्तकं यस्य स तथा तेन शिरः पिधाय मस्तकमावृत्य स्थातव्यं स्थापनीयम्। चान्यत् प्रणयिनां स्नेहिनां पुरुषाणां पुरोऽग्रतो मयैव यशोधरेण राज्ञा शोचितव्यं शोचनीयं दुर्नयं दुर्विलसितं प्रकाशनीयम्। किं शोचितव्यम्। इदमनुष्ठानं अमृतमतिमहादेवीदुर्विलसनम्। कथंभूतमिदमनुष्ठानम्। पश्चात्तापदुःप्रतिष्ठानं अनुशयदुर्मूलम्। पुरजनस्य नगरलोकस्य धिक्काराः निन्दावचनानि मयैव श्रोतव्या भविष्यन्ति श्रवणीया भविष्यन्ति। कथंभूताः धिक्काराः। कर्णकटुताकाराः कर्णयोः कटुकस्यागमनाः। उक्तं च—'आगत्याभिगते चैव कार इत्यभिधीयते।' सुष्ठु अतिशयेन मलिनीकृतं स्यात् भवेत्। 'धातुसंबन्धे प्रत्ययाः' इति वचनात् यच्छब्दस्य ग्रहणम्। किं मलिनीकृतं स्यात्। मयैव आत्मीयं मदीयं मामीयं च मातुलीयं च कुलमन्वयः। कुलवृद्धानां मम कुले ज्येष्ठानां अभिधा वचनानि मयैव सोढव्याः सहनीयाः। कथंभूता अभिधाः। स्वदुष्कृतनिरुत्तरविधाः स्वदुष्कृते निजस्त्रीवधलक्षणे पापे निरुत्तराणि प्रत्युक्ताः अनिराकृताः विधा विधानानि प्रकाराणि येषामभिधानां ताः स्वदुष्कृतनिरुत्तरविधाः। पुनः कथंभूता अभिधाः। चित्तशल्यस्पृशः चित्तस्य शल्यं स्पृशन्ति चित्तशल्यस्पृशः। मनोदुःखदायिन्य इत्यर्थः। कुटुम्बविघटने जनविनाशे दुर्बुद्धीनां पुरुषाणां उदाहरणं दृष्टान्तवचनं अहमेव भविष्यामि। एषा प्रत्यक्षीभूता खड्गलता अस्थाने विनियोजिता अधिकृता सती कलुषतामेष्यति च। वरदायिनी जयकारिणी न भविष्यतीत्यर्थः। मे मम इति च दुर्यशः ईदृशमपयशः प्रशान्तिं नार्हति। इति च दुर्यशो न शाम्यतीत्यर्थः। इतीति किम्। अयं यशोधरः स्त्रीवधात् स्त्रीमारणात् तपस्वी चरकोऽजनि चर्मटकः संजातः। युवराजः श्रीयशोमतिकुमारः सापराधसवित्रीमृतिदुःखितः सदोषमातृमरणदुःखितः सन् शोकातङ्के च पतिष्यति पश्चात्तापरोगे पतिष्यतीति। परं च अपरं च बह्वपराधे बहुदोषे देहिनि प्राणिनि मरणं कृतं सत् अनुग्रह इव उपकार इव भवति। कथंभूतं मरणम्। क्षणमात्रव्यथाशरणम् अल्पकालदुःखग्रहम्। कथम्। हि निश्चयेन।

असंभाषणमासन्नस्य, उपेक्षणं विज्ञपयतः, अवधीरणमसमैः परिभूयमानस्य, आशाभङ्गकरणमर्थयतः,प्रीतिवितरणं तदनभिमतानाम्,अस्मरणं प्रियगोष्ठीषु, अनवेक्षणं तत्परिजनस्य, अपवार्य व्याहरणं स्वप्रकाशेष्वप्यालापेषु,अनवसरानुसरणमसङ्गभावेष्वपि प्रस्तावेषु क्रियेत,स्यात्प्रत्यानीतश्चिरमस्थाने कृतसमयः प्रणयः। साधितं चाभिमतम्। इदमेव च निश्चित्याविदितवृत्तान्तस्येव [[1]तच्छयनतलमुपगम्य पुरावस्थितवतः प्रलयकालकलितप्रसरस्य मकराकरस्येव] निर्मर्यादमन्तर्विकल्पकल्लोलदोलायमानमानसस्य, सा निवर्त्यात्मनो दुर्वि-

यदि पुनः उपस्थितस्य आगतस्य पुरुषस्य अनवेक्षणमनवलोकनं क्रियेत तर्हि अस्थाने अयोग्यस्थाने कृतसमयः प्रणयः कृतावसरः स्नेहश्चिरं दीर्घकालं प्रत्यानीतो निराकृतः स्यात् । यदि पुनः आसन्नस्य जीवस्य असंभाषणं अवक्तव्यं क्रियेत तदा अस्थाने कृतसमयः विहितावसरः प्रणयः चिरं दीर्घकालं प्रत्यानीतो निराकृतः स्यात् । यदि पुनः विज्ञपयतो विज्ञापनं कुर्वतः पुरुषस्य उपेक्षणं निरादरः क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मारितेन क्षणमात्रमेव दुःखं स्यात् । तथा असमैः परिभूयमानस्य पुरुषस्य यदि अवधीरणं निरादरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् । तथा अर्थयतो याचमानस्य पुरुषस्य यद्याशाभङ्गकरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मारणे तु क्षणमात्रदुःखं स्यात् । तथा तदनभिमतानां द्वेषिणां पुरुषाणां यदि प्रीतिवितरणं क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् मरणे कथम् । तथा प्रियगोष्ठीषु अस्मरणं ........................ । तथा तत्परिजनस्य तत्परिवारस्य अनवेक्षणं अवीक्षणं यदि क्रियेत तदा...................................................... । तथा स्वप्रकाशेष्वपि आलापेषु निजायत्तेष्वपि आभाषणेषु यदि पुनरपवार्य व्याहरणं आकार्य प्रस्थापनं क्रियेत इदानीमवसरो नास्ति इति च क्रियेत तदा अस्थाने कृतसमयः प्रणयश्चिरं प्रत्यानीतः स्यात् । तथा असङ्गभावेष्वपि अनवसरानुसरणं .................................. ........................ । साधितं च अभिमतं निर्धारितं च कार्यम् । इदमेव च निश्चित्य तया सह संभाषणं न करिष्यामि इति निश्चयं कृत्वा अविदितवृत्तान्तस्येव अविज्ञातदुर्विलसितस्येव तच्छयनतलं महादेवीशय्यां उपगम्य आगत्य पुरावत् स्थितवतो मम भुजपञ्जरं अविनीतैरुपसृत्य आश्रित्य च अविदितसाहसेव अविज्ञातदुर्विलसितेव अङ्गनिक्षेपमात्रेणैव शय्यायां शरीरनिक्षेपमात्रेणैव अतिसान्द्रमतिबहुलं सा अमृतमतिमहादेवी न्यद्रासीत् सुष्वाप । कथंभूतस्य मम । निर्मर्यादं अपर्यन्तं अन्तर्विकल्पकल्लोलैरन्तर्मनसि ये विकल्पाश्चित्ताभोगाश्चित्तोन्नतयस्त एव कल्लोला महातरङ्गाः तैर्दोलायमानं कम्पमानं मानसं

1. एतत्कोष्ठान्तर्गतपाठः सटीकपुस्तके त्रुटितः.



लसितमतित्वरितगतिजनितं वातमन्तरेव जरयन्ती निरुन्धाना चोत्कम्पोत्तालितवारबाणं हृदयतरङ्गिमाणमविनीतैरुपसृत्याश्रित्य च मम भुजपञ्जरं कुजनिकुञ्जमिव व्याली, पर्जन्योत्सङ्गमिव सौदामिनी, कुल्कीलकन्दरमिव भुजङ्गी, जगदन्तरालमिव कालदूती, जलधिमध्यमिव मकरी, वनगहनमिव निशाचरी, निजाङ्गस्पर्शबीभत्सयेव मदीयां तनुमशेषतः कण्टकयन्ती, बहुकालमात्मदुष्कर्मणः परिणतारम्भत्वादविदितसाहसेवाङ्गनिक्षेपमात्रेणैवातिसान्द्रं न्यद्रासीत् ॥

न खलु विवृतेङ्गिताकारस्य पुंसः काचिदपि भवति कार्यसिद्धिरिति जानतो-

चित्तं यस्य सः अन्तर्विकल्पकल्लोलदोलायमानमानसस्तस्य । मम कस्येव । मकराकरस्येव समुद्रस्येव । कथंभूतस्य मकराकरस्य । प्रलयकालकलितप्रसरस्य । कथम् । अमर्यादं यथा भवत्येवम् । सा किं कुर्वती न्यद्रासीत् । हृदयतरङ्गिमाणं हृदयकम्पनं निरुन्धाना रोधयन्ती । कथंभूतं हृदयतरङ्गिमाणम् । उत्कम्पोत्तालितवारबाणं उत्कम्पेन ऊर्ध्वश्वासेन उत्तालितं उन्नलावनतीकृतं वारबाणं कञ्चुकं येन हृदयतरङ्गिम्ना(म्णा) स तथा तम् । मम भुजपञ्जरं किमिवाश्रित्य न्यद्रासीत् । कुञ्जनिकुञ्जमिव व्याली । यथा व्याली दुष्टहस्तिनी कुञ्जनिकुञ्जं लतादिपिहितोदरं स्थानं आश्रित्य निद्रातीति सर्वत्र ग्राह्यम् । पुनः किमिव । पर्जन्योत्सङ्गमिव सौदामिनी । यथा सौदामिनी विद्युत् पर्जन्योत्सङ्गं मेघप्रदेशं आश्रित्य निद्राति । पुनः किमिव । कुल्कीलकन्दरमिव भुजङ्गी । यथा भुजङ्गी सर्पिणी कुल्कीलकन्दरं पर्वतगुहामाश्रित्य निद्राति । पुनः किमिव । जगदन्तरालमिव कालदूती । यथा कालदूती यमशम्फली जगदन्तरालं त्रैलोक्यमध्यमाश्रित्य निद्राति । पुनः किमिव । जलधिमध्यमिव मकरी । यथा मकरी नक्री जलधिमध्यमाश्रित्य निद्राति । पुनः किमिव । वनगहनमिव निशाचरी । यथा निशाचरी राक्षसी वनगहनमरण्यमध्यमाश्रित्य निद्राति । किं कुर्वती न्यद्रासीत् । मदीयां तनुं मम शरीरं अशेषतः सर्वमेव कण्टकयन्ती कण्टकितं रोमाञ्चितं कुर्वती । कथम् । उत्प्रेक्षते—निजाङ्गस्पर्शबीभत्सया इव निजाङ्गस्पर्शे मम शरीरसंस्पर्शे बीभत्सया विचिकित्सया इव । कथंभूता सती न्यद्रासीत् । अविदितसाहसेव अविज्ञातदुराचारेव । तदपि कस्मात् । बहुकालं दीर्घकालं आत्मदुष्कर्मणो निजपापस्य परिणतारम्भत्वात् जीर्णतामापातदुराचारत्वात् ॥

हे राजन्, सा तावन्मम भुजपञ्जरे सुप्ता मे मम मनश्चित्तं मनागपि न प्रसीदति न प्रसन्नं भवति । किं कुर्वतो मे । इतीदृशं जानतोऽपि । इतीति किम् । विवृतेङ्गिताकारस्य इङ्गितं च आकारश्च इङ्गिताकारौ विवृतौ उद्घाटितौ इङ्गिताकारौ यस्य पुंसः तथा तस्य असंवृतेङ्गितस्य असंवृताकारस्य च पुंसः पुरुषस्य काचिदपि खलु निश्चयेन कार्यसिद्धिर्न भवति । किं तु संवृतेङ्गिताकारस्य कार्यसिद्धिर्भवति इत्यर्थः । इती-

ऽपि न मे मनागपि प्रसीदति मनः। पिशाचच्छलितस्येव शून्यहृदयता, महा-
शोकतप्तस्येव दीर्घतरमुच्छ्वसितम्, अग्निपतितस्येव परिवर्तनबहुलता, ज्वरित-
स्येवातीवमुखशोषः, कौसीद्योपहतस्येव मुहुर्मुहुर्विजृम्भणम्, उन्मत्तस्येव य-
त्किंचित्प्रलपनम्, निषादानुगताङ्गी कुरङ्गीव च न क्वचिदेव पदमाबध्नाति
बुद्धिः, मनोऽपि घनदिनमिव बाढमन्धकारयत्याशाम्, आत्मनः क्षणमात्रमु-
द्योतमानमिव प्रतिभासते, भवति च पुनर्बाष्पजलप्रवाहदुर्दिनम्। अहो महदा-
श्चर्यम्। इयं हि पुरा स्वैरविहारेष्वपि रममाणा भग्नचरणेव नैकाकिनी पदमे-
कमपि ददाति, जलक्रीडासु बालमृणालस्पर्शेनापि संदिग्धजीवितेव मूर्छति,
कुसुमावचयेष्वशोकदलकल्पितास्वपि शय्यासु शर्करिलदेशपतितेव न सु-

---

दृशं जानतोऽपि मनो न प्रसीदति। तदा तस्य पुरुषस्य इङ्गिताकाराभ्यां मनसि दुःखं जायते
त्रिवक्षैरिति(?)शेषः। तथा मे मम शून्यहृदयता अचैतन्यहृदयत्वम्। कस्येव। पिशाचच्छलित-
स्येव ग्रहगृहीतस्येव। तथा मे दीर्घतरमायतं उच्छ्वसितमुच्छ्वासः। कस्येव। महाशोकतप्त-
स्येव। यथा महाशोकतप्तस्य पुरुषस्य उच्छ्वसितं दीर्घतरं भवति। तथा तेन प्रकारेण मे मम
परिवर्तनबहुलता वामदक्षिणपार्श्वपत्यद्द(यँट)नप्राचुर्यम्। कस्येव। अग्निपतितस्येव। यथा अग्नि-
पतितः पुमान् बहुपरिवर्तनं करोति। तथा मे अतीवातिशयेन मुखशोषः। कस्येव। ज्वरित-
स्येव। यथा ज्वरितः पुमान् मुखशोषवान् भवति। तथा मे मुहुर्मुहुर्विजृम्भणं वारंवारं
जृम्भाकरणम्। कस्येव। कौसीद्योपहतस्येव आलस्योपहतस्येव। तथा मे यत्किंचित्प्रलपनं
यद्वा तद्वा अनर्थकवचनम्। कस्येव। उन्मत्तस्येव पीतमद्यस्येव। तथा मे बुद्धिर्मतिः क्वचिदेव
क्वाप्येव पदं स्थानं नाबध्नाति न रचयति। केव। कुरङ्गीव। कथंभूता कुरङ्गी। यथा कुरङ्गी निषा-
दानुगताङ्गी पृष्ठलग्नव्याधशरीरा क्वचिदपि पदं नाबध्नाति। तथा मे मम मनोऽपि बाढमति-
शयेन आशां धनभोगाद्यभिलाषं अन्धकारयति। किमिव। घनदिनमिव। यथा वर्षादिनं आशां
दिशं बाढमतिशयेन अन्धकारयति अन्धकारसहितां करोति। तथा मे मन आत्मनः स्वस्य
क्षणमात्रं मुहूर्तमपि प्रतिभासते। किमिव। उद्योतमानमिव उद्योतं कुर्वदिव। तथा मे मनः
पुनर्बाष्पजलप्रवाहदुर्दिनं भवति अश्रुजलपूर्णं छन्नं संजायते। अहो राजन्। इति ईदृशं पर्या-
लोच्य सम्यग्विचार्य अखिलजनावसरसभामण्डपं अखिलजनावसरनामधेयं सभाजनाश्रयमु-
पागतोऽस्मि संप्राप्तः। इति पर्यालोच्य। इतीति किम्। अहो महदाश्चर्यम् अहो गुरुतरमाश्चर्यमि-
दम्। इयं अमृतमतिर्महादेवी हि निश्चयेन पुरा पूर्वं स्वैरविहारेषु अपि वनक्रीडादिषु रम-
माणा सती भग्नचरणेव भग्नपादेव एकाकिनी एकमपि पदं एकपदन्यासस्थानमपि न ददा-
ति। इयं महादेवी जलक्रीडासु बालमृणालस्पर्शेनापि कोमलपद्मिनीकन्दस्पर्शेनापि संदिग्ध-
जीवितेव मूर्छति मृतेव मूर्छां प्राप्नोति। इयं कुसुमावचयेषु चुण्टनेषु अशोकदलकल्पिता-
स्वपि अशोकदलविरचितास्वपि शय्यासु शयनीयेषु शर्करिलदेशपतितेव कर्करसहितप्रदे-



खायते, मणिकुट्टिमेष्वपि संचरन्ती कण्टकोत्कटक्रमेव स्खलति, केलिकल-
हेष्वपि विमुच्यमाना कृतपिशाचोपद्रवेव विलपति, कथं चेदानीं तु स-
कुटीच्छुटिता घोटिकेव भृशायमानगमना तथाविधप्रहारसंपातेऽप्यन्यैव
काचिद्धृतेव तिष्ठति, तृणसंस्तरेऽपि निवसन्ती न मनागपि दुःखायते, परुष-
मार्गप्रचारेष्वपि कक्षान्तरेषु प्रविष्टमाना रथारूढेव प्रयाति, वीरचर्यातिव-
र्तिन्यामप्यस्यां वेलायामवगणा न बिभेति। कथं तु नाम महिलानां स्वप्नेऽपि
सरलभावः संभाव्यते, यासामन्तरनवाप्तावगाह इव मनः कुटिलतासरित्प्रवाहः
कुन्तलच्छलेन ललाटतटेषु, भ्रूछद्मना श्रवणान्तरालेषु, विलोकनव्याजेन
लोचनकुहरेषु, आलापमिषेण वदनकन्दरेषु, गतिविभ्रमेण चरणवर्त्मसु, बहिर्द-
र्शनपथमगात्। अत एव प्रावृषि वाहिनीनामिव सीमन्तिनीनां प्रायेण भवन्ति

---

शपतितेव न सुखायते न सुखं मन्यते। इयं मणिकुट्टिमेष्वपि रत्नबद्धभूमिष्वपि संचरन्ती ग-
च्छन्ती कण्टकोत्कटक्रमेव कण्टकविद्धपादेव स्खलति चलति। केलिकलहेष्वपि विमुच्यमाना
अवगणिता सती कृतपिशाचोपद्रवेव विलपति ग्रहगृहीतेव विलापान् करोति। कथं चे-
दानीं तु पुनः सकुटीच्छुटिता घोटिकेव भृशायमानगमना सकुटीच्छुटिता घोटकशालाया-
स्त्रुटितबन्धना घोटिकेव भृशायमानगमना अतिवेगवद्गमना कथं संजाता तथाविधप्रहार-
संपातेऽप्यन्यैव काचिद्धृतेव तिष्ठति तथाविधप्रहाराणां दक्षिणकरताडनानां संपातेऽपि
संपतनेऽपि अन्यैव अपरैव काचिद्धृतेव तिष्ठति। तृणसंस्तरेऽपि खटप्रस्तरणेऽपि निव-
सन्ती मनागपि न दुःखायते न दुःखिनी भवति। परुषमार्गप्रचारेष्वपि कठिनमार्गगमनेऽपि
कक्षान्तरेषु बृहत्प्रकोष्ठेषु प्रविष्टमाना गच्छन्ती रथारूढेव प्रयाति। वीरचर्यातिवर्तिन्यां वीरपु-
रुषैः अगम्यायां अप्यस्यां वेलायां परिणतायां रात्रौ अवगणा एकाकिनी न बिभेति न शङ्कते।
कथं केन प्रकारेण। तु इति वितर्के। नामेति संभावनायाम्। महिलानां स्वप्नेऽपि। आस्तां
तावज्जाग्रदवस्थायाम् निद्रायामपि। सरलभावो अकुटिलत्वं संभाव्यते संभवतीति कथं केन
प्रकारेण विचार्यते। अपि न संभाव्यत इत्यर्थः। यासां महिलानां कुटिलतासरित्प्रवाहः
वक्रतानदीपूरः अन्तर्मनसि अनवाप्तावगाह इवासंमात इव। बहिर्बाह्ये दर्शनपथमवलोकमार्गं
अगात्। केषु केषु दर्शनपथमगात्। कुन्तलच्छलेन ललटतटेषु बहिर्दर्शनपथमगात्।
भ्रूछद्मना श्रवणान्तरालेषु कर्णमध्यप्रदेशेषु बहिर्दर्शनपथमगात्। विलोकनव्याजेन लोच-
नकुहरेषु नेत्रच्छिद्रेषु बहिर्दर्शनपथमगात्। आलापमिषेण वदनकन्दरेषु बहिर्दर्शनपथम-
गात्। गतिविभ्रमेण गमनव्याजेन चरणवर्त्मसु पादमार्गेषु बहिर्दर्शनपथमगात्। अत
एव कारणात् प्रावृषि वर्षाकाले वाहिनीनामिव नदीनामिव सीमन्तिनीनां प्रवृत्तयः प्रायेण

मलीमसाः प्रवृत्तयः । तथा हि—नावेक्षितो ममात्मनश्च कुलस्य परिवादः, न गणितो मे मनागप्यात्मन्यसाधारणः प्रणयः, नावलोकितानि प्रणयकलहेष्वपि मया विहितपरमार्थागसेन कृतान्यनुनयप्रसादनानि, न स्मृतमनुभूतपूर्वमिवाजन्मसंवर्धितं सहावसथसख्यम्, न चिन्तिता सकलजनमान्या स्वस्य पदवी, कथमिव न स्थिता मत्तः परिभवाशङ्का, कथमिव न लज्जितं सपत्नीजनस्य, कथमिव न बीभत्सितमयशःपटहस्य, कथमिव च नावधारितमनन्यजनसुलभविलासानां संपादनम् । यद्यपि च 'स्त्रियः खलेषु रज्यन्ते दासहस्तिपकादिषु' इति 'अपात्रे रमते नारी' इति वचनमस्ति, तथापि वयोभोगश्चारुवेषिता कलासु विश्रुतत्वं वा पुरुषाणां संगमयन्त्यसंस्तुता अपि वनिताः । न चास्यैतेष्वन्यतमोऽपि गुणः । तत्किं नु खल्वस्याः

---

मलीमसा मलदूषिता भवन्ति संजायन्ते । तथा हि तदेव निरूपयति—नावेक्षितो न विलोकितो मम यशोधरस्य आत्मनश्च स्वस्य महादेव्याः कुलस्य परिवादो निन्दा । न गणितो न विचारितो मे मम मनागपि स्तोकोऽपि आत्मनि महादेव्यां असाधारणः प्रणयः असमानः स्नेहः । नावलोकितानि न दृष्टानि प्रणयकलहेष्वपि स्नेहकोपेष्वपि मया कृतानि अनुष्ठितानि अनुनयप्रसादनानि मानापनयनप्रसन्नीकरणानि । कथंभूतेन मया । विहितपरमार्थागसेन कृतसत्यार्थापराधेन । न स्मृतं न चिन्तितम् । किं न चिन्तितम् । आजन्मसंवर्धितं जन्मपर्यन्तं वृद्धिं नीतं सहावसथसख्यं सहवासमैत्र्यम् । कथंभूतं सहावसथसख्यम् । अनुभूतपूर्वमिव पूर्वमनास्वादितमिव । न चिन्तिता न विचारिता सकलजनमान्या सर्वलोकपूज्या स्वस्य पदवी महादेवीत्वपदम् । मत्तः मत्सकाशात् परिभवाशङ्का पराभवभीतिः कथमिव कथं मनसि न स्थिता । सपत्नीजनस्य अध्यूढास्त्रीलोकस्य अविचितास्त्रीजनस्य कथमिव कथं न लज्जितं कथं न व्रीडितम् । अयशःपटहस्य अपकीर्तिध्वनेः कथमिव न बीभत्सितं कथं न जुगुप्सितम् । कथमिव कथं च नावधारितं न स्मृतं अनन्यजनसुलभविलासानां अपरलोकदुर्लभभोगानां संपादनमुत्पादनम् । यद्यपि यदि च स्त्रियः खलेषु दासहस्तिपकादिषु कर्मकर्मठादिषु रज्यन्ते रागं गच्छन्तीति यस्मात् 'अपात्रे रमते नारी' इति वचनमस्ति यस्मात्, तथापि तदपि वयोभोगो यौवनभोगः कर्पूरकस्तूरीचन्दनादिकः, चारुवेषिता रुचिरवस्त्राभरणादिकम्, कलासु ललितविपवित्तादिषु विश्रुतत्वं प्रसिद्धिता वा पुरुषाणां संगमयन्ति संगमं कारयन्ति । काः कर्मतापन्नाः संगमयन्ति मेलयन्ति । असंस्तुता अपि वनिता अपरिचिता अपि स्त्रीः संगमयन्ति इति । न चैवं अस्य कुब्जकस्य एतेषु गुणेषु वयोभोगचारुवेषिताकलाविश्रुतत्वादिषु अन्यतमोऽपि गुणो न वर्तते । तत्तर्हि किमर्थं नु इति वितर्कयाम्यहम् । खल्विति वाक्यालंकारे । अस्या अमृतमतिमहादेव्याः



कच्चरलोचनाब्जेऽस्मिन्कुब्जे प्रीतिकारणम् । आः, अज्ञासिषमज्ञाशिषम् । एष हि किल निसर्गकलकण्ठतया शुष्कानपि तरूनपल्लवयतीत्यनेकशः कथितं कुमारेण । गृणन्ति च कलासु गीतस्यैव परं महिमानमुपाध्यायाः । सुप्रयुक्तं हि गीतं स्वभावदुर्भगमपि नरं करोति युवतीनां नयनमनोविश्रामस्थानम् । भवति कुरूपोऽपि गायनः कामदेवादपि कामिनीनां प्रियदर्शनः । गानेन हि दुर्दशा अपि योषितः पाशेनाकृष्टा इव सुतरां संगच्छन्ते । कुशलैः कृतप्रयोगं हि गेयमपनीय मानग्रहमपरमेव कंचिदनन्यजनसाध्यमाधिमुत्पादयति मनस्विनीनाम् । अत एवोशन्ति नीतिवेदिनः—तैरश्चोऽपि पुंयोगः स्त्रियो दूषयति, किं पुनर्न मानुषः । न चैतासामकालताडितामिव प्रवृत्ताव-

---

कच्चरलोचनाब्जे कुत्सितनेत्रकमले अस्मिन् प्रत्यक्षीभूते कुब्जे भग्नपुष्टिके प्रीतिकारणं प्रेमहेतुः किं वर्तते । आः संतापे प्रकोपे वा । अज्ञासिषमज्ञासिषं ज्ञातवान् ज्ञातवानहं प्रीतिकारणम् । एष प्रत्यक्षीभूतः कुब्जः । हि यस्मात् कारणात् । किलेति लोकोक्तौ । निसर्गकलकण्ठतया स्वभावेन मधुरस्वरतया शुष्कानपि तरून् उद्धवशुष्कानपि वृक्षान् पल्लवयति उल्लासयति नीरसानपि लोकान् रञ्जयतीति अनेकशः अनेकवारान् कुमारेण यशोमतिना कथितं प्रतिपादितम् । गृणन्ति च कथयन्ति च कलासु द्वासप्ततिसंख्यासु मध्ये गीतस्यैव गानकलायाः परमुत्कृष्टं महिमानं उपाध्यायाः अध्यापकाः । सुप्रयुक्तं हि गीतं शोभनप्रयोगमानीतं हि निश्चयेन स्वभावदुर्भगमपि नरं निसर्गेण प्रीतिजनकमपि पुरुषं युवतीनां नयनमनोविश्रामस्थानं नेत्रहृदयसुखोत्पादकं स्थानं करोति विदधाति । कुरूपोऽपि गायनो गायकः कामिनीनां कामदेवादपि कन्दर्पावतारादपि प्रियदर्शनो भवति । गानेन गीतेन हि निश्चयेन दुर्दशा अपि योषितः दुर्लभदर्शना अपि स्त्रियः पाशेनाकृष्टा इव सुतरामतिशयेन संगच्छन्ते संगता भवन्ति । कुशलैः संगीतशास्त्रनिपुणैः कृतप्रयोगं सुप्रयोगितं हि निश्चयेन गेयं गीतं कर्तृभूतं मनस्विनीनां मानवतीस्त्रीणां मानग्रहमभिमानपिशाचमपनीय दूरीकृत्य अपरमेव अन्यमेव कंचित् अपूर्वं आधिं मानसीपीडामुत्पादयति संजायते । कथंभूतं आधिम् । अनन्यजनसाध्यम् । गीतं विना ईदृग्विधं आधिं कोऽपि नोत्पादयतीति भावः । अत एव कारणात् उशन्ति कथयन्ति । 'वश कान्तौ' इति धातोः प्रयोगात् । के उशन्ति । नीतिवेदिनः न्यायशास्त्रज्ञायकाः । किमुशन्ति । तैरश्चोऽपि पशुसंबन्ध्यपि पुंयोगः पुरुषमेलापकः स्त्रियो दूषयति स्त्रीणां दोषमुत्पादयति । किं पुनर्न मानुषः मनुष्यसंबन्धी पुंयोगः किं पुनर्न दूषयति । दूषयत्येव । न च नैव एतासां स्त्रीणां अकालताडितामिव प्रवृत्तौ संभोगकरणे अपेक्षा शुचित्वादिवाञ्छा अस्ति । अपि तु नास्ति । प्रत्युत

पेक्षास्ति। प्रत्युत केतक्य इवाशुचिष्वेव वस्तुषु प्रायेण बध्नन्ति प्रीतिम्। उदाहरन्ति च—

'नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते॥' इति।

आः पाण्डुरपृष्ठे, त्वदालम्बनैकजीविते हि मयि दुष्कर्मैवमाचरन्ती कथं द्विधा न विदीर्णासि। अहो पर्याप्तं विषयसुखतर्षेण। तदिदानीं किमिमाः परित्यज्य परमाज्ञाफलोपचर्यमैश्वर्यमनुभवामि। तन्न। विना हि विलासिनीजनेनारण्यमिवेदं राज्यम्, मृतकमण्डनमिवाभरणम्, पङ्कोपदेह इव विलेपनम्, सुप्तसंवाहनमिव शरीरसंस्कारः, प्रकरणमिव चामरातपत्राडम्बरः, कालहरणोपाय इव कलानामभ्यासः, तुण्डकण्डूविनयनमिव काव्याध्ययनम्,

---

विशेषेण केतक्य इव तृणराजजातय इव अशुचिष्वेव अमेध्येष्वेव वस्तुषु प्रायेण बहुलतया प्रीतिं बध्नन्ति। केतकीमूलेषु किल विष्ठा यदा भवति तदा केतक्य उल्लसन्ति। उदाहरन्ति च विद्वांसः। किमुदाहरन्तीति चेत्। अस्यायमर्थः—एताः स्त्रियो रूपं सुन्दरत्वं न प्रतीक्षन्ते प्रतिपालयन्ति। आसां स्त्रीणां वयसि यौवने संस्थितिः संस्था न वर्तते। विरूपं रूपहीनं रूपवन्तं वा सुन्दररूपं पुरुषं भुञ्जन्ते अनुभवन्ति। कथम्। इति एतस्मात् कारणात्। इतीति किम्। पुमान् पुरुषलिङ्गवान्। अयं पुमान् वर्तते इति मत्वा भुञ्जत इत्यर्थः। आः कोपे प्रपीडायां वा। हे पाण्डुरपृष्ठे कुलटे हे निर्भागिनि वा, त्वदालम्बनैकजीविते त्वमालम्बमाधार एकमद्वितीयं जीवितं प्राणितं यस्य मम सोऽहं त्वदालम्बनैकजीवितस्तस्मिन् मयि विषये हि निश्चयेन एवममुना प्रकारेण दुष्कर्म पापमाचरन्ती त्वं कथं केन प्रकारेण द्विधा द्विप्रकारेण न विदीर्णासि न द्विखण्डं जातासि। अहो आश्चर्यम्। पर्याप्तं परिपूर्णं विषयसुखतर्षेण विषयेषु तृष्णया। तत्तस्मात् कारणात् इदानीमधुनैव किं इमाः परित्यज्य स्त्रियः परिहृत्य परमुत्कृष्टं ऐश्वर्यं नापत्यं अनुभवामि भुञ्जेऽहम्। कथंभूतमैश्वर्यम्। आज्ञाफलोपचर्यं आज्ञा विशिष्टिः सैव फलं लाभस्तेन उपचर्यं पूज्यम्। तन्न तदपि साधु न भवति। हि यस्मात् स्त्रीर्मुक्त्वा ऐश्वर्यं भुज्यते चेत् विलासिनीजनेन विना स्त्रीजनेन विना इदं राज्यं अरण्यमिव अटवीव वर्तते। स्त्रीजनेन विना आभरणं सुवर्णपरम्परा मृतकमण्डनमिव वर्तते। स्त्रीजनेन विना विलेपनं कर्पूरकस्तूरीचन्दनादीनि पङ्कोपदेह इव कर्दमविलेपनमिव वर्तते। स्त्रीजनेन विना शरीरसंस्कारो देहमण्डनं सुप्तसंवाहनमिव सुप्तस्य निद्रितस्य पादमर्दनमिव वर्तते। स्त्रीजनेन विना चामरातपत्राडम्बरः प्रकीर्णकाणामाडम्बरः छत्राणामाटोपः प्रकरणमिव वर्तते क्षेत्रपालादीनां वर्धापनमिव वर्तते। स्त्रीजनेन विना कलानामभ्यासः लिखितपठनाद्यनुशीलनं कालहरणोपाय इव वर्तते वेलानिर्गमनमिव वर्तते। स्त्रीजनेन विना काव्याध्ययनं तुण्डकण्डूविनयनमिव ..........



ग्रहाभिनिवेश इव मन्त्रचिन्तनम्, कारागारप्रवेशनमिव सभाप्रदानम्, वृथाजीवितपूत्कार इव गेयसमाचारः, संसारसुखोत्सारणपटहनाद इव दुन्दुभीनां ह्रादः, शैलकन्दरावकाशा इव भवनविनिवेशाः, पितृवनानीवोद्यानानि, जठरभृतिवेतनमिव प्रजापालनम्, नगरनापितकर्मैव प्रकृतीनामनुनयकरणम्, शुष्कनदीतरणमिव षाड्गुण्यप्रयोगः, अन्धकारनर्तनमिव धनसंग्रहप्रयासः, पुराकृतकर्मानुभवनार्थमिव च देहपोषणम्। अहो, किमिदं विधातुरेकत्र विरुद्धगुणनिर्माणे परमं नैपुणम्। यत्किंपाकफलमिवापातमधुरः परिणामविरसश्च स एव भवति भावः, समुद्रकल्लोलानामिव यदेव जन्तूनामुत्पत्तिस्थानं तदेव भवति विलयस्य च, माहेन्द्रविज्ञान इव यत्रैवेदं मनो बाढमुत्कण्ठते तत्रैव भवति मुहुः शिथिलादरं च, पथिकसंगतमिव य-

---

.......... वर्तते। मन्त्रचिन्तनं पञ्चाङ्गमन्त्रविचारणं ग्रहाभिनिवेश इव पात्रधूननमिव वर्तते। सभाप्रदानं सभामण्डनं कारागारप्रवेशनमिव वर्तते। गेयसमाचारः गीतसमीचीनाचारः वृथाजीवितपूत्कार इव 'अहो लोकाः, जीवितं वृथा' इति पूत्कार इव वर्तते। दुन्दुभीनां ह्रादः पटहानां शब्दः संसारसुखं .......................... कोऽपि मा भुक्ता इति डङ्गरकल्याण(स्त्यान) इव वर्तते। भवनविनिवेशा नन्द्यावर्तस्वस्तिकादिगृहाणां विनिवेशाः संस्थानानि शैलकन्दरावकाशा इव .................. वर्तन्ते। उद्यानानि प्रमदवनादीनि पितृवनानि इव श्मशानानीव वर्तन्ते। प्रजापालनं लोकरक्षणं जठरभृतिवेतनमिव उदरपूरणमूल्यमिव वर्तते। प्रकृतीनामनुनयकरणं ग्रामीणानामानयनं नगरनापितकर्मैव यथा नगरनापितः सर्वेषां कर्म करोति तथा वर्तते। षाड्गुण्यप्रयोगः संधिविग्रहयानासनसंश्रयद्वैधीभावप्रयोजनं स्त्रीं विना शुष्कनदीतरणमिव निमज्जनमिव वर्तते। धनसंग्रहप्रयासः द्रव्यमेलनदुःखं अन्धकारनर्तनमिव अन्धतमसनर्तनमिव वर्तते। देहपोषणं शरीरपुष्टिकरणं पुराकृतकर्मानुभवनार्थमिव पूर्वपापकर्मभोगार्थमिव वर्तते। अहो आश्चर्यम्। विधातुर्ब्रह्मणः एकत्र विरुद्धगुणनिर्माणे इदं परमं उत्कृष्टं नैपुणं निपुणत्वं किं वर्तते। को भावः। यदीदृशी विहिता स्त्री तर्हि किमिति गुणहीना कृता। यतो यस्मात् कारणात् किंपाकफलमिव आपातमधुरः पूर्वारम्भे सुस्वादः परिणामविरसश्च स एव भावोऽर्थो भवति इति विरुद्धगुणनिर्माणम्। समुद्रकल्लोलानामिव जन्तूनां यदेवोत्पत्तिस्थानं तदेव विलयस्य विनाशस्य चोत्पत्तिस्थानं भवति। माहेन्द्रविज्ञाने इव पूर्वं इन्द्रजाले इव यत्रैव यस्मिन् स्थाने इदमेव मनो बाढं दृढमुत्कण्ठते हेवाकं करोति वाञ्छापरं भवति तत्रैव तस्मिन्नेव स्थाने कलत्रादौ मुहुर्वारंवारं च शिथिलादरं उदासीनं च मनो भवति। पथिकसंगतमिव अध्वगमे-

देवानन्दजननं तदेव भवति हेतुर्महतः परितापस्य च, हरिद्रारागहृदयात्स्वामिन इव यत एव सर्वकर्मणामारम्भस्तत एव भवत्युपरमश्च। संप्रति हि मे विघटिततमःपटलावकाशमिव सप्रकाशं मानसम्, उल्लिखिततिमिरदोषमिव यथार्थदर्शनमनीषं चक्षुः। कौतस्कुतोऽयमन्यथा ममाद्य सुविवेकनिश्चयपरश्चित्तप्रसरः। तथा हि—युवजनमृगाणां बन्धायानाय इव वनितासु कुन्तलकलापः, पुनर्भवमहीरुहारोहणोपाय इव भ्रूलतोल्लासः, संसारसागरपरिभ्रमाय नौयुग्ममिव लोचनयुगलम्, दुःखाटवीविनियातिकरमिव वाचि माधुर्यम्, मृत्युगजप्रलोभनकवल इवायमधरपल्लवः, स्पर्शविषकन्दोद्भेद इव पयोधरविनिवेशः, यमपाशवेष्टनमिव भुजलतालिङ्गनम्,

---

लापक इव यदेव स्थानं वस्तु वा आनन्दजननं भवति तदेव स्थानं तदेव वस्तु वा मनो महतः परितापस्य च हेतुः कारणं भवति। हरिद्रारागहृदयात् अस्थिररञ्जितात् स्वामिनो नरेन्द्र इव यत एव सर्वकर्मणां आरम्भः सर्वनियोगानामुत्पत्तिर्भवति तत एव एतस्मादेव उपरमश्च विनाशश्च भवति। संप्रतीदानीम्। हीति निश्चयेन। मे मम मानसं विघटिततमःपटलावकाशं दूरीकृताज्ञानसमूहप्रवेशमिव सप्रकाशं सोद्योतं मानसं वर्तते। संप्रति मे चक्षुर्ज्ञानलोचनं यथार्थदर्शनमनीषं सत्यार्थावलोकनबुद्धिकं वर्तते। किमिव। उल्लिखिततिमिरदोषमिव आन्ध्यपटलादिदोषो यस्य चक्षुषः तत्तथोक्तमिव। यद्येवं न भवति, अन्यथा भवति, तर्हि अयं प्रत्यक्षीभूतो मम मे अद्य इदानीं सुविवेकनिश्चयपरः विशिष्टविवेकनिर्णयपरः चित्तप्रसरो मनोव्यापारः कौतस्कुतः कुतः कुतो भवः कौतस्कुतः। तथा हि। तदेव अज्ञाननिराकरणमेव वर्णयति—वनितासु जनितात्यर्थरागासु स्त्रीषु कुन्तलकलापः केशभारो युवजनमृगाणां तृणलोकहरिणानां बन्धाय आनायो जालमिव वर्तते। वनितासु भ्रूलतोल्लासः भ्रूवल्लीविभ्रमः पुनर्भवमहीरुहारोहणोपाय इव पुनर्भवः संसारः स एव महीरुहो वृक्षस्तस्यारोहणे चटने उपाय इव वर्तते। वनितासु लोचनयुगलं संसारसागरपरिभ्रमाय संसारसमुद्रपर्यटनाय नौयुग्ममिव प्रवहणद्वयबन्धनमिव वर्तते। वनितासु वाचि माधुर्यं वचने मृष्टत्वं दुःखाटवीविनियातिकरमिव दुःखमेव अटवी उद्यानं तस्या विनियातिकरमिव वर्तते। यातनकारकमिव किंपाकफलवदिति भावः। वनितासु अयमेषोऽधरपल्लवो बिम्बोष्ठप्रवालः मृत्युगजप्रलोभनकवल इव मृत्युगजो हस्ती तस्य प्रलोभने स्वीकरणे कवल इव ग्रास इव वर्तते। वनितासु पयोधरविनिवेशः स्पर्शविषकन्दोद्भेद इव स्पर्शेन छुपनेन विषं यस्मात् स स्पर्शविषः स चासौ कन्दो वर्तुलं मूलं तस्योद्भेद इव प्रादुर्भावो वर्तते। वनितासु भुजलतालिङ्गनं बाहुवल्ल्याश्लेषणं यमपाशवेष्टनमिव कृतान्तस्य पाशेन निजशरीरे वेष्टनमिव वर्तते। वनितासु वलीनां त्रयं उदररेखात्रयमुत्पत्तिजरामरणवर्त्मेव जन्मजरामरण-



उत्पत्तिजरामरणवर्त्मेव वलीनां त्रयम्, आलम्भनकुण्डमिव नाभिमण्डलम्, अखिलगुणविलोपनखरेखेव रोमराजीविनिर्गमः, कालव्यालनिवासभूमिरिव मेखलास्थानम्, व्यसनागमनतोरणमिवोरुनिर्माणम्,

अपि च—

गुणग्रामविलोपेषु साक्षाद्दुर्नीतयः स्त्रियः।
स्वर्गापवर्गमार्गस्य निसर्गादर्गला इव॥
विषवत्परिपाकेषु कां विपत्तिं न कुर्वते।
जनयन्ति न कां प्रीतिमापाते मधुरेक्षणाः॥
नार्पयन्ति मनः सङ्गे कुर्वन्ति विरहे भयम्।
अपूर्वैव स्थितिः काचित्खलानामिव योषिताम्॥

---

मार्ग इव वर्तते। वनितासु नाभिमण्डलं उदरगर्तः आलम्भनकुण्डमिव वर्तते। यस्मिन् कुण्डे ब्राह्मणैः पशवो हूयन्ते तत्कुण्डमालम्भनकुण्डमुच्यते। मारणकुण्डमित्यर्थः। वनितासु रोमराजीविनिर्गमः उदरमूलात् नाभिपर्यन्तं या रोमराजी विनिर्गच्छति सा। कथंभूता। अखिलगुणविलोपनखरेखेव अखिलानां गुणानां कवित्ववाग्मित्वादीनां विलोपने नखरेखेव नखलेखेव वर्तते। अत्र सर्वगुणानां विलोपो न भवतीति कृत्वा जनेन यथा नखेन कृत्वा भूमौ रेखा पात्यते तत्सूचनमिवेत्यर्थः। वनितासु मेखलास्थानं गुह्यं कालव्यालनिवासभूमिरिव कालो यमः स एव व्यालः कृष्णसर्पः तस्य निवासभूमिरिव निवासस्थानमिव वर्तते। अत्र डलयोरैक्यात् श्लेषोपमा ज्ञातव्या। काल इत्यत्र लस्य डत्वम्। वनितासु ऊरुनिर्माणं सक्थ्नो निर्मितं व्यसनागमनतोरणमिव दुःखनृपप्रवेशतोरणमिव वर्तते॥

अपि च तथा च। **गुणेत्यादि**। गुणग्रामविलोपेषु गुणनगरोद्वासकरणेषु साक्षात् प्रत्यक्षेण स्त्रियो दुर्नीतयो अन्याया इव वर्तन्ते। यथा दुर्नीतेः ग्रामा न वसन्ति तथा स्त्रीभ्यो गुणा न भवन्तीत्यर्थः। कथंभूताः स्त्रियः। स्वर्गापवर्गमार्गस्य स्वर्गमोक्षाध्वनः निसर्गात् स्वभावेन अर्गला इव स्वर्गमोक्षद्वारकपाटनिश्चलीकरणे काष्ठार्गला इव लोहार्गला इव वा। रूपकोपमालंकारः॥

**विषवदित्यादि**। मधुरेक्षणाः मधुराणि लोचनानि अमृतप्रायाणि ईक्षणानि लोचनानि यासां ता मधुरेक्षणाः स्त्रियः विषवत् ब्रह्मपुत्रवत् परिपाकेषु कर्मोदयेषु कां विपत्तिं कामापदं न कुर्वते न विदधते। अपि तु सर्वां विपत्तिं विदधतीत्यर्थः। आपाते अनुभवकाले कां प्रीतिं स्नेहं न जनयन्ति नोत्पादयन्ति। अपि तु सर्वामुत्पादयन्तीत्यर्थः। आक्षेपोपमालंकारः॥

**नार्पयन्तीत्यादि**। सङ्गे मेलापके सति मनश्चित्तं नार्पयन्ति। मनोगतं न कथ-

द्वेषं गच्छन्त्युपेक्षायां प्रीतौ प्रीतिं न तन्वते ।
रोषे तोषे च नारीणां सुखमस्ति न कामिषु ॥
प्रियोपचारसंचारे कुले रूपे वयस्यपि ।
अन्येष्वपि गुणेष्वासामपेक्षास्ति न मृत्युवत् ॥
भ्रूर्धनुर्दृष्टयो बाणास्त्रिशूलं च वलित्रयम् ।
हृदयं कर्तरी यासां ताः कथं नु न चण्डिकाः ॥
स्त्रीषु साक्षाद्विषं दृष्टौ न सर्पेष्विति मे मनः ।
तद्दृष्ट एव लोको हि दृश्यते भस्मतां गतः ॥
एतदेव द्वयं तस्मात्कार्यं स्त्रीषु हितैषिभिः ।
आहारवत्प्रवृत्तिर्वा निवृत्तिरथवापरा ॥

---

यन्तीत्यर्थः । विरहे विप्रलम्भे सति भयं कुर्वन्ति । योषितां स्थितिः स्वभावः काचिदनिर्वचनीया अपूर्वैव अभिनवैव वर्तते । केषामिव । खलानामिव । यथा खलानां सङ्गे सति हृदयस्थितं कथयन्ति विघटिताः सन्तो भयमुत्पादयन्ति । उपमालंकारः ॥

**द्वेषमित्यादि** । उपेक्षायां निरादरे सति द्वेषमप्रीतिं गच्छन्ति प्राप्नुवन्ति । प्रीतौ स्नेहे सति प्रीतिं न तन्वते स्नेहं न कुर्वन्ति । नारीणां च रोषे तोषे च............... सति कामिषु कामुकेषु सुखं नास्ति न भवति । जात्यलंकारः ॥

**प्रियोपचारेत्यादि** । आसां स्त्रीणां प्रियोपचारसंचारे प्रियकरणप्रवेशे अपेक्षा वाञ्छा नास्ति । तथा कुले अपेक्षा नास्ति । तथा रूपे अपेक्षा नास्ति । तथा वयसि यौवने अपेक्षा नास्ति । तथा अन्येष्वपि पक्षादिषु गुणेषु अपेक्षा नास्ति । किंवत् । मृत्युवत् यथा मृत्योर्यमस्य प्रियकरणरूपवयोधनवतादिषु गुणेषु अपेक्षा वाञ्छा न भवति । समुच्चयोपमालंकारः ॥

**भ्रूरित्यादि** । यासां स्त्रीणां भ्रूर्धनुश्चापं वर्तते, दृष्टयो अवलोकनानि बाणाः शराः सन्ति, वलित्रयं उदररेखात्रयं त्रिशूलं वर्तते, हृदयं कर्तरी वर्तते, उन्नतस्तनद्वयसंयोगात् वक्रहृदयत्वात् च । ताः स्त्रियः । नु इति वितर्के प्रश्ने वा । चण्डिका भवान्यः कथं न भवन्ति । अपि तु भवन्त्येव । उपमाक्षेपालंकारः ॥

**स्त्रीष्वित्यादि** । स्त्रीषु साक्षात् प्रत्यक्षेण निश्चयेन वा दृष्टौ विषं वर्तते, सर्पेषु दृष्टौ विषं न वर्तते, इति ईदृशं मे मम सोमदेवाचार्यस्य मनः संकल्पो वर्तते । तद्दृष्ट एव ताभिः स्त्रीभिर्दृष्टोऽवलोकितो लोको जनो भस्मतां गतः दृश्यते अवलोक्यते । नतु सर्पैर्दृष्टो भस्मतां गतो दृश्यते । उत्प्रेक्षानुमानालंकारः ॥

**एतदेवेत्यादि** । हितैषिभिः मोक्षार्थिभिः पुरुषैः एतदेवेदमेव द्वयं तस्मात् कार-



किं च । अपि त्यजत्येवोपायपटुभिरनुप्रविश्यमानः सप्तार्चिरप्यात्मनः स्वभावम्, अपि भवति विदितवेदितव्यैरुपयुज्यमानं विषमप्यमृतम्, अपि शक्यते महासाहसैर्वश्यतामानेतुं कैकसीनामपि कुलम्, अपि भवन्त्युपप्रलोभनप्रवीणैरुपचर्यमाणाः क्रूरजन्तवोऽप्यनुलोमचरिताः, सुलभाश्च खलु शिलानामपि मृदूकरणे सन्ति विधयः, न पुनः स्त्रीणाम् । इमा ह्यनिशमनुनीयमाना गृहमर्कटमिव विडम्बयन्ति पुरुषम्, उपचारैर्गृह्यमाणा दानदुर्भराः स मेष इत्यधिक्षिपन्ति, अपेक्षमाणाः पशुमिव मन्यन्ते, हठादुपभुज्यमाना श्मशानकुटमिव परिहरन्ति, सेर्ष्यमनुयुज्यमाना भुजङ्ग्य इव दशन्ति, गुणवद्भ्यो निम्बादिवोद्विजन्ते, शुचिक्रियेषु मृत्पिण्ड इवाभिनिविशन्ते । अनुरज्यन्त्य

---

णात् कार्यं कर्तव्यं करणीयम् । कासु । स्त्रीषु । आहारवत् प्रवृत्तिर्वा प्रवर्तनं वा कार्या, अथवा निवृत्तिर्नियमः कार्यः । कथंभूता निवृत्तिः । अपरा नीहारसदृशी । उपमालंकारः ॥

किं च । चूलिकारूपं व्यावर्णं करोति । अपीति संभावनायाम् । त्यजत्येव परिहरत्येव उपायपटुभिः उपायचतुरैः पुरुषैरनुप्रविश्यमानः मन्त्रादिना सेव्यमानः सप्तार्चिरग्निः आत्मनः स्वस्य स्वभावम् । दाहपावकत्वलक्षणत्वं उष्णत्वं त्यजति परिहरति परं स्त्रियः स्वभावं न त्यजन्तीत्यर्थः । तथापीति संभावनायाम् । भवति संजायते विदितवेदितव्यैः मान्त्रिकतान्त्रिकादिभिः पुरुषैरुपयुज्यमानं उपयोगीक्रियमाणं आस्वाद्यमानं विषमपि हलाहलमप्यमृतं भवति । तथापीति संभावनायाम् । शक्यते महासाहसैरत्यद्भुतकर्मकारिभिः पुरुषैः कैकसीनामपि कुलं राक्षसीनामपि समूहो वश्यतामानेतुं शक्यते । न कुस्त्रियो वश्यतामानेतुं शक्या इत्यर्थः । तथापीति संभावनायाम् । उपप्रलोभनप्रवीणैः लोभदर्शनविचक्षणैः पुरुषैरुपचर्यमाणाः आराध्यमानाः क्रूरजन्तवोऽपि सिंहव्याघ्रादयोऽपि अनुलोमचरिताः सानुकूला भवन्ति । नतु स्त्रियः सानुकूला भवन्ति । खलु संभावनायाम् । शिलानामपि पाषाणानामपि मृदूकरणे विधयः सन्ति । इमाः स्त्रियो हि निश्चयेन अनिशं अनुनीयमानाः मान्यमानाः शिक्ष्यमाणाः पुरुषं नरं विडम्बयति विगोपयन्ति । कमिव । गृहमर्कटमिव यथा गृहमर्कटो विडम्बते नानानर्तनं कार्यते । उपचारैः पूजादिभिः गृह्यमाणाः स्वीक्रियमाणाः दानेन भर्तुमशक्याः स पुमान् मेषः छागविशेष इति एवं अधिक्षिपन्ति तिरस्कुर्वन्ति । इमाः स्त्रिय अपेक्षमाणाः पुरुषं पशुमिव मन्यन्ते । इमाः स्त्रियो हठाद्बलात्कारेण उपभुज्यमानाः संविश्यमानाः पुरुषं श्मशानकुटमिव घटमिव परिहरन्ति । इमाः स्त्रियः सेर्ष्यं कोपेन अनुयुज्यमानाः पृच्छमानाः भुजङ्ग्य इव दशन्ति चर्वन्ति । इमाः स्त्रियो गुणवद्भ्यः पुरुषेभ्यो निम्बादिव पिचुमन्दादिव कटुकतया उद्विजन्ते उद्वेगं कुर्वन्ति । इमाः स्त्रियः शुचिक्रियेषु पवित्राचारेषु पुरुषेषु मृत्पिण्डे इव अपवित्रमृत्पिण्डे इव अभिनिविशन्ते अभिप्रायं कुर्वन्ति ।

एव भवन्ति कारणमनर्थपरम्परायाः, हसन्त्य एव शल्ययन्त्यङ्गानि, पश्यन्त्य एव दहन्ति देहम्, आलपन्त्य एव स्खलन्ति मनसः स्थैर्यम्, आसजन्त्य एव कुर्वन्ति तृणादपि लघुतरं मनुष्यम्, आरक्ष्यमाणाः स्वच्छलेनैवारभन्ते दुष्कर्माणि। न चासामस्ति रक्षणोपायः। तथा हि—अनुश्रवः कृतरक्षाशल्याप्यहल्या किलाखण्डलेन सह संविवेश, हरदेहार्धाश्रितापि गिरिसुता गजासुरेण, यमजठरालयापि छाया पावकेन, एकवसनवैदेहकवधूर्मूलदेवेन, एवमन्याश्चोपाध्यायिकाप्रभृतयो निजपतिसमक्षमुपपतिभिः सहारेभिरे महा-

---

अपवित्रं मानयन्तीत्यर्थः। अनुरज्यन्त्य एव स्नेहं कुर्वन्त्य एव अनर्थपरम्परायाः कारणं हेतुः भवन्ति। हसन्त्य एव पुरुषस्य अङ्गानि शरीराणि शल्ययन्ति। पश्यन्त्य एव पुरुषस्य देहं दहन्ति भस्मीकुर्वन्ति। आलपन्त्य एव भाषमाणा मनसः चित्तस्य स्थैर्यं स्खलन्ति विनाशयन्ति। आसजन्त्य एव सङ्गं कुर्वन्त्य एव मनुष्यं मानवं तृणादपि खेदादपि लघुतरं अगुरुं कुर्वन्ति। आरक्ष्यमाणाः प्रतिपाल्यमानाः स्वच्छलेन निजकापटेन दुष्कर्माणि जारगमनलक्षणानि पापानि आरभन्ते मण्डयन्ति। न च नैव आसां स्त्रीणां रक्षणोपायोऽस्ति न विद्यते। तथा हि। तदेव निरूपयति—अनुश्रवः लौकिकी श्रुतिर्वर्तते कृतरक्षाशल्यापि कृतं रक्षाशल्यं रक्षाकण्टको यस्याः सा कृतरक्षाशल्या अहल्या गौतमभार्या। किलेति लोकोक्तौ। आखण्डलेन इन्द्रेण सह संविवेश मैथुनं चकार। एवं किल श्रूयते—गौतमकौशिकयोः सहातीव तपस्यतः तपःप्रभावप्रीतः प्रजापतिरहल्यां मानसीकामुत्पाद्यैकस्मै नाम परस्मै चन्द्रत्वं दातुमिच्छन्नासीद्बभूव। तत्र कौशिकः ऐश्वर्ये सति सर्वे विभव इति विचिन्त्य इन्द्रपदं गृहीत्वा तया सह रेमे। गौतमशापाच्च भगाङ्कितवपुर्बभूव। हरदेहार्धाश्रितापि हरस्य देहस्य अर्धमात्रापि सती गिरिसुता पार्वती गजासुरेण सह संविवेश क्रीडां चकार। तथा हि गिरिसुता हिमगिरिसुता गौरी गजरूपधारिणं हरं करेणुतया कुर्वन्ती भवन्ती स्वेच्छया कृतविहारा गजासुरेण सह रेमे। तद्दोषेण किल हरेण स गजासुरो मारित इति। यमजठरालयापि छाया पावकेन सह संविवेश इत्येवम्। तथा हि वत्सगोत्रजन्मा आकम्पनिस्तीर्थयात्रां चिकीर्षुरयं यमो धर्मराज इति मत्वा उपारूढयौवनां छायां नाम कन्यकां तस्मै स रक्षणार्थं समर्पयामास। सोऽपि यमस्तां छायां स्वकीयजठरे स्थापितवान्। एकदा तु तां छायां शरवणे निधाय मानसे सरसि स्नातुं गते यमे सा छाया पावकेन सह संविवेश। एकवसनवैदेहकवधूर्मूलदेवेन। तथा हि अयोध्यायां एकशाटो नाम वणिक् सर्वत्र अविश्वासी निजभार्यारक्षणार्थं पत्न्या सह एकवस्त्रं पिदधौ। शशिमूलदेवश्च तां वार्तामाकर्ण्यागत्य च तत्र कचवलयपरिधानव्याजेन कृतसंकेतदेवे वर्षति निशीथिन्यां सप्ततलप्रासादाग्रवासभवनवर्तिनीमपि तत्पत्नीमुपजह्नुः। एवमन्याश्च अपराश्च स्त्रियः उपाध्यायिकाप्रभृतयः निजपतिसमक्षं उपपतिभिः सह जारैः सार्धं महा-



साहसानि। अतिक्षुल्लसर्गश्चायं मार्गो यथा न देवोऽपि ग्रहीतुं शक्नोति महिलानां हृदयम्। कथमन्यथेमे पुरातन्यौ श्रुती—

पौंश्चल्याच्चलचित्तत्वान्नैःस्नेह्याच्च स्वभावतः।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते॥
यदर्थे च मही त्यक्ता जीवितार्धं च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां वल्लभो नरः॥ इति।

---

साहसानि आरेभिरे कृतवत्यः। उपाध्यायिका इत्यस्य कथा—सौराष्ट्रदेशे वलभीनाम नगरे गर्गनामोपाध्यायस्य ब्राह्मणस्य पत्नी सोमश्री किल उपपतिसमागमाय कृतसंकेता सती तमुपाध्यायमेवमभणत्—'भट्ट, पत्तनेन वा नयति लग्नः। तद्वीक्षायां ममातीव कुतूहलं वर्तते। लब्देवागमिष्यामि अन्यथास्य वाल्यमारितस्य पापभागिनी स्याम्' इति तमुपाध्यायं प्रतार्य निर्गता संगमं याचते। तेन जारेण सह पुनः पथिकवेषधारिणा स्वगृहमागत्य तस्यैव खिद्यमानोपाध्यायस्य वत्सो रुदति। निजबालकाय स्तनं ददती दुश्चरितमाचचार। तद्दर्शनावसरे तस्यैवोपाध्यायस्यान्तिके अष्टदशीं लिपिं शिक्षितुमागतः श्रीवर्धनो नाम श्रावकस्तां संशिक्ष्य विरक्तो भूत्वा प्रवव्राज। अतिक्षुल्लसर्गः अतिसूक्ष्मसृष्टिकश्च पुनरयं प्रत्यक्षीभूतः स्त्रीणां मनोमार्गः यथा अतिक्षुल्लकप्रकारेण देवोऽपि आस्तां तावन्मनुष्यो महिलानां हृदयं गृहीतुं न शक्नोति। कथमन्यथा यदि क्षुल्लोऽयं मार्गो न भवति तर्हि इमे द्वे पुरातन्यौ चिरंतने श्रुती द्वे वार्ते कथं वर्तेते। के ते द्वे वार्ते—

**पौंश्चल्यादित्यादि।** पुंश्चल्या भावः कर्म वा पौंश्चल्यं तस्मात्। चलस्य चित्तत्वं[1] तस्मात्। निःस्नेहस्य भावो नैःस्नेह्यं तस्मात्। चकार उक्तसमुच्चयार्थः। स्वभावतो निसर्गात्। यत्नतोऽपि सावधानतयापि रक्षिता प्रतिपालिता एताः स्त्रिय इह संसारे भर्तृषु विकुर्वते विक्रियां कुर्वन्ति। जात्यलंकारः॥

**यदर्थे इत्यादि।** अस्य कथा—पाटलिपुत्रपत्तनपतेरेकैव दुहिता सर्वशास्त्रप्रवीणा 'यो मां कलाभिर्जेष्यति तस्याहं पत्नी भविष्यामि' इति कृतप्रतिज्ञा बभूव। इदमुदन्तं श्रुत्वा छुकाराधिपतेस्तनुजस्तत्रागत्य तां जित्वा परिणीतवान्। अन्यदा प्रस्तावे तत्कन्यापितुर्महान् व्याधिरासीत्। तत्र केनचित्कुलाचार्यकेण एवमुपदिष्टम्—'यद्येतत्सुतया बलिविधानं क्रियते तदायं जीवति' इति। तदाकर्ण्य राज्यं त्यक्त्वा भार्यां गृहीत्वा जामाता राजपुत्रो महाटव्यां विवेश। तत्र च दुष्टसर्पेण सा राजपुत्री दष्टा। तन्मोहेन साहसकृताग्निप्रवेशाभिप्रायो जातः। वनदेवताभिः करुणां विधायैवमुक्तः—'यदि स्वकीयमर्धमायुर्ददासि तदियं तव पत्नी जीवति।' स तथैव प्रतिपद्य तया सह पुनरेकस्मिन् नगरे प्रविशन् प्रपायां सुप्तः। तत्रैवावसरे कामचारादागतेन तन्नगरनिवासिना देवकेशिना प्रबोध्य नीता। पुनरुत्थितेन

---

१. 'चलं चित्तं यस्याः' इति बहुव्रीहेर्भावप्रत्ययो न्याय्यः.

अहो, क्केयं नु खलु चित्तस्य वचनगोचरातिचारिणी पुरस्तात्संध्या-
घनस्येव रागकलुषता, क्व चेदानीं क्षारजलधौतस्य वसनस्येव । निर्मलभावः
क्व तादृशं पाशपतितस्य पक्षिण इव चक्षुषश्चापलम्, क्व चेदानीं कुलिश-
कीलितस्येव निश्चलभावः। हतविधे, किमपरः कोऽपि न तवास्ति वधोपायो
येनैवमुपप्रलोभ्य प्राणिनः संहरसि । कथं हि त्वमेवमसि मध्यस्थो यदे-
वमसदृशे वस्तुनि देहिनः स्नेहयसि । मुधा च तवैवमतिदारुणकर्मणो धर्म
इति प्रसिद्धिः। अहो, कथमिव लोकस्याहार्यगुणरमणीयतावपुषि वपुषि शुनः

---

तत्पतिना तदेव नगरं प्रविशन्ती तेन सह दृष्टा धृता च । 'क्व गच्छसि' इति विवादे संजाते
तया प्रोचे—'अयं देशिको मम भर्त्ता भवति' इति। राजपुत्रमा(आह)—'यद्येवं यद्यन्मदीयं
वनदेवतासमक्षं त्वया गृहीतं तन्मे समर्पणीयम् । तयोक्तं(वादम्)—'समर्पितम् ।' इत्युक्ते
सति सा तत्कालं मृता । आचारदर्शिभिश्च स राजपुत्रः स्वयं पृष्टः—'कोऽयं वृत्तान्तः ।'
स च श्लोकं पपाठ—'यदर्थे च मही त्यक्ता जीवितार्धं च हारितम् । सा मां त्यजति
निःनेहा कः स्त्रीणां वल्लभो नरः ॥' मां त्यक्त्वा देशिकेन सह गच्छतीति तात्पर्यार्थः ॥

अहो आश्चर्ये । नु वितर्के । खलु वाक्यालंकारे । क्व इयं पुरस्तात् पूर्वं मम चित्तस्य वचन-
गोचरातिचारिणी वक्तुमशक्या रागकलुषता । मम कस्येव । संध्याघनस्येव । यथा
संध्याघनस्य रागकलुषता भवति । क्व चेदानीमधुना चित्तस्य निर्मलभावः । कथं-
भूतस्य मम चित्तस्य । क्षारजलधौतस्य वसनस्येव यथा क्षारजलेन धौतं श्वेतद्रव्योदकेन
प्रक्षालितं वसनं निर्मलं भवति । क्व तादृशं मम चक्षुषश्चापलम् । कथंभूतस्य चक्षुषः ।
पाशपतितस्य पक्षिण इव यथा पाशपतितः पक्षी चपलो भवति । क्व चेदानीमस्मिन्न-
वसरे चक्षुषो निश्चलभावो वर्तते । कथंभूतस्य । कुलिशकीलितस्येव यथा कुलिशेन की-
लितं विद्धं चक्षुः निश्चलं भवति । हतविधे पापिष्ठविधान, किं तवापरः कोऽपि अन्यः
कोऽपि वधोपायो नास्ति न वर्तते येन कारणेन एवं अमृतमतिमहादेवीप्रकारेण उप-
प्रलोभ्य लोभं दर्शयित्वा वशयित्वा प्राणिनो जन्तून् मत्सदृशान् संहरसि मारयसि ।
कथं केन प्रकारेण । हि निश्चयेन । त्वं भवान् एवममुना प्रकारेण मध्यस्थः सर्वसाधारणो
भवसि । यत् यस्मात् कारणादेवं असदृशे वस्तुनि अतुल्ये पदार्थे देहिनो ज-
न्तून् स्नेहयसि स्नेहयुक्तान् करोषि । एवं च सति भवतोऽतिदारुणकर्मणः अतिशयेन
हिंसकस्य धर्म इति प्रसिद्धिः प्रख्यातिर्मुधा वर्तते । अहो आश्चर्यम् । कथमिव केन प्रका-
रेण लोकस्य निर्विवेकस्य वपुषि तर्षः तृष्णा कथं वर्तते । कथंभूते वपुषि । अहार्यगुणर-
मणीयतावपुषि अहार्यगुणेन सुगन्धवस्त्रादिसंयोगेन रमणीयतां मनोहरत्वमवपुष्णातीति
अहार्यगुणरमणीयतावपुट् तस्मिन् । कस्मिन् कस्येव । शुनः कुर्कुरस्येव यथा शुनः सारमेयस्य



स्वतालुक्षतलोहितपरिष्वक्ते शुष्के कीकस इव तर्षः । अताम्बूलमुखं ह्युपान-
त्करनिकेतनमिव करोति महोद्वेगं चित्तस्य । अनुपनीतं हि चक्षुः स्फुटित-
पिण्डगण्डमिव महतीं करोति विचिकित्सामन्तःकरणस्य । अविहितसंस्कारं
हि शिरः क्षणादेव भवति गोगर्मुन्निवारणादपि कष्टतरम् । मनागेवोपेक्षि-
तसृष्टिः शरीरयष्टिश्चर्मकृद्दृतिरिव विदधाति पिधेयनासमासन्नचरम् । अरे
हतवृत्त चित्त, कथमिव त्वमत्र प्राप्तसंसारफलमिवाभिनिविशसे । प्रसर-
मलभमानं प्राणव्ययैरपि संगन्तुमिच्छसि, वियुज्यमानं परिमुषितसर्वस्व-
मिव ताम्यसि, अनुष्वजमानं ग्रहगृहीतमिवात्मानं विधमसि । अहो,
किमिदमस्य जगतो महान्ध्यं यदनिशमस्यान्तःसारतामवबुद्ध्यमानमपि

---

शुष्के नीरसे कीकसे अस्थिनि तर्षो भवति । कथंभूते कीकसे । स्वतालुक्षतलोहितपरिष्वक्ते
स्वस्यात्मनस्तालुः काकुदं तत्र क्षतं व्रणं तस्मात् संजातं यत् लोहितं रुधिरं तेन परि-
ष्वक्तम् आलिङ्गितमार्द्रं तस्मिन् । कुर्कुरः किल शुष्कमस्थि चर्वति, तस्य स्वतालुनि
क्षतं भवति, तस्मात् निर्गतं रुधिरं पिबति, इदं किल अस्थ्नः समुद्गतं मन्यते, तथा कामी
पुमान् निजसप्तमधातुनिर्गमेऽतिसुखं मन्यते, इदं किल सुखं स्त्रीसङ्गात् समुन्नतमिव ।
अताम्बूलं मुखं हि उपानत्करनिकेतनमिव चर्मकारगृहमिव चित्तस्य महोद्वेगं महादुःखं
करोति । अनुपनीतं अकृतसंस्कारं हि चक्षुः लोचनमन्तःकरणस्य मनसो महतीं
गुरुतरां विचिकित्सां घृणां करोति । किमिव । स्फुटितं विकसितं पिण्डे काये गण्डमिव
व्रणविस्फोटमिव । अविहितसंस्कारम् अकृतसंमार्जनं हि शिरो मस्तकं क्षणादेव
तत्कालादेव भवति संजायते । कीदृशं भवति । गोगर्मुन्निवारणादपि गोमक्षिकाणामपनय-
वारणतालव्यजनादपि कष्टतरं निन्द्यतरं चास्ति । मनागेव स्तोकमेव उपेक्षितसृष्टिः
निराहतकृतिः सती शरीरयष्टिः चर्मकृद्दृतिः चर्मकारचर्मप्रसेविका इव आसन्नचरं निकट-
वर्तिनं पुरुषं पिधेयनासं झम्पितनासिकं मुद्रितघ्राणं विदधाति करोति । अरे दुरात्मन्
हतवृत्त नष्टाचार चित्त रे मनः, त्वं भवान् अत्र अस्मिन् स्त्रीजने प्राप्तं संसारफलमिव
कथमिव अभिनिविशसे अभिप्रायं करोषि । प्रसरं प्रवेशमलभमानं प्राप्नुवत्सत् त्वं
प्राणव्ययैरपि मरणमपि कृत्वा संगन्तुमिच्छसि सङ्गं कर्तुमीहसे । अरे चित्त, स्त्रीभ्यो
वियुज्यमानं सत् मद्विप्रलम्भं प्राप्नुवत् सत् परिमुषितसर्वस्वमिव नष्टसर्वधनमिव ता-
म्यसि आकाङ्क्षां करोषि । अनुष्वजमानं स्त्रीजनसङ्गं प्राप्नुवत् सत् ग्रहगृहीतमिव आ-
त्मानं विधमसि स्वं पीडयसि । अहो आश्चर्यम् । किं किमर्थं इदं अस्य जगतो लोकस्य म-
हान्ध्यं चक्षुर्विकलत्वं यत् यस्मात् कारणात् अनिशं अस्य शरीरस्य स्त्रीजनस्य वा
अन्तःसारतां अभ्यन्तरस्वरूपं अवबुद्ध्यमानमपि जानदपि जगत् भण्डैरिव वाह्यते

भण्डैरिव वाह्यते । न वेत्ति बहिश्छायाप्रतारितमुदुम्बरफलस्येवास्य कलेवरस्यान्तर्बीभत्सताम् । न चैतदथवा शोच्यम्, किं नु खल्वयं वराकः करोतु जन्तुः । कर्मैव तावत्प्रथममनुकूलं न भवति जीवलोकस्य । यतः क्व निसर्गतः पर्वदिवसानीव पुराकृतपुण्यलवविपाकदुर्लभानि प्राणिषु स्त्रीविलसितानि, क्व च तदुच्छेदनकरागमः कृतान्तपञ्चकुलसमः स्वच्छन्दवृत्तेर्गुणविद्वेषणस्याधर्मरुचेरज्ञानतिमिरस्यैश्वर्यमहाग्रहस्य च समवायः । यथाजनाभिप्रायमुपदर्शितविधयस्ते च ते चागमाः प्रमाणम् । उपतर्पितदेवपित्रतिथिचेतसि हि पुंसि किमप्यशुभं कर्म न भवति दोषायेति, तैस्तैर्निर्दर्शनैरभ्युपगमयितारः प्रायेण समीपवर्तिनः पुरुषाः । यौवनाविर्भावः पुनः कादम्बरीयोग इव परं मुमुक्षूणामपि नाविकार्य मनांसिविश्राम्यति ।

---

नर्मसचिवैरिव वाह्यते । न वेत्ति । किं कर्तुं न वेत्ति जगत् लोकः । बहिश्छायाप्रतारितं सत् त्वद्गुणवर्णनवञ्चितं सत् उदुम्बरफलस्येव जन्तुफलस्येव अस्य कलेवरस्य अस्य शरीरस्य अन्तर्बीभत्सतां अन्तर्मध्ये विरूपकत्वं (सूकावनत्वं) न वेत्ति जगत् । न चैतत् अथवा शोच्यं न शोचनीयं अथवा । नु वितर्के, खलु निश्चयेन, अयं वराको जन्तुः किं करोतु किं कर्तुं न शक्नोति । कर्मैव पुराकृतं कर्म तावत् अनुक्रमेण प्रथमं पूर्वं जीवलोकस्य जन्तुसमूहस्य अनुकूलं हितं न भवति । यतो यस्मात् कारणात् क्व निसर्गतः स्वभावेन पर्वदिवसानीव दीपोत्सवादिदिनानीव प्राणिषु स्त्रीविलसितानि । कथंभूतानि । पुराकृतपुण्यलवविपाकदुर्लभाणि पूर्वोपार्जितपुण्यलेशोदयेन दुष्प्राप्याणि वर्तन्ते । क्व च तदुच्छेदनकरागमः पुण्योच्छेदनकरमिथ्यागमः मिथ्याशास्त्रम् । तदुच्छेदनकरागमः कथंभूतः । कृतान्तपञ्चकुलसमः सिद्धान्तपञ्चकुलसमानः । सूत्रधारायस्करादयो यथा पञ्चकुलानि आचारं लोपयन्ति तथा । स्वच्छन्दवृत्तेः शिक्षाचारस्य (?) [प्रथमस्य], गुणविद्वेषणस्य [द्वितीयस्य], अधर्मरुचेस्तृतीयस्य, अज्ञानतिमिरस्य चतुर्थस्य, ऐश्वर्यमहाग्रहस्य च पञ्चमस्य । एतेषां पञ्चानां पञ्चकुलानामिव समवायः समुदायः पुण्योच्छेदनकरः । मिथ्याशास्त्रमित्यर्थः । यथाजनाभिप्रायं लोकमनोभिप्रायानुसारेण उपदर्शितविधयः । यथा लोको वाञ्छति तथैव शास्त्रं पठन्ति मिथ्यादृष्टयः । ते च ते आगमा जगत्प्रसिद्धाः सिद्धान्ताः किल प्रमाणम् । तथा हि—उपतर्पिततदेवपित्रतिथिचेतसि यस्य पुंसः स तथा तस्मिन् ईदृग्विधे हि निश्चयेन पुंसि किमपि किंचिदपि अशुभं कर्म दोषाय न भवति इति पठन्ति । तैस्तैः प्रसिद्धैः निर्दर्शनैः कुदृष्टान्तैः अभ्युपगमयितारः अङ्गीकर्तारः कारयितारो वा प्रायेण समीपवर्तिनः पुरुषा भवन्ति । यौवनाविर्भावस्तारुण्यप्रादुर्भावः पुनश्च कादम्बरीयोग इव मदिरापानमिव परं निश्चयेन मुमुक्षूणामपि मोक्तुमिच्छूनामपि पुरुषाणां मनांसि अविकार्य विकारमकारयित्वा



श्रीमदः सर्वेन्द्रियाणां जनुषान्धत्वमिवाप्रतीकारमुपघातकरणम् । अनङ्गसिद्धान्तः खलोपदेश इवानर्थभुजङ्गमानामुत्थापनदण्डः । कवयः पुनः पिशाचा इव विषयेषु विभ्रमयन्ति निसर्गादजिह्मान्यपि चित्तानि । डिण्डिमध्वनिरिव व्यसनव्यालप्रबोधनकरः कलानामभ्यासः । नियोगलाभ इवापातसुन्दरः प्रसह्योन्मादयति सुविदुषोऽपि पुरुषान् । प्रणयिजनविलासो हृदयमुपनिपत्य दर्पयति च । याचितकमण्डनमिव छन्दानुवर्ती परिजनः । तदेतेष्वेकमप्यलमुपहन्तुं प्राणिनः, किं पुनरमीषां न समवायः । तदहमेवमनुसंभावयेयम्, स्वयमुचितं कर्मानुष्ठातुमशक्तैः स्वव्यसनतर्पणाय कामचारक्रियासु प्रवर्तन्ते विवेकविकलाः । न खलु जात्यपेक्षया पापमपापं धर्मो वा भवत्यधर्मः । स्यादपि यदि कर्मविपाकस्तथैव दृश्येत, न चैवम् । तथा हि—

---

न विश्राम्यति न तिष्ठति । श्रीमदो लक्ष्मीमदः सर्वेन्द्रियाणां पञ्चेन्द्रियाणां जनुषान्धत्वमिव । जन्मना अन्धत्वमिवाप्रतीकारमचिकित्सनीयं उपघातकरणं विनाशकारणम् । धनमद इत्यर्थः । अनङ्गसिद्धान्तः कामशास्त्रं खलोपदेश इव वञ्चकोपदेश इव अनर्थभुजङ्गमानां धनधान्यजीवितक्षयसर्पाणां उत्थापनदण्डः जाग्रत्करणयष्टिः वर्तते । कवयः पुनः पिशाचा इव व्यन्तरा इव विषयेषु स्पर्शादिषु निसर्गात् स्वभावेन अजिह्मान्यप्यकुटिलान्यपि चित्तानि विभ्रमयन्ति भ्रान्तिमुत्पादयन्ति । डिण्डिमध्वनिरिव डमरुकशब्द इव व्यसनव्यालप्रबोधनकरः दुःखकालसर्पजागरणविधायकः कलानां गीतनृत्यवादित्रादीनां अभ्यासोऽनुशीलनम् । नियोगलाभ इव सचिवादिपदप्राप्तिरिव आपातसुन्दरः प्रथमारम्भे मनोहरः प्रसह्य हठात्कारेण उन्मादयति । कोऽसौ कान् उन्मादयति । सुविदुषोऽपि पुरुषान् । प्रणयिजनविलासः स्त्रीजनानां भोगः न केवलं उन्मादयति हृदयमुपनिपत्य चेतस्यागत्य दर्पयति च दर्पं कारयति च । याचितकमण्डनकरणं तथा छन्दानुवर्ती इच्छानुसारी परिजनः । केवलं शोभायै भवतीति भावः ।...........................................................

......। तत्तस्मात् कारणात् अहं यशोधर एवममुना प्रकारेण अनुसंभावयेयं विचारयामि । स्वयमेवात्मना उचितं कर्म पुण्यं कर्म अनुष्ठातुमशक्तैः कर्तुं असमर्थैः स्वव्यसनतर्पणाय आत्मव्यसनपोषणाय कामचारक्रियासु स्वेच्छाचारेषु प्रवर्तन्ते व्यापार्यन्ते विवेकविकलाः निर्विवेकपुरुषाः । न खलु जात्यपेक्षया पापमपापं वा भवति अधर्मो वा धर्मो भवति । धर्मं करोतु धर्मो न भवतीत्यर्थः । स्यादपि पापमपापं भवेदपि । धर्मोऽधर्मो वा पापमपापं न वेति केचित् । कर्मविपाकः कर्मोदयस्तथैव दृश्येत विपरीततया निरीक्षते पापात्सुखं पुण्याद्दुःखं अधर्मात्सुखं धर्माद्दुःखं च दृश्यते न चैवं न च तथा दृश्यते किंतु पापाद्दुःखं दृश्यते । तथा हि—त-

वाच्यमानं पुस्तकमिव प्रतिक्षणमवहीयन्ते सकलजनसाधारणानामीश्वराणामप्यायूंषि । मुनिशिरसिजेषु वृद्धिरिव न चिरस्थायिनी भवति देहकान्तिः । स्त्रीमनसोऽप्यस्थिरतरमिदं यौवनमाजवं जवीभावोपनीते विनिपाते च पतति । न भवत्यल्प इव महानगोचरः । कीनाशस्तु यः परं बीभत्सुमपि शरीरिणमतिस्पृहयालुतया गिलति, स कथं स्वभावसुभगं परिहरेत् । लघ्वेव मे वृत्तिच्छेदो मा भूदिति स यदि कदाचित्कानिचिद्दिनानि दन्तान्तर इवास्ते, तदावश्यं विषयविजयप्रासादविनिर्माणादिव भवितव्यं शिरसि पलितवल्लरीपताकारोहणेन, हितोपदेशनिषेधपरिपाकादिव बाढमुत्कम्पितव्यमुत्तमाङ्गेन, मनःस्फुरितविगमादिव नितरामाचरितव्यं चक्षुस्तिमिरपटलेन, संधिबन्धविघटनादिवातीव स्यन्दितव्यं वदनकन्दरेण,

---

देव निरूपयति । वाच्यमानं पुस्तकमिव प्रतिक्षणं क्षणं प्रति सकलजनसाधारणानां सर्वलोकसदृशानां ईश्वराणामपि पितॄणामपि आयूंषि अवहीयन्ते नृद्यु(नश्य)न्ति । मुनिशिरसिजेषु वृद्धिरिव मुनीनां केशेषु वर्धनमिव देहकान्तिः चिरस्थायिनी भवति । स्त्रीमनसोऽपि स्त्रीणां चित्तादपि अस्थिरतरं चपलतरं इदं यौवनं आजवं जवीभावोपनीते संसारस्वभावादागते विनिपाते मरणे च पतति म्रियते एव । अल्प इव क्षुद्रलोक इव महानपि राजाधिको गुरुलोकोऽपि मृत्योरगोचरो न भवति । कीनाशो यमः यः परं निश्चयेन बीभत्सुमपि शरीरिणं विरूपकमपि जन्तुं प्रतिस्पृहयालुतया गिलति वाञ्छकशीलतया भक्षयति, स कीनाशः स्वभावसुभगं निसर्गात् प्रीतिजनकं राजानं कथं केन प्रकारेण परिहरेत् । अपि न कथमपि परिहरेदित्यर्थः । राजानं पूर्वमेव प्रायेण गिलतीत्यर्थः । लघ्वेव शीघ्रमेव मे मम कीनाशस्य वृत्तिच्छेदो ग्रासविनाशो मा भूत् मा भवेत् इति कारणात् स कीनाशः यदि चेत् कदाचित् कस्मिंश्चिदवसरे कानिचिद्दिनानि कांश्चिद्दिवसान् दन्तान्तर इव आस्ते न गिलतीति। तदा तस्मिन् काले अवश्यं निश्चयेन शिरसि पलितवल्लरीपताकारोहणेन भवितव्यं भाव्यम् । कस्मात् । उत्प्रेक्षते—विषयविजयप्रासादविनिर्माणादिव । राजा यथा विषयस्य देशस्य विजये सति परदेशग्रहणे सति प्रासादस्य निर्माणात् प्रासादोपरि उच्चं ध्वजमारोपयति, तथा यमोऽपि वृद्धस्य विषयिणां स्पर्शादीनां विजये सति प्रासादनिर्माणात् प्रसन्नतानिर्माणात्पलितध्वजमारोपयति । तद्वृद्धमस्तकध्वजस्यारोहणेन अवश्यं भवितव्यम् । तथा उत्तमाङ्गेन बाढमतिशयेन उत्कम्पितव्यं उत्कम्पनीयम् । कस्मात् । उत्प्रेक्षते—हितोपदेशनिषेधपरिपाकादिव । तथा चक्षुर्लोचनं तिमिरपटलेन नितरामाचरितव्यं आचरणीयम् । कस्मात् । उत्प्रेक्षते—मनःस्फुरितविगमादिव । तथा वदनकन्दरेण अतीव स्यन्दितव्यम् । कस्मात् । उत्प्रेक्षते—संधिबन्धविघटनादिव शरीरसंधिबन्धानां स्फुटनादिव तथा दन्तवल-



रतिशक्तिवैधव्यादिव समन्ततः पतितव्यं दन्तवलयेन, मोहानिलविजृम्भणादिव घनतरं तरङ्गयितव्यमपघनेन, सरसत्वक्षयादिव नितान्तमवनमनीयं पृष्ठवंशेन, लावण्यजलधिगलनादिवात्यर्थं प्रकटितव्यं स्नसानलजालेन, आसन्नतरमरणभयादिव प्रकामं वेपितव्यमङ्गेन । यस्यां पुनर्लक्ष्म्यामयं महानाग्रहो लोकस्य सा दैवात्करमुपागतापि सूतककणिकेव न भवति स्थिरा, खलमैत्रीव संगच्छमानापि जनयत्यवश्यं कांचिद्विपदम्, अपामार्गयवागूरिव लब्धापि न शक्यते परिणमयितुम्, प्रयत्नपरिपालितापि कुलटेव करोत्युपपतावभिलाषम्, अनुभूयमानापि मदिरेव मोहयत्यन्तःकरणम्, ग्रहोपरागलेखेव गताप्यसंतापयन्ती न व्यवतिष्ठते, साहसैरुपस्थितापि राक्षसीव छलयति

---

येन दशनपङ्क्त्या समन्ततः पतितव्यं पतनीयम् । कस्मात् । उत्प्रेक्षते—रतिशक्तिवैधव्यादिव वैधव्ये सति दन्तवलयानि स्फेट्यन्ते । तथा अपघनेन शरीरेण घनतरं प्रचुरतरं तरङ्गयितव्यं त्वक्कोचकल्लोलयितव्यम् । त्वक्संकोचलहरीभिर्भवितव्यमित्यर्थः । कस्मात् । उत्प्रेक्षते—मोहानिलविजृम्भणादिव । वायुविजृम्भणे प्रसरणे जलाशये तरङ्गा भवन्तीति भावः । तथा पृष्ठवंशेन नितान्तमवनमनीयं समन्तान्निम्नेन वक्रेण भवनीयम् । कस्मात् । उत्प्रेक्षते—सरसत्वक्षयादिव सरसताविनाशादिव । सरसताविनाशेन वक्रं नमति । तथा स्नसानलजालेन महातरुलताजालेन अत्यर्थमतिशयेन प्रकटितव्यं प्रकटनीयम् । कस्मात् । उत्प्रेक्षते—लावण्यजलधिगलनादिव लावण्यमेव जलधिस्तस्य गलनात् जलविनाशात् । जले निर्गलिते सति नलसराः प्रकटीभवन्ति । तथा अङ्गेन शरीरेण प्रकाममतिशयेन वेपितव्यम् । वेपनीयमित्यर्थः । कस्मात् । उत्प्रेक्षते—आसन्नतरमरणभयादिव । यस्यां पुनः लक्ष्म्यां संपदि अयं महान् लोकस्याग्रह आदरो वर्तते, सा लक्ष्मीः दैवात् दैवयोगात् करं हस्तमुपागतापि सती स्थिरा निश्चला न भवति । केव । सूतककणिकेव पारदरसलेश इव । तथा सा लक्ष्मीः संगच्छमानापि संजायमानापि अवश्यं निश्चयेन कांचिद्विपदं कामप्यापदं जनयत्युत्पादयति । केव । खलमैत्रीव । यथा खलस्य पिशुनस्य मैत्री मित्रत्वं कामप्यापदमुत्पादयति । तथा सा लक्ष्मीर्लब्धापि सती परिणमयितुं जरयितुं न शक्यते । केव । अपामार्गयवागूरिव शेखरिकबीजमिव प्रचटिकेव । सा किल मासेनैकेन जीर्यति । तथा सा लक्ष्मीः प्रयत्नपरिपालितापि यत्नेन रक्षितापि उपपतौ अपरस्मिन् पुरुषे अभिलाषं करोति । केव । कुलटेव । यथा कुलटा पुंश्चली उपपतौ जारे अभिलाषं करोति । तथा सा लक्ष्मीरनुभूयमानापि भुज्यमानापि सती अन्तःकरणं मनो मोहयति अज्ञानं करोति । केव । मदिरेव । यथा मदिरा सुरा भुज्यमानापि अनुभूयमानापि मोहयति। तथा सा लक्ष्मीर्गतापि नष्टापि सती असंतापयन्ती संतापमकुर्वती न व्यवतिष्ठते । केव । ग्रहोपरागलेखेव चन्द्रार्कग्रहणरेखेव । चन्द्रग्रहणे गतेऽपि सति राजप्रजादिषु पीडा भवत्येव । तथा सा लक्ष्मीः

केवलं महापुरुषेषु प्रतिष्ठां प्रत्यवसादयितुम्, दुर्जनेषु क्षणमात्रं सखीभावमुपयाति । अलमतिविस्तरेण । अहं तावत्परवशेनैव गलितमोहपाश इवाभूवम् । किं तु सकलजनविदितमप्रियं न मे किमप्यस्ति प्रव्रजतः । पाणिपरिगृहीता भुजङ्गीव सकृदेव मोक्तुमशक्या चेयं राज्यलक्ष्मीः । **कष्टश्च खलु महत्यैश्वर्ये** देहिनामात्मलाभः, यत्र श्रायसमपि कर्माचरितुं न लभ्यते स्वातन्त्र्येण । मन्ये च मद्दर्शनावलम्बनजीविता कुलदेवतेव न मामनुमंस्यते तपस्यायामम्बादेवी । नवे च वयसि मयि संजातनिर्वेदे विधास्यन्तेऽशुभकर्मपरिणामा इव संहत्य मन्त्रिणो मनीषितस्यान्तरायम् । इयतोऽवस्थान्तरस्य हेतुर्लोकरञ्जनेनापि भविष्यति मे विष्टिरिव प्रस्थानविघातकारि**ण्यमृतमति**महादेवी । दुष्करमसमग्रहसंदोह इव श्रेयसि मामनुलोमयिष्यति सामन्तनिवहः ।

---

साहसैः कृत्वा उपस्थिताप्यागतापि सती केवलं महापुरुषेषु महानुभावेषु प्रतिष्ठां शोभां प्रत्यवसादयितुं विनाशयितुं छलयति वञ्चयति । केव । राक्षसीव । यथा राक्षसी साहसैरागतापि सती सत्पुरुषेषु शोभां विनाशयति । तथा सा लक्ष्मीर्दुर्जनेषु क्षणमात्रं मुहूर्तमेकं सखीभावं सखीत्वं उपयात्युपगच्छति । अलमतिविस्तरेण । पूर्वं अहं यशोधरस्तावदनुक्रमेण परवशेनैव पराधीनत्वेनैव गलितमोहपाश इव अभूवं संजातः । किं तु मे मम प्रव्रजतो दीक्षां गृह्णतः अप्रियं किमपि नास्ति । कथंभूतमप्रियम् । सकलजनविदितं सर्वलोकविख्यातम् । एकं पूर्वोक्तं वैराग्यकारणं विहाय अन्यन्मे विप्रियं वैराग्यकारणं किमपि नास्ति । पाणिपरिगृहीता हस्तेन धृता भुजङ्गीव राज्यलक्ष्मीः····································यत्र महत्यैश्वर्ये श्रायसमपि कर्म श्रेयस्करमप्याचरणं स्वातन्त्र्येण स्वाधीनतया आचरितुं न लभ्यते कर्तुं न शक्यते । 'शिंशिपादीनां वृद्धेरपवादः' इत्यनेन सूत्रेण आकारो वक्तव्यः । शिंशिपाया इदं शांशिपम् । तथा श्रेयसि भवं श्रायसम् । मन्ये च जानामि च मद्दर्शनावलम्बनजीविता मदवलोकनाधारेण प्राणिता कुलदेवतेव गोत्रदेवीव अम्बादेवी चन्द्रमतिमहादेवी मन्माता तपस्यायां प्रव्रज्यायां नानुमंस्यते नानुज्ञां दास्यति । नवे च वयसि यौवने मयि विषये संजातनिर्वेदे उत्पन्नसंसारशरीरभोगवैराग्ये मन्त्रिणः सचिवाः संहत्य एकत्रीभूय मनीषितस्य मनोवाञ्छितस्य अन्तरायं विघ्नं विधास्यन्ते करिष्यन्ति । क इव । अशुभकर्मपरिणामा इव पापकर्मोदया इव । इयतः एतावतः अवस्थान्तरस्य वैराग्यस्य हेतुः कारणभूता लोकरञ्जनेनापि अमृतमतिमहादेवी अजितमहाराजनन्दना प्रस्थानविघातकारिणी तपोवनगमननिषेधका मे मम भविष्यति संजनिष्यति । केव । विष्टिरिव सप्तमकरणमिव । श्रेयसि श्रेयस्करे कर्मणि मोक्षसाधने सामन्तनिवहो मदाज्ञावर्तिनृपसमूहः यत् अनुलोमयिष्यति सानुकूलो भविष्यति तद्दुष्करं दुःसाध्यम् । सामन्तनिवहः क इव । असमग्रहसंदोह इव विषमग्रहसमूह इव



प्रार्थिते वस्तुनि पाश इव करिष्यति गतिभङ्गं पादयोः पतन्निसर्गप्रणयी युवराजः । किमेकविषलतादोषादेव सकलमपि वनमुपहन्तुं युक्तमिति विलपदन्तःपुरं शिवाकुलमिव विघ्नयिष्यत्यभिलषितयात्रासमयम् । तिर्यग्गमिष्यन्ति च पतत्रिण इव पुरवृद्धाः कामितस्य प्रतिलोमनाय । यतः ।

> अप्रार्थितोऽपि जायेत पापायाग्रेसरो जनः ।
> धर्मानुष्ठानवेलायां निसर्गात्प्रतिलोमनः ॥

तदहमत्र कं नु खलूपायमारचयामि । अथवा रचित एवोपायः । तथा हि—यदीयं विभावरी कुशलेन विभास्यति, तदा **सर्वावसरं** सभामण्डपमास्थायाहूय चाम्बादेवीमखिलं चानुचरलोकमिदमेकमशिक्षितमनुभूतपूर्वमनुचितमप्युपस्थितघङ्घलनिस्तरणो निकटकूटकपटमनुष्ठास्यामि । भवति हि

---

पिशाचवृन्दमिव । प्रार्थिते वस्तुनि तपश्चरणकरणे गतिभङ्गं करिष्यति गमनान्तरायं विधास्यति । कोऽसौ । निसर्गप्रणयी स्वभावस्नेहवान् युवराजो यशोमतिकुमारः । किं कृत्वा गतिभङ्गं करिष्यति । पादयोः पतन् चरणग्रहणं कुर्वन् । क इव । पाश इव । यथा पादयोः पतितः पाशो गतिभङ्गं करोति । किं एकविषलतादोषात् एव सकलमपि वनं उपहन्तुं युक्तं छेत्तुं सांप्रतम् इति ईदृशं विलपत् अर्थकं ब्रुवत् अन्तःपुरं मत्पत्नीसमूहः अभिलषितयात्रासमयं तपोवनगतं विघ्नयिष्यति अन्तरे एष्यति । किमिव । शिवाकुलमिव शृगालीसमूहमिव । तिर्यग्गमिष्यन्ति कामितस्य प्रतिलोमनाय तपोवनगमनविरोधनाय । के ते । पुरवृद्धा नगरमहर्द्धिकाः । क इव । पतत्रिण इव । प्रस्थाने अग्रमागताः पक्षिणः अपशकुनं भवति । यतो यस्मात् कारणात् । **अप्रार्थित इत्यादि** । अप्रार्थितोऽपि अयाचितोऽपि जनो लोकः पापाय पापनिमित्तं अग्रेसरो जायेत वर्तको भवति । धर्मानुष्ठानवेलायां पुण्यकर्मविधानावसरे निसर्गात् स्वभावेन प्रतिलोमनः प्रतिकूलो भवति । तत्तस्मात् कारणादहं यशोधरः अत्र तपोवनगमने । नु इति वितर्के । खलु निश्चयेन । कमुपायमारचयामि । अथवा रचित एवोपायो लब्ध एवोपायः । तथाहि । तमेवोपायं दर्शयति—यदि चेदियं विभावरी अद्यतनी रात्रिः कुशलेन निर्विघ्नेन विभास्यति यास्यति, तदा तस्मिन् काले सर्वावसरं नाम सभामण्डपं आस्थाय तत्रोपविश्य । 'अधिशीङ्स्थासां कर्म' इति वचनादधिकरणे द्वितीया । अम्बादेवीं चन्द्रमतीं अखिलं अनुचरलोकं च आहूय आकार्य इदं वक्ष्यमाणलक्षणोपलक्षितं निकटकूटकपटं अनुष्ठास्यामि अनुष्ठानं करिष्यामि । कथंभूतं निकटकूटकपटम् । एकमद्वितीयम् । पुनः कथंभूतम् । अशिक्षितं न केनापि उपदिष्टम् । पुनः कथंभूतम् । अनुभूतपूर्वं पूर्वमनुभवमागतम् । पुनः कथंभूतम् । अनुचितमपि अयुक्तम् । कस्मात् करिष्यतीत्याह तत्कारणगर्भितं विशेषणमाह—

मृषोद्यमपि प्रायेण ब्रह्मोद्यकर्मणे, यत्रात्मनो नैहिकामुत्रिकफलविलोपः। मायापि खलु परं निःश्रेयसमेवारभते, या न भवति परेषां परमार्थतः प्रतारणकरी। बहिरतिपरुषापि क्रिया सुकृतमेवातनोति, यदि न मनस्तमोबहुलम्। अवसानेष्वन्यथावृत्तिरपि व्यापारो न करोति कामप्यर्थक्षतिम्, यदि न विनेयानां जनयति व्यसनानि। तथा च प्रवचनम्—**वासुपूज्य**भगवतो वन्दनामिषेण गतो **मिथिलानगरीनाथः पद्मरथो** बभूव **गणधरदेवः**। मातुः कानिचिद्दिनानि दन्तारोऽपि पञ्चशतयुवतिरतिमारः **सुकुमारश्च** साधयामासा-

---

कथंभूतोऽहम्। उपस्थितघङ्घलनिस्तरणः समागतव्यसननिवारकोऽहं यस्मात्। भवति संजायते हि यस्मात् कारणात् मृषोद्यमपि असत्यवचनं प्रायेण बहुलतया ब्रह्मोद्यकर्मणे श्रेयसे भवति, यत्र मृषोद्ये आत्मनो निजजीवस्य ऐहिकामुत्रिकफलविलोपो न भवति इहलोकपरलोकसुखविनाशो न भवति। मायापि कूटकपटोऽपि। खलु वाक्यालंकारे निश्चये वा। परमुत्कृष्टं निःश्रेयसमेव शुभमेवारभते शुभमेव करोति, या माया परेषामपरप्राणिनां परमार्थतो निश्चयेन प्रतारणकरी वञ्चनकरी न भवति। 'आइरियाणां कालो माया कर्मो यतित्थनाहस्स' इति वचनात्। तथा चोक्तं लौकिकं वचनम्—'[1]···नर्ममुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि॥' बहिरतिपरुषापि क्रिया लोचनकरणानि उपवासदानादिकापि सुकृतमेवातनोति करोति, यदि चेत् मनस्तमोबहुलं सश्लेषपरं न भवति। अवसानेषु प्रान्तेषु अन्यथावृत्तिरपि व्यापारः असत्यव्यापारोऽपि कामपि कांचिदपि अर्थक्षतिं पुण्यविनाशं न करोति न विदधाति यदि चेत् विनेयानां शिख्या(ष्या)नां व्यसनानि दुःखानि न जनयति। तथा च प्रवचनं सिद्धान्तवचनम्। किं तत्—मिथिलानगरीनाथः पद्मरथो नाम राजा वासुपूज्यभगवतो द्वादशतीर्थंकरस्वामिनो वन्दनामिषेण वन्दनाभक्तिच्छलेन गतश्चम्पां पुरीं प्राप्तो दीक्षां गृहीत्वा गणधरदेवो बभूव। चान्यत् सुकुमारः सुकुमालस्वामी अभिमतं दीक्षाग्रहणं साधयामास समाधितवान्। कथंभूतः सुकुमारः। मातुर्निजजनन्याः कानिचित् कियन्त्यपि दिनानि दन्तारोऽपि एतावत्सु दिनेष्वहं दीक्षां न गृहीष्यामीति उक्तवचनोऽपि। पुनः कथंभूतः सुकुमारः। पञ्चशतयुवतिरतिमारः पञ्चशतसंख्या या युवतिरतयस्तासां मारः कामदेवसदृशः। कथमेतत्। अस्यामेवोज्जयिन्यां नगर्यां महति वणिग्वरकुले लब्धजन्मा सुकुमारस्वामी किल मुनिदर्शनमात्रेणैव यतिर्भविष्यतीति कल्पितलग्नः सपत्नैस रक्षमाणोऽपि

---

१. 'विवाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे। विप्रस्य चार्थे ह्यनृतं वदेत पञ्चानृतान्याहुरपातकानि॥' इति कर्णपर्वणि जिष्णुं प्रति कृष्णोक्तिः.



भिमतम्। तदविलम्बम् अम्ब मन्मनोरथानां कल्पलतिके, निशमय ममैकां विज्ञप्तिम्। अयमामुक्तस्तत्रभवत्याः प्रणामाञ्जलिः। निसर्गैकस्वभाव समस्तकार्यप्रारम्भनिर्विघ्नमन्त्रप्रभाव सचिवलोक, त्वमपि मनागवधानं कर्तुमर्हसि। उदितोदितकुलशीलादिगुणधरणे दुरापफलसंपादनचिन्तामणे पुरोहित, सपादपतनं याचितोऽसि। प्रयच्छेतः प्रियशिष्याय कर्णम्। वीरश्रीविलासकमलाकर सकलदिग्वलयप्रसाधनकर सेनापते, भव व्यासङ्गमपहाय प्रयतचेताः। कीर्तिसुधाधवलिताशेषराजनिवास महाहवभरारम्भनिर्व्यूढम-

---

दैवयोगात् संजातमुनिदर्शनः सन् संजाततपश्चरणोद्यमश्च जनन्या प्रार्थितः, 'हे पुत्र, प्रत्येकं निजपत्नीगृहेषु एकैकं दिनं संसारसुखमनुभूय त्वया तपश्चरणं कर्तव्यम्' इति तदुपरोधात् सदैवाभ्युपागम्य निजोद्यानवासिनो महामुनेः सकाशात् स्वकीयस्यायुषोऽल्पत्वं उपनिशम्य अन्तराले एव प्रव्रजितवान्। तत्तस्मात् कारणात् अविलम्बं शीघ्रमेव हे अम्ब हे मातश्चन्द्रमते। हे कथंभूते। मन्मनोरथानां कल्पलतिके मम दोहदानां पूरणे कल्पवल्लिके, तत्रभवत्याः पूज्यायाः मया प्रणामाञ्जलिः प्रणामसंबन्धिहस्तयोजनं अयमामुक्तः कृतः प्रणामाञ्जलिर्बद्धः। त्वं ममैकां विज्ञप्तिं विज्ञापनं निशमय शृणु। हे सचिवलोक, त्वमपि भवानपि मनागीषदवधानमेकाग्रतां कर्तुमर्हसि। हे कथंभूत। हे निसर्गैकस्वभाव अव्यभिचारप्रकृत। हे समस्तकार्यप्रारम्भनिर्विघ्नमन्त्रप्रभाव·······························
निर्विघ्नो निःप्रत्यूहो मन्त्रप्रभावो यस्य स तथा तस्य संबोधनं हे तथोक्त। ·······························। हे उदितोदितकुलशीलादिगुणधरणे उदितोदिता उदयवन्तोऽप्युदयवन्तो ये कुलशीलादिगुणाः कुलं शुच्यन्वयम्, शीलं च परस्त्रीपराङ्मुखत्वम्, आदिशब्दात् सद्वृत्तविधुरोपकारादयः, ते च ते गुणा उपकारास्तेषां धरणिधरा तस्य संबोधनं हे तथोक्त। आविष्टलिङ्गत्वात् स्त्रीत्वं न त्यजति। हे दुरापफलसंपादनचिन्तामणे दुःखेन महता कष्टेन आप्तुमशक्यानि दुरापाणि तानि च तानि फलानि अपूर्वलाभास्तेषां संपादने प्राप्तिकरणे चिन्तामणिः दिव्यरत्नं तस्य संबोधनं हे तथोक्त। हे पुरोहित शान्तिकर्मविधायक गुरो, सपादपतनं चरणावलग्नपूर्वकं याचितोऽसि त्वं मया प्रार्थितोऽसि। इत एतस्मिन् विषये प्रियशिष्याय वल्लभविनेयाय मह्यं कर्णं प्रयच्छ देहि। हे वीरश्रीविलासकमलाकर वीरश्रियो विलासाय कमलाकरः कमलवनं तस्य संबोधनं हे तथोक्त। हे सकलदिग्वलयप्रसाधनकर सकलं दिग्वलयं तस्य प्रसाधनं वशीकरणं करोषीति स तथा तस्य संबोधनं हे तथोक्त। हे सेनापते चमूनाथ, व्यासङ्गमनेकाग्रतामपहाय परित्यज्य प्रयतचेताः सावधानमनास्त्वं भव संजायस्व। हे कीर्तिसुधाधवलिताशेषराजनिवास कीर्तिः सैव सुधा श्वेतचूर्णं इव तया धवलिता उज्ज्वलीकृता अशेषाः समग्रा राजनिवासा नृपाणां मन्दिराणि येन स तथा तस्य संबोधनं हे तथोक्त। हे महाहवभरारम्भनिर्व्यूढमहा-

हासाहस सामन्तसमाज, समाकर्णय सम्यगिममुदन्तव्यतिकरम् । राज्यलक्ष्मीरक्षाक्षमप्रतापप्रसर निखिलमण्डलेश्वरप्रणामकर्कशकर दौवारिक, निषीदावधारयितुमेनं वृत्तान्तम् । एवमन्योऽपि यः कश्चिन्मत्प्रणयी परिजनः स क्षणमेकमनन्यमनाः शृणोतु । अद्य विभातशेषायां निशि स्वप्नमहमेवमदर्शम्—आत्मनः किलापनीय राज्यभारं **यशोमतिकुमार** इव निहितवान् । विहाय राजधानीमाश्रमावन्यामिव प्राविक्ष्य(क्ष)म् । उत्सृज्य कनकासनमुपलगहन इवोपविष्टवान् । अवमत्य राजमन्दिरमद्रिकन्दरमिवाशिश्रियम् । अवधूय वसुधाधिपत्यचिह्नानि तपःश्रीलिङ्गानीव गृहीतवान् । परिहृत्य विषयरसमनुष्ठानमानस इवाभूवम् । विमुच्य भवादृशं परिजनं मुमुक्षुजनैरिव संग-

---

साहस महाहवभरारम्भेषु महासंग्रामभारप्रारम्भेषु निर्व्यूहमानीतानि महासाहसानि महाद्भुतकर्माणि येन स तथा तस्य संबोधनं हे तथोक्त । हे सामन्तसमाज मन्विष्टवर्तिनृपसमूह, इमं प्रत्यक्षीभूतमिममुदन्तव्यतिकरं वृत्तान्तप्रघटकं सम्यक्सावधानतया समाकर्णय संमुखीभूय त्वमाकर्णय । हे राज्यलक्ष्मीरक्षाक्षमप्रतापप्रसर राज्यलक्ष्म्या रक्षायां प्रतिपालने क्षमः समर्थः प्रतापप्रसरो यस्य तस्य संबोधनं हे तथोक्त । हे निखिलमण्डलेश्वरप्रणामकर्कशकर निखिलानां मण्डलेश्वराणां परचक्राधिपतीनां प्रणामे नम्रीकरणे कर्कशः कठिनतरः करः पाणिर्यस्य स तथा तस्य संबोधनं हे तथोक्त । हे दौवारिक प्रतीहार, एनं प्रत्यक्षीभूतं वृत्तान्तं मद्वार्तां अवधारयितुं निषीद त्वमुपविश । एवममुना प्रकारेण अन्योऽपि अपरोऽपि यः कश्चित् मत्प्रणयी मयि स्नेहवान् परिजनः कुटुम्बवर्गः वर्तते स सर्वोऽपि क्षणमेकं अनन्यमनाः सावधानचित्तः सन् शृणोतु । किमाकर्णयत इति चेत्—अद्य अस्यां निशि रात्रौ अहं यशोधर एवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण स्वप्नं अदर्शं[1] दर्शवानहम् । 'यत्तृष्योरणि' इति वचनादगुणे गुणः । कथंभूतायां निशि । विभातशेषायां विभातः प्रभातः शेष उर्वरितो यस्या निशः सा विभातशेषा तस्याम् । पश्चिमरात्राविल्यर्थः । तत्किमित्याह—किलेति लोकोक्तौ शास्त्रोक्तौ वा निश्चये वा । आत्मनो राज्यभारं अपनीय दूरीकृत्य यशोमतिकुमारे युवराजे निहितवानिव स्थापितवानिव । राजधानीं पत्तनमिदं विहाय परित्यज्य आश्रमावन्यां तपोवने प्राविक्षमिव प्रविष्टवानिव । कनकासनं सुवर्णसिंहासनमुत्सृज्य परित्यज्य·········
·······································अद्रिकन्दरं पर्वतगुहां आशिश्रियमिव आश्रितवानिव । वसुधाधिपत्यचिह्नानि छत्रचामरादीनि अवधूय परित्यज्य तपःश्रीलिङ्गानि तपोलक्ष्मीचिह्नानि पिच्छकमण्डल्वादीनि गृहीतवानिव जगृहे इव । विषयरसं स्वादं परिहृत्य परित्यज्य [2]अनुष्ठानमानसे क्रियासरोवरे अभूवमिव बभूवेव ।

---

१. 'दृष्टवानहम्' इति स्यात्. २. 'अनुष्टान्तर्मानसे क्रियाकलेवरे' इति स्यात्.



तोऽस्मि । परित्यज्य विलासिनीजनमरण्यलतावनमिवोपागूहिषम् । अवगणय्य बान्धवेषु परिचितत्वमटवीसत्त्वेष्विव प्रीतिं गतवान् । एवमन्यान्यप्यनेकशः संसारसुखविमुखानि मत्पुराकृतपुण्यावसानसूचनोल्लेखानि चतुर्थपुरुषार्थसमर्थनोचितानि स्वप्नजातान्यद्राक्षम् । अवबुद्धश्च तदैवाहं वदतापि केनचिद्विबोधित इव । सत्यफलाश्च भवन्ति प्रायेण निशावसानेष्ववलोकिताः स्वप्नाः । नापि मे तामसगुणमयी दोषमयी वा प्रकृतिः, येनान्यथापि संभाव्येरन् । न चामीष्विहामुत्र च विरोधाश्रितं किंचिन्निरीक्षितम् । अपि च ।

---

भवादृशं परिजनं विमुच्य परित्यज्य मुमुक्षुजनैर्महामुनिभिः सह संगतोऽस्मीव । विलासिनीजनं स्त्रीसमूहं परित्यज्य परिहृत्य अरण्यलतावनं वनलताकान्तारं उपागूहिषमिव आलिङ्गितवानिव । बान्धवेषु भ्रात्रादिवर्गेषु परिचितत्वं परिचयं अवगणय्य परित्यज्य अटवीसत्त्वेषु हरिणादिषु प्रीतिं गतवानिव । एवमन्यान्यपि अपराण्यपि अनेकशः अनेकविधानि स्वप्नजातानि समूहानि अद्राक्षं दृष्टवानहम् । कथंभूतानि स्वप्नजातानि । संसारसुखविमुखानि आजवजवीभवत्सुखपराङ्मुखानि त्याजकानि । पुनः कथंभूतानि । मत्पुराकृतपुण्यावसानसूचनोल्लेखानि मम पुराकृतस्य पूर्वजन्मोपार्जितस्य पुण्यस्य शुभकर्मणः अवसानस्य विनाशस्य सूचने ज्ञापने उल्लेखो उद्देशो येषां येषु यैर्वा तानि तथोक्तानि । पुनः कथंभूतानि । चतुर्थपुरुषार्थसमर्थनोचितानि चतुर्थस्य तुरीयस्य तुर्यस्य पुरुषार्थस्य मोक्षस्य समर्थने दृष्टीकरणे उचितानि । यथाहं स्वप्नजातानि अद्राक्षं तदिव तद्वत् अवबुद्धश्च जागरितश्च । कथंभूतोऽहम् । वदतापि केनचिद्विबोधित इव जागरित इव । इनीटो लोपः । स्वप्नाश्च निशावसानेषु अपररात्रि(त्र)पर्यन्तेषु अवलोकिताः प्रायेण सत्यफला भवन्ति । नापि मे मम तामसगुणमयी तामसी प्रकृतिर्वर्तते । सत्वरजस्तमोभिनिर्वृत्तत्वात् प्रकृतिस्त्रिविधा भवति । तत्र सत्वेन धर्मपरिणामेन निवृत्ता दैन्यगुणैः संजाता तामसी । तत्र सात्विक्या प्रकृत्या यः स्वप्नो दृश्यते स सत्यफलो भवति । तदन्यया प्रकृत्या यः स्वप्नो दृष्टः स मिथ्याफलो भवति । तदहं कथयामि तामसगुणमयी प्रकृतिर्न मे वर्तते । तथा दोषमयी वा प्रकृतिर्मे न वर्तते वा पित्तश्लेष्ममयी प्रकृतिर्नास्ति । तेनैते स्वप्नाः सत्यफला ज्ञायन्ते, येन कारणेन अन्यथापि असत्यफला अपि स्वप्नाः संभाव्येरन् । ज्ञायन्त इत्यर्थः । तथा चोक्तं जगद्देवेन मणकविना—'रतिहासशोककोपोत्साहजुगुप्साभयोत्पन्नः । वितथा क्षुधापिपासामूत्रपुरीषोद्भवः स्वप्नः ॥' न च नैव अमीषु स्वप्नेषु मध्ये इह अस्य जन्मनः अमुत्र च भविष्यज्जन्मनो विरोधाश्रितं विनाशकं किंचित् किमपि निरीक्षितमस्ति । अपि च तथा च ।

श्रुतान्यधीतानि, मही प्रसाधिता, दत्तानि वित्तानि यथार्थमर्थिने ।
पुत्रोऽप्ययं वर्महरः प्रवर्तते, सर्वत्र संपूर्णमनोरथागमः ॥

विषयजोऽपि सुखतर्षो न मे मनः प्रायेण प्रत्यवसादयितुमीश्वरः । यतः ।

सकृद्विज्ञातसारेषु विषयेषु मुहुर्मुहुः ।
कथं कुर्वन्न लज्जेत जन्तुश्चर्वितचर्वणम् ॥

न श्रमान्तकसंपर्कात्सुखमन्यद्भवोद्भवम् ।
तेन सन्तः प्रतार्यन्ते यदि तत्त्वज्ञता हता ॥

बाल्ये विद्याग्रहणादीनर्थान्कुर्यात्, कामं यौवने, स्थविरे धर्मं मोक्षं चेत्यपि, नायमेकान्ततोऽनित्यत्वादायुषो यथोपपदं वा सेवेतेत्यपि श्रुतेः । अपि च ।

---

**श्रुतानीत्यादि** । श्रुतानि शास्त्राणि अधीतानि पठितानि । मही पृथ्वी प्रसाधिता वशीकृता । अर्थिने प्रियोजनवत्पुरुषा यथार्थं यथोक्तं वित्तानि धनानि दत्तानि विश्राणितानि । पुत्रोऽपि अयं यशोमतिकुमारः वर्महरः कवचधरः प्रवर्तते । सर्वत्र सर्वस्मिन् कार्ये संपूर्णमनोरथागमः परिपूर्णमनोरथप्राप्तिकोऽहं वर्ते । समुच्चयालंकारः ॥

**विषयज इत्यादि** । विषयजोऽपि स्पर्शादिविषयोत्पन्नोऽपि सुखतर्षः सुखाभिलाषो मे मम मनः कर्मतापन्नं प्रायेण बाहुल्येन प्रत्यवसादयितुं खादितुं ईश्वरः समर्थो न वर्तते । यतः यतः कारणात् ।

**सकृदित्यादि** । सकृद्विज्ञातसारेषु सकृदेकवारं विज्ञातः परीक्षितः सारः श्रेष्ठत्वं बलं वा येषां विषयाणां ते सकृद्विज्ञातसारास्तेषु विषयेषु इष्टस्रग्वनिताचन्दनादिषु मुहुर्मुहुः वारंवारं चर्वितचर्वणं आस्वादितास्वादनं कुर्वन् अनुतिष्ठन् जन्तुर्जीवः कथं केन प्रकारेण न लज्जेत न लज्जां कुर्यात् । आक्षेपालंकारः ॥

**न श्रमेत्यादि** । श्रमान्तकसंपर्कात् श्रमान्तके सुरतक्रीडापर्यन्ते यः संपर्कः संस्पर्शः सुखानुमानं श्रमान्तकसंपर्कस्तस्मात् अन्यदपरं भवोद्भवं संसारोत्पन्नं सुखं निर्वाणं न वर्तते । तेन सुखेन यदि चेत् सन्तो विद्वांसः प्रतार्यन्ते वञ्च्यन्ते तर्हि तेषां तत्त्वज्ञता हता तत्त्वज्ञानं नष्टमेव । जातिरलंकारः ॥

**बाल्ये इत्यादि** । बाल्ये शिशुत्वे विद्याग्रहणादीन् विद्याभ्यासगुणादीन् अर्थान् कार्याणि कुर्यात् विदध्यात् । यौवने तारुण्ये कामं कामसेवां कुर्यात् विदध्यात् । स्थविरे वृद्धत्वे धर्मं मोक्षं च कुर्यात् । इत्यपि । यथोपपदं वा यथाप्रस्ताव वा कामादीन् सेवेत भुञ्जीत इत्यपि वचनं श्रुतेर्वेदस्य । अयं प्रत्यक्षीभूत एकान्ततो न वर्तते । कस्मात् । आयुषः आयुःकर्मणोऽनित्यत्वादस्थिरत्वात् । अपि च तथा च ।






ध्यानानुष्ठानशक्तात्मा युवा यो न तपस्यति ।
स जराजर्जरोऽन्येषां तपोविघ्नकरः परम् ॥

तदहमेतत्स्वप्नदर्शनमशून्यपरामर्शनं कर्तुमीहे, यदि तत्रभवन्तो न मे भवन्त्युत्सर्गाणामपवादा इव प्रतिबन्धोपायाः । प्रत्युपपन्नं चैतत् । पुरा हि युष्माकमेकैकशः परिगणनातीतानि परिमुखेनाप्यभ्यर्थितान्यहं संपादितवान् । भवद्भिः पुनरशेषैः किमेकमपि स्वयमभ्यर्थितं न मे संपाद्यत इति । तथाप्यमी परमार्थेन प्रतिस्वप्नव्याजेन वा तपस्यायां यदि न मामनुमंस्यन्ते, निरस्याप्येतानात्महितमनुष्ठास्यामि । को नु खलु विघटितं चेतः स्फटिकवलयमिव मुधापि संधातुमर्हति । निसर्गादस्निग्धे हि म-

---

**ध्यानेत्यादि** । यः पुमान् युवा तरुणः सन् न तपस्यति तपो न विदधाति । कथंभूतः । ध्यानानुष्ठानशक्तात्मा ध्याने चिन्तानिरोधलक्षणे अनुष्ठाने क्रियाकरणे शक्तः समर्थ आत्मा यस्य स तथा । स पुमान् जराजर्जरो जरया भग्नशरीरस्तपस्यन् सन् अन्येषामपरतपस्विनां परं केवलं तपोविघ्नकरो भवति । अन्यस्मात् निजशुश्रूषां कारयन्नित्यर्थः ॥

तत्तस्मात् कारणात् अहमेतदिदं स्वप्नदर्शनं अशून्यपरामर्शनं सकलविचारणं कर्तुमीहे इच्छामि, यदि चेत् तत्रभवन्तो यूयं प्रतिबन्धोपाया निषेधोपाया मे मम न भवन्ति भवथ । भवन्तः क इव । अपवादा इव । यथा अपवादा विशेषोक्तविधयः उत्सर्गाणां सामान्योक्तविधीनां प्रतिबन्धोपाया भवन्ति । 'उत्सर्गापवादयोरपवादो विधि[1]र्नलनान्' इ[ति] वचनात् । प्रत्युपपन्नं चैतत् प्रतिपन्नं पालितं भवतीदं भवद्भिः । पुरा पूर्वं हि यस्मात् कारणात् युष्माकं भवतां एकैकशः परिगणनातीतान्यगणितानि अभ्यर्थितानि प्रार्थितानि परिमुखेलापि तंलादितवान् । भवद्भिर्युष्माभिः पुनरशेषैरपि सर्वैरपि स्वयमेकमभ्यर्थितं मे मम किं न संपाद्यते इति नोत्पद्यते । तथापि भवद्भिर्मम प्रार्थितं न संपाद्यते । अमी भवन्तो यदि मां तपस्यार्थां(यां) तपश्चरणे न अनुमंस्यन्ते गन्तुं······ तर्हि प्रतिस्वप्नव्याजेन स्वप्नप्रति[3]पालितविशेषण परमार्थेन वा एतान् निरस्य निषेध्यापि आत्महितं तपोवनगमनं अनुष्ठास्यामि करिष्यामि । नु इति वितर्के प्रश्ने वा । खलु निश्चयेन । विघटितं चेतः मुधापि निरर्थकमपि संधातुं कोऽर्हति । अपि तु न कोऽपि संधानं कर्तुं योग्यो भवति । किमिव । स्फटिकवलयमिव स्फटिकमणिकङ्कणमिव । यथा स्फटिकमणिवलयं स्फुटितं न कोऽपि संदधाति संधानं करोति । निसर्गात्

---

१. 'बलवानिति' इति स्यात्. २. 'नापि संपादि-' इति स्यात्. ३. 'पालमिषेण पर-' इति स्यात्.

नसि मरुभूम्यामिव वृथा भवन्ति परजनस्य रसानयनक्लेशाः । अन्यत्र कृतनिश्चये हि चेतसि मरणोपदेश इव विफलो भवति निकटवर्तिनां प्रतिकूलतया मनःसमागमनविनियोगः । स्वभावनिष्ठुरं हि मनः शिलाशकलमिव न देवोऽपि शक्नोति पल्लवयितुम् । अभिनिवेशकर्कशे हि हृदये कुलिश इव न प्रवेशं लभन्ते गुणवत्योऽपि वधूनां प्रार्थनाः । किं च ।

देवस्यापि वचः प्रायः पुंसि जाताग्रहग्रहे ।
ऊषरे वर्षवन्न स्याद्गुणकारि मनागपि ॥

इति संकल्प्य अवश्यमिह जन्मनि न मे शयनतलमारोहन्ति महिला इति

---

स्वभावेन अस्निग्धे स्नेहरहिते मनसि चित्ते । हि निश्चयेन । परजनस्य अन्यलोकस्य रसानयनक्लेशा वृथा भवन्ति । कस्यामिव । मरुभूम्यामिव मरुस्थले इव । यथा मरुभूमौ परहस्ते पानीयं दृष्ट्वा स्वयं तृषिते सति नयनयोः क्लेशा भवन्ति, तथा तपःपिपासायां जनशृङ्गाररसदर्शनं नेत्रयोः संतापाय भवति । अन्यत्र प्रव्रज्यादौ कृतनिश्चये विहितनियमे चेतसि सति । हि निश्चयेन । निकटवर्तिनां पुरुषाणां प्रतिकूलतया प्रतिलोमतया मनःसमागमनविनियोगः चित्तस्य पश्चादायनाधिकारो विफलो भवति । क इव । मरणोपदेश इव । त्वं म्रियस्व इत्युपदेशवान् यथा कोऽपि किंचित् कर्तुमीहते तस्य पुरुषस्य मरणोपदेशः कथं दीयते । स मरणोपदेशो दत्तोऽपि विफलो भवति । स्वभावनिष्ठुरं निसर्गेण कर्कशं मनः । हि यस्मात् । देवोऽपि आस्तां तावन्मनुष्यः पल्लवयितुं न शक्नोति उल्लासयितुं न समर्थो भवति । किमिव । शिलाशकलमिव पाषाणखण्डं किं पल्लवान् मुञ्चति । अभिनिवेशकर्कशे अभिप्रायेण कठिने हृदये । हि निश्चयेन । वधूनां प्रार्थना याचनानि गुणवत्योऽपि गुणकारिण्योऽपि प्रवेशं संक्रमणं न लभन्ते । कस्मिन्निव । कुलिशे वज्रे गुणप्रवेशो न भवति । किं च स्तोकमावेदयामि—**देवस्येति** । देवस्यापि वचः प्रायो जाताग्रहग्रहे उत्पन्नाग्रहपिशाचे पुंसि मनागपि गुणकारि उपकारकं न स्यात् । किंवत् । ऊषरे वर्षवत् क्षारभूमौ मेघवर्षणवत् । किं कृत्वा पूर्वं अखिलजनावसरसभामण्डपमुपागतोऽस्मि । इतीदृशं संकल्प्य इति पूर्वोक्तमर्थं मनसि कृत्वा । न केवलं इति संकल्प्य । इति च पर्यालोच्य विचार्य । इतीति किम् । अवश्यं निश्चयेन इह जन्मनि अस्मिन् भवे मे मम शयनतलं शय्यां महिलाः स्त्रियो न आरोहन्ति नैव चढन्ति । कस्मिन् सति । निद्रादशां निद्रावस्थां मयि अनुभवति सति । शङ्खेन ध्वनितं कम्बुना गर्जितम् । अहो धर्मावलोक मारदत्त महाराज । शङ्खेन केनेव ध्वनितम् । मदभिमतसाधुकारवादेनेव मदभीष्टसाधुकारवचनेनेव । कथंभूते मयि सति । प्रकाशान्धकारावृत्तिमन्थरितमनःप्रसरे प्रकाशश्च उद्योतः, अन्धकारश्च तमः, तयोरावृत्तिरावरणं तया मन्थरितो भृतो मनःप्रसरश्चित्तप्रवृत्तिर्यस्य स तथा तस्मिन् । वैराग्योद्वेगद्वयसहिते



च पर्यालोच्य लोकालोकाचल इव प्रकाशान्धकारावृत्तिमन्थरितमनःप्रसरे विद्युदाभोगभङ्गुरे नभसीव निमेषोन्मेषाकुलितनयनपर्यन्ते स्वापप्रबोधव्यतिरिक्तामपरामेव कांचिद्रसालामिव संकीर्णरसासरालां निद्रादशामनुभवति मयि सति अहो धर्मावलोक, मदभिमतसाधुकारवादेनेव ध्वनितं शङ्खेन, मत्प्रव्रजनमङ्गलरवेणेव समुच्छलितं संगीतकनिनादेन, मत्कार्यपरिच्छेदेनेव स्फुटितं पूर्वदिग्भागेन, मद्राज्याभिलाषेणेव विरलीभूतं तारकनिकरेण, मन्मनसिजविलासेनेव विच्छायितमिन्दुबिम्बेन, मद्वैराग्यमनसेव विकसि-

---

इत्यर्थः । कस्मिन्निव । लोकालोकाचल इव उदयाचल इव अस्ताचल इव च । यथा उदयाचल अस्ताचलश्च प्रकाशान्धकारद्वयसहितो भवति । पुनः कथंभूते मयि सति । निमेषोन्मेषाकुलितनयनपर्यन्ते निमेषो मुद्रणम्, उन्मेष उन्मुद्रणम्, ताभ्यामाकुलितौ संयुक्तौ नयनपर्यन्तौ लोचनयोः प्रान्तौ यस्य स तथा तस्मिन् । कस्मिन्निव । नभसीव व्योम्नीव । कथंभूते नभसि । विद्युदाभोगभङ्गुरे विद्युतः आभोगेन विस्तारेण भङ्गुरं विनशनशीलं विद्युदाभोगभङ्गुरं तस्मिन् । यथा विद्युत् मेघमध्ये प्रविशन्ती अन्धकारं करोति, उन्मिषन्ती प्रकाशं करोति, तथा मम लोचनपर्यन्ते उन्मेषोन्मेषौ संजातावित्यर्थः । निद्रादशां कामिव । स्वापप्रबोधव्यतिरिक्तां स्वापेन प्रबोधेन व्यतिरिक्ताम् । सहितामित्यर्थः । पुनः कथंभूतां निद्रादशाम् । अपरामेव अपूर्वामिव कांचित् अनिर्वचनीयां संकीर्णरसासरालां संमिश्ररसाधिकामिव रसालामिव मर्जिकामिव शिखरिणीमिव । यथा रसाला संकीर्णरसा मिश्ररसा भवन्ति । तथा चोक्तम्—'अर्धाढकं सुचिरपर्युषितस्य दध्नः खण्डस्य षोडशपलानि शितप्रभस्य । सर्पिः पलं मधुपलं मरिचद्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम् ॥ श्लक्ष्णे पटे ललनया मृदुपाणिघुष्टा कर्पूरधूलिसुरभीकृतभाण्डसंस्था । एषा वृकोदरकृता सरसा रसाला यास्वादिता भगवता मधुसूदनेन ॥' द्वादशवल्लो भवेच्छाणः—'शाणं पाणितलं मुष्टिं ''कुडवमाढकम् । द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ॥' अहो धर्मावलोक, संगीतकनिनादेन गीतनृत्यवादित्रत्रिकेन समुच्छलितमुद्गतम् । कथंभूतेन संगीतकनिनादेन । मत्प्रव्रजनमङ्गलरवेणेव मम दीक्षाग्रहणमङ्गलशब्देनेव । हे राजन्, पूर्वदिग्भागेन स्फुटितं विकसितम् । कथंभूतेन पूर्वदिग्भागेन । मत्कार्यपरिच्छेदेनेव मम दीक्षाग्रहणनिर्धारेणेव । हे राजन्, तारकनिकरेण तारकासमूहेन विरलीभूतं तुच्छीभूतं अल्पतया स्थितम् । कथंभूतेन तारकनिकरेण । मद्राज्याभिलाषेणेव यथा मम राज्याभिलाषो विरलीबभूव । हे राजन्, इन्दुबिम्बेन चन्द्रमण्डलेन विच्छायितं छायारहितेन संजातम् । कथंभूतेनेन्दुबिम्बेन । मन्मनसिजविलासेनेव यथा मम कामभागेन निःप्रभेण बभूवे । हे राजन्, अरविन्दवृन्देन कमलसमूहेन विकसितं स्फुटितम् । कथंभूतेनारविन्दवृन्देन । मद्वैराग्यमनसेव यथा मम

तमरविन्दवृन्देन, मद्विषयसुखतर्षेणेव विघटितं तमःपटलेन, मन्मोहपाशेनेव विगलितं संध्यारागेण, मद्वपुषेव लोकलोचनगोचरतामुपगतमरुणकिरणेन, मद्भवनविन्यासैरिव पर्याकुलितं नगनिगमगोपुरसरित्प्रदेशैर्जनसमाजेन । तदन्वहमनवाप्तनिशानिद्रोऽपि वातायनविवरलब्धप्रसरेण रविणा प्रणयिनेव करस्पर्शात्प्रबोधितः । सिन्धुर इव शय्यामुत्सृज्य, उत्तानवेदिनो हि नरस्य सुखसाधि कार्यमुदके विशीर्णं चूर्णमिव न भवति यत्नशतैरपि कर्तव्यं प्रतिविधेयमित्यवधार्य, तस्याः दुष्कर्मणो महादेव्याः शरीरसंगमादिव विहितौषस्यमज्जनो निर्वर्त्य च गोसर्गसमयसंभविनमुपासनविधिम्,

---

वैराग्यं चित्तेन उल्लसितम् । हे राजन्, तमःपटलेन अन्धकारसमूहेन विघटितं विनष्टम् । कथंभूतेन तमःपटलेन । मद्विषयसुखतर्षेणेव मम विषयसौख्याभिलाषेणेव । हे राजन्, संध्यारागेण विगलितं प्रातःसंध्या रक्तिमानावतिष्ठति । कथंभूतेन संध्यारागेण । मन्मोहपाशेनेव यथा मम मोहपाशो विगलितः । हे राजन्, अरुणकिरणेन मरुत्तमेण(?) लोकलोचनगोचरतामुपगतम् । कथंभूतेन अरुणकिरणेन । मद्वपुषेव यथा मम शरीरं लोकलोचनानां गम्यत्वं प्राप्तम् । हे राजन्, जनसमाजेन च लोकसमूहेन पर्याकुलितं व्याप्तम् । किं कृत्वा । नगनिगमगोपुरसरित्प्रदेशैः पर्वतमार्गनगरद्वारनदीस्थानैः लोकसमूहेन पर्याकुलितं भावेनोक्तिरियं बभूवे । कैरिव । मद्भवनविन्यासैरिव यथा मद्भवनविन्यासैः मम मन्दिररचनाभिः जनसमाजेन सेवकसमूहेन पर्याकुलितेन भूयते । हे राजन्, तदनु तदनन्तरमहमनवाप्तनिशानिद्रोऽपि सन् प्राप्तरात्रितन्द्रोऽपि सन् रविणा करस्पर्शात् किरणस्पर्शेन प्रबोधितो जागरितः । कथंभूतेन रविणा । वातायनविवरलब्धप्रसरेण वातायनानां गवाक्षजालानां विवरैश्छिद्रैः लब्धः प्राप्तः प्रसरः प्रवेशो येन स तथा तेन । पुनः कथंभूतेन रविणा । प्रणयिनेव सुहृदेव यथा प्रणयिना पुरुषेण करस्पर्शात् पाणिस्पर्शेन सुहृत्प्रबोध्यते । किं कृत्वा पूर्वं अखिलजनावसरसभामण्डपमुपगतोऽस्मि । शय्यां शयनमुत्सृज्य । क इव । सिन्धुर इव । पुनश्च किं कृत्वा । इत्यमुना प्रकारेण अवधार्य सम्यग्विचार्य । इतीति किम् । उत्तानवेदिनो नरस्य अस्थिरस्य लोकस्य हि निश्चयेन सुखसाधि कार्यं अनायासेन कर्तव्यमपि कर्तव्यं यत्नशतैरपि प्रतियत्नसहस्रैरपि प्रतिविधेयं चिकित्सितव्यं प्रच्छन्नीकरणीयं न भवति न संजायते । तेन मया कस्याप्यग्रे न कथितमित्यर्थः । किमिव । उदके विशीर्णं स्फुटितं चूर्णं श्वेतद्रव्यमिव ताम्बूलरसमुपयोगिचूर्णमिव । कथंभूतोऽहम् । विहितौषस्यमज्जनः विहितं कृतं औषस्यं प्राभातिकं मज्जनं स्नानं येन स तथोक्तः । कस्मात् । उत्प्रेक्ष्यते—तस्या महादेव्याः शरीरसंगमादिव अस्पृश्यस्पर्शादिव । कथंभूतायास्तस्याः । दुष्कर्मणः दुराचारायाः । पुनश्च किं कृत्वा पूर्वम् । निर्वर्त्य च निष्पाद्य च । कं निर्वर्त्य । उपासनविधिं सेवाविधानम् । कथंभूतं उपासनविधिम् । गोसर्गसमयसंभविनं



अपगतमोहबन्धे हि मनसि न खलु परोपनीतः परिग्रहासङ्गो भवति कर्मपरिष्वङ्गायेत्यनुध्याय गृहीतोद्गमनीयमङ्गलदुकूलः, समाचर्य तपश्चर्यानुरागेणेव हरिरोहणेनाङ्गरागम्, आदृत्य हितोपदेशमिव कर्णाभरणम्, 'अहो गुणवतां वर हार, खरं सुरतविनोदेषु खेदितोऽसि । तदस्य प्रणयिनः सर्वं क्षम्यताम्' इत्यनुनयेनेव कण्ठे गृहीत्वा मुक्ताफलभूषणानि, ईषत्प्राग्भारश्रीपरिणयोत्कण्ठयेव निधाय करे कङ्कणालंकारम्, माजनि मम तपस्यायाः कोऽप्यन्तराय इति सिद्धशेषामिव शिरसि विनिवेश्य कुसुमानि, हस्तेकृत्य चेतिकर्तव्यतासारमिव ताम्बूलमखिलजनावसरसभामण्डपमुपगतोऽस्मि ।

मिलिते यथाभागमवस्थिते च सर्वस्मिन्ननुजीविलोके प्रवृत्ते च पुस्तक-

---

..............योग्यम् । पुनः कथंभूतोऽहम् । गृहीतोद्गमनीयमङ्गलदुकूलः गृहीतं स्वीकृतमुद्गमनीयं धौतवस्त्रयुगलं मङ्गलदुकूलं येन स तथोक्तः । किं कृत्वा पूर्वम् । इत्यमुना प्रकारेण अनुध्याय चिन्तयित्वा । इतीति किम् । अपगतमोहबन्धे मनसि चित्ते हि यस्मात्कारणात् परोपनीतः परिग्रहासङ्गः वस्त्रादिपरिग्रहस्वीकारः कर्मपरिष्वङ्गाय कर्मबन्धाय खलु निश्चयेन न भवति न संजायते । पुनश्च किं कृत्वा पूर्वं अखिलजनावसरसभामण्डपमुपगतोऽस्मि । हरिरोहणेन गोशीर्षचन्दनद्रवेण अङ्गरागं समाचर्य विलेपनं कृत्वा । कथंभूतेन हरिरोहणेन । तपश्चर्यानुरागेणेव दीक्षाग्रहणे अकृत्रिमस्नेहेनेव । पुनश्च किं कृत्वा पूर्वम् । कर्णाभरणं कर्णकुण्डलद्वयमादृत्य गृहीत्वा । कथंभूतं कर्णाभरणम् । हितोपदेशमिव यथा हितोपदेशः कर्णे क्रियते । पुनश्च किं कृत्वा पूर्वम् । मुक्ताफलभूषणानि मौक्तिकादिहारादीनि कण्ठे गृहीत्वा । केन । इत्यमुना प्रकारेण अनुनयेनेव अनुकूलेनेव । इतीति किम् । अहो हंहो गुणवतां वर गुणिनां श्रेष्ठ हे हार, खरमतिशयेन सुरतविनोदेषु संभोगक्रीडासु त्वं खेदितोऽसि । तत्तस्मात् कारणात् अस्य मल्लक्षणजनस्य प्रणयिनः स्नेहवतः सर्वं समस्तं क्षम्यतां त्वया क्षमाक्रियताम् । पुनश्च किं कृत्वा पूर्वम् । कङ्कणालंकारं करभूषणं करे पाणौ निधाय आरोप्य । किमर्थम् । उत्प्रेक्ष्यते—ईषत्प्राग्भारश्रीपरिणयोत्कण्ठयेव ईषत्प्राग्भारश्रीः लक्ष्मीः स्त्री ईषत्प्राग्भारश्रीस्तस्याः परिणयः पाणिपीडनविधिः तस्योत्कण्ठयेव हेवाकेनेव । पुनश्च किं कृत्वा पूर्वम् । कुसुमानि पुष्पाणि शिरसि मस्तके विनिवेश्य धृत्वा । कथंभूतानि कुसुमानि । इति कारणात् सिद्धशेषामिव सिद्धचक्रपुष्पमालामिव । इतीति किम् । मम मे तपस्यायाः तपश्चरणस्य कोऽपि कश्चित् अन्तरायो विघ्नो माजनि मैवाविर्भूतम् । पुनश्च किं कृत्वा पूर्वम् । ताम्बूलं नागवल्लीदलसमुच्चयं हस्तेकृत्य च पाणौ गृहीत्वा च । कथंभूतं ताम्बूलम् । इतिकर्तव्यतासारमिव दीक्षाग्रहणनिर्धारमिव अखिलजनावसरसभामण्डपमुपगतोऽस्मि ।

सर्वस्मिन् अनुजीविलोके सेवकजने मिलिते सति यथाभागं यथास्थानमवस्थिते अव-

वाचनके **चन्द्रमतिमम्बादेवीं** प्रति मूलं प्रहेतुमिच्छया यावन्**मनोरथ-सारथेः** मन्त्रिणो मुखमवलोकयामि, तावत्स्वयमेव मय्येकपुत्रे परमवत्सलतया रात्रिकृतमन्तरं वर्षशतमिव गणयन्तीमतियातयामवयोभिराप्तपुरुषैरधिष्ठितामुत्सुकोत्सुकमागच्छन्तीममरसरितमिव हंसकुलपरिवृतामुत्फुल्लसितसरोजवनविहारिणीमिव सरस्वतीमखिलगुणानुगतामिव मत्पितुः कीर्तिमनेककक्षान्तरविनियुक्तविनतमहासामन्तारुणमणिमौलिमयूखोन्मुखराजिरञ्जितोपसंव्यानां संध्यारागोत्तरीयवसनामुदयमानचन्द्राकृतिमिवापश्यम्, अभिमुखमुदचलं च । उदयाचलसानुचरच्चन्द्रप्रतिमोद्यविजृम्भितजलः

---

स्थितिं कृतवति सति पुस्तकवाचनके च प्रवृत्ते सति चन्द्रमतिं अम्बादेवीं मातरं प्रति यावत् यावत्कालं मूलं लेखं प्रहेतुमिच्छया मनोरथसारथेः मनोरथसारथिनाम्नो मन्त्रिणः मुखं अहं अवलोकयामि, तावत्कालं स्वयमेव उत्सुकोत्सुकमुत्तालोत्तालं यथा भवत्येवं आगच्छन्तीमुपढौकमानां अपश्यं अहं दृष्टवानिति क्रियाकारकसंबन्धः । किं कुर्वतीं अम्बादेवीम् । मयि एकपुत्रे अद्वितीयतनुजे परमवत्सलतया उत्कृष्टस्नेहत्वेन रात्रिकृतमन्तरं वर्षशतमिव गणयन्तीं समासतसमानं(?) जानन्तीम् । कथंभूतां अम्बादेवीम् । आप्तपुरुषैः निजमन्त्र्यादिहितपुरुषैरधिष्ठितां सहिताम् । कथंभूतैराप्तपुरुषैः । अतियातयामवयोभिः अतीववृद्धवयोभिः । उक्तं च—'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् ।' पुनः कथंभूताम् । हंसकुलपरिवृतां अमरसरितमिव गङ्गानदीमिव । पुनः कथंभूताम् । उत्फुल्लसितसरोजवनविहारिणीं विकसितोज्ज्वलकमलखण्डसंचारिणीं सरस्वतीमिव । पुनः कथंभूताम् । मत्पितुर्यशोर्धमहाराजस्य कीर्तिमिव । कथंभूतां कीर्तिम् । अखिलगुणानुगतां सर्वगुणसहिताम् । पुनः कथंभूताम् । अनेककक्षान्तरविनियुक्तविनतमहासामन्तारुणमणिमौलिमयूखोन्मुखराजिरञ्जितोपसंव्यानां अनेकेषु बहुषु कक्षान्तरेषु गृहप्रकोष्ठकेषु विनियुक्ता विनता नम्रीभूता ये महासामन्ता महान्तः सेवकनृपास्तेषां अरुणमणिभिरुपलक्षिता ये मौलयो मुकुटानि तेषां मयूखोन्मुखा किरणोन्मुखा या राजिः श्रेणिस्तया रञ्जितं रक्तीकृतमुपसंव्यानमधोवस्त्रं यस्याः सा तथोक्ता ताम् । पुनः कथंभूताम् । संध्यारागोत्तरीयवसनां संध्यारागवर्णं उत्तरीयवसनं संव्यानमुपरितनवस्त्रं यस्याः सा ताम् । पुनः कथंभूताम् । उदयमानचन्द्राकृतिमिव उदयं प्राप्नुवत् यश्चन्द्रस्तस्य आकृतिमिव आकारमिव । न केवलमम्बादेवीमपश्यम्, अभिमुखं संमुखं उदचलमहं च उच्चचाल । न केवलमहमुदचलम्, अपि तु तं जगत्प्रसिद्धं सभामण्डपं उपनीय अम्बादेवीमानाय्य महार्हासनपीठिकायां महासनपीठे उपावीविशं उपवेशितवानहम् । न केवलमुपावीविशम्, अहं चोपविष्टवान् । कथंभूतोऽहम् । सिन्धुरिव समुद्र इव । कथंभूतः सिन्धुः । उदयाचलसानुचरच्चन्द्रप्रतिमोदयविजृम्भितजलः उदयाचलस्य सानौ शिखरे चरन्ती या चन्द्रप्रतिमा सा उदयाचलसानुचरी



सकल्लोलः सिन्धुरिव पुनस्तच्चरणनखकरोत्सार्यमाणोत्तंसकुसुमसौरभासक्तभृङ्गावर्जितोत्तमाङ्गः

पातालमूलं स भुजङ्गपालो दिवं स देवाधिपतिर्यथा च ।
मज्जीवनेनापि तथा त्वमेनामाचन्द्रतारं वसुधां प्रशाधि ॥

इति विहिताशीर्वादोच्चारः शिरःसमाघ्राणपरिकल्पितबालकालोचितोपचारः सुखशयनसंकथाभिर्मुहुर्मुहुर्मामालापयन्तीमर्पितहस्तावलम्बनः पुरः परिसरन्नमृतमरीचिमूर्त्यनुगतस्तदालोक इव तं सभामण्डपमुपनीय महार्हासनपीठिकायामुपावीविशम्, उपाविशं च तदादेशान्निजासने । प्रवृत्तासु च

---

सा चासौ चन्द्रप्रतिमा चन्द्रतनुस्तस्या उदयेन विजृम्भितानि प्रसृतानि जलानि पानीयानि यस्य सिन्धोः स उदयाचलसानुचरच्चन्द्रप्रतिमोदयविजृम्भितजलः । पुनः कथंभूतः । सकल्लोलः समहातरङ्गः । पुनः कथंभूतोऽहम् । पुनः पुनरपि तच्चरणनखकरोत्सार्यमाणोत्तंसकुसुमसौरभासक्तभृङ्गावर्जितोत्तमाङ्गः तस्या अम्बादेव्याः चरणनखानां पादपुनर्भवानां करैः किरणैः उत्सार्यमाणानि उज्ज्वलतया तिरस्क्रियमाणानि उत्तंसकुसुमानि मुकुटपुष्पाणि तेषां सौरभे सुगन्धतायां आसक्ता लम्पटा भृङ्गा भ्रमरा यत्र उत्तमाङ्गे तच्चरणनखकरोत्सार्यमाणोत्तंसकुसुमसौरभासक्तभृङ्गा तादृशं आवर्जितं स्वीकृतं उत्तमाङ्गं मस्तकं येन स तथोक्तः । पुनः कथंभूतोऽहम् । इत्यमुना प्रकारेण विहिताशीर्वादोच्चारः विहितः कृत आशीर्वादोच्चारो यस्य स तथा । इतीति किम् ।

**पातालेत्यादि** । हे पुत्र, त्वं मज्जीवनेनापि ममायुषापि त्वं भवान् एनां वसुधां तथा तद्वत् आचन्द्रमास्ताराश्च यावत् तावत्प्रशाधि प्रतिपालय यथा स जगत्प्रसिद्धो भुजङ्गपालः शेषनागः पातालमूलं पातालं प्रशास्ति प्रतिपालयति । चान्यत् स देवाधिपतिर्देवेन्द्रो यथा दिवं स्वर्गं प्रशास्ति । उपमालंकारः ॥

पुनः कथंभूतोऽहम् । शिरःसमाघ्राणपरिकल्पितबालकालोचितोपचारः शिरसो मस्तकस्य समाघ्राणेन गन्धोपादानेन परिकल्पितो रचितो बालकालोचितो बालावस्थायोग्यः उपचारो व्यवहारो यस्य स तथोक्तः । अम्बादेवीं किं कुर्वतीम् । सुखशयनसंकथाभिः सुखनिद्राकथाभिर्मुहुर्मुहुर्वारंवारं मां आलापयन्तीं मिथो भाषयन्तीम् । अहं कथंभूतः । अर्पितहस्तावलम्बनः अर्पितं दत्तं हस्तावलम्बनं येन सोऽर्पितहस्तावलम्बनः । अहं किं कुर्वन् । पुरः परिसरन् अग्रे अग्रे गच्छन् । पुनः कथंभूतोऽहम् । अमृतमरीचिमूर्त्यनुगतस्तदालोक इव चन्द्रमूर्त्यनुगतः चन्द्रोद्द्योत इव । अहं किं कृतवान् । तदादेशात् मातुर्निदेशात् निजासने सिंहासने उपाविशं च उपविष्टवानहं च । प्रवृत्तासु च

तासु तासु किंवदन्तीषु वाचकः संसारस्वरूपनिरूपणप्रस्तावायातमिदमध्यगीष्ट ।

जरैव धन्या वनिताजनानां यस्याः समालिङ्गनभाजि पुंसि ।
अन्याङ्गनावीक्षणविभ्रमाणां न जातु जायेत समागमश्रीः ॥

ततश्च ।

यावज्जरा जरयते न शरीरशक्तिं
यावत्तमश्च न तनोति हृषीकवर्गे ।
तावत्त्वमाचर विचार्य तदत्र किंचि-
ज्जन्माङ्कुरः पुनरयं रमते न यत्र ॥

त्वं मन्दिरद्रविणदारतनूद्भवाद्यै-
स्तृष्णातमोभिरनुबन्धिभिरस्तबुद्धिः ।
क्लिश्नास्यहर्निशमिमं न तु चित्त वेत्सि
दण्डं यमस्य निपतन्तमकाण्ड एव ॥

---

संजातासु च तासु तासु जगत्प्रसिद्धासु किंवदन्तीषु लोकवार्तासु वाचकः संसारस्वरूपनिरूपणप्रस्तावायातं भवस्वभावकथनावसरोपढौकितं इदं वक्ष्यमाणलक्षणोपलक्षितं प्रकारं सुभाषितं अध्यगीष्ट अध्यैष्ट अधीतवान् । पठितवानिति यावत् । इदं किमिति चेत्, इत्याह—

**जरैवेत्यादि** । हे राजन्, वनिताजनानां स्त्रीजनानां मध्ये जरैव वृद्धावस्थैव धन्या पुण्यवती वर्तते । यस्या जरायाः समालिङ्गनभाजि आश्लेषवति पुंसि पुरुषे अन्याङ्गनावीक्षणविभ्रमाणां अपरवनिताविलोकनशोभानां समागमश्रीरागमनलक्ष्मीर्जातु कदाचित् न जायेत नोत्पद्येत । अप्रस्तुतप्रशंसालंकारः ॥

ततश्च तस्मात् कारणात् । **यावदित्यादि** । हे आत्मन्, यावत्कालं जरा वार्धक्यं शरीरशक्तिं वपुःसामर्थ्यं न जरयते न हापयते । च पुनर्न यावत्कालं हृषीकवर्गे इन्द्रियसमूहे तमोऽन्धकारं न तनोति न विस्तारयति । तावत्कालं त्वं भवान् तत्किंचिदत्रास्मिन् संवत्सरे विचार्य पर्यालोच्य आचर आचरणं कुरु । तत्किम् । यत्र यस्मिन् कर्मणि अयं प्रत्यक्षीभूतो जन्माङ्कुरः संसारप्रादुर्भावः पुनर्भूयोऽपि न रमते न क्रीडति । रूपकालंकारः ॥

**त्वमित्यादि** । हे चित्त हे आत्मन्, त्वं भवत् मन्दिरद्रविणदारतनूद्भवाद्यैः ······धनकलत्रपुत्रप्रभृतिभिस्तृष्णातमोभिः काङ्क्षान्धकारैः अस्तबुद्धिर्नष्टबुद्धिः सन् अहर्निशं निरन्तरं क्लिश्नासि क्लेशवद्भवसि । कथंभूतैस्तृष्णातमोभिः । अनुबन्धिभिः दोषोत्पादकैः ।



**राजा**—(स्वगतम् ।) साधु भो वाचक, साधु । यतः, कथमिव त्वमद्य मच्चेतःप्रविष्ट इव ब्रूषे । पुनरपि वाचको मामतीव संसारसुखासनाथासु कथासु दत्तावधानमुपलक्ष्य

को नाम न जगति जनः कुशलैः स्वस्य क्रियेत वशवर्ती ।
स्त्रीषु खलेष्विव विधिरपि मूढः खलु वश्यतोपाये ॥

इतीदं च । **राजा**—(सविस्मयः । स्वगतम् ।) अहो रात्रिप्रवृत्तवृत्तान्तवेदिन इवास्याद्य सरस्वती प्रेरयति वचांसि । बाढमानन्दितश्चाहमनेन । न च स्वामिप्रसादः सेवकेषु प्रसिद्धश्चिन्तामणिरिव किमपि फलमसंपाद्य विश्राम्यतीति । (प्रकाशम् ।) अहो **वसुवर्ष**, वितीर्यतामस्मै **सुभाषितवर्षाय** पारितोषि-

---

पापाश्रवजनकैरित्यर्थः । ························ ।
हे चित्त, त्वं भवत् अकाण्ड एव अप्रस्तावे एव निपतन्तं आगच्छन्तं यमस्यान्तकस्य दण्डं इमं प्रत्यक्षीभूतं मरणलक्षणे न तु वेत्सि नैव जानासि । रूपकालंकारोऽयम् ॥

राजा स्वगतं आत्मगतं निजचेतसि चिन्तयति—भो वाचक, साधु साधूक्तम् । यतो यस्मात् कारणात् अद्य अस्मिन्नहनि मच्चेतसि प्रविष्ट इव मे मनसि प्रवेशं कृतवानिव त्वं भवान् कथमिव केन प्रकारेण ब्रूषे व्यक्त वचसि । पुनरपि भूयोऽपि वाचकः मां अतीव अतिशयेन संसारसुखासनाथासु संसारसुखरहितासु कथासु वार्तासु दत्तावधानं उपलक्ष्य दृष्ट्वा इतीदृशं इदमेतत् सुभाषितं च पुनरध्यगीष्ट । इदं किम् ।

**को नामेत्यादि** । कुशलैर्विद्वद्भिः विचक्षणपुरुषैः जगति संसारे । नामेति संभावनायाम् । को जनः पुरुषः स्वस्यात्मनो वशवर्ती आत्माधीनो न क्रियेत न विधीयते । अपि तु सर्वोऽपि जनः कुशलैः स्वस्य वशवर्ती क्रियत इत्यर्थः । स्त्रीषु वश्यतोपाये वशीकरणोपाये खलु निश्चयेन विधिरपि मूढो वशीकर्तुं न जानाति । स्त्रीषु केष्विव । खलेष्विव पिशुनेष्विव । यथा पिशुनवशीकरणे विधिरपि मूढ इत्यर्थः । रूपकोपमालंकारः ॥

राजा श्रीयशोधरमहाराजः सविस्मयः साश्चर्यः सन् स्वगतमात्मगतं चिन्तयति—किं चिन्तयतीति चेत्, अहो आश्चर्यम् । अद्यास्मिन्नहनि अस्य वाचकस्य सरस्वती वाग्देवता वचांसि वचनानि प्रेरयति नियोजयति । कथंभूतस्यास्य । रात्रिप्रवृत्तवृत्तान्तवेदिन इव अद्य रात्रौ संजातप्रघट्टकज्ञापकस्येव । बाढमानन्दितश्चाहमनेन अनेन वाचकेन अहं बाढमतिशयेन आनन्दितश्च । सेवकेषु प्रसिद्धः सिद्धिं गतः स्वामिप्रसादः किमपि किंचित् फलं लाभं असंपाद्य अनुत्पाद्य न च विश्राम्यतीति नोपशमं यातीति । स्वामिप्रसादः क इव प्रसिद्धः । चिन्तामणिरिव यथा चिन्तामणिः प्राप्तः सन् फलेन संपाद्य न विश्राम्यति । इति ईदृशं विचिन्त्य राजा प्रकाशं व्यक्तमुक्तवान् । किं उक्तवान् । अहो वसुवर्ष हे

कम् । **वसुवर्षः**—यथाज्ञापयति देव इति । तथा कृतवति **वसुवर्षे माता**—(स्वगतम् ।) अहो, कुतोऽद्य मे पुत्रस्य भवभोगनिर्भर्त्सनपरासु कामिनीजनसंभावनभङ्गुरारम्भनिर्भरासु च गोष्ठीष्विदं परं मनः । किं नु खलु न महादेवीगेहं गतस्यास्य किमपि वैराग्यकारणमभूत् । ममानिच्छन्त्या एव हि पुत्रेणेयं महति स्वातन्त्र्ये स्थापिता । अतिप्रसक्तं च स्त्रीषु स्वातन्त्र्यं करपत्रमिव पत्युर्नाविदार्य हृदयं विरमति । कथितं च मे खाद्योपायनविनियुक्तया **रसायनसिद्धे**र्माहानसिकस्य सुतया **प्रियंवदया** यथा—अम्बादेवि, तव स्नुषायाः प्रणयपर इव दृश्यते तस्मिन्कुब्जे दृष्टिविनिपातः ।' (प्रकाशम् ।) वत्स, कथमिव लक्ष्मीविलासहंसाभिनवसमागमसरस्यपि वयसि चतुर्थपुरुषार्थप्रार्थनोत्थासु कथासु गततृष्णमपि सतृष्णमिवाद्य ते प्रतिभाति चेतः । वदनच्छायाप्यन्यथैव

---

भाण्डागारिक, अस्मै सुभाषितवर्षाय वाचकाय पारितोषिकं हर्षदानं वितीर्यतां त्वया दीयताम् । वसुवर्षो भाण्डागारिको ब्रूते—यथा आज्ञापयति देव इति । वसुवर्षे तथा कृतवति पारितोषिकं दत्तवति सति माता स्वगतं चिन्तयति चन्द्रमती चेतसि विचारयति —अहो आश्चर्यं । अद्य अस्मिन् अहनि मे मम पुत्रस्य भवभोगनिर्भर्त्सनपरासु संसारभोगतिरस्करणतत्परासु कामिनीजनसंभावनभङ्गुरारम्भनिर्भरासु च स्त्रीजनानुकूलनस्वयंविनशनशीलारम्भगाढासु च गोष्ठीषु वार्तासु इदं परमुत्कृष्टं मनश्चित्तं कुतः संजातमिति । नु इति वितर्के । महादेवीगेहं गतस्य अस्य मम पुत्रस्य किमपि किंचिद्वैराग्यकारणं विरागत्वहेतुः किं खलु नाभूत् बभूव । मम मे अनिच्छन्त्या एव अनभिलसन्त्या एव हि यस्मात् पुत्रेण यशोधरेण इयममृतमतिर्महति गुरुणि स्वातन्त्र्ये स्वाधीनत्वे स्थापिता धृता । अतिप्रसक्तं अतिप्रसङ्गमागतं स्त्रीषु वनितासु स्वातन्त्र्यं स्वाधीनत्वं पत्युः भर्तुः हृदयं जीवस्थानमविदार्य अच्छित्वा न विरमति न विश्राम्यति । किमिव । करपत्रमिव क्रकचमिव यथा करपत्रं अविदार्य न विश्राम्यति । कथितं च निरूपितं च मे मम खाद्योपायनविनियुक्तया खाद्यस्य मोदकादेरुपायने प्राभृते विनियुक्तया अधिकारवत्या रसायनसिद्धिनाम्नो माहानसिकस्य रसवतीपाकस्य सुतया पुत्र्या प्रियंवदया नाम्न्या । किं कथितम् । यथा हे अम्बादेवि, तव स्नुषाया तव पुत्रवध्वाः प्रणयपर इव दृश्यते । को दृश्यते । तस्मिन् प्रसिद्धे कुब्जे अष्टवङ्कनाम्नि लेसिकापसदे निकृष्टहस्तिपके दृष्टिविनिपातो अवलोकनमिति प्रकाशमम्बादेवी व्यक्तमुवाच । अम्बादेवी किमुवाचेत्याह—हे वत्स पुत्र, लक्ष्मीविलासहंसाभिनवसमागमसरसि लक्ष्मीविलासो लक्ष्मीभोग एव हंसस्तस्य अभिनवसमागमे सरसि सरोवरप्रायेऽपि वयसि यौवने चतुर्थपुरुषार्थे मोक्षस्य प्रार्थने आकाङ्क्षणे उत्था उत्थानं यासु तास्तथोक्तासु ईदृग्विधासु कथासु वार्तासु गततृष्णमपि अभिलाषरहितमपि ते तव चेतो मनोऽद्य इदानीं सतृष्णमिव सतृष्णं कथमिव प्रतिभाति प्रतिभासते मम चमत्कारयति । हे वत्स, ते तव



ते दृश्यते । वपुरपि मलिनं कमलमिवातीव ते विच्छायम् । श्वासा अपि होमधूमोद्गमा इव तवाधरदलं मलिनयन्तो दीर्घतरमायच्छन्ते । लोचने अपि सान्द्रनिद्रोद्रेकदुर्दिने शत्रुकुलमिव ते मन्दस्पन्दे । मदारम्भे सामज इव मुहुर्मुहुरायासमायासि जृम्भितेषु । कर्मणि विनियुक्तस्तुरग इव न स्थिरस्तिष्ठसि चासने । **राजा**—(स्वगतम् ।) अहो, प्रारम्भे दैवस्य महती खलु कार्यघटनासु तत्परता, मातुश्च मयि संप्रश्नेषु । (प्रकाशम् ।) अम्ब, विज्ञापयामि स्वोपज्ञपथमुत्थितं कथयामास । मातापि निशम्यैनम्

> यातु द्विषत्पक्षमदः समीक्षितुं प्रतीक्ष्यलक्ष्मीस्त्वमिहोदिताच्चिरम् ।
> महीं च रत्नाकरवारिमेखलां समं स्नुषानप्तृजनेन रक्षतात् ॥

---

भवतः वदनच्छाया मुखप्रभापि अन्यथैवापरसदृशी दृश्यते विलोक्यते । हे वत्स, ते तव वपुरपि.............................................. । हे वत्स, तव भवतः श्वासा अपि अधरदलं दन्तच्छदं मलिनयन्तो म्लानिं नयन्तो दीर्घतरं आयततरमायच्छन्ते निर्गच्छन्ति । श्वासाः क इव । होमधूमोद्गमा इव होमसंबन्धिपर्यायान्तरप्रादुर्भाव इव । हे वत्स, ते तव लोचने अपि सान्द्रनिद्रोद्रेकदुर्दिने इव बहुलनिद्राधिक्येन दुर्दिने छदे मन्दस्पन्दे मन्दलोचने वर्तेते । किमिव । शत्रुकुलमिव यथा तव शत्रुकुलं मन्दस्पन्दं अल्पव्यापारं वर्तते । हे वत्स, मुहुर्मुहुः वारं वारं जृम्भितेषु मुखविनामेषु आयासं कष्टं आयासि आगच्छसि । क इव । मदारम्भे मदागमने सामज इव यथा सामजो गजः जृम्भितेषु आयासमागच्छति । हे वत्स, कर्मणि गमनादिक्रियायां विनियुक्तोऽधिकृतः आसने सिंहासने स्थिरो निश्चलो न तिष्ठसि । क इव । तुरग इव अश्ववर इव यथा कर्मणि विनियुक्तस्तुरग आसने स्थिरो न भवति । राजा यशोधरः स्वगतं आत्मगतं चिन्तयति । किं चिन्तयति इति चेत्—अहो आश्चर्यम् । प्रारम्भे कार्यघटनासु कार्यकरणेषु दैवस्य कर्मणः खलु निश्चयेन महती गुरुतरा तत्परता एकाग्रता वर्तते । मातुर्जनन्याश्च मयि विषये संप्रश्नेषु निरूपणासु महती तत्परता वर्तते । राजा प्रकाशं व्यक्तमुवाच—अम्ब हे मातः, विज्ञापयामि स्वोपज्ञपथं स्वकल्पितमार्गं उत्थितं स्वप्नोपलब्धं कथयामास कथितवान् । माता चन्द्रमती रणन्तं एनं उत्थितं स्वप्नं निशम्य श्रुत्वा मां इत्येवममुना प्रकारेण अबूबुधत् बोधयामास बोधितवती । माता किं कुर्वती । समन्तात् सर्वतः ब्रह्मविप्रुषः रक्षार्थं निष्वननकणिका विकिरन्ती विविधं क्षरन्ती । कथं यथा भवत्येवम् । सभयं भयसहितं यथा भवत्येवम् । पुनश्च कथं यथा भवत्येवम् । सोद्वेगहृदयं सकम्पहृदयं यथा भवत्येवम् । पुनश्च कथं यथा भवत्येवम् । सानुकम्पोदयं च कारुण्योदयसहितं यथा भवत्येवम् । इत्येवं कथमिति चेत्—

**यात्वित्यादि** । हे पुत्र, अद एतद्दुःस्वप्नदर्शनं द्विषत्पक्षं शत्रुपक्षं समीक्षितुमव-

इति सभयं सोद्वेगहृदयं सानुकम्पोदयं च समन्ताद्बाष्पविप्रुषो विकिरन्ती मामेवमबूबुधत्—पुत्र, सर्वशास्त्रेषु बुधसङ्गविदग्धोऽपि कथं त्वमद्याचारान्ध इवावभाससे । को हि नाम सचेतनः स्वप्नेषु भक्तमुपलभ्य गोणिः प्रसारयति । यदि च नियमेन सत्फला भवन्ति स्वप्नास्तर्हि हतमेतदार्यकस्य त्रियामायां मोदकमन्दमठिकावलोकनादामन्त्रितमहीपतेरुपाख्यानम् । प्राणिनो ह्यनिलानलपीनसान्तरिताः स्वप्नावस्थायामर्थजातं भूतपूर्वमभूतपूर्वं वा निरीक्षन्ते । कथितवती चाधुनैव मे पथि सहागच्छन्तीयं तव धात्रीदुहिता **वसन्तिका**, यथा—आर्याणि, प्रभातशेषायां निशि स्वप्ने किलाहं यवागूरिव संवृत्तास्मि । भुक्ता च मन्मातुः श्राद्धामन्त्रितैर्भूदेवैरिति ।

---

लोकितुं यातु गच्छतु । अयं स्वप्नः शत्रुपक्षे पतत्वित्यर्थः । त्वं भवान् इह अस्मिन् भूमण्डले चिरं दीर्घकालमुदितादुदयं गच्छोदयं प्राप्नुहि । कथंभूतस्त्वम् । प्रतीक्ष्यलक्ष्मीः पूज्यलक्ष्मीकः सन् । रत्नाकरवारिमेखलां समुद्रजलमर्यादां महीं च रक्षतात् प्रतिपालय । कथम् । समं सार्धम् । केन समम् । स्नुषानप्तृजनेन स्नुषा च वधूः । 'स्नुषा जनवधूः' इति वचनात् । नप्ता च पुत्रस्य पुत्रः । स्नुषानप्तारौ च तयोर्जनो वर्गस्तेन स्नुषानप्तृजनेन । समुच्चयालंकारः ॥

हे पुत्र, सर्वशास्त्रेषु बुधसङ्गविदग्धोऽपि विचक्षणोऽपि सन् कथं केन प्रकारेण त्वं भवान् अद्य इदानीं आचारान्ध इव मूर्ख इव क्रियामूढ इव अवभाससे चमत्करोषि । नामेति संभावनायाम् । कः पुमान् सचेतनो विचक्षणो हि निश्चयेन स्वप्नेषु भक्तं व्रीहीन् उपलभ्य प्राप्य गोणिः प्रसारयति नटप्रसेवकं धरति । यदि च यदि चेत् नियमेन स्वप्नाः सत्फला सत्यफला भवन्ति तर्हि एतज्जगत्प्रसिद्धं आर्यकस्य आचार्यकस्य आचार्यस्य उपाख्यानं दृष्टान्तकथा हतं नष्टं आगतं वा । कथंभूतस्य आर्यकस्य । त्रियामायां रात्रौ मोदकमन्दमठिकावलोकनात् मोदकभृतच्छात्रशालादर्शनात् आमन्त्रितमहीपतेः सपरिवारनिमन्त्रितनृपस्य । हि यस्मात् कारणात् प्राणिनः अनिलानलपीनसान्तरिताः वातपित्तकफसहिताः स्वप्नावस्थायां स्वप्नावसरे अर्थजातं वस्तुसमूहं भूतपूर्वं वा पूर्वसंजातं वा अभूतपूर्वं वा निरीक्षन्ते अवलोकयन्ति । कथितवती च निरूपितवती च अधुनैव इदानीमेव पथि मार्गे मे मम सहागच्छन्ती सममायान्ती इयमेषा तव धात्रीदुहिता भवतः उपमातुः पुत्री वसन्तिकानामधेया, यथा—हे आर्याणि हे स्वामिनि, प्रभातशेषायां निशि पश्चिमरात्रिप्रान्ते । किलेति निश्चयेन । अहं स्वप्ने यवागूरिव उष्णिकेव क्षिप्रघटीव श्राणेव संवृत्तास्मि संजातास्मि । मन्मातुः श्राद्धामन्त्रितैर्मज्जनन्याः श्राद्धकरणे निमन्त्रितैराहूतैर्भूदेवैर्ब्राह्मणैर्भुक्ता चेति बुभुजे ॥



अपि च ।

निष्कण्टकं राज्यमिदं प्रवृद्धमिमे निदेशावहिताश्च भूपाः ।
दिशो दशैतास्तव कामितानि यच्छन्ति चिन्तामणिभिः समानाः ॥
अमूनि पूर्वैर्भवतार्जितानि त्यागाय भोगाय वसूनि सन्ति ।
इच्छाविधेयश्च विलासिनीनामयं गणस्तेऽप्सरसां सदृक्षः ॥
निष्कारणं सर्वमिदं विहाय त्वं केन कामेन तपो हि कुर्याः ।
स्वर्गापवर्गार्थमिदं न सम्यग्दृष्टाददृष्टं खलु किं गरीयः ॥
अथाज्ञया कोऽपि न वर्तते ते तत्रोत्सृज क्रोधविषं न दोषः ।
भयेन किं मन्दविसर्पिणीनां कन्थां त्यजन्कोऽपि निरीक्षितोऽस्ति ॥
दुःस्वप्नशङ्का तव चेदथास्ति सत्त्वैः समस्तैः कुलदेवतायै ।
कृत्वा बलिं शान्तिकपौष्टिकार्थं पश्चात्प्रतिस्वप्नविधिं विधेहि ॥

---

अपि च तथा च । **निष्कण्टकमिति** । हे पुत्र, निष्कण्टकं क्षुद्रशत्रुरहितं इदं एतत् राज्यं प्रवृद्धं वृद्धिं गतम् । इमे भूपाः सान्तवर्गाः निदेशावहिताश्च तवाज्ञावर्तिनः सावधाना वर्तन्ते । एता इमा दश दिशस्तव भवतः कामितानि वाञ्छितानि यच्छन्ति ददति । कथंभूता दिशः । चिन्तामणिभिः समानाः समाः ॥

**अमूनीति** । अमूनि एतानि पूर्वैर्यशोबन्धुयशोर्घान्तैर्भवतार्जितानि त्यागाय भोगाय अनुभवनाय वसूनि सन्ति । अयं एष विलासिनीनां कामिनीनां गणः समूहस्ते तव इच्छाविधेयश्च इच्छानुसारी वर्तते । 'विधेयो विनयग्राही' इति वचनात् । कथंभूतो विलासिनीनां गणः । अप्सरसां सदृक्षः रम्भातिलोत्तमामेनकोर्वशीनां सदृशः ॥

**निष्कारणमिति** । इदं सर्वं पूर्वोक्तं निष्कारणं निष्प्रयोजनं विहाय परिहृत्य त्वं भवान् केन कामेन केनाभिलाषेण तपस्तपश्चरणं हि निश्चयेन कुर्याः विदध्याः । इदं तपः स्वर्गापवर्गार्थं स्वर्गलोकमोक्षनिमित्तं सम्यग् वर्तते ।. हे पुत्र, दृष्टात् प्रत्यक्षफलात् अदृष्टमप्रत्यक्षं खलु निश्चयेन किं गरीयः किं गुरुतरं वर्तते । अपि तु न वर्तत इत्यर्थः । वृत्तत्रयेण समुच्चयालंकारः, आक्षेपश्च ॥

**अथेत्यादि** । अथ चेत् हे राजन्, कोऽपि कश्चित् पुमान् ते तव आज्ञया आदेशेन सह न वर्तते नास्ति तत्र तस्मिन् पुरुषे क्रोधविषं कोपहालाहलं उत्सृज मुञ्च । तत्र क्रोधविषोत्सर्जने कोऽपि दोषो नास्ति । हे राजन्, मन्दविसर्पिणीनां यूकानां भयेन भीत्या कोऽपि कन्थां शीतनिवारणं वस्त्रं त्यजन् परिहरन् किं निरीक्षितोऽस्ति । अपि तु न दृष्टोऽस्ति । दृष्टान्ताक्षेपालंकारः ॥

**दुःस्वप्नेत्यादि** । हे पुत्र, अथ चेत् तव भवतः दुःस्वप्नशङ्का दुष्टस्वप्नभयमस्ति,

न चेदं मनागपिकमलौकिकं वा । तथा हि—

मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥
एष्वर्थेषु पशून्हिंसन्वेदवेदार्थविद्द्विजः ।
आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥

तथा वेदेऽप्यात्मश्रेयोर्थमशेषविघ्नोपशमनार्थं च राजसूयपुण्डरीकाश्वमेधगोसववाजपेयादिषु वर्षिकामेष्टिकारीरित्यादिषु च यज्ञेषु प्रवृत्तोऽयं प्राणिवधः स च वधो न भवति ।

---

तर्हि समस्तैः सत्त्वैः सर्वप्राणिवर्गैः कुलदेवतायै बलिं कृत्वा पश्चात् प्रतिस्वप्नविधिं दुष्टस्वप्नशमनविधानं विधेहि त्वं कुरु । किमर्थम् । शान्तिकपौष्टिकार्थं शान्तौ भवं नियुक्तं वा यत् कर्म तत् शान्तिकम्, पुष्टौ शरीरादिपुष्टिनिमित्तं भवं नियुक्तं वा यत्कर्म तत्पौष्टिकम्, शान्तिकपौष्टिके तयोरर्थः प्रयोजनं यस्मिन् प्रतिस्वप्नविधिर्विधानकर्मणि तत् शान्तिकपौष्टिकार्थम् । जातिमात्रालंकारः ॥

न च नैव इदं कुलदेवतायै सत्त्वैर्बलिविधानकरणं मनागपिकं मनाग्भवं मनागपिकं कदाचित्कं न वर्तते वा अथवालौकिकं न वर्तते लोको नाम प्रसिद्धं न वर्तते । तथा हि । तदेव निरूपयति—**मधुपर्के इत्यादि** । मनुर्मनुनामा ऋषिरितीदृशमब्रवीज्जगाद । इतीति किम् । पशवस्तिर्यञ्चः अत्रैव एषु स्थानेषु हिंस्या हिंसनीयाः । अन्यत्र स्वादपोषणाद्यर्थे न हिंसनीया इत्यर्थः । अत्र कुत्र । मधुपर्के ब्राह्मणस्य गृहे ब्राह्मणो यदि प्राघूर्णक आयाति तदा तस्य पादौ प्रक्षाल्य दधिमधुघृतं पादौ गृहीत्वा परिमुच्यते, महोक्षं महाजं वा मारयित्वा सर्वब्राह्मणो भोज्यते, चन्दनेन पुष्पमालया च पूज्यते इति मधुपर्के । यज्ञे यागकर्मणि । पितृदैवतकर्मणि पितृकर्मणि श्राद्धकर्मणि, दैवतकर्मणि रुद्रादिपूजनविधाने । जातिः ॥

**एष्वित्यादि** । एषु पूर्वोक्तेषु चतुर्षु अर्थेषु कार्येषु पश्चात् तिरश्चो हिंसन् मारयन् द्विजो ब्राह्मण आत्मानं निजप्राणिनं पशून् चैव तिरश्चः चैव उत्तमां गतिं गमयति ऊर्ध्वान्तरिक्षं प्रापयति । कथंभूतो द्विजः । वेदं वेदपाठं वेदार्थं च वेदवाच्यं वेत्तीति वेदवेदार्थवित् । समुच्चयालंकारः ॥

तथा तेनैव मनुवचनस्मृतिशास्त्रप्रकारेण वेदेऽपि वेदशास्त्रेऽपि आत्मश्रेयोर्थं आत्मपुण्यार्थं अशेषविघ्नोपशमनार्थं च सर्वविघ्नविनाशनार्थं च अयं प्राणिवधः यज्ञेषु प्रवृत्तः प्रवृत्तिं गतः । केषु यज्ञेषु । राजसूयपुण्डरीकाश्वमेधगोसववाजपेयादिषु राजसूयं च यत्र राजा हूयते, पुण्डरीकश्च यत्र हस्ती हूयते, अश्वमेधश्च यत्र तुरङ्गमो हूयते, गोसवश्च यत्र गौर्ब्राह्मणो हूयते, वाजपेयं च वाजं अन्नं पेयं प्रायेण ब्राह्मणादिभोजनं पशुहोमश्च यत्र तद्वाजपेयम्, आदिशब्दात् अन्येऽपि यज्ञप्रकाराः सन्ति तेषु तथोक्तेषु । न केवलमेतेषु



यतः ।

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
यज्ञो हि भूत्यै सर्वेषां तस्माद्यज्ञे वधोऽवधः ॥

इति । **राजा**—(कर्णौ पिधाय निःश्वस्य च ।) किं नु खलु न करोति देहिनामयं मोहबन्धः, तस्य प्रसवभूमिरज्ञानसंबन्धश्चेति, कर्कशोदर्कवितर्ककर्करसंपातस्तिमितचेताः क्षणमात्रमितिकर्तव्यताविमूढमनःश्रोता इव भूत्वेदमवादीत्—प्रसीदाम्ब । वदामि किंचिदहम्, यदि तत्र भवती मयि दुष्पुत्रापवादपरागं न विकिरति । **माता**—पुत्र, मैवं मयि शङ्किष्ठाः । प्रतिष्ठस्व न्यायनिष्ठुरतया गोष्ठीसौष्ठवेषु । न खलु केवलमहं प्रसवधर्मिणी, किं तु भवत्पितुः प्रसादात्सकलव्यवहारवेदिनी च । यद्येवं युक्त एव पूर्वपक्षः ।

---

यज्ञेषु प्राणिवधः प्रवृत्तः । वर्षिकामेष्टिकारीरित्यादिषु च वर्षिकामेष्टिर्योगविशेषः, कारी च अप्रसूता गौर्यत्र हूयते इत्यादिषु च यज्ञेषु स च वधः प्राणिवधो न भवति ॥

यतः कारणात् । यज्ञार्थं पशवः सृष्टाः कृताः स्वयमेवात्मना स्वयंभुवा ब्रह्मणा । यज्ञो यागो हि निश्चयेन भूत्यै ऐश्वर्याय सर्वेषां याचकाचार्ययजमानादीनाम् । तस्मात् कारणात् यज्ञे यागे वधः प्राणिहिंसा अवधः इति ॥

राजा यशोधरः कर्णौ पिधाय मुद्रयित्वा निःश्वस्य च निश्वासान् गृहीत्वा इदमवादीज्जगाद । इदं किम् । देहिनां प्राणिनां अयं मोहबन्धः किं नु खलु न करोति । अपि तु सर्वपापमुत्पादयति । तस्य मोहबन्धस्य प्रसवभूमिरुत्पत्तिस्थानं अज्ञानसंबन्धश्च किं न करोतीति । कथंभूतो राजा । कर्कशोदर्कवितर्ककर्करसंपातस्तिमितचेताः कर्कशो निर्दयो योऽसावुदर्क उत्तरफलं तस्य वितर्को विचारणं स एव कर्करसंपातः पाषाणपतनं तेन स्तिमितं निर्व्यापारं विचारपरं चेतो मनो यस्य स तथोक्तः । राजा किं कृत्वा अवादीत् । क्षणमात्रं अल्पकालं इतिकर्तव्यताविमूढमनःश्रोता इव भूत्वा इतिकर्तव्यता कार्यनिर्धारस्तत्र विमूढं परिज्ञानरहितं मनःश्रोतः चित्तसंगतिर्यस्य स तथोक्तः । राजा किं अवादीत्—हे अम्ब हे मातः, प्रसीद त्वं प्रसन्ना भव । अहं किंचित् किमपि वदामि ब्रवीमि । यदि चेत् तत्र तस्मिन् वचने उदिते सति भवती त्वं मयि विषये दुष्पुत्रापवादपरागं कुपुत्रनिन्दाधूलीं न विकिरति न विक्षिपति । माता प्राह—हे पुत्र, मयि विषये त्वं एवं दुष्पुत्रकथनं मा शङ्किष्ठाः मा भयं त्वं कार्षीः । मा भैषीरित्यर्थः । हे पुत्र, न्यायनिष्ठुरतया गोष्ठीसौष्ठवेषु उपन्यासप्रगल्भासु प्रतिष्ठस्व प्रस्थापनं कुरु पूर्वपक्षं विधेहि । 'समवप्रविभ्यः—' इति वचनात् ष्ठाधातोरात्मनेपदम् । हे पुत्र, न खलु । न खल्विति वाक्यालंकारे । अहं केवलं तव प्रसवधर्मिणी जन्मदायिनी न भवामीति, किं तु भवत्पितुः प्रसादात् यशोधरमहाराजकारुण्यात् सकलव्यवहारवेदिनी च वर्ते । यदि एवं ततः पुत्र, मम पूर्वपक्षो युक्त एव । अहं पूर्वमुपन्यासं कुर्वे । तमेवोपन्यासं करोति—यस्मात् कारणात् हे

यस्मात् 'न धर्मांश्चरेत्, एष्यत्फलत्वात्संशयितत्वाच्च । को ह्यबालिशो हस्तगतं पादगतं कुर्यात् । वरमद्यकपोतः श्वोमयूरात् । वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः' इति महान्खलु लोके लौकायतिकलोककोलाहलः । स चात्मनो गर्भादिमरणपर्यन्तायां सुघट एव । **राजा**—

सत्यं न धर्मः क्रियते यदि स्याद्गर्भावसानान्तर एव जीवः ।

न चैवम् ।

जातिस्मराणामथ रक्षसां च दृष्टिः परं किं न समस्ति लोके ॥

---

पुत्र, लोके खलु लौकायतिकलोककोलाहलो वादो महान् इत्यस्ति । इतीति किम् । न धर्मांश्चरेत् । कस्मात् धर्मान् न चरेत् । एष्यत्फलत्वात् धर्मचरणे फलं भविष्यद्वर्तते न वर्तमानकाले धर्मचरणफलं दृश्यते । न केवलं एष्यत्फलत्वाद्धर्मान् चरेत्, संशयितत्वात् । न ज्ञायते धर्मचरणे फलं भविष्यति न भविष्यति वा इति देहत्वाच्च धर्मं न चरेदित्यर्थः । अमुमेवार्थं आक्षेपेण दृढयति—हि यस्मात् कारणात् कः अबालिशः को विद्वान् हस्तगतं वस्तु सुवर्णादिकं पादगतं कुर्यात् । अर्थात् पादाभ्यां गृह्णीयात् । हस्तौ निकटवर्तिनौ वर्तेते, पादौ तु दूरस्थिताविति । तेन दृष्टमेव फलं गृह्णीयात्, अदृष्टं तु परित्यजेत् । वरमितीषद्रुचौ । श्वोमयूरात् प्रातर्लभ्यमयूरात् अद्य अस्मिन्नहनि लभ्यः कपोतः पारापतो वरं श्रेष्ठः । मयूरे मांसं महत्, कपोते मांसमल्पम् । यस्मात् कारणात् च । वरमितीषद्रुचौ । सांशयिकात् संशयभवात् निष्कात् अष्टशतप्रमाणसुवर्णात् असांशयिकः निश्चितः कार्षापणः गद्याणकमेकं सुवर्णवरश्रेष्ठम् । इति ईदृशं खलु निश्चयेन लोके लोकमध्ये लौकायतिकलोककोलाहलः चार्वाकलोकवादः सांख्यलोकवादो वा । स चात्मनः च चांभहितो (?) वर्तते । कोऽसौ लौकायतिकलोककोलाहलस्तमेवाह—गर्भादिमरणपर्यन्तायां गर्भादिः शुक्रार्तवजीवसंयोगः, मरणं शरीरेन्द्रियविषयैर्वियोगः, तदन्तायां सुघटः सुघटमान एव वर्तते ॥

राजा प्राह—**सत्यमिति** । सत्यं हे मातः, त्वद्वचनं सत्यम् । धर्मो न क्रियते न विधीयते यदि चेत् जीव आत्मा गर्भावसानान्तरः स्यात् गर्भश्च अवसानं मरणं तयोर्वान्तर एव भवति । न चैवं न च गर्भादिमरणपर्यन्तो जीवो वर्तते । कस्मात् । अमुमेवार्थं वृत्तार्धेन आक्षेपतया दृढयति—लोके जातिस्मराणां पुरुषाणां परं निश्चयेन दृष्टिः किं न समस्ति । अपि तु समस्त्येव । यदि गर्भादिमरणपर्यन्तो भवति जीवस्तर्हि जातिस्मरः पुमान् कथमेवं वक्ति—अहं पूर्वजन्मनि एवंविधो बभूव । रक्षसां च दृष्टिः कस्यचित् पित्रादिको दृष्ट्वा मृत्वा राक्षसो बभूव प्रेतावासे जन्म गृहीतवानिति श्रूयते । यदि जीवः गर्भादिमरणपर्यन्तस्तर्हि व्यन्तरः कथं संजातः ॥



स्वयं कृतं जन्तुषु कर्म नो चेत्समः समस्तः खलु किं न लोकः ।
भूतात्मकं चित्तमिदं च मिथ्या स्वरूपभेदात्पवनावनीव ॥

एवं चेदमपि संगच्छते—

यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः प्राप्तिम् ।
व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव ॥

नवं वयश्चारुतरास्तरुण्यो रम्याणि हर्म्याणि शिवाः श्रियश्च ।
एतानि संसारतरोः फलानि स्वर्गः परोऽस्तीति मृषैव वार्ता ॥
दोषस्त्वमीषां पुनरेक एव स्थैर्याय यन्नास्ति जगत्युपायः ।
तत्संभवे तत्त्वविदां परं स्यात्खेदाय देहस्य तपःप्रयासः ॥

---

**स्वयमित्यादि** । जन्तुषु स्वयं कृतं कर्म स्वयमुपार्जितं कर्म चेन्नो वर्तते तर्हि समस्तः लोकः खलु समः समानः किं न भवति राजाकिंकरगुरुशिष्यसधननिर्धनादिकः कथं घटते । इदं चित्तं एष आत्मा भूतात्मकं यदुच्यते पृथिव्यप्तेजोवायुनिष्पन्नं यदुच्यते तच्च मिथ्या असदेतत् । स्वरूपभेदात् विज्ञानसुखदुःखादिगुणवान् जीवः, भूतानि तु अचेतनानि तद्विपरीतानि वर्तन्ते । अस्मात् किं तत्स्वरूपभेदो वर्तते । पवनावनीव पवनश्चपलः, अवनी तु स्थिररूपा । तद्वदात्मा चपलज्ञानादिगुणवांश्च, भूतानि तु अचेतनानि धारणादिगुणसंयुक्तानि ॥

एवं च भेदप्रकारे सति इदमपि आर्यावृत्तं संगच्छते जन्मपत्रिकायां आदौ या लिख्यते । का चासावार्येत्याह—**यदुपचितमित्यादि** । यत् शुभाशुभं कर्म उपचितमुपार्जितं अन्यजन्मनि तस्य कर्मणः प्राप्तिं उदयं व्यञ्जयति प्रकटीकरोति । किं तत् कथंभूतम् । शास्त्रमेतत् ज्योतिष्कशास्त्रम् । क इव । दीप इव तमसि द्रव्याणि घटपटादीनि व्यञ्जयति । यदि पूर्वजन्मसद्भावे उत्तरजन्मस्वरूपं कथं ज्योतिःशास्त्रं प्रकटयति । तेन ज्ञायते गर्भादिमरणपर्यन्तो जीवो नास्ति ॥

पुनश्च राजा प्राह—**नवमिति** । नवं वयो नवीनं यौवनम् । चारुतरास्तरुण्यः, रम्याणि हर्म्याणि, शिवाः शुभतराः श्रियश्च । एतानि संसारतरोः फलानि वर्तन्ते । स्वर्गः परोऽस्ति इति वार्ता मृषैव मिथ्या वर्तते । किं तु यौवनस्त्रीधनादिक इदमेव स्वर्गो वर्तते ॥

**दोष इति** । अमीषां यौवनादीनां पुनश्च एक एव दोषो वर्तते । यत् यस्मात् कारणात् जगति संसारे उपायः यौवनस्त्रीधनादिलक्षणः सुखहेतुः स्थैर्याय स्थिरत्वाय नास्ति । किं तु यौवनादिकं सर्वं अध्रुवमेव वर्तते । तदुक्तं शुभचन्द्रेण महाकविना ज्ञानार्णवमहाशास्त्रे—'गगननगरकल्पं संगमं वल्लभानां जलदपटलतुल्यं यौवनं वा धनादि । स्वजनसुतशरीरादीनि विद्युच्चलानि क्षणिकमिति समस्तं विद्धि संसारवृत्तम् ॥' तत्संभवे यौवनादीनां स्थिरत्वसद्भावे तत्त्वविदां तत्त्वज्ञानिनां परं केवलं तपःप्रयासः देहस्य खेदाय स्यात् ॥

बालस्य मौग्ध्यान्न तपोधिकारो युवा तपस्येद्यदि तत्र दण्डः ।
कुटुम्बभाराधिकृतश्च मध्यो वृद्धः पुनर्वृद्धिसहाय एव ॥
परोपरोधादयमेवमात्मा मिथ्याग्रहग्रस्तमनःप्रतानः ।
स्वयं विजानन्नपि दैवदूतैराकृष्य नीयेत भवभ्रमाय ॥

चरमोऽपि पक्षः श्रेयानेव । द्विधा खलु प्राणिनामापदो भवन्ति—संभवत्प्रतीकाराः, कालकृतावताराश्च । तत्राद्यानामुपशमनाय प्रतिस्वप्नविधिः श्रेयःसंनिधेरेव रणाजिरेषु राजव्यञ्जनव्याजेन द्विषद्विषधराणाममर्षविषवर्षस्य प्रतीकार इव । मध्यमस्तु पक्षोऽतीव मध्यमः ।

---

**बालस्येत्यादि** । हे मातः, बालस्य शिशोस्तपोधिकारो दीक्षाग्रहणनियोगो न वर्तते । कस्मात् । मौग्ध्यात् मुग्धस्वभावात् । यदि चेत् युवा तरुणस्तपस्येत् तपः कुर्यात् तत्र तपःकरणे दण्डः प्रायश्चित्तं वर्तते वपुर्दण्डनं कष्टं वा भवति । मध्यः अर्धवृद्धः पुमांस्तु कुटुम्बभाराधिकृतो भवति कुटुम्बोदरपूरणं करोति । पुनः पश्चात् वृद्धो वर्षीयान् वृद्धिसहाय एव कालान्तरेणोदरं पूरयति । जात्यलंकारः । तथा चोक्तं गुणभद्रेण महाकविना—'बाल्ये वेत्सि न किंचिदप्यपरिपूर्णाङ्गो हितं वाहितं कामान्धः खलु कामिनीद्रुमघने भ्राम्यन्वने यौवने । मध्ये वृद्धतृषार्जितुं वसुपशुः क्लिश्नासि कृष्यादिभिः वार्धेवार्धमृतः क्व जन्मफलिते धर्मो भवेन्निर्मलः ॥' इति ॥

**परोपरोधादित्यादि** । परोपरोधात् मातृपित्रादि आक्षेपात् अयं आत्मा एष जीवो मिथ्याग्रहग्रस्तमनःप्रतानो मिथ्याग्रहोऽसत्यपिशाचग्रहस्तेन ग्रस्तो गृहीतो मनःप्रतानो मनोव्यापारो यस्य स तथोक्तः वर्तते । स्वयमात्मना विजानन्नपि विशेषेण चेतन्नपि दैवदूतैः कृतान्तकिंकरैराकृष्य तान् नयित्वा भवभ्रमाय संसारपर्यटनाय नीयेत नीयते ॥

चरमोऽपि पक्षः शान्तिकपौष्टिकादिलक्षणः श्रेयानेव शुभ एव वर्तते । परं प्रणिपातेन न श्रेयानित्यर्थः । हे मातः, द्विधा खलु प्राणिनां आपदो विपत्तयो भवन्ति । कौ तौ द्वौ प्रकारौ । संभवत्प्रतीकारा आसन्नापदां प्रतीकाराः, कालकृतावताराश्च कृतान्तकृतोत्पत्तयश्च । तत्र तयोर्मध्ये आद्यानां संभवत्प्रतीकाराणां आपदां उपशमनाय प्रतिस्वप्नविधिः श्रेयःसंनिधेरेव पुण्याचरणादिव भवति । प्रतिस्वप्नविधिः क इव । रणाजिरेषु संग्रामाङ्गणेषु राजव्यञ्जनव्याजेन द्विषद्विषधराणां शत्रुसर्पाणां अमर्षविषवर्षस्य क्रोधविषवर्षणस्य प्रतीकार इव विद्याधरभेषजमन्त्रतोयहवनादिप्रतीकार इव । मध्यमस्तु पक्षः स्वप्नशङ्का इत्यादि यत्पठितं सः अतीव मध्यमः निकृष्टः ॥



अहोरात्रं यथा हेतुः प्रकाशध्वान्तजन्मनि ।
तथा महीपतिर्हेतुः पुण्यपापप्रवर्तने ॥

उक्तं च—

राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
राजानमनुवर्तन्ते यथा राजा तथा प्रजाः ॥

इति । भूतसंरक्षणं हि क्षत्रियाणां महान्धर्मः । स च निरपराधप्राणिवधे नितरां निराकृतः स्यात् । नृपतिप्रतिष्ठानि च खलु देहिनां व्यवहारतन्त्राणि वर्तन्ते । नृपत्यायत्ताः पुण्यपापहेतवो वर्णाश्रमाणामाचारव्यवस्थाश्च । ते च नृपतयः कामक्रोधाभ्यामज्ञानेन वा यथैव शुभमशुभं वा कर्मारभन्ते तथैव जानपदा अपि । श्रूयते हि—वङ्गीमण्डले नृपतिदोषाद्भूदेवे-

---

**अह इति** । अहश्च रात्रिश्च अहोरात्रम् । 'अहः सर्वैकदेशसंख्यातपुण्यवर्षादीर्घादिश्च रात्रिः' इत्यनेन तत्पुरुषे अदन्तो निपातः । यथा येन प्रकारेण हेतुः कारणं वर्तते । कस्मिन् । प्रकाशध्वान्तजन्मनि प्रकाशे प्रकाशोत्पादे अहर्दिवसो हेतुः वर्तते, ध्वान्तजन्मनि अन्धकारोत्पादे रात्रिर्हेतुर्वर्तते । तथा तेन प्रकारेण महीपती राजा हेतुः प्रत्यहो वर्तते । कस्मिन् । पुण्यपापप्रवर्तने पुण्यस्य प्रवर्तने, पापस्य च प्रवर्तने ॥

उक्तं च—पूर्वभाषितं वर्तते चाणक्यसूत्रमित्यर्थः । **राज्ञीत्यादि** । राज्ञि राजनि धर्मिणि धर्मिष्ठे सति प्रजा धर्मिष्ठा भवन्ति । पापे पापिष्ठे राजनि सति पापाः प्रजाः अपि पापिष्ठा भवन्ति । समे समाने मध्यस्थे राजनि प्रजा अपि समा मध्यस्था भवन्ति । प्रजा राजानमनुवर्तन्ते राजानः छन्दानुसारिणो भवन्ति । यथा राजा यादृशो राजा तथा प्रजा प्रजा अपि तादृश्यो भवन्ति ॥

हे मातः, भूतसंरक्षणं प्राणिनां प्रतिपालनं हि निश्चयेन क्षत्रियाणां राजपुत्राणां महान् गुरुतरो धर्मो वर्तते । स च धर्मो निरपराधप्राणिवधे निर्दोषजन्तुमारणे नितरां अतिशयेन निराकृतो निषिद्धः स्याद्भवेत् । नृपतिप्रतिष्ठानि च राजायत्तानि च खलु निश्चयेन देहिनां प्राणिनां व्यवहारतन्त्राणि व्यवहारशास्त्राणि क्रियविक्रियादिशास्त्राणि वर्तन्ते सन्ति । नृपत्यायत्ता राजाधीना पुण्यपापहेतवः पुण्यपापकारणानि वर्णाश्रमाणां ब्राह्मणक्षत्रियवैश्यशूद्राणां ब्रह्मचारिग्रहस्थवानप्रस्थभिक्षूणां च आचारः आचरणं व्यवस्थाः मर्यादाश्च वर्तन्ते । ते च नृपतयः कामक्रोधाभ्यां कामेन कोपेन चाज्ञानेन वा अज्ञानतया वा यथैव येनैव प्रकारेण शुभमशुभं वा पुण्यपापं वा कर्म आरभन्ते कुर्वन्ति तथैव तेनैव नृपतिप्रकारेणैव जानपदा अपि लोका अपि आरभन्ते । श्रूयते हि आकर्ण्यते हि—यस्मात् वङ्गीमण्डले

ष्वासवोपयोगः, पारसीकेषु स्वसवित्रीसंयोगः, सिंहलेषु च विश्वामित्रसृष्टिप्रयोग इति । ततश्च ।

यथैव पुण्यस्य सुकर्मभाजां षष्ठांशभागी नृपतिः सुवृत्तः ।
तथैव पापस्य कुकर्मभाजां षष्ठांशभागी नृपतिः कुवृत्तः ॥

अपि च ।

यः शस्त्रवृत्तिः समरे रिपुः स्याद्यः कण्टको वा निजमण्डलस्य ।
अस्त्राणि तत्रैव नृपाः क्षिपन्ति न दीनकानीनशुभाशयेषु ॥

तन्मातः, अहमैहिकामुत्रिकचरित्रानपत्रपस्तेषु प्राणिषु कथं नाम अस्त्रं प्रयोजयामि । किं च ।

न कुर्वीत स्वयं हिंसां प्रवृत्तां च निवारयेत् ।
जीवितं बलमारोग्यं शश्वद्वाञ्छन्महीपतिः ॥

---

रत्नपुरपतने नृपतिदोषात् राजदोषात् भूदेवेषु ब्राह्मणेषु आसवोपयोगः मद्यपानम् । तथा नृपतिदोषात् पारसीकेषु राश्वानदेशेषु स्वसवित्रीसंयोगः.............................. । तथा नृपतिदोषात् सिंहलेषु च विश्वामित्रसृष्टिप्रयोगः श्रूयते वर्णसंकर आकर्ण्यते इति ॥

ततस्तस्मात् कारणात् । **यथेत्यादि** । यथैव येन प्रकारेण सुकर्मभाजां पुण्यकर्मणां लोकानां सुवृत्तो नृपतिः सदाचारो राजा पुण्यस्य षष्ठांशभागी भवति, तथैव तेनैव प्रकारेण कुकर्मभाजां पापकर्मणां लोकानां कुवृत्तो नृपतिः दुराचारो राजा पापस्य षष्ठांशभागी भवति ॥

अपि च तथा च । **य इत्यादि** । यो रिपुः शत्रुः समरे संग्रामे शस्त्रवृत्तिरायुधवान् स्यात् भवति । तथा च अथ वा निजमण्डलस्य निजदेशस्य यः कण्टको धाट्यादिदायकः भवति । तत्रैव शत्रौ नृपा राजानो अस्त्राणि क्षिपन्ति मुञ्चन्ति । न दीनकानीनशुभाशयेषु दीनेषु दुर्बलेषु कानीनेषु अकिंचित्करेषु शुभाशयेषु यतिवर्गादिषु अस्त्राणि न मुञ्चन्ति ॥

तत्तस्मात् कारणात् हे मातः, अहं ऐहिकामुत्रिकचरित्रानपत्रप इहलोकपरलोकाचरणे अनपत्रपः अविद्धः सन् तेषु प्राणिषु दीनादिषु निरपराधेषु । नामेति संभावनायाम् । कथं केन प्रकारेण अस्त्रं खड्गादिकं प्रयोजयामि व्यापारयामि । अपि न कथमपीत्यर्थः ॥

किं च । मनाग्विशेषं कथयामि—**नेति** । महीपती राजा स्वयं आत्मना हिंसां प्राणिघातं न कुर्वीत न कुर्यात् । प्रवृत्तां च अपरैः कृतां हिंसां निवारयेत् निषेधयेत् । महीपतिः किं कुर्वन् । जीवितं दीर्घायुष्कं बलं शरीरस्य सामर्थ्यं आरोग्यं शश्वन्निरन्तरं वाञ्छन्नभिलषन् ॥



यो दद्यात्काञ्चनं मेरुं कृत्स्नां चापि वसुंधराम् ।
एकस्य जीवितं दद्यात्फलेन न समं भवेत् ॥
यथात्मनि शरीरस्य दुःखं नेच्छन्ति जन्तवः ।
तथा यदि परस्यापि न दुःखं तेषु जायते ॥

इति श्लोकत्रयं गतवत्येव दिने **हिरण्यगर्भ**स्य मन्त्रिणः सुतेन **नीतिबृहस्पति**ना मामध्यापितवती भवत्येव । कथं नाम विस्मृता । विधेयमेव चाशुभमपि कर्म । को दोषो यदि हन्यमानस्येवात्मनो न भवेयुः सुलभ्यान्यापदि विजृम्भितानि ।

संतर्पणार्थं द्विजदेवतानां पुष्ट्यर्थमङ्गस्य च सन्त्युपायाः ।
अन्येऽपि लोके बहवः प्रशस्ताः सन्तः कुतः पापमिहाचरन्ति ॥
शुक्रशोणितसंभूतमशुचीनां निकेतनम् ।
मांसं चेत्प्रीणयेद्देवानेतद्व्याघ्रानुपास्महे ॥

---

**य इति** । यः पुमान् मेरुप्रमाणं काञ्चनं दद्यात् ददाति । कृत्स्नां चापि वसुंधरां दद्यात् । एकस्य जीवितमभयदानं दद्यात् । स पुमान् फलेन कृत्वा समं न भवेत् । जीवितदानस्य अधिकफलं प्राप्नुयादित्यर्थः ॥

**यथेति** । यथा येन प्रकारेण आत्मनि शरीरस्य दुःखं जन्तवो जीवा नेच्छन्ति, तथा तेन प्रकारेण यदि चेत् परस्यापि अन्यस्यापि जीवस्य यदि दुःखं नेच्छन्ति तर्हि तेषु जीवेषु दुःखमसातं न जायते नोत्पद्यते ॥

इति एतत् श्लोकत्रयं पद्यत्रितयं गतवत्येव दिने ह्यस्तने दिवसे हिरण्यगर्भस्य नाम्नो मन्त्रिणः सुतेन नीतिबृहस्पतिनाम्ना मां भवत्येव त्वमेव अध्यापितवती अपीपठत् । कथं केन प्रकारेण । नामेति संबोधने । विस्मृता विस्मृतवती । विधेयमेव च कर्तव्यमेव च अशुभमपि कर्म पातकं कर्तव्यम् । को दोषो वर्तते, अपि तु न कश्चित्, यदि चेत् हन्यमानस्येव मार्यमाणस्येव आत्मनो निजजीवस्य न भवेयुर्न भवन्ति । कानि न भवन्ति । आपदि आपदायां सुलभ्यानि सुप्राप्याणि विजृम्भितानि व्यापृतप्रसराः ॥

**संतर्पणार्थमित्यादि** । द्विजदेवतानां ब्राह्मणकुलदेवतादीनां संतर्पणार्थं प्रीणनार्थम्, अङ्गस्य च शरीरस्य च पुष्ट्यर्थम्, अन्येऽपि जीवघातादपि बहवः अनेके प्रशस्ताः प्रशंसनीया लोके लोकमध्ये उपायाः सन्ति वर्तन्ते । तर्हि हे मातः, सन्तः सत्पुरुषाः कुतः कस्मात् कारणात् पापं हिंसादि कर्म इह अस्मिन् संसारे आचरन्ति कुर्वन्ति ॥

**शुक्रेति** । हे मातः, चेद्यदि मांसं कर्तृभूतं देवान् प्रीणयेत् तर्पयेत् । कथंभूतं मांसम् ।

मिथ्या चायं प्रवादः पशूपहारेण देवतास्तुष्यन्तीति ।

हताः कृपाणेन वनेऽपि जन्तवो बाढं म्रियन्ते गलपीडनाच्च ।
अदन्ति चैतान्स्वयमेव देव्यो व्याघ्राः स्तवार्हाः परमत्र सन्तु ॥
कृत्वा मिषं दैवमयं हि लोको मद्ये च मांसे च रतिं करोति ।
एवं न चेद्दुर्गतिसंगतिः स्याद्दुष्कर्मणां कोऽपर एव मार्गः ॥

यदि च हिंसैव परमार्थतो भवति धर्मः, कथं तर्हि मृगयायाः पापर्धिरिति रूढिः, मांसस्य च पिधायानयनम्, तत्संस्कर्तुर्गृहाद्बहिर्वासः, रावणशाक इति नामान्तरव्यपदेशः, पर्वदिवसेषु वर्जनं च ।

---

शुक्रशोणितसंभूतं शुक्रं पितुः सप्तमो धातुः, शोणितं रुधिरं मातुर्द्वितीयो धातुः, ताभ्यां संभूतमुत्पन्नम् । पुनः कथंभूतम् । अशुचीनां निकेतनं विष्ठादीनां स्थानम् । तर्हि एतस्मात् गच्छत यूयम्, व्याघ्रान् द्वीपिनः उपास्महे । तेऽपि यस्मात् मांसेन प्रीयन्ते ॥

मिथ्या चायं प्रवादः असत्योऽयं वादः । अयं कः । पशूपहारेण देवताः तुष्यन्ति संतोषमाप्नुवन्ति इति ॥

**हता इति** । हे मातः, जन्तवो वने । अपिशब्दात् नगरेऽपि । कृपाणेन हताः सन्तो बाढमतिशयेन म्रियन्ते गतासवो भवन्ति । न केवलं कृपाणेन हताः । गलपीडनाच्च गलमोटनाच्च म्रियन्ते । छागादीनां वस्त्रेण पूरयित्वा गलमोटनं कृत्वा मारयित्वा मारयन्ति कर्मचाण्डालास्तथापि म्रियन्ते । देव्यः कुलदेवतादयः स्वयमेव एतान् पशून् अदन्ति च किं नु खादन्ति च । अस्माद्दाने किमपेक्षां कुर्वन्ति । व्याघ्रास्तु स्तवार्हाः स्तुतियोग्याः परं निश्चयेन अत्र संसारे सन्तु भवन्तु । यतस्ते पशून् मारयित्वा स्वयं भक्षयन्ति, देवतास्तु अस्मान् प्रेरयित्वा मरणं कारयित्वा पश्चात् भक्षयन्ति । ततो देवताः स्तवनार्हा न भवन्ति ॥

**कृत्वेति** । अयं लोकः पापिष्ठो जनः दैवं देवतासंबन्धि मिषं कृत्वा हि निश्चयेन मद्ये च मांसे च रतिं करोति । देवता भवान्यादयः किल मद्यपाने मांसभक्षणे च रतिं कुर्वन्ति प्रीयन्ते इति कथयित्वा लोको मद्यादौ प्रवर्तते । एवं देवतामिषं चेत् न भवति तर्हि दुर्गतिसंगतिः नरकादिसंगतिः दुष्कर्मणां पापिष्ठानां अपरोऽन्यः क एव मार्गः स्यात् । अपि तु न कश्चिन्मार्गः स्यात् । देवतामिषं एव दुर्गतिमार्ग इत्यर्थः ॥

यदि च हे मातः, हिंसैव जीववध एव परमार्थतो निश्चयाद्धर्मो भवति संजायते, तर्हि मृगयाया आखेटकस्य पापर्धिरिति रूढिः प्रसिद्धिः कथं केन प्रकारेण भवति । मांसस्य च पिधायानयनं आवृत्यानयनं कथम्, तत्संस्कर्तुः मांसकारस्य गृहाद्बहिर्वासः कथम्, 'रावणशाक' इति नामान्तरव्यपदेशः मांसस्य रावणशाक इति ईदृशं नामान्तरकथनं कथम्, पर्वदिवसेषु च अष्टमी-चतुर्दशी-अमावास्या-एकादश्यादिदिनेषु वर्जनं कथम् ॥



यावन्ति पशुरोमाणि पशुगात्रेषु भारत ।
तावद्वर्षसहस्राणि पच्यन्ते पशुघातकाः ॥

इति कथमियं पौराणिकी श्रुतिः ।

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदेयं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविबन्धो गुरुषु च विनतिः सर्वभूतानुकम्पा
सामान्यं सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष मार्गः ॥

इति कथमेतत्सर्वपथीनमुवाच **वररुचिः** ।

होमस्नानतपोजाप्यब्रह्मचर्यादयो गुणाः ।
पुंसि हिंसारते पार्थ चाण्डालसरसीसमाः ॥

इति कथमियं **व्यासोक्तिः** ।

---

**यावन्तीति** । यावन्ति पशुरोमाणि पशुगात्रेषु वर्तन्ते । हे भारत युधिष्ठिर महाराज, तावन्ति वर्षसहस्राणि तत्परिमाणाः वर्षसहस्राणि पशुघातका नरकेषु पच्यन्ते । इतीदृशी इयं एषा पौराणिकी श्रुतिः महाभारतशास्त्रश्रुतिः कथं वर्तते ॥

**प्राणाघातादित्यादि** । प्राणाघातात् प्राणव्यपरोपणात् निवृत्तिर्नियमः, परधनहरणे परद्रव्यापहरणे संयमो यावज्जीवनियमः, सत्यवाक्यं अनृतवचनपरिहारः, काले मुनिवेलायां शक्त्या निजवित्तानुसारेण प्रदेयं दानं भवति, परेषां परपुरुषाणां युवतिजनकथातः मूकभावः । परस्त्रीणामप्रशंसनमित्यर्थः । तृष्णास्रोतोविबन्धः तृष्णा लोभः सैव स्रोतो जलप्रवाहस्तस्य विबन्धः । परिग्रहपरिमाणमित्यर्थः । गुरुषु च दीक्षादेशकेषु विनतिर्नमस्कारः, सर्वभूतानुकम्पा सर्वेषु निर्गुणेषु गुणवत्सु च भूतेषु अनुकम्पा कारुण्यम्, सामान्यं सर्वसाधारणः सर्वशास्त्रेषु जैनशैवादिषु ग्रन्थेषु श्रेयसां पुण्यानां एष मार्गः अयं मार्गः । कथंभूतोऽयं मार्गः । अनुपहतविधिः । एतं मार्गं कोऽपि नोल्लङ्घत इत्यर्थः । इति कथं केन प्रकारेण एतदिदं सर्वपथीनं सर्वसाधारणं वररुचिः कात्यायनः उवाच ॥

**होमेत्यादि** । हे पार्थ हे अर्जुन, होमस्नानतपोजाप्यब्रह्मचर्यादयः होमश्च अग्निमुखे देवतानामाहुतिः, स्नानं च गङ्गाद्वारादौ जलस्नानम् । उक्तं च—'गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते । स्नात्वा कनखले तीर्थे संभवेन्न पुनर्भवे ॥' तपश्च सांतपनम् । उक्तं च—'अहं सायमहं प्रातस्त्र्यहमद्यादयाचितम् । अहं परं च नाश्नीयात्कृच्छ्रं सांतपनं स्मृतम् ॥' जाप्यं मन्त्रजापः, ब्रह्मचर्यं च शीलरक्षणं होमस्नानतपोजाप्यब्रह्मचर्याणि तानि आदिर्येषां सत्यवचनादीनां ते तथोक्ता एते गुणाः हिंसारते पुंसि चाण्डालसरसीसमाः चाण्डालतडागोदकवदग्राह्याः । इतीदृशीयमेषा व्यासोक्तिर्व्यासस्य सत्यवतीपुत्रस्य उक्तिर्वचनं कथं वर्तते ॥

भूषितोऽपि चरेद्धर्मं यत्र तत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥

इति कथमिदमाह **वैवस्वतो मनुः** ।

अवक्षेपेण हि सतामसतां प्रग्रहेण च ।
तथा सत्त्वेष्वभिद्रोहादधर्मस्य च कारणात् ॥
विमाननाच्च मान्यानां विश्वस्तानां च घातनात् ।
प्रजानां जायते लोपो नृपतेश्चायुषः क्षयः ॥

कथमिदमभाषत **षाड्गुण्यप्रस्तावे भारद्वाजः** ।

चातुर्मास्येष्वर्धमासिकम्, दर्शपौर्णमासयोश्चातूरात्रिकम्, राजनक्षत्रे गुरुपर्वणि च त्रैरात्रिकम्, एवमन्यासु चोपहतासु तिथिषु द्विरात्रमेकरात्रं वा सर्वेषामघातं घोषयेदायुर्बलवृद्ध्यर्थमिति कथमुपनिषदि वदति स्म **विशालाक्षः** ।

---

**भूषितोऽपीति** । भूषितोऽपि गृहस्थोऽपि चरेत्कुर्यात् । कम् । धर्मम् । अपिशब्दात् यतिरपि धर्मं चरेत् । यत्र तत्र यस्मिन् कस्मिन् ब्रह्मचर्याश्रमे वानप्रस्थाश्रमे भिक्षुकाश्रमे वा रतः धर्मं चरेत् । स कथंभूतः । सर्वेषु भूतेषु जीवेषु समः समतापरिणामः । लिङ्गं जटिमुण्डीत्यादिकं चिह्नं धर्मकारणं धर्महेतुर्न भवति । इतीदृशमिदमेतद्वैवस्वतो मनुः आदित्यपुत्रो मनुः कथमाह कथं ब्रवीति ॥

**अवक्षेपेणेति** । अवक्षेपेण तिरस्कारेण हि निश्चयेन सतां साधूनां शिष्टानाम्, असतामसाधूनां प्रग्रहेण स्वीकारेण च, तथा तेनैव प्रकारेण सत्त्वेषु अभिद्रोहात् वधकारणात्, अधर्मस्य च कारणात् पापस्य प्रयोजनात्,

**विमाननाच्चेति** । मान्यानां विमाननात् भङ्गकरणात्, विश्वस्तानां च घातनात्, प्रजानां लोकानां लोपो विनाशो जायते । नृपतेश्च नरेन्द्रस्य आयुषः क्षयो जायते आयुस्त्रुट्यति । इदमेतद्वचनं षाड्गुण्यप्रस्तावे संधिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्याः तदवसरे भारद्वाजो द्विजः कथमभाषत कथमुक्तवान् ॥

चातुर्मास्येषु वर्षाकाले अर्धमासिकं पञ्चदश दिनानि अघातं घोषयेत् । दर्शपौर्णमासयोः ...................................चातूरात्रिकं.................................. । राजनक्षत्रे यस्मिन्नक्षत्रे राज्ञो जन्म बभूव, गुरुपर्वणि च संक्रान्त्यादिषु त्रैरात्रिकं त्रिदिनानि सर्वेषां अघातं घोषयेत् । एवममुना प्रकारेण अन्यासु च अपरासु च उपहतासु ग्रहणादिदूषितासु तिथिषु द्विरात्रं द्वे दिने एकरात्रं वा तस्मिन्नेव वासरे सर्वेषां अघातं घोषयेत् आयुर्बलवृद्ध्यर्थम् । इतीदृशं उपनिषदि वेदान्तशास्त्रे विशालाक्षः प्रभाकरऋषिः कथं वदति स्म कथमुवाच ॥



आहारः साधुजननिन्दितो मधुमांसादिरिति कथं चेदं मृगयोपयोगानन्दं शबरवृन्दं निन्दितावादि **बाणेन** ।

**माता**—(स्वगतम् ।) अहो, मदीये सुते सांप्रतं जैनजनवात इव लग्नः प्रतिभासते । विषमश्च खलु भवत्ययं जनः, यस्माच्चिरं समयान्तरोपरचितप्रतीकाराण्यप्यन्येषां मनांसि प्रायेण पश्यतोहर इव हरत्यार्हतो लोकः । तद्वासनावासितं हि चेतो न ब्रह्मणापि शक्यतेऽन्यथाकर्तुम् । दुश्चिकित्स्यश्च खलु करिणां कूटपाकल इव प्राणिनां क्षपणकोपनीतश्चित्तस्याभिनिवेशः । कथितं च मेऽपरेद्युरेव **शिवभूतेः** पुरोहितस्यात्मजेन **शिवशर्मणा**, यथा—अम्बादेवि, राजाद्य भूमणिकायां गतस्तरुमूलनिवासिनमवाससमिन्द्रार्चितचरणनामधेयमद्राक्षीत् । तद्दर्शननिवारणे च कृतकापेयमपि मामवमत्य तेन सह महतीं वेलामिति प्रश्नोत्तरपरम्पराप्रवृत्तमुदन्तमकार्षीत्—

---

आहारो भोजनं साधुजननिन्दितः साधुलोकगर्हितो मधुमांसादिरितीदृशं इदमेतच्च मृगयोपयोगानन्दं आखेटकजीवनानन्दं शबरवृन्दं निन्दिता गर्हिता बाणेन महाकविना कथमवादि कथमुक्तम् ॥

माता स्वगतं निजमनसि चिन्तयति—अहो आश्चर्यम् । मदीये सुते सांप्रतं जैनजनवातः जैनलोकवासना लग्न इव संगत इव प्रतिभासते मम चेतसि चमत्करोति । खलु वाक्यालंकारे । अयं जन एष लोको विषमश्च असाध्यश्च भवति । यस्मात् कारणात् चिरं दीर्घकालं समयान्तरोपरचितप्रतीकाराण्यपि समयान्तरैः शास्त्रान्तरैरुपरचिताः प्रतीकाराः चिकित्सितानि येषां मनसां तानि समयान्तरोपरचितप्रतीकाराणि अपरशासनविरचितवासनान्यपि अन्येषां अपरेषां लोकानां मनांसि प्रायेण अर्हतो लोको जैनो लोको हरति निजवासनां लगयति स्वशासनं प्रत्यानयति । क इव । पश्यतोहर इव चौर इव । तद्वासनावासितं जैनलोकभावनावासितं चेतो मनः ब्रह्मणा सृष्टिकर्त्रापि अन्यथाकर्तुं जैनवासनारहितं विधातुं न शक्यते न समर्थेन भूयते । कथम् । हि स्फुटमेतत् । क्षपणकोपनीतः दिगम्बरमुनिप्रापितः चित्तस्य मनसोऽभिनिवेशोऽभिप्रायो दुश्चिकित्स्यश्च दुःप्रतीकारश्च भवति । कथम् । खलु निश्चयेन । क इव । करिणां कूटपाकल इव हस्तिनां सद्यःप्राणहरज्वर इव । उक्तं च—'पाकलं कुलभैषज्ये पाकलो द्विरदज्वरः' । कथितं च निरूपितं च मे मम अपरेद्युरेव अन्यस्मिन्नहन्येव शिवभूतेः शिवभूतिनाम्नः पुरोहितस्य राजगुरुब्राह्मणस्य आत्मजेन शिवशर्मणा । किं कथितम् । यथा हे अम्बादेवि, राजा श्रीयशोधरः अद्य अस्मिन्नहनि भूमणिकायां वनक्रीडायां गतः तरुमूलनिवासिनं वृक्षमूलस्थितं इन्द्रार्चितचरणनामधेयं अवाससं दिगम्बरं अद्राक्षीद्विलोकितवान् । तद्दर्शननिवारणे च तन्नोष्ठीनिषेधे च कृतकापेय-

को भगवन्निह धर्मो यत्र दया भूप सर्वसत्त्वानाम् ।
को नामाप्तो यत्र हि न सन्ति सांसारिका दोषाः ॥
तज्ज्ञाने क उपायः शास्त्रं यच्चैकवाक्यतायातम् ।
तर्हि तपः किं विषयव्यासङ्गविनिग्रहो यत्र ॥
जीवः को यत्रैते भवन्ति बुद्ध्यादयः स्वसंवेद्याः ।
तस्यामूर्तस्य सतः शरीरबन्धः कथं भवति ॥
स्वकृतैः कर्मभिरेष प्रयाति जीवः शरीरबन्धं वा ।
वातेरितैः परागैर्भवति यथा संगमो नभसः ॥

---

मपि विहितचपलत्वमपि मां शिवशर्माणमवमत्य अवगणय्य तेन सह इन्द्रार्चितचरणनाम्ना
दिगम्बरेण सह महतीं वेलां इतीदृशं उदन्तं वार्तामकार्षीत् चकार । कथंभूतमुदन्तम् ।
प्रश्नोत्तरपरम्पराप्रवृत्तं मदीयेन राज्ञा प्रश्नपरम्परा कृता, तेन तदुत्तरपरम्परा दत्ता,
तस्यां प्रश्नोत्तरपरम्परायां प्रवृत्तः संजातः प्रश्नोत्तरपरम्पराप्रवृत्तस्तम् ॥

**क इति** । राजा प्राह—हे भगवन् हे इन्द्रार्चितचरणमुनिस्वामिन्, इह संसारे धर्मः
कः । भगवानाह—हे भूप, सर्वसत्त्वानां सगुणनिर्गुणप्राणिनां यत्र यस्मिन् धर्मे दया
कारुण्यं वर्तते स धर्मः । राजा प्राह—हे भगवन्, को नाम आप्तो देवो वर्तते ।
मुनिराह—यत्र दोषाः हि निश्चयेन न सन्ति । के दोषाः । सांसारिकाः संसारे
भवाः सांसारिकाः । सांसारिका दोषाः क्षुदादयः । उक्तं च—'क्षुत्पिपासा जरातङ्का
जन्मान्तकभयाः स्मयाः । न रागद्वेषमोहाश्च यस्याप्तः स प्रकीर्तितः ॥' चकाराच्चिन्ता-
रतिनिद्राविषादस्वेदविस्मया गृह्यन्ते । इत्यष्टादश दोषाः ॥

**तज्ज्ञान इति** । राजा प्राह—तज्ज्ञाने आप्तपरिज्ञाने क उपायः । मुनिराह—एक-
वाक्यतायातं पूर्वापरविरोधरहितं यच्च शास्त्रम् । राजा प्राह—तर्हि हे भगवन्, तपः किं
दीक्षा का । मुनिराह—यत्र यस्मिन् तपसि दीक्षायां विषयव्यासङ्गविनिग्रहः विषयाणां
स्पर्शरसगन्धरूपशब्दानां व्यासङ्गः संगतिस्तस्य विनिग्रहः परिहारो वर्तते ॥

**जीव इति** । राजा प्राह—जीवः क आत्मा को वर्तते । मुनिराह—यत्र जीवे एते
अमी बुद्ध्यादयो बुद्धिसुखदुःखादयो भवन्ति वर्तन्ते । बुद्ध्यादयो गुणाः कथंभूताः ।
स्वसंवेद्याः स्वेनैव संवेद्या आत्मनैव ज्ञापनीयाः । राजा प्राह—हे भगवन्, तस्यात्मनः
अमूर्तस्य सतो मूर्तिरहितस्य शरीरबन्धः कथं केन प्रकारेण भवति ॥

**स्वकृतैरिति** । मुनिराह—स्वकृतैरात्मनोपार्जितैः कर्मभिः कृत्वा एष जीवः शरीरस्य
बन्धं मेलनं प्रयाति गच्छति । यथा येन प्रकारेण वातेरितैर्वायुप्रेरितैः परागै रजोभिः
नभस आकाशस्य संगमो भवति मेलापकः स्यात् ॥



तैरेव गर्भवासे स नीयते निजफलोपभोगार्थम् ।
अशुचिनि मदनद्रव्यैर्निपात्यते श्रोत्रियो यद्वत् ॥
अस्मादृशां स धर्मः कथं तु निजशक्तितो व्रतग्रहणात् ।
किं व्रतमिह वाञ्छाया यो दर्शनपूर्वको नियमः ॥
किं दर्शनमिदमाहुर्या श्रद्धा युक्तितः पदार्थेषु ।
के पुनरमी पदार्था यैरेतद्वर्तते जगच्चक्रम् ॥

तत्प्रभृति न साभिलाषं सेवते मधूनि, न मांसमभिनन्दति, नाखेटक-
मनुमन्यते, न हव्यकव्यार्थमालभते पशून्, श्रुतिस्मृतिवाक्येषु च प्रतिकू-
लतया प्रयच्छत्युत्तराणीति । (प्रकाशम् । मुक्तौष्ठतया प्रसार्य समीपवर्तिनः ।)

---

**तैरिति** । तैरेव कर्मभिरेव स जीवः गर्भवासे संमूर्छनगर्भोपपादनलक्षणानुभवजन्मस्था-
ने नीयते प्राप्यते । किमर्थं गर्भवासे नीयते । निजफलोपभोगार्थं निजस्य कर्मणः शुभाशुभ-
लक्षणस्य फलस्य सुखदुःखलक्षणस्य उपभोगार्थं अनुभवनार्थम् । यद्वत् यथा मदनद्रव्यै-
र्धात्रीकोद्रवादिकैर्द्रव्यैः श्रोत्रियश्चतुर्वेदपाठको ब्राह्मणः अशुचिनि विष्ठायां निपात्यते
निक्षिप्यते ॥

अथ राजा प्राह—**अस्मादृशामिति** । हे भगवन् । तु इति प्रश्ने । स पूर्वोक्तः सर्व-
सत्त्वदयालक्षणो धर्मः अस्मादृशां अस्मद्विधानां पुरुषाणां कथं केन प्रकारेण भवति ।
मुनिराह—निजशक्तितः आत्मशक्त्यनुसारेण व्रतग्रहणात् व्रतस्वीकारात् । राजा प्राह—
हे भगवन्, इह संसारे व्रतं किम् । मुनिराह—हे राजन्, वाञ्छाया यो नियमो निरो-
धस्तद्व्रतम् । कथंभूतो नियमः । दर्शनपूर्वकः सम्यक्त्वपूर्वकः ॥

राजा प्राह—**किमिति** । हे भगवन्, इदमेतत् दर्शनं सम्यक्त्वं किं आहुः किं ब्रुवन्ति
मुनयः । मुनिराह—हे राजन्, या पदार्थेषु जीवाश्रवबन्धसंवरनिर्जरामोक्षलक्षणोपलक्षि-
तेषु सप्तसु तत्त्वेषु श्रद्धा रुचिस्तद्दर्शनम् । श्रद्धा कथम् । युक्तितः तर्कशास्त्रानुसारेण ।
राजा प्राह—हे भगवन्, अमी एते पुनश्च पदार्थाः के वर्तन्ते । मुनिराह—यैः पदार्थैरे-
तदिदं जगच्चक्रं त्रैलोक्यं वर्तते भवति । प्रश्नोत्तरालंकारः ॥

तत्प्रभृति इन्द्रार्चितचरणमेलापकमादिं कृत्वा मधूनि मध्वादीनि क्षौद्राणि साभिलाषं रुचि-
पूर्वकं न सेवते न खादयति, मांसं नाभिनन्दति न प्रशंसति, आखेटकं पापर्धिं नानुमन्यते
नानुमोदते, हव्यकव्यार्थं देवपितृकार्ये पशून् तिरश्चः नालभते न हिनस्ति, श्रुतिस्मृति-
वाक्येषु च प्रतिकूलतया पराङ्मुखतया उत्तराणि प्रयच्छति प्रतिवचनानि ददाति । प्रकाशं
चन्द्रमतिः प्रकटं वदति—किं कृत्वा पूर्वम् । समीपवर्तिनो लोकान् मुक्तौष्ठतया अधरं दीर्घं

रे मम पुत्रस्य च तन्त्रस्य च सर्वस्वखादिनः, प्रजानां च लञ्चालुञ्चाः, निशाचराः, किमेवमस्मत्पुत्रो भवतां नाशयितुं युक्तम् । ननु सदाहं निवारयामि भवतः, यदुतायमद्याप्यपरिपक्वबुद्धिः व्यलीकवैदग्ध्यात्मसमारोपितपण्डितंमन्यभावः श्रीविलासरसवासनासंजातसुकुमारप्रकृतिश्चन्द्रगहिल इव प्रसिद्धेष्वपि वस्तुषु विस्मयोत्फुल्ललोचनश्छिद्यमानगलश्छगल इवाहितकारिणोऽपि जनस्य मुग्धतयातीवमुखनिरीक्षणकुतूहली कदाचिदपि जगन्मोहनाभ्यस्तकौशलैरिन्द्रजालकैरिव दिगम्बरैर्न संगमयितव्य इति कोपसकम्पां वाचमुच्चारयन्ती तर्जयित्वा च मनाग्भ्रूक्षेपेण माम्—अहो असंजातबुद्धिपरिपाक चार्वाक, समाकर्णय। ज्ञातः खलु भवतोऽभिप्रायः । तत्राहमेव समर्था दातुमुत्तरमित्यभिप्रेत्येदमवादीत्—

---

कृत्वा प्रसार्य आलम्भं दत्वा । रे अरे मम पुत्रस्य तन्त्रस्य च सैन्यस्य च सर्वस्वखादिनः सर्वधनभक्षकाः, रे प्रजानां च लञ्चालुञ्चा उत्कोटग्राहकाः, रे निशाचराः पिशाचाः, अस्मत्पुत्रोऽस्माकं सुतः भवतां युष्माकं एवं दिगम्बरसंगमकरणप्रकारेण नाशयितुं किं युक्तं किं विनाशयितुं योग्यो भवति । ननु सदा अहं भवतो युष्मान् निवारयामि निषेधामि, यदुत यत् अयं अस्मत्पुत्रः अद्यापि अपरिपक्वबुद्धिर्वर्तते । अयं व्यलीकवैदग्ध्यात्मसमारोपितपण्डितंमन्यभावः व्यलीकेन असत्येन वैदग्ध्येन विद्वत्तया आत्मनि समारोपित आनीतः पण्डितंमन्यभावो पण्डितमात्मानं मन्यते पण्डितंमन्यः तस्य भावोऽभिप्रायो येन स तथोक्तः । पुनः कथंभूतोऽयम् । श्रीविलासरसवासनासंजातसुकुमारप्रकृतिः श्रियो विलासस्य रसस्य भोगानामनुरागस्य वासना तया संजाता सुकुमारा प्रकृतिः स्वभावो यस्य स तथोक्तः । या गर्भिणी स्त्री चन्द्रग्रहणे सति षरायां(?) स्वपिति तस्याः पुत्रश्चन्द्रग्रहिलो भवति । तद्वदयमपि प्रसिद्धेष्वपि वस्तुषु विख्यातेष्वपि पदार्थेषु विस्मयोत्फुल्ललोचनो वर्तते। विस्मयेन आश्चर्येण उत्फुल्ले लोचने वितर्कैः सितनेत्र इदं किमिति वदन्ति । छिद्यमानगलः द्विधाक्रियमाणकण्ठः छगलश्छाग इव अहितकारिणोऽपि खाटकिनो जनस्य मुग्धतया अविज्ञातस्वरूपत्वेन अतीवातिशयेन मुखनिरीक्षणकुतूहली वक्त्रालोकनविनोदवान् । अरे कदाचित् अपि दिगम्बरैः सह अस्मत्पुत्रः न संगमितव्यः न मेलनीय इति । कथंभूतैर्दिगम्बरैः । जगन्मोहनाभ्यस्तकौशलैः जगतां मोहने वशीकरणे अभ्यस्तमनुशीलितं कौशलं प्रवीणत्वं यैस्ते तथा तैः । पुनः कथंभूतैर्दिगम्बरैः । इन्द्रजालकैरिव इन्द्रजालविद्याविद्भिरिव । इति कोपसकम्पां कोपेन कम्पवतीं वाचं वाणीमुच्चारयन्ती मनाग्भ्रूक्षेपेण तर्जयित्वा निर्भर्त्स्य अहो यशोधर असंजातबुद्धिपरिपाक अनुत्पन्नमनुषीभूय..............................

..........इदं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण अवादीज्जगाद । इदं कथमिति चेत् ।



न तर्पणं देवपितृद्विजानां स्नानस्य होमस्य न चास्ति वार्ता ।
श्रुतेः स्मृतेर्बाह्यतरे च धीस्ते धर्मे कथं पुत्र दिगम्बराणाम् ॥
उद्भाः पशूनां सदृशं ग्रसन्ते ये लज्जया शौचगुणेन हीनाः ।
त्वत्तः परस्तैः सह को हि गोष्ठीं करोतु देवद्विजनिन्दकैश्च ॥
नामापि पूर्वं न समस्त्यमीषामभूत्कलौ दर्शनमेतदीयम् ।
देवो मनुष्यः किल सोऽप्यनेकस्त एवमिच्छन्ति च निर्विचारम् ॥
धर्मे प्रमाणं खलु वेद एव वेदात्परं दैवतमत्र नास्ति ।
यो वेद सम्यङ् न हि वेदमेनं वर्णाश्रमाचारमसौ न वेद ॥
अथास्ति भक्तिस्तव दैवतेषु हरं हरिं वार्चय भास्करं वा ।
नयन्ति हृष्टाः स्वपुरीं क्षणेन तुष्टाः प्रयच्छन्ति च राज्यमेते ॥

---

**नेति** । हे पुत्र, एतेषां दिगम्बराणां धर्मे देवपितृद्विजानां तर्पणं न वर्तते, स्नानस्य होमस्य च वार्तापि नास्ति, श्रुतेर्वेदात् स्मृतेर्धर्मशास्त्रात् एते बाह्यतरे अतीवबाह्या वर्तन्ते, ईदृग्विधानां दिगम्बराणां धर्मे ते तव धीः बुद्धिः कथं वर्तते ॥

**उद्भा इति** । ये दिगम्बराः उद्भाः ऊर्ध्वस्थिताः पशूनां सदृशं तिरश्चां समानं ग्रसन्ते भुञ्जन्ते । ये लज्जया अपत्रपया शौचगुणेन च मृत्तिकया पायुप्रक्षालनेन हीना वर्तन्ते । तैः दिगम्बरैः सह त्वत्तः परस्त्वत्परः कः पुमान् गोष्ठीं वार्तां करोतु विदधातु । कथम् । हि स्फुटम् । कथंभूतैः दिगम्बरैः । देवद्विजनिन्दकैश्च हरिहरहिरण्यगर्भादिदेवानां द्विजानां च ब्राह्मणानां निन्दकैः अपवादकारकैश्च ॥

**नामेति** । हे पुत्र, एतदीयं अमीषां दिगम्बराणां पूर्वं कृतयुगत्रेताद्वापरादिषु नामापि न समस्ति वर्तते । एतदीयं दर्शनं दिगम्बरीयं पूर्वं न मतं कलौ काले अभूद्बभूव । ते दिगम्बरा एवं अमुना प्रकारेण निर्विचारं यथा भवत्येवं इच्छन्ति च मन्यन्ते च । एवं कथमिति चेत् दिगम्बराणां मते मनुष्यः किल देवः सोऽपि अनेको बहुगणनः ॥

**धर्म इति** । हे पुत्र, धर्मे खलु वेद एव श्रुतिरेव प्रमाणं वर्तते। वेदात्परं अत्र संसारे दैवतं देवो नास्ति । वेद एव दैवतमित्यर्थः । यः पुमान् सम्यक्प्रकारेण एनं वेदं इमं वेदं न हि नैव वेद विजानाति । उक्तं च—'अहो ब्रुवश्च पञ्चानां नवानां च विदेस्तथा । अडादयो निपात्यन्ते तिबादीनां यथाक्रमात् ॥' यः पुमान् वेदं न वेद असौ पुमान् वर्णाश्रमाचारं चतुर्वर्णचतुराश्रमाचारं न वेद न जानाति ॥

**अथेति** । हे पुत्र, अथ चेत् तव भवतो दैवतेषु भक्तिरनुरागः अस्ति वर्तते । तर्हि त्वं हरं श्रीमहादेवम्, हरिं वा लक्ष्मीकान्तम्, वा अथवा भास्करं श्रीसूर्यमर्चय पूजय ।

**राजा**—(स्वगतम्।) अहो, निसर्गादङ्गारमलिने हि मनसि न भवति खलु सुधासंबन्धोऽपि शुद्धये। यतः।

अन्तर्न विज्ञाय मुधानुरागिता स्वभावदुष्टाशयता विमूढता।
युक्तोपदेशे च विगृह्य वादिता भवन्त्यमी तत्त्वनिबन्धहेतवः॥

अपि च।

यः कार्यवादेषु करोति संधां स्वपक्षहानौ च भवेद्विलक्ष्यः।
तत्र स्वयं सामपरेण भाव्यं केनाप्युपायेन फलं हि साध्यम्॥
इयं हि तावज्जननी मदीया राज्यस्य साक्षादधिदेवता च।
सर्वं तदस्या घटते विधातुं प्रभुर्यदेवेच्छति तत्करोति॥

---

एते देवा हृष्टाः सन्तः स्वपुरीं निजनगरीं रुद्रलोकं विष्णुलोकं उर्वन्तरिक्षं नयन्ति। कथम्। क्षणेन शीघ्रतया। एते देवा रुष्टाः कोपं प्राप्ताः सन्तः राज्यं च प्रयच्छन्ति ददन्ति॥

राजा श्रीयशोधरमहाराजः स्वगतं आत्मगतं चिन्तयति—अहो आत्मन्, निसर्गात् अङ्गारमलिने हि निश्चयेन मनसि न भवति खलु सुधासंबन्धोऽपि शुद्धये अमृतेन प्रक्षालनमपि निर्मलत्वात् न संजायते॥

यतः कारणात्। **अन्तरिति**। अन्तश्चित्तं न विज्ञाय अज्ञात्वा मुधानुरागिता वृथास्नेहः, स्वभावदुष्टाशयता वा स्वभावेन दुष्टहृदयत्वं तत्, तृतीयं विमूढता अज्ञानत्वम्, चतुर्थं युक्तोपदेशे च युक्तार्थेनैव विगृह्य बलात्कारेण वादिता वादित्वम्। अमी एते चत्वारः पदार्थाः तत्त्वनिबन्धहेतवः तत्त्वज्ञाननिषेधकारणानि भवन्ति संजायन्ते॥

अपि च तथा च। **य इत्यादि**। यः पुमान् कार्यवादेषु कर्तव्यविचारेषु संधां प्रतिज्ञां करोति। यद्येवं न भवति तदा मम जिह्वा छिद्यते इत्यादि प्रतिज्ञां करोति। स्वपक्षहानौ च निजपक्षनिग्रहस्थाने सति विलक्ष्यः निष्प्रतिपत्तिको भवेत्। तत्र तस्मिन् पुरुषे स्वयमात्मनः सामपरेण मृदुभाषिणा भाव्यं भवितव्यं भवनीयम्। केनाप्युपायेन फलं साध्यम्। कथम्। हि स्फुटमिति शेषः॥

**इयमित्यादि**। इयमम्बादेवी हि निश्चयेन तावत्प्रथमतो मदीया मह्यं हिता जननी माता वर्तते। न केवलं जननी, राज्यस्य साक्षात् प्रत्यक्षीभूता अधिदेवता च अधिष्ठात्री वर्तते। तत्तस्मात् कारणात् अस्या अम्बादेव्याः सर्वं मयि निर्घाटनादिकं विधातुं कर्तुं घटते संगच्छते। अमुमेवार्थं अर्थान्तरन्यासेन दृढयति—प्रभुः स्वामी यदेव इच्छति तत्करोति॥

---

१. 'तुष्टास्तोषं' इति स्यात.



(प्रकाशम्।)

अज्ञानभावादथ चापलाद्वा कारुण्यतो वाधिगतावकाशः।
पूर्वं त्वयैवाहितकैर्गुणैर्वा ब्रुवे यदि क्षन्तुमनास्त्वमम्ब॥
पुत्रस्य पित्रानुचरस्य भर्त्रा शिष्यस्य वादो गुरुणा च सार्धम्।
सुशिक्षितस्यापि सुमेधसोऽपि न श्रेयसे स्यादिह नाप्यमुत्र॥
देवाभिषेकार्चनवन्दनानि जपप्रसंख्याश्रुतपूजनानि।
यथा स लोकः कुरुते तथाम्ब प्रष्टव्य एवैष जनो भवत्या॥
मर्त्येषु चेत्सद्मसु नाकिनां वा विधाय पुण्यं पितरः प्रयाताः।
तेषामपेक्षा द्विजकाकभुक्तैः पिण्डैर्भवेद्वर्षकृतैर्न कापि॥
गत्यन्तरे जन्मकृतां पितॄणां स्वकर्मपाकेन पुराकृतेन।
तत्रापि किं तेन न दृष्टमेतत्तृप्तिः परेषां परतर्पिणीति॥

---

राजा प्रकाशं स्फुटं ब्रवीति—**अज्ञानेत्यादि**। हे अम्ब, यदि चेत् अहं ब्रुवे उपन्यस्यामि तत्सर्वं भवती क्षन्तुमनाः क्षमाकर्तुंहृदया भव। अहं कस्माद्ब्रुवे। अज्ञानभावात् अविज्ञातस्वरूपत्वात्, अथवा चापलाद्वा ब्रुवे, वा अथवा ..................
..............पूर्वं त्वयैव भवत्यैव आहितकैर्गुणैः अहं ब्रुवे। तत्क्षन्तुमर्हसीत्यर्थः॥

**पुत्रस्येत्यादि**। हे मातः, पित्रा जनकेन सार्धं सह पुत्रस्य वादः इह अस्मिन् जन्मनि श्रेयसे शुभाय न स्यान्न भवेत्, अमुत्र भाविभावेऽपि श्रेयसे न स्यात्। तथा अनुचरस्य किंकरस्य भर्त्रा स्वामिना सह वादः श्रेयसे न स्यात्। तथा शिष्यस्य गुरुणा सार्धं सह वादः श्रेयसे न भवति। कथंभूतस्य पुत्रस्य अनुचरस्य शिष्यस्य च। सुशिक्षितस्यापि विद्योपादानं प्रापितस्यापि दत्तविद्यादानस्यापि। पुनः कथंभूतस्य। सुमेधसोऽपि शोभनबुद्धेरपि॥

**देवेत्यादि**। हे अम्ब, यथा येन प्रकारेण प्रशस्त आर्हतो लोको देवाभिषेकार्चनवन्दनानि देवस्नपनपूजनस्तवनानि कुरुते, तथा जपप्रसंख्याश्रुतपूजनानि मन्त्रजालपध्यापनभारतीचर्चनानि कुरुते विधत्ते, तथा तेनैव प्रकारेण एष जनो लोको भवत्या त्वयैव प्रष्टव्यः। अहं किं कथयामीत्यर्थः॥

**मर्त्येष्वित्यादि**। हे मातः, पितरः पूर्वजाः पुण्यं शुभं कर्म विधाय कृत्वा चेद्यदि मर्त्येषु मनुष्यभवेषु वा अथवा नाकिनां सद्मसु स्वर्गलोकेषु प्रयाता गतास्तर्हि तेषां पितॄणां द्विजकाकभुक्तैः ब्राह्मणवायस्यास्वादितैः वर्षकृतैः संवत्सरविहितैः कर्णागतैश्च पिण्डैः अपेक्षा न कापि भवेत् न काचित्संजायेत॥

**गत्यन्तर इत्यादि**। हे मातः, पुराकृतेन पूर्वोपार्जितेन स्वकर्मपाकेन निजकर्मोदयेन गत्यन्तरे अन्यगतौ जन्मकृतां कृतजन्मनां पितॄणां पूर्वजनानां तत्रापि गत्यन्तरेऽपि तैस्तैः पितृभिः किमेतत्तेन नैव दृष्टं विलोकितम्। एतत्किम्। परेषां ब्राह्मणादीनां तृप्तिस्तर्पणं

येनापि केनापि मिषेण मान्यैर्धर्मो विधेयः स्वहितैकतान्यैः ।
अनेन कामेन कृतः पुराणैर्मार्गोऽयमात्माभ्युदयप्रवीणैः ॥
निर्निमित्तं न कोऽपीह जनः प्रायेण धर्मधीः ।
अतः श्राद्धादिकाः प्रोक्ताः क्रियाः कुशलबुद्धिभिः ॥

किं च ।

पर्वतीर्थातिथिश्राद्धवारवासरतारकाः ।
नित्यं दातुमशक्तानां पुण्यायोक्ताः पुरातनैः ॥
जन्मैकमात्माधिगमो द्वितीयं भवेन्मुनीनां व्रतकर्मणा च ।
अमी द्विजाः साधु भवन्ति तेषां संतर्पणं जैनजनः करोति ॥
द्वयेन मार्गेण जगत्प्रवृत्तं गृहस्थवृत्त्या यतिकर्मणा च ।
तस्य द्वयस्यापि विभिन्नसृष्टेः शीतोष्णवन्नैकतया प्रवृत्तिः ॥

---

परतर्पिणी भवति पितॄणां तर्पिका भवतीति किं तेन न दृष्टं न ज्ञातम् । तेऽपि श्राद्धादिकं न कुर्वन्ति न च तथा वर्तन्ते ॥

**येनापीत्यादि** । हे मातः, येनापि केनापि मिषेण छद्मना मान्यैः सत्पुरुषैः धर्मो विधेयः । कथंभूतैर्मान्यैः । स्वहितैकतान्यैः आत्महिततन्निष्ठैः । अनेन कामेन अनया इच्छया पुराणैश्चिरंतनैरयं मार्गः श्राद्धलक्षणो मार्गः कृतो विहितः । कथंभूतैः पुराणैः । आत्माभ्युदयप्रवीणैर्निजात्मसौख्याप्राप्तिविचक्षणैः ॥

**निर्निमित्तमित्यादि** । हे मातः, इह संसारे कोऽपि जनो निर्निमित्तं कारणं विना प्रायेण धर्मधीः धर्मबुद्धिर्न वर्तते । अत एतस्मात् कारणात् कुशलबुद्धिभिः श्राद्धादिकाः क्रियाः प्रोक्ताः ॥

किं चास्ति विशेषः । **पर्वेत्यादि** । नित्यं सर्वकालं दातुं दानं कर्तुमशक्तानां पुरुषाणां पुरातनैश्चिरंतनैरेते अवसराः पुण्याय प्रोक्ताः । एते के । पर्व च अमावास्यादिकम्, तीर्थं च गङ्गागोदावर्यादिकम्, अतिथयश्च प्राघूर्णकाः, श्राद्धं च पक्षमध्ये भोजनदानम्, वारश्च आदित्यादिकः, वासरश्च यस्मिन् देवो पित्रादिको मृतः, तारका रोहिण्यादिनक्षत्रम्, पर्वतीर्थातिथिश्राद्धवारवासरतारकाः ॥

**जन्मेत्यादि** । एकं जन्म आत्माधिगमः आत्मलाभः । उत्पत्तिरिवेत्यर्थः । गर्भान्निःसरणमित्यर्थः । द्वितीयं जन्म व्रतकर्मणा च दीक्षाकर्मणा मुनीनां यतीनां भवेत्संजायते । अमी एते मुनयो द्विजा ब्राह्मणाः साधु भवन्ति समीचीनतया संजायन्ते तेषां मुनिलक्षणानि द्विजानां संतर्पणं चतुर्विधेन दानेन संप्रीणनं जैनजन आर्हतो लोकः करोति विदधाति । कथं भवत्योक्तं द्विजानां संप्रीणनं जैनानां न वर्तते ॥

**द्वयेनेत्यादि** । हे मातः, द्वयेन मार्गेण जगदयं मनुष्यलोकः प्रवृत्तं प्रचरितम् । तत्



स्नात्वा यजेताप्तमथागमं वा पठेद्यदि ध्यानमुपाचरेद्वा ।
स्नानं भवेदेव गृहाश्रितानां स्वर्गापवर्गागमसंगमाय ॥
सरित्सरोवारिधिवापिकासु निमज्जनोन्मज्जनमात्रमेव ।
पुण्याय चेत्तर्हि जलेचराणां स्वर्गः पुरा स्यादितरेषु पश्चात् ॥

तदाह—

रागद्वेषमदोन्मत्ताः स्त्रीणां ये वशवर्तिनः ।
न ते कालेन शुध्यन्ति स्नानात्तीर्थशतैरपि ॥
षट्कर्मकार्यार्थमथान्नशुद्ध्यै होमो भवेद्भूतबलिश्च नाम ।
सुधान्धसः स्वर्गसुखोचिताङ्गाः खादन्ति किं वह्निगतं निलिम्पाः ॥

---

किम् । गृहस्थवृत्त्या गृहस्थाचारेण, यतिकर्मणा च यत्याचारेण च, तस्य द्वयस्यापि गृहस्थयतिमार्गद्वयस्यापि एकत्वेन प्रवृत्तं न वर्तते । कथंभूतस्य तस्य । विभिन्नसृष्टेः पृथगाचारस्य । किं तत् । शीतोष्णवत् । यथा शीतं पृथगुष्णं पृथक् तथा गृहधर्मः पृथक् यतिधर्मः पृथक् ॥

**स्नात्वेत्यादि** । स्नात्वा आप्तं सर्वज्ञवीतरागमर्हन्तं यजेत, अथ अथवा अथानन्तरं वा आगमं जैनपुस्तकं आगममयीं सरस्वतीमूर्तिं वा यजेत पूजयेत् । तथा चोक्तम्—'बारह अङ्गं जिज्जा दंसणतिलया चरित्त वत्थ हरा च । उदमुव्वाहरणा ये वेद द्वावसुय देवी यदि वा ॥' स्नात्वा पठेत् अध्ययनं कुर्यात्, वा अथवा ध्यानमुपाचरेत् कुर्यात् । गृहाश्रितानां गृहस्थानां स्नानं जलेन शरीरप्रक्षालनं भवेदेव भवत्येव नास्ति निषेधः । तत्स्नानं किमर्थम् । स्वर्गापवर्गागमसंगमाय गृहस्थाः पूर्वं स्वर्गं यान्ति, ततश्च त्वां इहागत्य मोक्षं व्रजन्ति । जिनदीक्षयेति शेषः ॥

**सरिदित्यादि** । हे मातः, सरित्सरोवारिधिवापिकासु नदीतडागसमुद्रदीर्घिकासु निमज्जनोन्मज्जनमात्रमेव ब्रुडनमात्रमेव चेत् पुण्याय भवति तर्हि, जलेचराणां तडागजलचराणां यादसां स्वर्गः पुरा स्यात्, इतरेषु ब्राह्मणादिगृहेषु पश्चात् स्वर्गः स्यात् ॥

तदाह तदुक्तम्—**रागेत्यादि** । ये पुरुषाः रागद्वेषमदोन्मत्ताः भक्षितधत्तूरसदृशाः, ये पुरुषाः स्त्रीणां वशवर्तिनो लम्पटाः, ते पुरुषाः कालेन दीर्घकालेनापि न शुध्यन्ति तीर्थशतैरपि स्नानात् इति पूर्वभाषितं वर्तते । तथा चोक्तम्—'दुष्टमन्तर्गतं चित्तं तीर्थस्नानान्न शुध्यति । शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥'

**षट्कर्मेत्यादि** । षट्कर्मकार्यार्थं स्तम्भनमोहनवशीकरणोच्चाटनविद्वेषणमारणनिमित्तं षट्कर्मकार्यार्थं अथवान्नशुद्ध्यै अन्नपवित्रीकरणार्थं होमो भवेत् अग्निमध्ये आहुतीर्दीयते । न केवलं होमो भवेत्, भूतबलिश्च व्यन्तराणां प्राणनार्थं च । नामेति संभावनायाम् ।

तत् 'अग्निमुखा वै देवाः' इत्यस्यायमर्थः—अग्निरिव भासुरं मुखं येषां ते तथा। चन्द्रमुखी कन्येतिवत्, न पुनरग्निरेव मुखं येषामिति, प्रतीतिविरोधात्।

मोक्षार्थमुद्युक्तधियां नराणां स्नानेन होमेन च नास्ति कार्यम् ।
गृहस्थधर्मो न यतेर्यतेर्वा धर्मो भवेन्नो गृहिणः कदाचित् ॥

तदुक्तम्—

विमत्सरः कुचेलाङ्गः सर्वद्वन्द्वविवर्जितः ।
समः सर्वेषु भूतेषु स यतिः परिकीर्तितः ॥
आपस्नानं व्रतस्नानं मन्त्रस्नानं तथैव च ।
आपस्नानं गृहस्थस्य व्रतमन्त्रैस्तपस्विनः ॥

---

सुधान्धसः सुधा अमृतमेव भक्तं येषां ते सुधान्धसः स्वर्गसुखोचिताङ्गाः निलिम्पा देवाः वह्निगतं अग्नौ वषट्कृतं किं खादन्ति । अपि तु न खादन्तीत्यर्थः ॥

तत्तस्मात् कारणात् 'अग्निमुखा वै देवाः' इत्यस्य वेदवाक्यस्य अयमर्थो वर्तते । अयं कः । अग्निरिव भासुरं मुखं येषां ते तथा । अग्निमुखाः किंवत् । चन्द्रमुखीत्युक्तं तर्हि न कन्यायाः मुखं चन्द्र एव वर्तते, किं तु चन्द्रसदृशं मुखं कन्याया वर्तत इत्यर्थः । न पुनरग्निरेव मुखं येषां ते अग्निमुखा इत्यर्थो न वर्तते । कस्मात् । प्रतीतिविरोधात् । मुखस्य प्रतीतिदन्तौष्ठनासिकानेत्रकर्णादिकैर्भवेत्, न च तथा वर्तते ॥

**मोक्षार्थमित्यादि** । मोक्षार्थं उद्युक्तधियां उद्यमपरबुद्धीनां नराणां मुनीनां स्नानेन होमेन च कार्यं नास्ति कार्यं न वर्तते । गृहस्थधर्मो यतेर्न वर्तते । यतेर्वा धर्मः कदाचिदपि गृहिणो नो भवेत् ॥

तदुक्तम्—**विमत्सर इत्यादि** । विमत्सरः परेषां शुभद्वेषरहितः, कुचेलाङ्गः कुचेलमितिना वस्त्रं तद्वदङ्गं मलिनसमं यस्य स कुचेलाङ्गः, सर्वद्वन्द्वविवर्जितः सर्वेण द्वन्द्वेन कलहेन युद्धेन च विवर्जितो रहितः । सर्वेषु भूतेषु च समः समानबुद्धिः स पुमान् यतिः परिकीर्तितः यतिरिति कथितः ॥

**आपेत्यादि** । हे मातः, आपस्नानम् । जलस्नानं । अथ 'अप्' इति व्यञ्जनान्तोऽस्ति, तथा 'आप' इति आकारान्तोऽप्यस्ति । तेन आपेन स्नानं आपस्नानम् । व्रतस्नानं व्रतेन स्नानम् । उपवासादिना स्नानमित्यर्थः । मन्त्रस्नानम्—'ओं अमृतोद्भवे अमृतं श्रावय श्रावय सं सं क्लीं ब्लूँ द्राँ द्रां द्रीं द्रीं द्रावय द्रावय सं हें ऱ्हीं क्ष्वीं हंसः स्वाहा' इति मन्त्रस्नानम् । तथैव च तेनैव प्रकारेण आपस्नानं गृहस्थस्य भवति । व्रतमन्त्रैस्तपस्विनः स्नानं भवति ॥



न स्त्रीभिः संगमो यस्य यः परे ब्रह्मणि स्थितः ।
तं शुचिं सर्वदा प्राहुर्मारुतं च हुताशनम् ॥

इति ।

ऋचः सामान्यथर्वाणि यजूंष्यङ्गानि भारत ।
इतिहासः पुराणं च त्रयीदं सर्वमुच्यते ॥

ततश्च श्रुतिस्मृतिभ्यामतीव बाह्येऽद्यत्वेनार्हत्समये कथं नाम ज्योतिषाङ्गे वचनमिदमुक्तम्—

समग्रं शनिना दृष्टः क्षपणः कोपितः पुनः ।
तद्भक्तस्तस्य पीडायां तावेव परिपूजयेत् ॥

सांख्यं योगो लोकायतं चान्वीक्षिकी। तस्यां च स्यादस्ति स्यान्नास्तीति

---

**नेत्यादि** । यस्य स्त्रीभिः संगमो न भवति, यः पुमान् परे ब्रह्मणि आत्मभावनायां स्थितो वर्तते, तं पुरुषं सर्वदा शुचिं प्राहुर्ब्रुवन्ति । विद्वांस इति शेषः । मारुतं च हुताशनं शुचिं प्राहुः । यथा वायुस्पर्शश्चाण्डालेऽपि लग्नः सन् राज्ञो नृपस्यापि लगति तत्र नास्ति दोषः । अपि तु चाण्डालादप्यानीयते । यतिः पुनर्मारुतवत् निःसङ्गः कर्मेन्धनदहनशीलत्वात् ब्रह्मचारी सदा शुचिरिति प्रसिद्धश्च ॥

**ऋच इत्यादि** । ऋच ऋग्वेदवाक्यानि, सामानि सामवेदवाक्यानि, अथर्वाणि अथर्वणवेदमन्त्राः, यजूंषि यजुर्वेदवाक्यं काण्ड्यः, अङ्गानि शिक्षाकल्पव्याकरणं छन्दोविचितिज्योतिषं निरुक्तं चेति षडङ्गानि । हे भारत युधिष्ठिरमहाराज, इतिहासो भारतं रामायणं च । अन्यदपि पुराणम् । चकारात् मीमांसान्यायशास्त्रं च विगृह्यते । इदमेतत्सर्वं शास्त्रं त्रयी उच्यते कथ्यते ॥

ततश्च तस्मात् कारणात् श्रुतिस्मृतिभ्यां वेदधर्मशास्त्राणां अतीव बाह्ये बहिर्भूते अद्यत्वेन अद्यतनकालेन अर्हत्समये आर्हते संजाते सति कथं नाम ज्योतिषाङ्गे ज्योतिःशास्त्रे वेदाङ्गे इदं वक्ष्यमाणं वचनं कथमुक्तम् । इदं किमिति चेत्—

**समग्रमित्यादि** । समग्रं परिपूर्णं यथा भवत्येवं शनिना शनैश्चरेण दृष्टः सप्तमस्थाने स्थितिनावलोकितः क्षपणो दिगम्बरः कोपितः । तद्भक्तः शनिभक्तः क्षपणभक्तश्च तस्य शनेः क्षपणकस्य च पीडायां धातुक्षवाबाधायां तावेव शनैश्चरक्षपणकावेव परिपूजयेत् पूजनं कुर्यात् । नत्वन्यं देवं तत्पीडानिवारणार्थं पूजयेत् । उक्तं च—'दशमतृतीये नवपञ्चमे चतुर्थाष्टमे कलत्रे च । पश्यन्ति पादवृद्ध्या फलानि चैवं प्रयच्छन्ति ॥'

**सांख्यमित्यादि** । सांख्यं उलूक्यदर्शनं सत्कार्यापरनामधेयम्, योगो नैयायकः, लो-

नग्नश्रमणक इति बृहस्पतिराखण्डलस्य पुरस्तं समयं कथं प्रत्यवतस्थे।

**प्रजापतिप्रोक्ते च चित्रकर्मणि—**

श्रमणं तैललिप्ताङ्गं नवभिर्भित्तिभिर्युतम्।
यो लिखेत्स लिखेत्सर्वां पृथ्वीमपि ससागराम्॥

**आदित्यमते च—**

भवबीजाङ्कुरमथना अष्टमहाप्रातिहार्यविभवसमेताः।
ते देवा दशतालाः शेषा देवा भवन्ति नवतालाः॥

**वराहमिहरव्याहृते प्रतिष्ठाकाण्डे च—**

विष्णोर्भागवता मयाश्च सवितुर्विप्रा विदुर्ब्राह्मणां
मातॄणामिति मातृमण्डलविदः शंभोः सभस्मा द्विजः।

---

कायतं चार्वाकमतम्, एतत्त्रयं आन्वीक्षिकी विद्या कथ्यते। तस्यां आन्वीक्षिकीविद्यायां स्यादस्ति नास्ति इतीदृशं वचनं नग्नः श्रमणको वदति। इत्येवंप्रकारेण बृहस्पतिः सुराचार्य आखण्डलस्य पुरस्तं समयं क्षपणकशासनं कथं प्रत्यवतस्थे कथं प्रतिपादितवान्॥

प्रजापतिप्रोक्ते च चित्रकर्मणि चित्रशास्त्रे। **श्रमणमिति।** श्रमणं तैललिप्ताङ्गं श्रमणतीर्थंकरपरमदेवं तैललिप्ताङ्गं कोटिभास्करसमानतेजस्कं नवभिः भित्तिभिर्युतम्। 'क्षालोऽथ वेदिरथ वेदिरथोऽपि सालवादीव(?)शाल इह वेदिरतोऽपि सालः। वेदी च भाति सदसि क्रमतः(?)यदीये यस्मै नमस्त्रिभुवनविभवे जिनाय॥' इति मधुमाधवीकथितक्रमेण नवभिर्भित्तिभिर्युतमित्याहुः। यो लिखेत् यश्चित्रकरो लिखति स चित्रकरः लिखति। सर्वां पृथ्वीमपि। अपिशब्दात् पातालं स्वर्गलोकं च लिखेदित्यर्थः। कथंभूतां पृथ्वीम्। ससागरामसंख्यातसमुद्रसहिताम्। सर्वद्वीपावतीमित्यर्थः। इतीदृशं प्रजापतिवचनं कथम्॥

आदित्यमते सूर्यसिद्धान्ते। **भवेति।** भवः संसारस्तस्य बीजं रागद्वेषौ तस्याङ्कुरौ मोहनीयं कर्म तस्य मथनाः क्षयविधायिनः अष्टमहाप्रातिहार्यविभवसमेताः अष्टौ च तानि महाप्रातिहार्याणि अशोकवृक्षः, दिव्यपुष्पवर्षणम्, योजनगामिनी वाक्, चतुःषष्टिचामराणि, दिव्यं सिंहासनम्, कोटिभास्कराधिकलोचनप्रियशरीरतेजः, सार्धद्वादशकोटिपटहवाद्यानि, छत्रत्रयं चोपर्युपरि वर्तितानि, एवं विभवं ऐश्वर्यं तेन समेतास्तीर्थंकरपरमा देवा दशताला भवन्ति दशहस्तमाना भवन्ति। शेषा देवा हरिहरादय नवताला भवन्ति। तादृशं वचनं अर्हत्प्रतिमासूचकं आदित्यमतेः कथम्॥

वराहमिहरव्याहृते वराहमिहराचार्यकथिते प्रतिष्ठाकाण्डे च प्रतिष्ठाध्याये इतीदृशं कथं यदि दिगम्बरमतं कलौ समुत्पन्नम्। इतीति किम्—**विष्णोरित्यादि।** विष्णोर्भागव-



शाक्याः सर्वहिताय शान्तमनसो नग्ना जिनानां विदु-
र्ये यं देवमुपाश्रिताः स्वविधिना ते तस्य कुर्युः क्रियाम्॥

**निमित्ताध्याये च—**

पद्मिनी राजहंसाश्च निर्ग्रन्थाश्च तपोधनाः।
यं देशमुपसर्पन्ति सुभिक्षं तत्र निर्दिशेत्॥

तथा—**उर्व-भारवि-भवभूति-भर्तृहरि-भर्तृमेण्ठ-कण्ठ-गुणाढ्य-व्यास-भास-वोस-कालिदास-बाण-मयूर-नारायण-कुमार-माघ-राजशेखरादिमहाकविकाव्येषु** तत्र तत्रावसरे **भरतप्रणीते** काव्याध्याये सर्वजनप्रसिद्धेषु तेषु तेषूपाख्यानेषु च कथं तद्विषया महती प्रसिद्धिः। तस्मात्

---

ताः विष्णोः क्रियां प्रतिष्ठां भागवता वैष्णवा कुर्युः विदधुः। मयाश्च आदित्योपजीविनो ब्राह्मणाः सवितुः श्रीसूर्यस्य क्रियां प्रतिष्ठां कुर्युः। विप्रा ब्राह्मणां क्रियां विदुर्जानन्ति। मातॄणां सप्तमातॄणां ब्रह्माणीन्द्राणीवाराहीभैरवीचामुण्डाकर्णमोटीचर्चाभिधानानां इति क्रियां प्रतिष्ठां मातृमण्डलविदो मातृमण्डलविज्ञायकाः कुर्युः। शंभोः क्रियां सभस्मा भस्मसहितो द्विजो ब्राह्मणः कुर्यात् इति अर्थवशाद्विभक्तिविपरिणामः। शाक्या बौद्धाः सर्वहिताय बुद्धाय क्रियां प्रतिष्ठां कुर्युः। शान्तमनसो ......... नग्नाः ....................-
.................. विदुर्जानन्ति ते तु जिनानां प्रतिष्ठां कुर्युः। ये पुरुषाः लिङ्गिनो गृहस्था यं देवं उपाश्रिताः सेवापरास्ते पुरुषाः स्वविधिना निजशास्त्रोक्तविधानेन तस्य देवस्य क्रियां कुर्युः इति ईदृशं वाक्यं वराहमिहरः कथमुक्तवान्, यदि कलौ दिगम्बरा उत्पन्नाः॥

निमित्ताध्याये च इतीदृशं वचनं कथम्। इतीति किम्। **पद्मिनीति।** पद्मिनी राजहंसाश्च निर्ग्रन्थाश्च तपोधनाः पद्मिनी कमलिनी यं देशं यस्मिन् देशे सरादौ उपसर्पन्ति प्रादुर्भवन्ति तत्र तस्मिन् देशे सुभिक्षं निर्दिशेत् कथयेत्। यं देशं राजहंसाश्च उपसर्पन्त्यागच्छन्ति तत्र देशे सुभिक्षं निर्दिशेत्॥

तथा तेनैव प्रकारेण उर्वश्च भारविश्च भवभूतिश्च भर्तृहरिश्च भर्तृमेण्ठश्च कण्ठश्च गुणाढ्यश्च व्यासश्च भासश्च वोसश्च कालिदासश्च बाणश्च मयूरश्च नारायणश्च कुमारश्च माघश्च राजशेखरश्च ते आदिर्येषां हलायुध-कात्यायनादीनां ते च ते महाकवयस्तेषां काव्येषु तत्र तत्रावसरे तस्मिन् विदुषां प्रसिद्धे प्रघट्टके तथा भरतप्रणीते काव्याध्याये तथा सर्वजनप्रसिद्धेषु तेषु तेषु उपाख्यानेषु दृष्टान्तकथासु च कथं केन प्रकारेण तद्विषया दिगम्बरसंबन्धिनी महती प्रसिद्धिर्वर्तते॥

चत्वार एते सहजाः समुद्रा यथैव लोके ऋतवोऽपि षट् च ।
चत्वार एते समयास्तथैव षड् दर्शनानीति वदन्ति सन्तः ॥
यावत्समर्थं वपुरुद्धतायां यावच्च पाणिद्वयमेति बन्धम् ।
तावन्मुनीनामशने प्रवृत्तिरित्याशयेन स्थितभोजनास्ते ॥
बालाग्रकोटावपि यत्र सङ्गे निष्किंचनत्वं परमं न तिष्ठेत् ।
मुमुक्षवस्तत्र कथं नु कुर्युर्मतिं दुकूलाजिनवल्कलेषु ॥
शौचं निकामं मुनिपुंगवानां कमण्डलोः संश्रयणात्समस्ति ।
न चाङ्गुलौ सर्पविदूषितायां छिनत्ति नासां खलु कश्चिदत्र ॥
वदन्ति जैनास्तमिहाप्तमेते रागादयो यत्र न सन्ति दोषाः ।
मद्यादिशब्दोऽपि च यत्र दुष्टः शिष्टैः स निन्द्येत कथं नु धर्मः ॥

---

हे मातः, तस्मात् कारणात् । **चत्वार इत्यादि** । यथैव एते सहजाः स्वभावोत्पन्नाश्चत्वारः समुद्रा वर्तन्ते, यथैव लोके ऋतवोऽपि हिमशिशिरवसन्तग्रीष्मवर्षाशरल्लक्षणा षट् वर्तन्ते, तथैव तेनैव प्रकारेण एते अमी चत्वारः समया जैनजैमिनिशाक्यशंकरागमाः सांख्यलोकायततद्वयषड्दर्शनानीतीदृशं सन्तो वदन्ति प्रतिपादयन्ति ॥

यत्त्वयोक्तम् उद्भा ग्रसन्ते इति निन्दावचनं तस्येदमुत्तरम्—**यावदिति** । यावत्कालं उद्धतायां ऊर्ध्वतायां वपुः समर्थं वर्तते, यावच्च पाणिद्वयं बन्धमेति परस्परं मिलति, तावत्कालं मुनीनां अशने प्रवृत्तिर्भवतीतीदृशेनाशयेन ते स्थितभोजनाः ························॥

**बालाग्रेति** । बालाग्रकोटावपि यत्र सङ्गे परिग्रहे निष्किंचनत्वं निष्परिग्रहत्वं परममुत्कृष्टं न तिष्ठेत् भवति । तत्र दिगम्बरशासने मुमुक्षवः अहो मातः, दुकूलाजिनवल्कलेषु मतिं कथं नु कुर्युः । अपि तु न कुर्युः ॥

**शौचमिति** । तथा अशौचं यत्त्वयोक्तं तदप्यसत् । शौचं निकामं मुनिपुंगवानां कमण्डलोः संश्रयणात् ग्रहणात् समस्ति । अङ्गुलौ सर्पविदूषितायां सर्पदष्टायां खलु कश्चित् पुमान् अत्र संसारे नासां नासिकां न च छिनत्ति न छेदयति । यदपवित्रमङ्गं तदेव प्रक्षाल्यत इत्यर्थः ॥

**वदन्तीत्यादि** । एते जैना इह संसारे तमाप्तं वदन्ति । तं कम् । यत्राप्ते रागादयो दोषा न सन्ति । यत्र च धर्मे मद्यादिशब्दोऽपि अस्नातवन्मद्यादिपानादिकं तच्छब्दोऽपि दुष्टो दोषवान् भोजनादित्यागाय भवति स धर्मः शिष्टैर्विद्वद्भिः । कथं नु इति प्रश्ने । निन्द्येत । अपि तु न निन्द्यत इत्यर्थः ॥



परेषु योगेषु मनीषयान्धः प्रीतिं दधात्यात्मपरिग्रहेषु ।
तथापि देवः स यदि प्रसक्तमेतज्जगद्देवमयं समस्तम् ॥
लज्जा न सज्जा कुशलं न शीलं श्रुतं न पूतं न वरः प्रचारः ।
मद्येन मन्दीकृतमानसानां विवेकनाशाच्च पिशाचभावः ॥
आतङ्कशोकामयकेतनस्य जीवस्य दुःखानुभवाश्रयस्य ।
देहस्य को नाम कृतेऽस्य मांसं सचेतनोऽद्यात्क्षणभङ्गुरस्य ॥

उक्तं च—

तिलसर्षपमात्रं यो मांसमश्नाति मानवः ।
स श्वभ्रान्न निवर्तेत यावच्चन्द्रदिवाकरौ ॥
संदिग्धेऽपि परलोके त्याज्यमेवाशुभं बुधैः ।
यदि न स्यात्ततः किं स्यादस्ति चेन्नास्ति को हतः ॥

---

**परेष्वित्यादि** । परेषु जरासंधकंसादिषु योगेषु संबन्धेषु मनीषया कृत्वा यो देवः अन्धः क्रोधान्धः वर्तते, यो देवः आत्मपरिग्रहेषु सत्यभामारुक्मिणीप्रभृतिषु प्रीतिं दधाति, तथापि स हरिहरादिको यदि देवो भवति तर्हि एतत् प्रसक्तं एष प्रसङ्गः संजातः । एतत् किम् । समस्तं जगद्देवमयं वर्तते । यः शत्रुषु द्वेषं करोति, कलत्रादिषु प्रेम दधाति । तर्ह्यदेवः कोऽपि नास्ति, सर्वे देवा वर्तन्ते ॥

**लज्जेत्यादि** । मद्येन मन्दीकृतमानसानां जडीकृतचेतसां रुद्रादीनां लज्जा सज्जा छन्दोद्यमा न वर्तते, तथा मद्यपीनां शीलं ब्रह्मचर्यं कुशलं निपुणं न भवति, तथा पूतं श्रुतं न भवति, तथा प्रचारः प्रवर्तनं च वरः श्रेष्ठो न भवति । एतत्पूर्वोक्तं यदि न भवति, तर्हि किं भवति । विवेकनाशात् प्रमाददोषात् पिशाचभावः, मलिनव्यन्तरत्वं पिशाचत्वमुच्यते, तद्भवति । उक्तं च लक्ष्मीचन्द्रेण महामुनिना—'मुहु विलिहि विमुत्त इसुण हुण्हुण मज्जहु दोसु । मतहो वहिणि जि अहिलस इत्येन हु पायपवेसु ॥'

**आतङ्केत्यादि** । हे मातः, जीवस्यास्य देहस्य कृतकार्याय को नाम सचेतनो प्रेक्षावान् पुमान् मांसमद्यात् जरासं भक्षयेत् । कथंभूतस्य देहस्य । आतङ्कशोकामयकेतनस्य आतङ्कश्च सद्यःप्राणहरो व्याधिः, शोकश्च पश्चात्तापलक्षणः, आमयश्च सामान्यरोगः, तेषां केतनस्य निवासस्य । पुनः कथंभूतस्य देहस्य । दुःखानुभवाश्रयस्य दुःखोदयस्थानस्य । पुनः कथंभूतस्य । क्षणभङ्गुरस्य क्षणेन अल्पकालेन भङ्गुरस्य स्वयमेव विनाशनशीलस्य ॥

उक्तं च—**तिलेत्यादि** । यो मानवः तिलसर्षपमात्रं मांसमश्नाति स मानवः श्वभ्रान्न निवर्तेत न निर्गच्छेत् । कियत्कालम् । चन्द्रदिवाकरौ यावत् ॥

**संदिग्धे इत्यादि** । परलोके स्वर्गादौ संदिग्धेऽपि संदेहप्राप्तेऽपि बुधैर्विद्वद्भिरशुभं

मक्षिकागर्भसंभूतबालाण्डकनिपीडनात् ।
जातं मधु कथं सन्तः सेवन्ते कललाकृति ॥

तथा च स्मृतिः—

सप्तग्रामेषु यत्पापमग्निना भस्मसात्कृते ।
तस्य चैतद्भवेत्पापं मधुबिन्दुनिषेवणात् ॥

यथाजनाकूतमयं प्रवृत्तः परस्परार्थप्रतिकूलवृत्तः ।
विधौ निषेधे च न निश्चयोऽस्ति कथं स वेदो जगतः प्रमाणम् ॥

तथा हि—मांसं चेदाचरितुमिच्छसि, आचर । किं तु विधिपूर्वकमाचरितव्यम् । तदाह—

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां तु काम्यया ।
यथाविधिनियुक्तस्तु प्राणानामेव चात्यये ॥

---

मद्यमांसाद्यास्वादनं पापं त्याज्यमेव परिहर्तव्यमेव । यदि चेत् परलोकं न स्यात् किमपि रुचिरं न स्यात् ततस्तर्हि किं स्यात् । अस्ति चेत् नास्ति कश्चार्वाको हतो निषिद्धः ॥

**मक्षिकेति** । मक्षिकानां सरघानां गर्भेषु संभूता उत्पन्ना ये बालाण्डकास्तेषां निपीडनात् निश्चोतनान्मधु मधुक्षौ जातमुत्पन्नं सन्तो विद्वांसः कथं केन प्रकारेण सेवन्ते आस्वादयन्ति । कथंभूतं मधु । कललाकृति कललस्य गर्भवेष्टनस्य जरायुपटलस्याकृतिराकारो यस्य तत्तथोक्तम् ॥

तथा च स्मृतिरन्यदपि स्मृतिशास्त्रं वर्तते—तत्किम् । **सप्तेति** । सप्तग्रामेषु अग्निना भस्मसात्कृते सति यत्पापं भवेत् तस्य पुरुषस्य च एतत् पापं भवेत् सप्तग्रामभस्मीकरणपापं भवेत् । कस्मात् । मधुबिन्दुनिषेवणात् इति ॥

**यथेत्यादि** । हे मातः, स वेदः श्रुतिशास्त्रं जगतः प्रमाणं प्रमाणभूतः कथं भवति । कथंभूतो वेदः । अयं वेदः यथाजनाकूतं यथाजनेच्छप्रकृतिः यथाविषयादिकं लोको वाञ्छति, वेदेऽपि तथैव वक्ति । अपरं कथंभूतो वेदः । परस्परार्थप्रतिकूलवृत्तः परस्परमन्योन्यं अर्थप्रतिकूलः पूर्वापरविरोधसहितः वृत्तः प्रवृत्तिं गतः विधौ कर्तव्ये निषेधे च वेदे निश्चयो नास्ति ॥

तथाहि तदेव यथाजनाकूतप्रवर्तनं दर्शयति—**मांसमित्यादि** । मांसं चेदाचरितुमिच्छसि मांसभक्षणं कर्तुमिच्छसि तर्ह्याचर । किं तु विधिपूर्वकमाचरितव्यं वेदोक्तप्रकारेण भक्षितव्यम् ॥

तदाह मांसभक्षणे कोऽसौ विधिस्तमेव निरूपयति—**प्रोक्षितमिति** । मांसं प्रो-



क्रीत्वा स्वयं वा ह्युत्पाद्य परोपहृतमेव च ।
अर्चयित्वा पितॄन्देवान्खादन्मांसं न दुष्यति ॥

मातरि स्वसरि वा चेत्प्रवर्तितुमिच्छसि, प्रवर्तस्व । किं तु विधिपूर्वकं प्रवर्तितव्यम् । तदाह—गोसवे ब्राह्मणो गोसवेनेष्ट्वा संवत्सरान्ते मातरमप्यभिलषतीति । उपेहि मातरमुपेहि स्वसारमिति । एवमन्येऽपि सन्ति यथालोकाभिप्रायं प्रवृत्तास्ते ते विधयः ।

प्रसिद्धिरत एवास्य सर्वसाधारणी मता ।
को हि नाम भवेद्द्वेष्यो लोकच्छन्दानुवर्तनः ॥

हिताहितावेदि जगन्निसर्गतः परस्परस्त्रीधनलोलमानसम् ।
तत्रापि यद्यागम एष तन्मनोवशेन वर्तेत तदा किमुच्यते ॥

---

क्षितं कुशमन्त्रवारिपूतं भक्षयेत् खादयेत् । किमर्थम् । ब्राह्मणानां तु काम्यया ब्राह्मणानामिच्छया । कः पुमान् भक्षयेत् । यथाविधिनियुक्तः प्रोक्षणादिविधिनाधिकृतः प्राणानां चैव अत्यये विनाशे सति विधिमकृत्वा न भक्षयेत् ॥

यथा च विधिं दर्शयति—**क्रीत्वेति** । मांसं क्रीत्वा मूल्येन गृहीत्वा स्वयं चात्मनैव हि निश्चयेन उत्पाद्य जीवविध्वंसोत्कृतिपरोपहृतमेव वा पारणानीतं वा पितॄन् देवांश्चार्चयित्वा मांसं खादन् पुमान् न दुष्यति न दोषवान् भवति । मातरि जनन्यां स्वसरि भगिन्यां वा चेद्यदि प्रवर्तितुमिच्छसि तर्हि प्रवर्तस्व मैथुनं कुरुष्व । किं तु विधिपूर्वकं प्रवर्तितव्यम् । तदाह तमेव विधिं निरूपयति—गोसवे गोसवयज्ञे ब्राह्मणो नापरः गोसवेन गोवधेन इष्ट्वा यज्ञं कृत्वा संवत्सरान्ते एकवर्षप्रान्ते मातरमपि जननीमपि । अपिशब्दात् भगिन्यादिमपि । परस्त्रियमभिलषति जन इति ईदृशं वचनं क्व वर्तते । उपेहि मातरमुपेहि स्वसारमिति । एवं अमुना प्रकारेण अन्येऽपि अपरेऽपि विधयः सन्ति वर्तन्ते वेदे ते ते प्रसिद्धा यथालोकाभिप्रायं प्रवृत्ताः ॥

**प्रसिद्धिरित्यादि** । अत एव कारणात् अस्य वेदस्य सर्वसाधारणी सर्वेषां सामान्या प्रसिद्धिः ख्यातिर्मता अभीष्टा । अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—नामेति संभावनायाम् । लोकच्छन्दानुवर्तनः यथालोकाभिप्रायप्रवर्तनः पुमान् को द्वेष्यो भवेत् । अपि तु न कश्चिद्द्वेषणीयो भवतीत्यर्थः । कथम् । हि । स्फुटमिति शेषः ॥

**हिताहितेत्यादि** । हे मातः, जगत् संसारो निसर्गतः स्वभावेन हिताहितावेदि वर्तते । हितं पुण्यमहितं पापं ते द्वे वेत्तीत्येवंशीलं हिताहितावेदि । पुनः कथंभूतं जगत् । परस्परस्य अन्योन्यस्य च स्त्री च धनं च तत्र लोलं लम्पटं मानसं चित्तं यस्य जगतस्तत्तथोक्तम् । तत्रापि ईदृशे जगति यदि चेदेष आगमो वेदस्वरूपशास्त्रं तन्मनोवशेन जग-

'सुरा न पेया, ब्राह्मणो न हन्तव्यः' इत्यपि वचनमस्ति। 'सौत्रामणौ य एवंविधां सुरां पिबति न तेन सुरा पीता भवति' इत्यपि। तथा 'ब्रह्मणे ब्राह्मणमालभेत' इति। अपि च—

शूद्रान्नं शूद्रशुश्रूषा शूद्रप्रेषणकारिणः।
शूद्रदत्ता च या वृत्तिः पर्याप्तं नरकाय ते॥
तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम्।
ब्राह्मणेन ग्रहीतव्यं हव्यकव्याय कर्मणे॥

इत्यपि।

सद्यःप्रतिष्ठितोदन्ते सिद्धान्ते परमाग्रहः।
किं वेदोक्तैरिमैः[1](?) सूक्तैरेत षिङ्गानुपास्महे॥

---

दभिप्रायवशेन वर्तेत वर्तते, तदा तस्मिन् काले किमुच्यते किं कथ्यते। परस्परस्त्रीधनलोलमानसं विशेषेण भवत्येव॥

अथ पूर्वापरविरोधं वेदस्य दर्शयति—'सुरा न पेया मद्यं न पेयम्, ब्राह्मणो न हन्तव्यः' इत्यपि वचनमस्ति वेदे। तद्वाक्यविरुद्धं वाक्यं यथा—सौत्रामणौ यज्ञे य एवंविधां सुरां पिबति यः पुमान् एवंविधां पैष्टीगौडीमाधवीलक्षणां सुरां मदिरां पिबति तेन पुंसा सुरा पीता न भवति, इत्यपि वाक्यं वर्तते। तथा च विरुद्धं वाक्यं दर्शयति—ब्राह्मणमालभेत ब्रह्मणे सृष्टिकर्त्रे ब्राह्मणं श्रोत्रियं आलभेत मारयेत्, इत्यपि च वाक्यं वर्तते॥

अपि च तथा च मांसविरुद्धं वाक्यं दर्शयति—**शूद्रान्नमित्यादि**। शूद्रान्नं शोभनकर्मणा द्रवतीति शूद्रस्तस्यान्नम्, शूद्रशुश्रूषा सेवा, शूद्रप्रेषणकारिणः शूद्रस्य किंकरत्वं कुर्वन्तीति, शूद्रदत्ता च पुनर्या वृत्तिराजीवनम्, ते पर्याप्तं परिपूर्णं यथा भवत्येवं नरकाय नरकपाताय भवतीति भावः॥

तथा च विरुद्धं वाक्यम्—**तथेति**। मांसं श्वचाण्डालक्रव्यादादिनिपातितं शुना कुर्कुरेण, चाण्डालेन मातङ्गेन, क्रव्यादा व्याघ्रादयस्ते आदिर्येषां खरटिक्यादीनां ते श्वचाण्डालक्रव्यादादयस्तैर्निपातितं पशून् मारयित्वा गृहीतं आनीतं ब्राह्मणेन वेदपाठकेन ग्रहीतव्यं ग्रहणीयम्। किमर्थम्। हव्यकव्याय कर्मणे देवपितृकार्याय, इत्यपि वचनमस्ति॥

**सद्य इत्यादि**। सद्यस्तत्काले प्रतिष्ठित उदन्तो वार्ता यत्र स सद्यःप्रतिष्ठितोदन्तस्तस्मिन्नीदृग्विधे सिद्धान्ते परमाग्रहो यदि युष्माकमाक्षेपो वर्तते तर्हि इमै[1](?)र्वेदोक्तैः सूक्तैः सुभाषितैः किम्। न किमपि। एत आगच्छत यूयम्। षिङ्गान् विटानुपास्महे सेवामहे वयम्। यदैवं पृष्टं तदैवोत्तरं पारदारिकविषये वर्तत एव॥

---

1. व्याकरणशास्त्रविरुद्धम् 'इमैः' इति प्रयोगोपादानं ग्रन्थकर्तुर्महदाश्चर्यकरम्.



प्रमाणं व्यवहारेऽपि जन्तुरेकस्थितिर्मतः।
को नामेत्थं विरुद्धार्थे सादरो निगमे नरः॥

यदि च वेदोक्तेन विधिना विधीयमाना हिंसा न भवत्यधर्मसाधनम्, कथं तर्हि मार्यमाणः पशुरेवं संबोध्यते 'अन्वेनं मातानुमन्यतामनुपितानुभ्रातानुसगन्धोऽनुसखा सयूथ्यः' इति।

अथ पौरुषेयागमवच्चोदनायां विचारे महत्पातकम्। तदाह—

मानवं व्यासवासिष्ठं वचनं वेदसंयुतम्।
अप्रमाणं तु यो ब्रूयात्स भवेद्ब्रह्मघातकः॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

इत्येतन्मुखभाषितम्।

---

**प्रमाणमित्यादि**। व्यवहारेऽपि वाणिज्यादौ जन्तुर्जीव एकस्थितिरेकवाक्यतायुक्तः प्रमाणं मतः स्वीकर्तव्यम्। को नाम इत्थं पूर्वोक्तप्रकारं विरुद्धार्थे निगमे वेदे नरः पुमान् सादरो भवति। अपि तु न कश्चित्॥

यदि च वेदोक्तेन विधिना निगमोक्तेन विधानेन विधीयमाना क्रियमाणा हिंसा अधर्मसाधनं न भवति, तर्हि मार्यमाणः पशुः एवममुना प्रकारेण कथं संबोध्यते संबोधनं प्राप्यते। एवं कथमिति चेत्—अन्वेनं हे पशो, एनं हिंसकपुरुषं माता अनुमन्यतां ज्ञायताम्। अनुपिता अनुमन्यतां ज्ञायताम्। अनुभ्राता अनुमन्यताम्। अनुसगन्धः संबन्धी अनुमन्यताम्। अनुसखा मित्रमनुमन्यताम्। कथंभूतः सखा। सयूथ्यः। समानयूथे भवः सयूथ्यः

अथ पौरुषेयागमवत् यथा पौरुषेयं शास्त्रं विचार्यते तथा चोदनायां वेदस्य वचने विचारे विचारणायां महत्पातकम्॥

तदाह—**मानवमिति**। मानवं मनोरिदं मानवं व्यासवासिष्ठं व्यासस्येदं व्यासम्, वसिष्ठस्येदं वासिष्ठम्, व्यासं च वासिष्ठं वचनं शास्त्रं वेदसंयुतं वेदोक्तमेव वर्तते। यस्तु पुमान् अप्रमाणमसत्यं ब्रूयात्स ब्रह्मघातको भवेत् ब्राह्मणघातपातकी भवेत् स्यात्॥

**पुराणमिति**। पुराणं रामायणं भारतादिकम्, मानवो धर्मः स्मृतिशास्त्रम्, साङ्गो वेदः शिक्षाकल्पव्याकरणच्छन्दोज्योतिषनिरुक्तलक्षणषडङ्गसहितो वेदः, चिकित्सितं च आयुर्वेदम्, एतानि चत्वारि शास्त्राणि आज्ञासिद्धानि। एतेषां वचनमेव मन्यते। हेतुभिर्न हन्तव्यानि हेतुवादेन निराकरणीयानि॥

इति एतन्मुखभाषितं कपोलकल्पितमिदं श्लोकद्वयं ज्ञातव्यम्॥

दाहच्छेदकषाशुद्धे हेम्नि का शपथक्रिया ।

तस्मात्

दत्तानुपात्रं सकलैः प्रमाणैर्दृष्टेषु तत्त्वेषु भवेत्प्रमाणम् ।
अन्यत्र शास्त्रं तु सतां प्रवृत्त्यै पूर्वापरस्थित्यविरोधनेन ॥
उमापतिः स्कन्दपिता त्रिशूली संध्यासु यो नृत्यति चर्मवासाः ।
भिक्षाशनो होमजपोपपन्नः कथं स देवोऽन्यजनेन तुल्यः ॥
देवेषु चान्येषु विचारचक्षुर्यथार्थवक्ता किमु निन्दकः स्यात् ।
एवं न चेत्तर्हि यथार्थदर्शी भानुः प्रदीपोऽपि च निन्दकः स्यात् ॥
यो भाषते दोषमविद्यमानं सतां गुणानां ग्रहणे च मूकः ।
स पापभाक्स्यात्स विनिन्दकश्च यशोवधः प्राणिवधाद्गरीयान् ॥

---

**दाहेत्यादि** । दाहः अग्नितापः, छेदश्च द्विधाकरणम्, कषा कषपट्टिकोपरि रेखापातनं ताडनलक्षणं ताडनस्य, एताभिः परीक्षिते शुद्धे हेम्नि सुवर्णे शपथक्रिया शपथकरणं का। न काचित्। दाहच्छेदकषाशुद्धे परीक्षायां अक्षमे हेम्नि शपथक्रिया का । न काचित् ॥

तस्मात् कारणात्—**दत्तानुपात्रमित्यादि** । दत्तानुपात्रं अतिसंवादिस्वीकृतव्यवहारं सकलैः प्रत्यक्षानुमानादिभिः प्रमाणैः दृष्टेषु तत्त्वेषु शास्त्रेषु प्रमाणं सत्यं भवेत् । अन्यत्र परमते स्वर्गादौ अदत्तानुपात्रे अपरीक्षतो तत्त्वेषु शास्त्रं तु सतां विद्वज्जनानां प्रवृत्त्यै प्रवर्तनाय भवति । केन कृत्वा प्रमाणाय भवति। पूर्वापरस्थित्यविरोधनेन पूर्वापरविरोधरहितेनेत्यर्थः॥

**उमापतिरिति** । उमापतिः स्कन्दस्य पिता च स्कन्दस्य कार्तिकेयस्य पिता जनकः। ब्रह्मचर्यभङ्गकारीति भावः । तथा त्रिशूली । शत्रुविद्वेषकारीति भावः । संध्यासु यो नृत्यति प्रभाते मध्याह्ने अपराह्ने यो नर्तनं करोति । तथा चर्मवासा चर्मवासो वस्त्रं यस्य स चर्मवासाः । इत्यनेन मोहवान् सूचितः । तथा भिक्षाशनः भिक्षाभोजनकारी । इत्यनेन क्षुधादोषः कथितः । तथा होमजपोपपन्नो होमेन जपेन उपपन्नः स जगत्प्रसिद्धो रुद्रः अन्यजनेन तुल्यो रथ्यापुरुषेण समानो देवः कथम् । न कथमपीत्यर्थः ॥

**देवेष्वित्यादि** । देवेषु च पुनरन्येषु गुर्वादिषु विचारचक्षुः दिगम्बरो यथार्थवक्ता सत्यवादी । उ इति संबोधने । हे मातः, किं निन्दकः गर्हकः स्यात् । अपि तु न स्यात्। एवं न चेत् यदि निन्दकः स्यात् तर्हि तदा यथार्थदर्शी यथार्थप्रकाशको भानुरपि प्रदीपश्च निन्दकः स्यात्। सोऽपि यथार्थदर्शी वर्तते ॥

**य इत्यादि** । यः पुमान् अविद्यमानमसन्तं दोषं भाषते च, सतां साधूनां गुणानां ज्ञानादीनां ग्रहणे च मूकः अवाक् भवति, स पुमान् पापभाक् पापीयान् स्यात् । अविद्यमानदोषभाषित्वात् स पुमान् विनिन्दकश्च निन्दावान् भवति। स पापभाक् कथम् । अमुमे-



अथायमाप्तः पर एव न स्यादेवंविधो रुद्रगुणोऽपरस्तु ।
परः पुनः किंगुण एष देवः संसारदोषानुगतो न यो हि ॥
गुणाः कुतस्तस्य भवन्ति गम्याः शास्त्रात्प्रणीतात्स्वयमेव तेन ।
वने परोक्षेऽपि पतत्रिसार्थे दृष्टो ध्वनेस्तत्र विनिश्चयो हि ॥
सर्गस्थितिप्रत्यवहारवृत्तेर्हिमातपाम्भःसमयस्थितेर्वा ।
आद्यन्तभावोऽस्ति यथा न लोके तथैव मुक्तागममालिकायाः ॥
श्रुतात्स देवः श्रुतमेतदस्मादिमौ हि बीजाङ्कुरवत्प्रवृत्तौ ।
हिताहितज्ञे स्वयमेव दैवात्किं पुंसि जातिस्मरवत्परेण ॥

---

वार्थमर्थान्तरन्यासेन द्रढयति—यशोवधो यशोघातनं प्राणिवधात् हिंसाकरणात् गरीयान् गुरुतरो वर्तते ॥

यतः । **अथेत्यादि** । अथ चेत् अयं आप्तो रुद्रगुणो रुद्रलक्षणो देवः स एवाप्तो युष्माभिः कथ्यते। पर एव अर्हन् देवो न स्यात्। एवेति निश्चये। एवंविधः आप्तत्वसहितो रुद्रगुणो वर्तते। अयं तु सर्वज्ञो वीतरागो न भवति इति चेत् उच्यते—तर्हि परो रुद्रगुणः पुनः पुनरपि एष देवः किंगुणो वर्तते । यो देवः । हि निश्चयेन। संसारदोषानुगतो न भवति ॥

**गुणा इत्यादि** । स देव इति चेद्युष्माभिरुच्यते, तस्य गुणाः कुतः कस्मात् ज्ञातव्या भवन्ति शास्त्राद्गम्या भवन्ति । कथंभूताच्छास्त्रात् । तेनाप्तेन गुरुणा स्वयमेव प्रणीतात् उक्तात् तत्र शास्त्रे विनिश्चयो हि निश्चयेन ध्वनेस्तद्वाचनात् निश्चयो दृष्टो निश्चयो जातः । अमुमेवार्थं दृष्टान्तेन द्रढयति—वने विपिने परोक्षेऽपि दृष्टेरगम्येऽपि पतत्रिसार्थे पक्षिसमूहे ध्वनिविनिश्चयो दृष्टः सर्वैरपि विज्ञात । यस्य पक्षिणः ईदृशो ध्वनिर्वर्तते स पक्षी अमुकः पक्षी भविष्यति तद्ध्वनिरेव पक्षी ज्ञायते तथा येन देवेन यत् शास्त्रं प्रोक्तं तस्माच्छास्त्रादेव दोषवान्निर्दोषो ज्ञायते ॥

**सर्गेत्यादि** । यथा येन प्रकारेण लोके लोकमध्ये सर्गस्थितिप्रत्यवहारवृत्तेः सर्गस्य सृष्टेः, स्थितेश्च सर्गस्थितिकालस्य, प्रत्यवहारस्य संहारकालस्य च वृत्तेर्वर्तनस्य आद्यन्तभावो न वर्तते एतदुक्तं भवति। यथा सर्गादयो हिमसमयादयश्च अनादिकालेषु वर्तन्त एव। कथं वर्तन्त इति चेत् सर्गात् संहारो वर्तते, संहारात् सर्गो वर्तते, हिमादातपो भवति, आतपाद्वर्षाकालो भवति, तस्मात् पुनर्हिमकालो भवति, एकस्मादेकः सर्वदा वर्तते, तथैव तेनैव प्रकारेण मुक्तागममालिकायाः आद्यन्तभावो न वर्तते । देवश्रुतयोरपि आद्यन्तभावो नास्ति, मुक्ताद्देवात् आगमो भवति, आगमाच्छास्त्रान्मुक्तो देवो भवति ॥

तदेव निरूपयति—**श्रुतादित्यादि** । श्रुतादागमात् स जगत्प्रसिद्धो देवोऽर्हन् भवति। अस्माद्देवादेतत् श्रुतं भवति। इमावेतौ श्रुतदेवौ हि निश्चयेन बीजाङ्कुरवत् प्रवृत्तौ प्रवृत्तिं गतौ।

असंशयं हेतुविशेषभावाद्यथोपलः स्यात्कनकं तथैव ।
अन्तर्बहिश्चास्तसमस्तदोषो ज्योतिः परं स्यादयमेव जीवः ॥
अङ्गारवत्तद्धि न जातु शुध्येद्रूपान्तरं वस्तुनि यत्र नास्ति ।
दृष्टो मणीनां मलसंक्षयेण तेजःप्रभावः पटुभिः कृतेन ॥
भूता भविष्यन्ति भवन्ति चान्ये लोकत्रयज्ञाः क्रमशः क्षितीशाः ।
यथा तथाप्ता यदि को विरुद्धो बहुत्वमन्यत्र च बाढमस्ति ॥
हरिः पुनः क्षत्त्रिय एव कश्चिज्ज्योतिर्गणैस्तुल्यगुणो रविश्च ।
देवौ स्त एतौ यदि मुक्तिमार्गौ पृथुश्च सोमश्च कुतस्तथा न ॥

---

बीजादङ्कुरो भवति, अङ्कुराद्बीजं भवति । हिताहितज्ञे हितज्ञमहितज्ञं च दैवात् पुण्यात् पुंसि पुरुषे परेण किं कार्यम् । न किमपि । किंवत् । जातिस्मरवत् । यथा जातिस्मरः पुमान् अन्यं न पृच्छति किं तु स्वयमेव जानाति, एवं ज्ञानात् स्वयमेव जानाति । परेण किं कार्यम् । न किमपि कार्यमित्यर्थः ॥

**असंशयमित्यादि** । असंशयं यथा भवत्येवं हेतुविशेषभावात् कारणभेदस्य भावात् यथा उपलः कनकं स्यात् तथैव अन्तर्बहिश्च अन्तः कर्मक्षयोपशमादिभावः, बहिश्च गुर्वाद्युपदेशः, अस्तसमस्तदोषः क्षीणकर्ममलकलङ्कः अयमेव संसारी जीवः परं ज्योतिः सिद्धः स्यात् ॥

**अङ्गारेत्यादि** । अङ्गारवत् अनिलवत् तद्वत् तदेवात्मस्वरूपं अभव्यजीवलक्षणं जातु कदाचित् न शुद्ध्येत् शुद्धिं न प्राप्नुयात् । तत्किम् । यत्र वस्तुनि [अ]भव्यलक्षणे पदार्थे रूपान्तरं नास्ति । मिथ्यात्वं मुक्त्वा कदाचिदपि यः सम्यक्त्वं न याति न शुध्येदित्यर्थः । पटुभिर्विचक्षणैः कृतेन विहितेन मलसंक्षयेण विनाशेन मणीनां रत्नानां तेजःप्रभावो दृष्टो विलोकितः । तथा चोक्तं समन्तभद्रेण महर्षिणा—'दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात् । क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥'

**भूता इत्यादि** । भूता अतीताः, भविष्यन्तोऽनागताः, भवन्तश्च वर्तमानाः, अन्ये लोकत्रयज्ञायकाः क्रमशो न क्रमेण यथा क्षितीशा राजानस्तथा तेनैव क्षितीशप्रकारेण यदि चेत् आप्तास्तीर्थंकरपरमदेवा भूता भविष्यन्ति भवन्ति तर्हि को विरुद्धः । न कश्चिद्विरुद्ध इत्यर्थः । अन्यत्र च परमते बहुत्वं प्रचुरत्वं बाढमतिशयेन अस्ति वर्तते, हरिहरहिरण्यगर्भनवग्रहतिथिदेवताद्वादशादित्यादिवत् ॥

**हरिरित्यादि** । हरिः श्रीनारायणः पुनः पश्चात् कश्चित् कोऽपि क्षत्त्रिय एव वर्तते । ज्योतिर्गणैस्तुल्यगुणः शुक्रशनैश्चरादिसदृशो रविश्च वर्तते । एतौ द्वौ[1] हरिरवी यदि मुक्ति-

---

१. अत्र प्रसिद्धसाहचर्याभावाद्ब्रह्मप्रजापतिशब्दवन्नानङ्.



अशेषमेतद्वपुषा बिभर्ति दशावतारेण स वर्तते वा ।
शिला प्लवादर्पति विस्मयार्हं मातः कथं संगतिमङ्गतीदम् ॥
स्वयं स कुष्ठी पदयोः किलार्कः परेषु रोगार्तिहरश्च चित्रम् ।
अजा परेषां विनिहन्ति वातं स्वयं तु वातेन हि सा म्रियेत ॥
माता—(स्वगतम् ।)
गतः स कालः खलु यत्र पुत्रः स्वतन्त्रवृत्त्या हृदयेप्सितानि ।
कार्याणि कार्येत हठान्नयेन भयेन वा कर्णचपेटया वा ॥
युवा निजादेशनिवेशितश्रीः स्वयंप्रभुः प्राप्तपदप्रतिष्ठः ।
शिष्यः सुतो वात्महितैर्बलाद्धि न शिक्षणीयो न निवारणीयः ॥

---

मार्गौ देवौ स्तः स्याताम्, तर्हि पृथुश्च आदिक्षत्त्रियः सोमश्च चन्द्रस्तथा देवौ कुतो न स्याताम् ॥

**अशेषमित्यादि** । हे मातः, स हरिरेतदशेषं जगद्वपुषः शरीरेणोदरमध्ये बिभर्ति । वान्यद्दशावतारेण वर्तते यः सर्वनिजशरीरेण बिभर्ति स दशावतारान् कुतः स्थित्वा गृह्णाति । शिला प्लवादर्पति जले शिला तरतीति एतस्मादपि कथं केन प्रकारेण इदं विस्मयार्हं संगतिं अङ्गति व्रजति । कथं सङ्गः क्षतः(?) इत्यर्थः ॥

**स्वयमित्यादि** । सोऽर्कः किल पदयोः पादयोः स्वयं कुष्ठी कुष्ठरोगवान् वर्तते । चित्रं परेषु भक्तेषु रोगार्तिहरश्च रोगपीडाविनाशकश्च वर्तते । अमुमेवार्थं दृष्टान्तेनोच्छिनत्ति—अजा छागिका परेषां लोकानां वातं विनिहन्ति । स्वयं तु सा अजा वातेन वातरोगेण म्रियेत मृतिं गच्छेत् । इदमपि विस्मयार्थम् । किंतु अजा वातरोगेण न म्रियते इत्यर्थः ॥

माता चन्द्रमतिः स्वगतमात्मगतं चिन्तयति—**गत इत्यादि** । स कालः प्रस्तावः गतोऽतिक्रान्तः । खलु निश्चयेन । यत्र काले पुत्रो यशोधरः स्वतन्त्रवृत्त्या आत्माधीनत्वेन हृदयेप्सितानि कार्याणि कर्तव्यानि हठात् नयेन न्यायेन भयेन भीत्या वा कर्णचपेटया वा हस्ततलताडनेन वा कार्येत कार्यते । इदानीं तु कार्याणि हठादिना कारयितुं न शक्यत इत्यर्थः ॥

कस्मान्न कार्यते इदानीं तु असौ तावत्—**युवेत्यादि** । युवा शिशुर्न वर्तते । अपि च निजादेशनिवेशितश्रीः निजादेशे निवेशिता आरोपिता श्रीर्येन स तथोक्तः । पुनः कथंभूतः । स्वयंप्रभुः स्वयमेव सर्वेषां स्वामी समर्थो वा । पुनः कथंभूतः । प्राप्तपदप्रतिष्ठः प्राप्ता लब्धा पदे राज्यपदे प्रतिष्ठा शोभा येन स तथोक्तः । तेन कारणेन शिष्यः विद्यार्थी सुतो वा आत्महितः पुरुषैर्बलाद्बलात्कारेण न शिक्षणीयो नापि निवारणीयो निषेधनीयः । कथम् । हि । स्फुटमिति शेषः ॥

(प्रकाशम् ।)

तवोपदेशं खलु किं नु कुर्याद्विनीतचित्तस्य बहुश्रुतस्य ।
को नाम धीमाँल्लवणाम्बुराशेरुपायनार्थं लवणं नयेत ॥
विचक्षणः किं तु परोपदेशे न स्वस्य कार्ये सकलोऽपि लोकः ।
नेत्रं हि दूरेऽपि निरीक्षमाणमात्मावलोके त्वसमर्थमेव ॥
निघ्नन्ति निःसंशयमेव भूपाः पुत्रं च मित्रं पितरं च बन्धुम् ।
स्वस्य श्रिये जीवितरक्षणाय राज्यं कुतः क्षान्तिपरायणानाम् ॥
तदस्य दुःस्वप्नविधेः शमार्थं संरक्षणार्थं निजजीवितस्य ।
दुर्वासनां वत्स विहाय जीवैर्विधेहि यज्ञं कुलदेवतायाः ॥

किमङ्ग, महामुनिर्गौतमः प्राणत्राणार्थमात्मोपकारिणमपि नाडीजङ्घं न

---

प्रकाशं सर्वेषां स्फुटं माता ब्रूते—**तवेत्यादि** । हे पुत्र, तव भवतः । खलु निश्चयेन । नु इति प्रश्ने वितर्के वा । उपदेशं माता शिक्षाकर्त्री किं कुर्यात् । अपि तु न किमपि कुर्यादित्यर्थः । त्वं सर्वत्र विचक्षणो वर्तस इत्यर्थः । कथंभूतस्य तव । विनीतचित्तस्य विनयपरहृदयस्य । पुनः कथंभूतस्य तव । बहुश्रुतस्य अनेकेषु शास्त्रेषु प्रवीणस्य । अमुमेवार्थं प्राभृतीकरणार्थं दृष्टान्तद्वारेण द्रढयति—नामेति संभावनायाम् । को धीमान् कः प्रेक्षावान् पुरुषः लवणाम्बुराशेः लवणोदधिसमुद्रस्य उपायनार्थं प्राभृतीकरणार्थं लवणमक्षीबं नयेत नयति । अपि तु न कश्चिदित्यर्थः ॥

**विचक्षण इत्यादि** । हे पुत्र, त्वं विचक्षणो वर्तसे । किं तु सकलोऽपि लोकः समस्तोऽपि जनः । केवलं त्वमेव न । परोपदेशे विचक्षणो भवति । न तु स्वस्य कार्ये विचक्षणः स्यात् । अमुमेवार्थं दृष्टान्तेन द्रढयति--हि यस्मात् कारणात् नेत्रं चक्षुर्दूरेऽपि वस्तु निरीक्षमाणं अवलोकयद्भवति । आत्मावलोके चक्षुर्विलोकने तु असमर्थमेव वर्तते ॥

**निघ्नन्तीत्यादि** । हे पुत्र, भूपाः स्वस्य श्रिये लक्ष्मीनिमित्तं जीवितरक्षणाय आत्ममृत्युवञ्चनार्थं च निःसंशयमेव पुत्रं च निघ्नन्ति मारयन्ति, मित्रमभीष्टं निघ्नन्ति, पितरं च वप्तारं निघ्नन्ति, बन्धुं निघ्नन्ति । अमुमेवार्थेन द्रढयति—क्षान्तिपरायणानां क्षमवतां राज्ञां राज्यं कुतः । न कुतश्चिदित्यर्थः ॥

**तदित्यादि** । तत्तस्मात् कारणात् अस्य दुःस्वप्नविधेर्विधानस्य शमार्थं शमनार्थं निजजीवितस्य आत्मायुषः संरक्षणार्थं च । हे वत्स पुत्र, दुर्वासनां दिगम्बरोपदेशं विहाय कुलदेवताया जीवैः पशुभिर्यज्ञं विधेहि पूजां कुरु ॥

अङ्ग अहो पुत्र, गौतमो नाम महामुनिः प्राणत्राणार्थं प्राणरक्षणार्थं आत्मोपकारिणमपि



जघान । विश्वामित्रः सारमेयम् । एवमन्येऽपि शिबिदधीचिबलिबाणासुरप्रभृतीनामवनिपतीनां सुरभितनयादीनामितरेषां च सत्त्वानामालम्भनेनात्मनः शान्तिकर्माणि सम्यगारेभिरे ।

यथा जलैः पङ्कजिनीदलानां पङ्कैर्न लेपो नभसो यथा च ।
राज्ञस्तथा शुद्धमतेर्न पापैः संबन्धगन्धोऽस्ति कथंचनापि ॥
विषं विषस्यौषधमग्निरग्नेरियं प्रसिद्धिर्महती यथैव ।
पुण्याय हिंसापि भवेत्तथैव सर्वत्र हे पुत्र न षड्गलानि ॥

---

नाडीजङ्घं वानरं किं न जघान । अपि तु जघानैव । गौतमः किल तीर्थे यात्रासु चलितः । च्युतमार्गश्च महति कान्तारे पतितः । पिपासोष्णशोषः शुष्यति शेषकायः बुभुक्षाशुशुक्षणिसंधुक्षमाणकुक्षिश्च स्वैरविहारिणा वानरेणोदकस्थानं नीतः । स मुनिस्तद्दर्शितं तोयं पीत्वा वानरं मारयित्वा कृततत्पिशितभोजनो वनं निस्ततार । हे पुत्र, विश्वामित्रो महामुनिः सारमेयं श्वानं कृतोपकारं किं न जघान । एषापि कथा तद्वदेव । एवममुना प्रकारेण अन्येऽपि राजानः सुरभितनयादीनां धेन्वादीनामितरेषां च अपरेषां सत्त्वानां प्राणिनां आलम्भनेन मारणेन आत्मनः स्वेषां शान्तिकर्माणि सम्यगारेभिरे आरब्धवन्तः । तथा हि—शिबिदधीचिनौ राजानौ तयोर्मांसास्थिभ्यां देवा आत्मनो विघ्नोपशमनं वृतदानवक्षयं कृतवन्तः । बलिबाणासुरौ तयोर्द्वयोर्यज्ञे बन्धनालम्भनाभ्यां निष्कण्टकां देवा महीं चक्रुः । शिबिदधीचिभ्यां यागः कृतः, बलिबाणासुरौ मारितौ । प्रवृत्तिशब्दात् वृतदानवं च मारितवन्तः । अवनिपतीनां राज्ञां सुरभितनयादीनां माहेयीप्रभृतीनां च सत्त्वानां पशूनां आलम्भनेन मारणेन आत्मनः शान्तिकर्माणि अन्येऽपि राजानः सम्यगारेभिरे । गोसवे यज्ञे तां माहेयीं आलभ्य मारयित्वा प्राप्य च रन्तिदेवो मुनिः स्वर्गं साधयामास । अत एव कारणात् चर्मप्रक्षालनात् चर्मल(ण्व)ती नदी बभूव । तदस्थिप्रक्षालनाच्च अष्ठीवती नदी संजाता ॥

**यथेत्यादि** । यथा येन प्रकारेण जलैः पङ्कजिनीदलानां पद्मिनीपत्राणां लेपो न भवति । नभसः पङ्कैर्लेपो यथा न भवति । तथा तेनैव प्रकारेण शुद्धमते राज्ञः पापैः सह संबन्धगन्धः कथंचनापि प्रकारेण संबन्धगन्धः पापबन्धलेशोऽपि नास्ति ॥

**विषमित्यादि** । यथैव येनैव प्रकारेण विषस्यौषधं विषं भवति, अग्नेरौषधं अग्निर्भवति, इयं महती प्रसिद्धिर्वर्तते, तथैव तेनैव प्रकारेण हिंसापि जीववधोऽपि पुण्याय श्रेयसे भवेत् संजायेत । हे पुत्र हे यशोधरमहाराज, सर्वत्र सर्वेषु क्षेत्रेषु षड्गलानि न भवन्ति । क्वचिद्धीनानि, क्वचिदधीकानि, क्वचित् षडेव हलानि भवन्तीत्यर्थः ॥

गोब्राह्मणस्त्रीमुनिदेवतानां विचारयेत्कश्चरितं विपश्चित् ।
श्रुतिस्मृतीहासपुराणवाचस्त्यजात्मना चेन्न तवास्ति कार्यम् ॥
न कापि पुंसः पुरुषार्थसिद्धिः सूक्ष्मेक्षयातीवपरीक्षकस्य ।
जगत्प्रवाहेण तु वर्तितव्यं महाजनो येन गतः स पन्थाः ॥
विलासिनीविभ्रमदर्पणानि कंदर्पसंतर्पणकारणानि ।
क्रियाश्रमच्छेदकराणि हातुं मधूनि को नाम सुधीर्यतेत ॥
मताः समा मन्मथतत्त्वविद्भिर्मृताः स्त्रियो मद्यविवर्जिताश्च ।
ये भुञ्जते मांसरसेन हीनं ते भुञ्जते किं नु न गोमयेन ॥
यदि च मधुमांसनिषेवणे महादोषस्तदा कथमेतन्महर्षिभिरुदाहृतम्—

---

**गोब्राह्मणेत्यादि** । गावश्च ब्राह्मणाश्च स्त्रियश्च मुनयश्च गौतमादयो देवताश्च विश्वा-···दयो गोब्राह्मणस्त्रीमुनिदेवतास्तासां चरितमाचारं को विपश्चित् विचारयेच्चर्चयेत् । अपि तु न कश्चिद्विपश्चिद्विचारयेदित्यर्थः । हे पुत्र, श्रुतिस्मृतीतिहासपुराणवाचः श्रुतिः वेदः, स्मृतिः धर्मशास्त्रम्, इतिहास इतिवृत्तम्, पुराणवाच रामायणमहाभारतादीनां वचनानि त्वं त्यज मुञ्च चेद्यदि आत्मना जीवेन सह तव कार्यं नास्ति । जीवार्थी चेत्तर्हि मा त्यज ॥

**न कापीत्यादि** । हे पुत्र, पुंसः पुरुषस्य कापि काचिदपि पुरुषार्थसिद्धिर्न भवति । कथंभूतस्य पुंसः । सूक्ष्मेक्षया सूक्ष्मदृष्ट्या कृत्वा अतीवपरीक्षकस्य । जगत्प्रवाहेण तु लोकमार्गेण तु वर्तितव्यं वर्तनीयम् । येन यथा मार्गेण महाजनो गतः महान् लोकः प्रवृत्तः स पन्थाः स एव मार्गः । अर्थान्तरन्यासालंकारः ॥

**विलासिनीत्यादि** । हे पुत्रक, सुधीः पुमान् । नामेति संभावनायाम् । मधूनि मध्वादीनि हातुं परिहर्तुं को यतेत यत्नं कुर्यात् । अपि तु न कश्चित् परिहरेदित्यर्थः । कथंभूतानि मधूनि । विलासिनीविभ्रमदर्पणानि विलासिनीनामुत्तमस्त्रीणां विभ्रमाणां अवलोकने दर्पणानि आदर्शसदृशानि । पुनः कथंभूतानि । कंदर्पस्य कामोद्रेकस्य संतर्पणे समुद्दीपने कारणानि हेतुभूतानि । पुनः कथंभूतानि । क्रियाश्रमच्छेदकराणि क्रियाणां खुरलिकादीनां श्रमस्य छेदकराणि । आक्षेपालंकारः ॥

**मता इत्यादि** । हे पुत्र, मृताः स्त्रियो मद्यविवर्जिताश्चापि समा मताः । कैः । मन्मथतत्त्वविद्भिः कामशास्त्ररहस्यविचक्षणैः पुरुषैः । हे पुत्र, मांसरसेन हीनं ये भुञ्जते भोजनं कुर्वते पुरुषाः । नु इति वितर्के । गोमयेन सह गोविष्ठा सह किं न भुञ्जते । अपि तु गोविट्सहितं भोजनं कुर्वन्तीत्यर्थः । उपमालंकारः ॥

यदि च यदि चेत् मधुमांसनिषेवणे महादोषो वर्तते, तदा तस्मिन् काले एतद्वचनं महर्षिभिः कथं उदाहृतं प्रोक्तम् ॥



'न मांसभक्षणे दोषो न मद्ये न च मैथुने ।
प्रवृत्तिरेव भूतानां निवृत्तेश्च महत्फलम् ॥' इति ।

कथं च हव्यकव्यविधिषु प्रबन्धेन तद्ग्रहणम् । तदाह—

'तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च ।
दत्तेन मांसं प्रीयन्ते विधिवत्पितरो नृणाम् ॥
द्वौ मासौ मत्स्यमांसेन त्रीन्मासान्हारिणेन च ।
औरभ्रेणाथ चतुरः शाकुनेनैव पञ्च वै ॥
षण्मासांश्छागमांसेन पार्षतेन हि सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥
दश मासास्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मस्य मांसेन मासानेकादशैव तु ॥

---

एतत्किम्—**नेत्यादि** । मांसभक्षणे दोषः पापं न वर्तते, न च मद्ये दोषो वर्तते, न चैवं मैथुने दोषो वर्तते । किं तर्हि । भूतानां प्रवृत्तिरेव भवति, निवृत्तेस्तु मद्यमांसनियमात् महत्फलं भवति ॥

कथं च केन प्रकारेण हव्यकव्यविधिषु देवे त्रिकार्यविधानेषु प्रबन्धेन शास्त्रेण कृत्वा तद्ग्रहणं मांसग्रहणं वर्तते । तदाह तदेव निरूपयति—**तिलैरित्यादि** । ··········
································································
································································
················ ॥

**द्वौ मासावित्यादि** । द्वौ मासौ शास्त्रे मत्स्यमांसेन ।।नामिषेण पितरस्तृप्यन्ति । त्रीन् मासान् प्रतिस्रसमासास्वा (?) हारिणेन हरिणमांसेन पितरस्तृप्यन्ति । अथानन्तरमौरभ्रेण वेषमांसेन चतुरो मासान् पितरस्तृप्यन्ति । शाकुनेनैव पक्षिमांसेनैव पञ्च मासान् पितरस्तृप्यन्ति ॥

**षडित्यादि** । वै निश्चयेन । छागमांसेन षण्मासान् पितरस्तृप्यन्ति । पार्षतेन मृगविशेषमांसेन सप्त मासान् पितरस्तृप्यन्ति । कथम् । हि निश्चयेन । वै इति पादपूरणे । अष्टौ मासान् एणमांसेन कस्तूरीमृगमांसेन पितरस्तृप्यन्ति । रौरवेण रुरुमृगेण नवैव मासान् पितरस्तृप्यन्ति ॥

**दशेत्यादि** । वराहमहिषामिषैः शूकरमहिषमांसैस्तु दश मासान् पितरस्तृप्यन्ति । शशकूर्मस्य मांसेन शशकरक्षयमांसेन एकादशैव मासान् पितरस्तृप्यन्ति ॥

संवत्सरं तु गव्येन पयसा पायसेन वा ।
वार्धीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥' इति ।

राजा—(स्वगतम् ।)

ऐश्वर्यमेकं तिमिरं नराणामेवंविधो बन्धुगणो द्वितीयम् ।
किं नाम पापं न करोतु जन्तुर्मदेन मोहेन च निर्विचारः ॥
श्रियां मनोदर्पकरैर्विलासैरापातरम्यैश्च विलासिनीनाम् ।
प्रतारितान्तःकरणो दुरन्तां भवाटवीमेष विशत्यवश्यम् ॥
बलादमीभिर्विषयैर्वराकः प्रायेण जानन्नपि मोहितात्मा ।
मृत्योः पुरीवारिविहारभाजां वन्यः करीवास्पदमापदां स्यात् ॥

(प्रकाशम् ।)

नान्येषु पापं मनसा विचिन्त्यं साक्षात्स्वयं तत्क्रियते मयाद्य ।
त्वया श्रुता किं नु कथा न लोके सशालिशिक्थस्य वसोः प्रसिद्धा ॥

---

**संवत्सरमित्यादि**। गव्येन पयसा गोदुग्धेन पायसेन वा संवत्सरं पितरस्तृप्यन्ति । वार्धीणसस्य गण्डकस्य मांसेन द्वादशवार्षिकी तृप्तिर्भवति ॥

राजा श्रीयशोधरः स्वगतं आत्मगतं चिन्तयति—**ऐश्वर्यमित्यादि** । ऐश्वर्यं नार्पतं एकं तावत् नराणां तिमिरमन्धकारं वर्तते । एवंविधो मात्रादिलक्षणो बन्धुगणो बन्धुवर्गो द्वितीयं तिमिरं वर्तते । नामेति संभावनायाम् । जन्तुः किं पापं न करोतु । अपि तु सर्वपापं करोत्वित्यर्थः । कथंभूतो जन्तुः । मदेनैश्वर्यगर्वेण मोहेन च एवंविधबन्धुवर्गमोहेन कर्मणा निर्विचारो निर्विवेकः । यथासंख्याक्षेपालंकारः ॥

**श्रियामित्यादि** । श्रियां लक्ष्म्यां सत्यां विलासिनीनां विलासैर्नेत्रशोभाभिः प्रतारितान्तःकरणो वञ्चितमना एष जन्तुरवश्यं निश्चयेन दुरन्तां दुष्टस्वभावां भवाटवीं विशति प्रवेशं करोति । कथंभूतैर्विलासैः । मनोदर्पकरैः हृदयमदजनकैः । पुनः कथंभूतैः । आपातरम्यैः प्रथमप्रारम्भे रम्यैः । रूपकालंकारः ॥

**बलादित्यादि** । अमीभिरेतैर्विषयैरिष्टस्रग्वनिताचन्दनादिभिः कारणभूतैर्मोहितात्मा परेष जन्तुर्वराको वर्पटकः प्रायेण जानन्नपि विदन्नपि बलात् आपदामास्पदं स्यात् । क इव । वने भवो वन्यः करीव । यथा वन्यः करी मृत्योः पुरीवारिविहारभाजां मरणस्य नगरीविहारवतां करिधरणस्थानं वारिरुच्यते । तद्विहारज्ञोऽजमास्पदं स्यात् । रूपकदृष्टान्तालंकारः ॥

प्रकाशम् । यशोधरो राजा सर्वं स्फुटमुक्तवान् ॥

**नान्येष्वित्यादि** । हे मातः, अन्येषु जीवेषु पापं तल्लक्षणं मनसा न विचिन्त्यं नो विचिन्तनीयम् । तत्पापं अद्य इदानीं मया यशोधरेण साक्षात्प्रत्यक्षेण कथं क्रियते । कर्तुं न



पिबेद्विषं यद्यमृतं विचिन्त्य जिजीविषुः कोऽपि नरो वराकः ।
किं तस्य तन्नैव करोति मृत्युमिच्छावशान्नैव मनीषितानि ॥
रजस्तमोभ्यां बहुलस्य पुंसः पापं सतां नैव निदर्शनाय ।
नाप्येनसामासजतामपेक्षा जातौ कुले वा रजसामिवास्ति ॥
जातिर्जरामृत्युरथामयाद्वा नृपेषु चान्येषु समं भवन्ति ।
पुण्यैर्जनेभ्योऽभ्यधिकाः क्षितीशा मनुष्यभावे त्वविशेष एव ॥
यथा मम प्राणिवधे भवत्या महान्ति दुःखानि भवन्ति मातः ।
तथा परेषामपि जीवहानौ भवन्ति दुःखानि तदम्बिकानाम् ॥

---

शक्यत इत्यर्थः । हे मातः, त्वया भवत्या । नु इति प्रश्ने । वसोः वसुनरेन्द्रस्य लोके प्रसिद्धा कथा किं न श्रुता । कथंभूतस्य वसोः । सशालिशिक्थस्य शालिशिक्थमत्स्यसहितस्य । एतत्कथाद्वयं कविः स्वयमेवाग्रे विस्तरेण कथयिष्यति । आक्षेपालंकारः ॥

**पिबेदित्यादि** । यदि चेत्कोऽपि कश्चिन्नरो मनुष्यो वराको हीनदीनो जिजीविषुः जीवितुमिच्छुरमृतं विचिन्त्य पीयूषमिति कृत्वा विषं हालाहलं पिबेदास्वादयेत्, तस्य रसस्य तद्विषं किं मृत्युं मरणं नैव करोति । अपि तु करोत्येव । इच्छावशात् मनोरथवशात् मनीषितानि नैव भवन्ति । तथा धर्मबुद्ध्या पापं कुर्वन् किं पुण्यं लभते । अपि तु नैव लभत इत्यर्थः । अर्थान्तरन्यासालंकारः ॥

**रजस्तमोभ्यामित्यादि** । रजस्तमोभ्यां पापेन अज्ञानेन च बहुलस्य प्रचुरस्य पुंसः गौतमादेर्विश्वामित्रादेश्च पापं सतां विद्वज्जनानां हेयोपादेयविवेकिनां निदर्शनाय दृष्टान्ताय नैव भवति । तैः पापिष्ठैः स्थावरादिमांसभक्षणं पापं कृतं तथा सत्पुरुषा [illegible] कुर्वन्ति इत्यर्थः । एनसां पापानामासजतां संबध्यमानानां जातौ कुले वा मातृपक्षे अपेक्षा वाञ्छा कापि नास्ति । केषामिव । रजसामिव धूलीनामिव । यथा रजांसि उड्डीयमानानि सर्वेषामुपरि पतन्ति न कमपि वञ्चयन्तीत्यर्थः । उपमालंकारः ॥

**जातिरित्यादि** । जातिर्जन्म जरा मृत्युः, अथानन्तरमामयाद्वा नृपेषु अन्येषु चापरप्राणिषु समं समानया भवन्ति । तत्र क्षितीशा राजानः पुण्यैः कृत्वा जनेभ्यः अभ्यधिका भवन्ति अतिरेकिणो भवन्ति । मनुष्यभावे तु अविशेष एव राजलोकयोर्न कश्चिद्विशेषोऽस्ति । जातिः, अतिशयालंकारश्च ॥

**यथेत्यादि** । हे मातः, यथा मम प्राणिवधे भवत्यास्तव महान्ति गुरूणि दुःखानि भवन्ति । तथा परेषामपि जीवहानौ तदम्बिकानां तन्मातॄणां दुःखानि भवन्ति । दृष्टान्तालंकारः ॥

परस्य जीवेन यदि स्वरक्षा पूर्वे क्षितीशाः कुत एव मम्रुः ।
शास्त्रं तु सर्वत्र यदि प्रमाणं श्वकाकमांसेऽपि भवेत्प्रवृत्तिः ॥
भवन्नकृत्यावहितो हि लोकः कदापि नेदं जगदेकमार्गम् ।
यद्धर्मबुद्ध्या विदधाति पापं तन्मे मनोऽतीव दुनोति मातः ॥
लोके विनिन्द्यं परदारकर्म मात्रा सहैतत्किमु कोऽपि कुर्यात् ।
मांसं जिघत्सेद्यदि कोऽपि लोलः किमागमस्तत्र निदर्शनीयः ॥
लोलेन्द्रियैर्लोकमनोनुकूलैः स्वाजीवनायागम एष सृष्टः ।
स्वर्गो यदि स्यात्पशुहिंसकानां सूनाकृतां तर्हि भवेत्स कामम् ॥
मन्त्रेण शस्त्रैर्गलपीडनाद्वा वेद्यां बहिश्चापि वधः समानः ।
स्वर्गो यदि स्यान्मखहिंसितानां स्वबान्धवैर्यज्ञविधिर्न किं तु ॥

---

**परस्येत्यादि** । परस्य गजवाज्यनादिजीवगणस्य जीवेन यदि चेत् स्वरक्षा भवति तर्हि पूर्वे चिरंतनाः क्षितीशाः कुत एव कस्मादेव मम्रुर्मृताः । यदि चेत् शास्त्रं तु सर्वत्र प्रमाणं भवति तर्हि श्वकाकमांसेऽपि प्रवृत्तिर्भवेत् । जात्यलंकारः ॥

**भवन्नित्यादि** । हे मातः, लोकोऽकृत्यावहितः पापकर्मणि सावधानो भवन् संजायमानो वर्तते । इदं जगत् कदापि कस्मिंश्चिदप्यवसरे एकमार्गमेकमताश्रितं न भवति । कथम् । हि निश्चयेन । यल्लोको धर्मबुद्ध्या पापं विदधाति तन्मे मम मनोऽतीव दुनोति उपतापं प्राप्नोति । जातिरियम् ॥

**लोक इत्यादि** । परदारकर्म परस्त्रीभोगो लोके जगति विनिन्द्यं विशेषेण गर्हणीयं वर्तते । एतत्परदारकर्म मात्रा सह जनन्या सह कोऽपि किमु कुर्यात् । अपि तु न कुर्यादित्यर्थः । यदि चेत् कोऽपि कश्चित् पुरुषः लोलो जिह्वालम्पटो मांसं जिघत्सेत् खादितुमिच्छेत् तत्र तस्मिन् मांसभक्षणे आगमः सिद्धान्तः वेदशास्त्रं किं किमर्थं निदर्शनीयः । अपि तु नोदाहर्तव्यमित्यर्थः । आक्षेपालंकारः ॥

**लोलेत्यादि** । लोलेन्द्रियैरिन्द्रियलम्पटैः लोकमनोनुकूलैर्यथालोकचित्तमनुलापुकैरेषोऽयं आगमो वेदसिद्धान्तः स्वाजीवनाय निजविषयपोषणाय सृष्टो रचितः । यदि चेत् पशुहिंसकानां गजवाज्यब्राह्मणादियज्ञकर्मणि वधकानां स्वर्गः स्यात् संजायते तर्हि स स्वर्गः काममतिशये सूनाकृतां खाटकिनां भवेत् संजायेत । आक्षेपालंकारः ॥

**मन्त्रेणेत्यादि** । मन्त्रेण अथर्वणमन्त्रेण सहिता वाक्येन वा शस्त्रैर्गलपीडनात् कण्ठमोटनाद्वा वेद्यां प्रालम्भनकुण्डे बहिश्चापि यागमण्डपबाह्ये वा वधो जीवघातः समानः सदृशपापो वर्तते । यदि चेत् मखहिंसितानां यज्ञे वषट्कृतानां पशूनां स्वर्गः स्यात् त्रिद-



मातः, आकर्णयात्रोपाख्यानम्, यन्मयापरेद्युरेव **विद्यानवद्य**नामकादुपासकादुपश्रुतम् । तथा हि—किलाखण्डलसभायां ब्राह्मणाचरणं प्रति विवदमानमनसौ द्वौ दिवौकसावेतत्परीक्षार्थमेकश्छगलच्छलेनापरस्तदाजीवनव्याजेन पाटलिपुत्रपुरबाहिरिकायामवतेरतुः । तस्मिन्नेवावसरे सपञ्चाशतं पञ्चशतीं छात्राणामध्यापयन्नुपाध्यायः सकलवेदवेदाङ्गोपाङ्गोपदेशावधेयः **काङ्कायन**नामधेयः षष्टितमीदृशं प्राग्वंशं विधित्सुस्तत्रैवाजगाम । ईक्षांचक्रे च पुरुषेणाधिष्ठितमतीव महादेहमजम् । 'अहो, साधु भवत्ययमजास्तनंधयः खलु यज्ञकर्मणे' इत्यनुध्याय तं गोधमेवमभ्यधात्—'अरे मनुष्य, समानीयतामित इतोऽयं छागस्तव चेदस्ति विक्रेतुमिच्छा' इति । पुरुषः—'भट्ट, विचिक्रीषुरेवैनं यदि भवानिदं मे प्रसादीकरोत्यङ्गुलीयकम् ।' उपाध्यायस्तथा

---

शालयो भवेत् तर्हि । तु इति प्रश्ने । स्वबान्धवैः निजपुत्रादिकुटुम्बवर्गैः यज्ञविधिः किं न वर्तते । उपमालंकारः ॥

हे मातः, अत्र जीववध उपाख्यानं दृष्टान्तकथां त्वमाकर्णय यदुपाख्यानं मया यशोधरेण अपरेद्युरेव परस्मिन्नहन्येव विद्यानवद्यनामकादुपासकात् श्रावकादुपश्रुतमाकर्णितम् । तथा हि । तदेवोपाख्यानं दर्शयति—**किलेति** । आखण्डलसभायां सौधर्मैन्द्रसदसि ब्राह्मणाचरणं प्रति विवदमानमनसौ विवादं कुर्वतौ । ज्ञानयत्नोपछन्देषु वद इति करे विमतौ आत्मनेपदमित्यर्थः । द्वौ दिवौकसौ एतत्परीक्षार्थं ब्राह्मणाचारपरीक्षार्थम् एको देवश्छगलच्छलेन अपरो देवस्तदाजीवनव्याजेन छगलाजीवनमिषेण पाटलिपुत्रपुरबाहिरिकायां नगरसमीपवने अवतरेतुरवतीर्णौ । तस्मिन्नेवावसरे सपञ्चाशतं पञ्चशतीं सहस्रार्धं छात्राणां अध्यापयन् पाठयन् उपाध्यायः पाठकः सकलवेदवेदाङ्गोपाङ्गोपदेशावधेयः चतुर्वेदषडङ्गोपाङ्गानां उपदेशे अवधेया मर्यादा यस्य स तथोक्तः काङ्कायननामधेयः षष्टितमीदृशं प्राग्वंशं यज्ञं विधित्सुः विधातुमिच्छुः । 'प्राग्वंशः पुंलिङ्गे यज्ञगृहम्' इति दुर्गः । तत्रैवाजगाम तस्यामेव नगरबाहिरिकायां आजगाम आगच्छति स्म । ईक्षांचक्रे च दृष्टवांश्च पुरुषेणाधिष्ठितं महाशूद्रेण सहितं अतीव महादेहं वृषभसदृशमजम् । अहो आश्चर्ये । अयं अजास्तनंधयश्छागीपुत्रो यज्ञकर्मणे खलु भवति । कथम् । साधु यथा भवति । इत्येवमनुध्याय चिन्तयित्वा तं गोधं भारभटपुरुषं एवं अभ्यधात् उक्तवान्—अरे मनुष्य । सोऽपि काङ्कायन आत्मानं देवं मन्यमान इति भावः । समानीयतां प्राप्यतां इतः स्थानात् इत एतस्मिन् स्थाने अयं छागस्तव चेदस्ति विक्रेतुमिच्छा इति उक्तवान् । पुरुषो मनुष्य आह—भट्ट, विचिक्रीषुरेव विक्रेतुमिच्छुरेवाहमेनं छागं यदि भवान् इदं मे मम प्रसादीकरोति प्रसन्नो भूत्वा अर्पयति । किं तत् । अङ्गुलीयकं मुद्रिकाम् । उपाध्यायः काङ्कायनस्त-

विधायापवर्त्य च तं पुरुषमात्मदेशीयं शिष्यमादिशति—'अहो **कुशिक** वत्स, बलीयानयमजास्तनंधयः । तदतियत्नमुपसंव्यानेन बद्धानीयतामुदवसितम् । अहमप्येष तवानुपदमेवागच्छामि ।' तथाचरति तच्छिष्ये स वसुधायां कुलिशकीलित इव निषण्णः संभूय सर्वैरपि तदन्तेवासिभिरुत्थापयितुमशक्यः 'प्रीयन्तामत्रैवास्य चेटस्य मांसेन विधिपूर्वकं देवाः पितरो ब्राह्मणाश्च' इत्यालापोल्बणरुषममर्षविषोन्मेषकलुषचक्षुषमाशु स्वयमेव वधायोद्धृतपर्वताकारपाषाणपरुषं स छगलस्तमुपाध्यायं मनुष्यवद्धभाषे—'ननु भट्टस्य किमर्थो महानेष प्रयासः' इति । भट्टः सभयः सविस्मयश्च प्रत्याचष्ट—'महापुरुष, तव स्वर्गगमनाय' इति । छागः—'अन्ये खलु ते वराकतनवः पशवो ये मखमिषेण भवता भक्षिताः । अत्र तु प्रस्तरप्रतिमाकवलन इव केवलं दन्तभङ्गस्तव' इति विचिन्त्य किंचिद्विहस्य च स्तस्तमस्तं (?) पुनरेवमवोचत्—

---

था विधाय मुद्रिकां दत्त्वा अपवर्त्य च प्रस्थाप्य च तं पुरुषं भारभटं आत्मदेशीयं आत्मनो मनागूनं शिष्यमादिशति—अहो कुशिकनामन् । वत्सेति कोमलालापे । बलीयानयं अजास्तनंधयः । तत्तस्मात् कारणात् अतियत्नं यथा भवत्येवं उपसंव्यानेन उत्तरीयवस्त्रेण बद्धा संयम्यानीयतां उदवसितं मम गृहम् । अहमपि एष तवानुपदमेव भवतः पश्चादेव आगच्छामि । आगमिष्यामीत्यर्थः । तच्छिष्ये तथा आचरति सति बद्धा आनयति सति स छागो वसुधायां कुलिशकीलित इव निषण्णः संभूय मिलित्वा सर्वैरपि सार्धपञ्चशतैरपि तदन्तेवासिभिः भट्टान्तेवासिभिरुत्थापयितुमशक्यः न शक्यते । प्रीयन्तां प्रीतिं प्राप्नुवन्तु अत्रैव अस्य छागस्य चेटस्य दासस्य मांसेन विधिपूर्वकं वेदोक्तविधिना देवाः सवित्रादयः पितरः ब्राह्मणाश्च इत्यालापैरुल्बणरुषमुत्कटक्रोधं यथा भवत्येवं अमर्षविषोन्मेषकलुषचक्षुषं अमर्षः स एव विषं तस्योन्मेषेण प्रादुर्भावेण कलुषे आरक्ते चक्षुषी यस्य भट्टस्य स तथा तम् । आशु स्वयमेव वधाय उद्धृता उच्चलिता पर्वताकाराः पाषाणास्तैः परुषः कर्कशो यो भट्टः स तथा तम् । स पूर्वोक्तश्छगलस्तमुपाध्यायं मनुष्यवद्बभाषे उक्तवान्—नन्वहो, भट्टस्य किमर्थः केन कारणेन महान् एषोऽयं प्रयास इत्युवाच । भट्टो मनुष्यवद्ब्रुवन्तं छागं दृष्ट्वा सभयः सविस्मयश्च प्रत्याचष्ट प्रत्युवाच—हे महापुरुष, तव भवतः स्वर्गगमनाय प्रयाणाय मम प्रयास इत्युवाच । छागो मनसि चिन्तयति—अन्ये पशवः खलु ते भवन्ति वराकतनवो अकिंचित्करशरीरा ये पशवो मखमिषेण भवता भक्षिताः । अत्र तु मयि विषये प्रस्तरप्रतिमाकवलने बिम्बचर्वणे इव केवलं तव दन्तभङ्गो भविष्यति । इति विचिन्त्य किंचिन्मनाग् विहस्य च स्तस्तमस्तं(?) भट्टं प्रति पुनरेवं वक्ष्यमाणलक्षणोपलक्षितप्रकारेण अवोचत् जगाद ॥



'नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया
संतुष्टस्तृणभक्षणेन सततं हन्तुं न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो
यज्ञं किं न करोषि मातृपितृभिः पुत्रैस्तथा बान्धवैः ॥' इति ।

तदनु भो महाराज, सा मदीयाम्बिका ममोक्तिषु निरुत्तरा सती परमुपायान्तरमपश्यन्ती 'लब्धप्रतिष्ठातन्त्रेषु हि राजपुत्रेषु स्वभावेन भवन्ति ज्ञातिविषये शाठ्यनिष्ठुराः समाचाराः । तदेते कुशलमतिभिः शान्तिकर्मणैव कर्तव्याः कार्येष्वभ्यन्तराः' इति, तथा 'महत्यपि हि पुत्रे सवित्रीणां बालकाल इव चाटुकारस्नेहला एवालापाः श्लाघ्यन्ते, न पुनः कर्णकटुकाः' इति च विचिन्त्य, 'मातः, अलमलमनेन ममाश्रेयस्करेणोपचारेण' इति मया सहबहुमानं

---

किमवोचदित्याह—**नाहमिति** । हंहो भट्ट, अहं छागः स्वर्गफलोपभोगतृषितो न भवामि स्वर्गभोगं न वाञ्छामि । मया त्वमभ्यर्थितः प्रार्थितो न वर्तसे यन्मां स्वर्गं प्रापय । अहं तु तृणभक्षणेन बदर्यादिपर्णचर्वणेन संतुष्टः संतोषं प्राप्तवान् । कथम् । सततं निरन्तरम् । किं करिष्यते । स्वर्गभोगिन् हे भट्ट, तव भवतो वर्णोत्तमस्य हन्तुं कर्मचाण्डालवन्मारयितुं न युक्तम् । त्वया यज्ञे विनिहता मारिताः प्राणिनो ध्रुवं निश्चयेन यदि स्वर्गं यान्ति तर्हि मातृपितृभिस्तथा तव पुत्रैस्तथा तव बान्धवैस्तव भ्रातृभिः कृत्वा यज्ञं यागं किं न करोषि किं न विदधासि इत्युवाच ॥

तदनु तत्पश्चात् भो महाराज हे श्रीमारदत्तमहाराज, सा मदीयाम्बिका मम माता ममोक्तिषु मद्वचनेषु निरुत्तरा सती प्रत्युक्तिरहिता सती परमन्यत् उपायान्तरं अपश्यन्ती अनवलोकमाना सती इति विचिन्त्य पादयोर्निपत्य मामेवमभ्यर्थितवती प्रार्थयामास । इति किं विचिन्त्य । लब्धप्रतिष्ठातन्त्रेषु सर्वजगत्प्राप्तसंमानसमुदायेषु हि निश्चयेन राजपुत्रेषु स्वभावेन ज्ञातिविषये कुटुम्बवर्गे शाठ्यनिष्ठुरा धूर्तत्वेन निर्दयाः समाचाराः कर्तव्यानि भवन्ति । तत्तस्मात् कारणात् एते राजपुत्राः कुशलमतिभिः शान्तिकर्मणैव सामोपायेनैव कार्येषु कर्तव्येषु अभ्यन्तरा आत्मवशाः कर्तव्याः इति । न केवलं इति विचिन्त्य । तथा तेनैव प्रकारेण इति च विचिन्त्य पर्यालोच्य । इतीति किम् । महत्यपि हि पुत्रे सवित्रीणां बालकाले इव शिशुप्रस्तावे यथा वाचा चाटुकारस्नेहला च प्रेम्णा मिथ्यासवनस्नेहपरा एव आलापा मिथ्याभाषणानि श्लाघ्यन्ते प्रशस्यन्ते, न पुनः कर्मकटुका आलापाः प्रशस्यन्ते । तेन अम्बिका किं क्रियमाणा । मया यशोधरेण इत्यमुना प्रकारेण च विनिवार्यमाणा । इतीदृशं किम् । हे मातः, अलमलं पूर्णं पूर्णं अनेनोपचारेण पादपतनविनयेन । कथंभूतेन उपचारेण । मम अश्रेयस्करेण । कथं विनिवार्यमाणा । सहबहुमानं बहुमानसहितं तथा भवत्येवम् । पुनः कथं यथा भवति । अतिप्रकटितकरुणामयं अतिशयेन प्रादुर्भावेण कारुण्यमयानीति यथा भवत्ये-

विनिवार्यमाणापि सप्रणयमतिप्रकटितकरुणामयमाविर्भूतबहुप्रश्रयं च पादयोर्निपत्य मामेवमभ्यर्थितवती—'पुत्र, अहमनाथेत्यनुकम्पया वा, मातेति वत्सलतया वा, मद्दर्शनायत्तजीवितेत्युपरोधेन वा, वृद्धेति दयालुतया वा, गुरुवचनमनुल्लङ्घनीयमित्याशयेन वा, भविष्यत्यवश्यमनेनाभ्यर्थितभङ्गेन पूर्वमाचरितस्यापि सुकृतस्य हानिरिति परामर्शेन वा, किमपरः कोऽपि नास्ति तव पण्डितंमन्यभावस्यास्पदं येन मयि जरत्यामेवमतीव विहितविचारचपलोऽसीत्युपालम्भनभयेन वा, युक्तमयुक्तं वा गुरुरेव जानातीति मार्गानुसारणेन वा, न भवति शुभं चेदनुष्ठानमहमेव स्यामेनसां भागीति मनीषया वा, चिरमियं महीयसि पदे स्थिता मयापमानिता सती न जीविष्यतीति संभावनेन

---

वम्। पुनः कथं यथा भवति। आविर्भूतबहुप्रश्रयं प्रकटीभूतप्रचुरविनयं यथा भवत्येवम्। एवं अभ्यर्थितवती। एवं कथमिति चेत्—हे पुत्र, यदि चेत् परलोकदोषाशङ्कनेन दुर्गतिगमनं भवेत्, अन्येन वा केनचित्कारणेन प्राणिघातेन प्रवर्तनेन व्याप्रियसे, तर्हि मा प्रावर्तिष्ठा मा प्रवर्तस्व। किं तु पिष्टकुक्कुटेन चूर्णकृतताम्रचूडेन कुलदेवतायै कुलदेवतानिमित्तं बलिं पूजां उपकल्प्य समर्पयित्वा तदवशिष्टं पिष्टं मांसमिति च परिकल्प्य मया सह अवश्यं निश्चयेन प्राशनीयं भक्षणीयमिति। कया कृत्वा प्राशनीयम्। इत्युमना प्रकारेण। अनुकम्पया वा कारुण्येन वा प्राशनीयम्। इतीति किम्। हे पुत्र, अहं अनाथा इति कारणात्। पुनश्च कया कृत्वा पिष्टं प्राशनीयम्। मम मातेयं वर्तते इति वत्सलतया वा स्नेहलतया वा। मद्दर्शनायत्तजीवितेत्युपरोधेन वा मम दर्शनायत्तं ममावलोकनाधीनं जीवितं ईदृशेन उपरोधेन आक्षेपेण वा। इयं वृद्धा वर्षीयसी वर्तते इति दयालुतया वा दयावत्तया वा। गुरुवचनं मातुः पितुश्च वचनं अनुल्लङ्घनीयमन[ङ्गीकरणस्यायोग्यमित्याशयेनाभिप्रायेण वा। अनेन सांप्रतिकेन अभ्यर्थितभङ्गेन अभिलषितापूरणेन पूर्वं पूर्वकाले आचरितस्य विधिपूर्वकमनुष्ठितस्य सुकृतस्य पुण्यस्य हानिर्नाशोऽवश्यमेव भविष्यतीति परामर्शेन विचारेण वा। 'हे पुत्र, तव पण्डितंमन्यभावस्य मूर्खत्वस्य आस्पदं प्रतिष्ठास्थानं किमपरः कोऽपि गुणो विधिर्वा नास्ति। अपि तु वर्तत एव। येन स्वभावेन गुणेन वा जरत्यां वर्षीयस्यामपि मयि एवमुक्तप्रकारेण अतीव अनिर्वचनीयं विहितविचारचपलोऽनुष्ठितविचारेण चपलश्चञ्चलोऽस्थिरप्रकृतिरसि' इत्युपालम्भनस्य अनिर्वचनीयताख्यातेर्भयेन वा। युक्तं योग्यं अयुक्तमयोग्यं वा गुरुरेव माता पिता वा जानातीति मार्गस्य सरणेरनुसरणेन स्वीकारेण वा। 'यदि शुभमनुष्ठानं न भवति तर्हि अहमेव एनसां पापानां भागी स्याम्' इति मनीषया बुद्ध्या वा। 'महीयसि पूज्यतमे पदे स्थाने स्थितापि मया अपमानिता सती इयं चिरं न जीविष्यति'



वा, पुरा हि तस्या एव मम प्रभवन्ति वचांसि कुतो नाद्येति स्नेहानुगमनेन वा, नो चेदात्मानमेव करिष्यामि देवतोपहाराय त्वमेव तावदनुभवोभयकुलविशुद्धः श्रियोऽस्याः फलमित्यपवादबीभत्सया वा, यदि परलोकदोषाशङ्कनेनान्येन वा केनचित्कारणेन प्राणिघातेन व्याप्रियसे, मा प्रावर्तिष्ठाः। किं तु विनिवेदितदक्षिणोत्सवैर्वेदविद्भिर्वाडवैः परिश्रावितसकलसत्त्वोपहारफलोत्कटेन पिष्टकुक्कुटेन कुलदेवतायै बलिमुपकल्प्य तदवशिष्टं पिष्टं मांसमिति च परिकल्प्य मया सहावश्यं प्राशनीयम्' इति।

राजा—(स्वगतम्।) 'अहो, महिलानां दुराग्रहनिरवग्रहाणि परोपघाताग्रहाणि च भवन्ति प्रायेण चेष्टितानि। स्त्रियो हि नाम भवन्तु भर्तृषु शय्याविषये पुत्रेषु च प्रतिपालनसमये प्रकामं निसृष्टार्था निरङ्कुशाचरणसमर्थाश्च, न पुनः पौरुषेयेषु कर्मसु। यस्मात्कमलिनीदलेषु जलकणस्येव नारीणां मनसश्चञ्चलतरत्वादतीव निःसारत्वाच्च। पुरुषोऽपि गृहकार्यादन्यत्र स्त्रियं प्रमाणं यन्नदीप्र-

---

इति संभावनेन विमर्शेन वा। 'तस्याः पुरा अप्रत्यक्षकाले एव मम वचांसि प्रभवन्ति, अद्य तत्समक्षं कुतो न प्रभवन्ति' इति स्नेहस्य प्रेम्णोऽनुगमनेन वा। 'नो चेत् नाङ्गीक्रियते मद्वाक्यं चेत् देवतोपहाराय दृढैव तव मतिश्चेत् तर्हि अहमात्मानमेव देवतोपहाराय देवतावलये करिष्यामि। उभयकुलविशुद्धो मातापितृवंशशुद्धस्त्वमेव तावद् अस्याः श्रियः फलमनुभव भुङ्क्ष्व' इति अपवादबीभत्सया निन्दानादेयतया वा। कथंभूतेन पिष्टकुक्कुटेन। वाडवैर्ब्राह्मणैः परिश्रावितसकलसत्त्वोपहारफलोत्कटेन परिश्रावितं विविधग्रन्थप्रमाणपूर्वकं बोधितं सकलसत्त्वानां प्राणिमात्रस्य य उपहारो बलिस्तस्य फलं यत्र अतएवोत्कटस्तेन। कीदृशैर्वाडवैः। विनिवेदितदक्षिणोत्सवैः विशेषेण निवेदितायै दक्षिणायै उत्सव उत्साहो येषां ते तथा तैः। पुनः कीदृशैः। वेदविद्भिः वेदांस्त्रय्याख्यान्विदन्ति ते तथा तैः।

राजा श्रीयशोधरः स्वगतमात्मगतं चिन्तयति—अहो इत्याश्चर्ये। महिलानां स्त्रीणां दुराग्रहनिरवग्रहाणि दुराग्रहेण अप्रतिषेध्येनाग्रहेणाभिनिवेशेन निरवग्रहाणि निष्प्रतिबन्धानि निर्निरोधानि परोपघाताग्रहाणि परोपघाते परहिंसायामाग्रहाणि चेष्टितानि कर्माणि प्रायेण बाहुल्येन भवन्ति। हि यतः। नामेति संभावनायाम्। स्त्रियः भर्तृषु शय्याविषये सुरतसमये, च पुनः पुत्रेषु प्रतिपालनसमये प्रकामं यथेच्छं निसृष्टार्थास्त्यक्तगृहकार्याः निरङ्कुशाचरणसमर्थाः श्वश्र्वादिभयरहितं यथा भवति तथा आचरणे कार्यसंपादने शक्ताः भवन्तु। न पुनः न तु पौरुषेयेषु पुरुषसाध्येषु कर्मसु। यस्मात्कारणात् नारीणां स्त्रीणां मनसश्चित्तस्य चञ्चलतरत्वादस्थिरत्वात् अतीव अत्यन्तं निःसारत्वान्निर्बलत्वाच्च। कुत्र कस्येव। कमलिनीदलेषु पद्मिन्याः पत्रेषु जलकणस्येव जलबिन्दोरिव। यथा पद्मपत्रेषु जलबिन्दोरस्थिरता

वाहपतितःपादप इव न चिरं नन्दति। स्त्री तु पुरुषमुष्टिस्थिता खङ्गयष्टिरिव साधयत्यभिमतमर्थम्। अभिनिवेशं च पुनः पापपुण्यक्रियासु प्रधानं निधानमामनन्ति मनीषिणः। बाह्यानीन्द्रियाणि तपनतेजांसीव शुभेष्वशुभेषु च वस्तुषु समं विनिपतन्ति । न चैतावता भवति तदधिष्ठातुः कुशलेन चादृष्टेन संबन्धः। संकल्पोपपन्नप्रतिष्ठानि च देवसायुज्यभाञ्जि शिलाशकलानि किमत्यासादयन् पुरुषो न भवति लोके महापञ्चपातकी। सकृदेव चाशुभसंकल्पमलिने मनसि दुरपवादकलुषिते सत्पुरुषचेतसीव दुर्लभाः खलु पुनस्तत्प्रसन्नतायामुपायाः। चिरेणापि च कालेन कृतः कल्याणकर्मणां प्रचयः प्रमादवशेन सकृदपि संजातविधिर्दुरभिसंधिः पावकनिक्षेपात्प्रासाद इव क्षणेन विनश्यत्यामूलतः। संकल्पेन

---

तथा नारीमनसोऽपि । यद्यस्मात्कारणात् पुरुषोऽपि गृहकार्यात्पाकादिकर्मतोऽन्यत्र स्त्रियं प्रमाणं न चिरं नन्दति । किं तु भोजनादिसमये पाकादिकर्मण्येव प्रमाणमङ्गीकरोति । क इव । नदीप्रवाहपतितः नद्याः प्रवाहे पतितः पादपो वृक्ष इव । यथा नदीप्रवाहे पतितः पादपो न चिरं नन्दति शोभते स्थिरो भवति । स्त्री तु पुरुषमुष्टिस्थिता पुरुषस्य मुष्टौ स्थिता पुरुषपरतन्त्रा सती अभिमतमर्थं साधयति। केव। खङ्गयष्टिरिव उत्तमः खङ्ग इव । कीदृक् । पुरुषमुष्टिस्थिता पुरुषस्य मुष्टौ स्थिता । न तु भीरोः क्लीबस्य वा मुष्टौ स्थिता । मनीषिणः पण्डिताः पुनरभिनिवेशमासक्तिमेव पापपुण्यक्रियासु प्रधानं मुख्यं निधानं स्थानम् आमनन्ति वर्णयन्ति। बाह्यानि चक्षुरादीनि इन्द्रियाणि शुभेषु पुण्यजनकेषु अशुभेषु पापजनकेषु च वस्तुषु कर्मसु तपनतेजांसीव सूर्यातपा इव समं] युगपत् विनिपतन्ति प्रवर्तन्ते । न च एतावता दर्शनादिमात्रेण तदधिष्ठातुः दर्शनस्पर्शनादिकर्तुः पुरुषस्य कुशलेन पुण्येन चान्यत् अदृष्टेन पापेन संबन्धो भवति । संकल्पोपपन्नप्रतिष्ठानि च संकल्पेन प्राप्तप्रतिष्ठाकर्माणि शिलाशकलानि पाषाणखण्डानि देवसायुज्यभाञ्जि देवसाम्यप्राप्तानि अत्यासादयन् आसादनां कुर्वन् पुरुषो मनुष्यः किं न भवति लोके महापञ्चपातकी । अपि तु भवत्येव। उक्तं च—'स्वामिद्रोहः स्त्रीवधो बालहिंसा विश्वस्तानां घातनं लिङ्गभेदः। प्रायेणैतत्पञ्चकं पातकानां कुर्यात्सद्यः प्राणिनः प्राप्तदुःखान्॥' हिंसानृतस्तेयब्रह्मपरिग्रहेभ्यो वा न वा महापञ्चपातकीत्युच्यते। सकृदेव एकवारमपि च पुनः अशुभसंकल्पमलिने पापपरिणामदूषिते मनसि खलु निश्चयेन पुनस्तत्प्रसन्नतायां मनोनिर्मलतायामुपाया दुर्लभा भवन्ति। कस्मिन्निव। दुरपवादकलुषिते दुरपवादमलिने सत्पुरुषचेतसीव। चिरेणापि च कालेन कल्याणकर्मणां पुण्यकर्मणां प्रचयः कृतः सन् प्रमादवशेन असावधानतया सकृदपि संजातविधिरुत्पन्नविधानो दुरभिसंधिर्नष्टाभिप्रायः क्षणेन मुहूर्तेन आमूलतो मूलादपि पुण्यकर्मप्रचयो विनश्यति । क इव । पावकनिक्षेपात् प्रासाद इव अग्निमोचनात्



च भवन्ति गृहमेधिनोऽपि मुनयः। यथा—**उत्तरमथुरायां** निशाप्रतिमास्थितस्त्रिदिवसूत्रितकलत्रपुत्रमित्रोपद्रवोऽप्येकत्वभावनमानसो**ऽर्हद्दासः** । मुनयश्च गृहस्थाः । यथा—**कुसुमपुरे** चिरादाकर्णितश्रुतसुतसमरस्थितिरातापनयोगयुतोऽपि **पुरुहूतदेवर्षिः** ।

अस्ति च जगत्प्रसिद्धमिदमुदाहरणम्—एकस्मिन्नेव किल कामिनीकलेवरे मुनिकामिकुणपाशिनामभिनिवेशनिमित्तो विचित्रनिषेकः कर्मविपाक इति । किं च ।

नरेषु संकल्पवशेन मन्मथो यथा प्रवर्तेत पयश्च धेनुषु ।
तथैव कर्मण्युभयानि मानसाद्दधाति बोधाधिपतिर्विजृम्भितात् ॥

---

मन्दिरमिव । संकल्पेन पुण्यपरिणामेन च गृहमेधिनोऽपि मुनयो भवन्ति । यथेति दृष्टान्तः। यथा येन प्रकारेण उत्तरमथुरायां गोपाचलसमीपमथुरायां निशाप्रतिमास्थितः त्रिदिवेन देवविशेषेण सूत्रितः कृतः कलत्रपुत्रमित्राणां उपद्रवो मृतिर्यस्य स तथोक्तोऽपि एकत्वभावनमानस एकत्वानुप्रेक्षाभावनाचित्तः सन् अर्हद्दासनामा श्रेष्ठी मुनिर्बभूव । तथा हि—उत्तरमथुरायां किल अर्हद्दासनामा श्रेष्ठी चतुर्दशीनिशायां उपोषितः सन् श्मशाने स्थितः। स चिन्तयति—'एको मे शाश्वतो ह्यात्मा ज्ञानदर्शनलक्षणः ।' इति भावनां भावयन् श्मशानारण्ये स्थितः । तद्व्रतप्रत्यवसादनपराभिर्नगरदेवताभिः कृतोपद्रवो मनागपि मनसि क्षोभं गतवतः मुनिमान्यता सपाये(?)ति । मुनयश्च संकल्पेन गृहस्था भवन्ति । यथा कुसुमपुरे पाटलिपुत्रनगरे चिरादाकर्णितश्रुतसुतसमरस्थितिः हेरिकाच्छ्रुतनिजपुत्रस्य संग्रामस्थितिः आतापनयोगयुतोऽपि सूर्यप्रतिमास्थितोऽपि पुरुहूतो नाम देवर्षिः दिगम्बरो गृहस्थसदृशो बभूव । तथा हि—पाटलिपुत्रनगरे किल पुरुहूतनामा नृपतिः पुत्राय राज्यभारं समर्प्य दीक्षां गृहीत्वा देवर्षिरिति नाम प्राप्तः पर्वतमेखलायां आतापनयोगस्थितो बभूव । खेचरतोपासनायागतेन श्रावकेण सह कृतोदन्ताल्लेखवाहकात् अरातिभिः सह निजपुत्रस्याहवमाकर्ण्य जातामर्षः। स तु चेतसा कृतसमरव्यवसायः शैलाटिनीघटित इव तिष्ठन् अवधिज्ञानिना आकाशचारणेन भगवता स संबोधितः न खलु तदेव रूपमादाय एवं चिन्तयितुं युक्तमिति ॥

अस्ति च विद्यते च जगत्प्रसिद्धं सर्वलोके विख्यातमिदमुदाहरणं दृष्टान्तवचनम् । तत्किम् । एकस्मिन्नेव केवले एव किलेति कामिनीकलेवरे मृतवेश्याशरीरे मुनिकामिकुणपाशिनां मुनिश्च जिनमुनिः, कामी च विटो वेश्यारतः, कुणपाशिनस्तेषां मुनिकामिकुणपाशिनां अभिनिवेशनिमित्तः । अभिप्राये हेतुः—विचित्रनिषेकः विविधाश्रवः कर्मविपाको वर्तते इति । श्मशाने मृतवेश्यां दृष्ट्वा मुनिना चिन्तितम्—'कथमनया कामिन्या तपश्चरणं न कृतम् । वृथैव मृतेति' । इत्युक्त्वा..............................

इयमिज्या च मे मोहविह्वला कालरात्रिरिव दुष्परिहारा जानुभञ्जिनीव मे गतिभङ्गाय प्रतिवस्थिता। तदत्राहम् 'इतस्तटमितो व्याघ्रः केनास्तु प्राणिनो गतिः' इतीदृशमन्यायमापतितो यद्यवगणयेयमस्याः प्रतिश्रुतम्, तदेत एव समीपवर्तिनो 'देवबुद्धेः फलमनाग्रहः' इत्युपदिशन्तो भविष्यन्त्युपाध्यायाः। सकलजनसमक्षं परमपमानिता चेयं जरती न जाने किं करिष्यति। स्वस्य च मनसि चोक्षापि(?) क्रियोत्प्रेक्षा। सा न भवति पुंसः श्रेयस्करी, या न रञ्जयति परेषां चेतांसि।

तथा च लौकिकी श्रुतिः—किल बृहस्पतिः सद्वृत्तोऽपि **चुङ्कारनगरे** लोचनाञ्जनहरेण कितवेन मिथ्यापवाददूषितः शतक्रतुसभायां प्रवेशं न लेभे। अलब्धाशनांशेन तु **षजक**नाम्ना वाग्जीवनेन 'अयं भिक्षाभ्रमणव्याजेनार्भकान्भक्षयति' इत्युपहतश्च**क्रपाणिः** परिव्राड्वाराणस्याम्। मधुपेषु मध्ये पीतपयाश्च **मार्कण्ड**तापसस्तापसाश्रमेषु। ज्ञानं च प्रतिकूलदैवोपनिपातमौषध-

---

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..........................................................................

..................................नाकलोकं गतः प्रवेशं नालभत। तथा चापरा कथा—अलब्धाशनांशेन अलब्धभोजनभोगेन तुशब्दः कथान्तरे षजकनाम्ना षजक इति नाम यस्य तेन षजकनाम्ना वाग्जीवनेन बन्दिना अयं एष परिव्राट् भिक्षाभ्रमणव्याजेन अर्भकान् भक्षयति इत्यनेन वचनेन उपहतो निन्दितः। कोऽसौ। चक्रपाणिः चक्रपाणिनामा परिव्राट् शिखाधारी नाम तपस्वी वाराणस्यां वाराणसीनगरे प्रवेशं न लेभे इत्येतत्। मधुपेषु मद्यपायिषु मध्ये पीतपयाश्च मद्यपीनां स्नेहवशात् तन्मध्यवर्तिपीतदुग्धोऽपि मार्कण्डो नाम तापसः अयं मद्यपानं कृतवानिति लोकैर्निन्दितः तापसाश्रमेषु प्रवेशं न लेभे। ज्ञानं



मिव न भवति विहितोपयोगमप्यर्थक्रियाकारि। किं नु खल्वज्ञो **द्वैपायनो** येन स तादृशं कर्म समाचचार। **पौलस्त्यो** नीतिशास्त्रेषु नाश्रौषीद्**दाण्डक्योपाख्यानम्**, येन स परदारानपाहरत्। **नहुषो** न सम्यगुपासिती गुरुकुले, येन सप्तर्षीन्संयुग्यानकार्षीत्। **प्रजापति**र्जड एव एडो वा, येनात्मदुहितरि मनश्चकार। **वररुचिश्च** वृषलीनिमित्तमासवनिपोद्वहनमिति।

---

न ज्ञायकत्वं प्रतिकूलदैवोपनिपातं पायकमौं(?)षधमिव विहितोपयोगमपि कृतसेवनमपि अर्थक्रियाकारि न भवति ज्ञानकार्यं न साधयति। किं नु खलु अज्ञो द्वैपायनो मुनिर्येन कारणेन स द्वैपायनः तादृशं द्वारावतीभस्मीकरणकर्म समाचचार सम्यगाचरितवान्। किं तु ज्ञानं किं करोति, कर्मोदयः प्रधानम्। अस्य कथा—उर्जयन्तौ गिरौ किल अरिष्टनेमिभगवतः समवसरे नारायणो गणधरदेवेन चापृच्छन्—'हे भगवन्, एवं समृद्धद्वारवत्याः किं कुतोऽपि व्ययो भविष्यति।' इति। वरदत्तः गणधर उवाच—'अनया चिन्तया किम्।' इति ब्रुवन्नपि हरिणा कृतनिबन्धो बभाषे—'द्वादशवर्षेषु गतेषु द्वैपायनकुमारात् दाहो भविष्यति।' तद्वचनं द्वैपायनः श्रुत्वा असत्यं कर्तुमिच्छुः गृहीतव्रक्षः द्वादशापि वर्षाणि पूर्वदेशे अतिक्रम्य अधिक्रमासमलक्षयन् द्वारवतीद्वारदेशे कृतकायोत्सर्गः पाणिविह्वलितमतिना मातङ्गेन विहितखलतिमस्तगुञ्जादाघ(?)श्च कोपात् अग्निकुमारो भूत्वा तां नगरीं ददाह। पौलस्त्यो नीतिशास्त्रेषु नाश्रौषीत् पौलस्त्यो रावणनरेन्द्रः नीतिशास्त्रेषु किं न अश्रौषीत् न शुश्राव। किं न श्रुतवान्। दाण्डक्योपाख्यानं दाण्डक्यनृपकथान्तरम्, येन कारणेन स पौलस्त्यः परदारान् परकलत्रमपाहरत् अपहृतवान्। अस्य कथा—दाण्डक्यो नाम राजा किल मृगयायां गतः सन् सर्वस्यामटव्यां प्रस्थितस्य ब्रह्मर्षेराश्रमपदे प्राप्तयौवनां कन्यामभिलषितवान्। ततः ब्रह्मर्षिशापात् सबन्धुराष्ट्रो विननाश। नहुषः नहुषो नाम राजा गुरुकुले सम्यक् उपासिता उपासनमुपासितं विद्यते यस्य स उपासिती। व्याकरणे अधीतीत्यादिवत्। तथा चोक्तमाशाधरेण महाकविना—'अस्मिन्निमे स्वस्त्य(?)यान्ये भक्तिरागादधीतिनाम्। स्वस्तिमन्तः स्वयं शश्वत् सन्तु स्वस्त्ययनं जिनाः॥' नहुषो नाम राजा गुरुकुले किं सम्यक् न उपासिती गुरुकुलं किं न उपासितवान्, येन कारणेन सप्तर्षीन् संयुग्यान् वृषभवद्वाहनान् अकार्षीच्चकार। अस्य कथा—नहुषः किल मनुष्यभावेऽपि व्रतमाहात्म्यात् ऐन्द्रं पदं लब्ध्वा बृहस्पतेः अपूर्ववाहनं रथं सम्यग् संमानयन् तन्निशम्य सप्तर्षीन् कृत्वा रथे योजितवान्। तत्र अगस्त्योऽतीव कष्टतया······ तदंशगच्छतः सर्प सर्पेति चक्रवत् विहितः सौत्रतोदनस्य शापात् शेषो नाम सर्पो बभूव। प्रजापतिर्ब्रह्मा जडो निर्विवेक एव एडो वा बधिरो वर्तते, येन कारणेन आत्मदुहितरि निजसुतायां मनश्चकार भोक्तुमियेष कालव्याजेन समागतायामात्मदुहितरि चित्तं चकार। पुनर्जातविवेकः 'स्मरस्य खल्वयमपराधः' इति मत्वा हरलोचनानलगोचरतया मदनं शशाप। भस्मितवानित्यर्थः।

(प्रकाशम् ।) अम्ब, न बालकेलिष्वपि मे कदाचित्प्रतिलोमतां गतासि । न
वेद्मि कथमद्यैव ते **चन्द्रमते**रप्यस्थाने दुराग्रहमलीमसा मतिः समजनीति । त-
त्पर्याप्तमत्रालापपरम्परया । भवतु । भवत्येवात्र प्रमाणम् । उत्तिष्ठ । ननु तवैव पू-
र्यन्तामत्र कामितानि । आहूय त्वमेवादिश कृकवाकुविनिर्माणे शिल्पिनः । साधु
समाज्ञापय त्वमेव भगवतीभवनशोभारम्भाय देवभोगिनम् । अनुशाधि त्वमेव
**यशोमतिकुमार**स्य राज्याभिषेकदिवसगणनाय मौहूर्तिकान् । एवमन्यान्यपि
विधापय त्वमेव देवद्विजपरिजनपूजापुरःसराणि गृहकार्याणि । अहो वैरिकुल-
कमलाकरनीहार प्रतीहार, विसृज्यतामयमशेषोऽपि यथायथमनुजीविनिवहः ।
अहमप्येष चिरप्रवृत्तवार्तासंजातश्रमो मनागप्यस्मा**द्वसुमतीतिलका**त्सभाम-

---

अत एवाग्निर्यथेष्टाशनोऽभवत् । 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति' इति । वररुचिश्च
कात्यायनः वृषलीनिमित्तं चेटीकारणेन आसवनिपोद्वहनं मद्यघटोच्चालनं चकारेत्येव । अस्य
कथा—वररुचिः स्खलितब्रह्मचर्यतया सकललोकाधिके नाम्नि वर्तमानो देवताख्यविला-
सिन्या तैस्तैः कूटकपटचेष्टितैर्वश्यतां नीतः । श्यामकान्तं यथा चोसा(?) तमेवमवोचत्—
'सर्वमुपपन्नमेवैतत् । किं तु यदि मद्यघटं निजशिरसि निधाय उज्जयिनीप्रदक्षिणां करोषि
त्वम् ।' इति । सोऽपि कामान्धबुद्धिस्तथैव प्रत्यपद्यतेति ॥

यशोधरमहाराजः प्रकाशं व्यक्तमुवाच—अम्ब हे मातः, बालकेलिष्वपि मे मम कदा-
चित् कस्मिंश्चिदवसरेऽपि प्रस्तावे प्रतिलोमतां प्रतिकूलत्वं न गतासि । न वेद्मि न जाने
कथं केन प्रकारेण अद्यैवास्मिन्नेवाहनि ते तव चन्द्रमतेरपि निर्मलबुद्धेरपि अस्थाने अयो-
ग्याचरणे दुराग्रहमलीमसा दुष्टाग्रहे अतिमलिना मतिर्बुद्धिः समजनि संजातेति । तत्त-
स्मात् कारणात् पर्याप्तं अलं अत्रास्मिन् कार्ये आलापपरम्परया बहुवचनया । भवतु
संजायताम् । भवत्येव त्वमेवात्रास्मिन्कार्ये कुर्कुटमारणतत्पललभक्षणलक्षे प्रमाणं कर्तव्य-
तया सत्यरूपा । हे मातः, उत्तिष्ठ उत्था भव । ननु निश्चयेन तवैव भवत्या एव पूर्यन्तां अत्र
कामतानि । आहूय आकार्य त्वमेव भवती एव आदिश आदेशं देहि कृकवाकुविनिर्माणे कुर्कु-
टकरणे शिल्पिनो लेपिकारान् । साधु रुचिरं यथा भवत्येवं समाज्ञापय आदेशं देहि त्वमेव
भगवतीभवनशोभारम्भाय कुलदेवतागृहशोभाकरणाय देवभोगिनं देवब्राह्मणं देवार्चकम् ।
अनुशाधि आदेशं देहि त्वमेव यशोमतिकुमारस्य राज्याभिषेकदिवसगणनाय राज्याभिषे-
ककरणे लग्नशोधनाय मौहूर्तिकान् । एवममुना प्रकारेण अन्यान्यपि गृहकार्याणि त्वमेव
विधापय कारय । कथंभूतानि गृहकार्याणि । देवद्विजपरिजनपूजापुरःसराणि देवपूजाद्विज-
पूजापरिजनपूजाप्रभृतीनि । अहो हंहो वैरिकुलकमलाकरनीहार शत्रुसमूहकमलवनहिम-
समान हे प्रतीहार, विसृज्यतां विमुच्यतामयमेषः अशेषोऽपि सर्वोऽपि यथायथं यथाख्यानं
अनुजीविनिवहः किंकरसमूहः । अहमपि एष चिरप्रवृत्तवार्तासंजातश्रमः बृहद्वेलासंजाता-



ण्डपाददूरदेशवर्तिनि तस्मिन्**मदनविलास**नामनिवासभवने स्वैरविहाराय
गच्छामि । तदनु तस्मिन्मयि शय्यातलमलंकृतवत्यहो विक्रमालंकार,
सा मदी**यामृतमतिमहादेवी** दिवसादीयमादातुमागत्य गता**त्कुसुमशेख-
रका**त्पुष्पबटो**र्मदनदमयन्तिकायाः** प्रसाधिकाया दुहितु**र्विनोदकलहं-
सिकायाश्च** सध्रीच्याः संजातसकलसेवावसरायां संसदि प्रवृत्तमुदन्तमा-
कर्ण्य, 'न खलु मे यामिनीसमाचरितसाहसादस्य **वसुमती**पतेरपरमेवंविध-
कूटकपटानुष्ठानमस्ति । मन्ये च दुष्करमेवमस्यास्थिरचित्तस्य चिरकालभा-
वीनि भविष्यन्त्यायूंषि । कुलवधूनां ह्ययमन्यश्च देवद्विजाग्निसमक्षं माता-
पितृविक्रीतस्य कायस्यैव भवतीश्वरः, न मनसः । तस्य पुनः स एव स्वामी
यत्रायमसाधारणः प्रवर्तते परं विश्रम्भविश्रमाश्रयः प्रणयः । तथा हि—

---

लापसमुत्पन्नखेदः मनागीषदप्यस्मात् एतस्मात् वसुमतीतिलकात् वसुमतीतिलकनामधेयात्
सभामण्डपात् अस्थानीग्रहात् अदूरदेशवर्तिनि निकटवर्तिनि तस्मिन् मदनविलासनाम्नि
निवासभवने मयि शय्यातलं पल्यङ्कतलमलंकृतवति सति अहो विक्रमालंकार पराक्रम-
पञ्चानन श्रीमारदत्त महाराज, सा मदीया मह्यं हिता अमृतमतिमहादेवी दिवसादीयं दिनव्य-
यभागदेयं आदातुं ग्रहीतुं आगत्य गतात् गृहीत्वा व्याघुटितात् कुसुमशेखरकात् कुसुम-
शेखरनामधेयात् पुष्पबटोर्विद्यार्थिनः सकाशात् । न केवलं तस्मात् । मदनदमयन्तिकायाः
मदनदमयन्तिकानामधेयायाः प्रसाधिकायाः शृङ्गारकारिकाया दुहितुः पुत्र्याः विनोदकलहं-
सिकायाश्च विनोदकलहंसीनामधेयायाश्च सध्रीच्याः सख्याः पुत्र्याः सकाशात् संजातस-
कलसेवावसरायां समुत्पन्नसर्वसेवाप्रस्तावायां संसदि सभायां प्रवृत्तं संजातं उदन्तं वृत्ता-
न्तमाकर्ण्य श्रुत्वा गविष्ठिरनामानं अमात्यं निजमन्त्रिणं प्रहितवती प्रेषयामास ममान्तिकं
मुक्तवती । किं कृत्वा पूर्वम् । इति वितर्क्य पर्यालोच्य । इतीति किम् । न खलु मे मम
यामिनीसमाचरितसाहसात् कृतदुर्विलासात् अपरं अन्यत् अस्य वसुमतीपतेः नरेन्द्रस्य
एवंविधकूटकपटानुष्ठानं कूटमायामण्डले अनुष्ठानं कारणं नास्ति । मन्ये च अहमेवं जाने
एवममुना प्रकारेण अस्य यशोधरस्य अस्थिरचित्तस्य आयूंषि जीवितानि चिरकालभावीनि
दीर्घाणि भविष्यन्ति तत् दुष्करं मन्ये । निकटतरमृत्युरेष वर्तते इत्यर्थः । कुलवधूनां हि
निश्चयेन अयं यशोधरः अन्यश्च एतस्माद्भिन्नोऽपरश्च कोऽपि देवद्विजाग्निसमक्षं प्रत्यक्षं
मातापितृविक्रीतस्य दत्तस्य कायस्यैव शरीरस्यैवेश्वरः स्वामी भवति । न मनसः न तु
चित्तस्य स्वामी भवति । तस्य मनसः पुनः स एव पुमान् स्वामी प्रभुर्भवति । स कः ।
यत्र यस्मिन्पुरुषे अयमेव प्रणयः विश्रम्भविश्रमाश्रयः विश्वासस्य दुःखनिवारणस्थानम् ।

पुरापि किं न रेमे गङ्गा सह महेश्वरेण, राधा नारायणेन, बृहस्पतिपत्नी द्विजराजेन, तारा च वालिना। महासत्त्वेषु हि जगति न किंचिद्दुष्करमस्ति। अन्यत्र विरक्ते चेतसि रागप्रत्यानयनात्। को हि नामायःपिण्ड इव तप्तातप्ते मनसि संधातुमर्हति। किं च परमकुहन एव पुरंध्रीषु बुद्धिमानवाप्नोति स्वश्रेयसम्। अन्यथा कृत्याराधक इव ध्रुवं पञ्चजनः पञ्चतामञ्चेत्। भवेद्वावश्यमक्षिगतः। तदेष यावन्न मयि रोषविषं वर्षति तावदहमेवास्य तद्वर्षामि।

---

तथा हि तदेव निरूपयति—पुरापि पूर्वकालेऽपि महेश्वरेण सह गङ्गा किं न रेमे। अपि तु रेम एव। अस्य कथा—शन्तनोर्नाम नृपस्य पत्नी पाणिगृहीता वसन्तसमये किल कैलासपर्वते गङ्गानाम्नी सखीभिः सह कृतदोलरतिस्तत्रैव उमया सह संचारैः मक्री(?) स्वकीयगीतासंकर्णनाकृष्टं ईश्वरं भुक्तवती तामनुभूय भूतपतौ श्रीमहादेवे गौरीचरितं श्रितवती गिरिसुतया तमन्वेषमाणया तत्रागतया गङ्गया सार्धं ईश्वरमालोक्य वृत्तमिदं प्रावर्तत—'का त्वं सुन्दरि जाह्नवी किमिह ते भर्ता हरो नन्वयं अम्भस्त्वं किल वेत्सि मन्मथरसं जानात्ययं ते पतिः। स्वामिन् सत्यमिदं न हि प्रियतमे सत्यं कुतः कामिनामित्येवं हरजाह्नवीगिरिसुतासंजल्पितं पातु वः॥' राधा नारायणेन सह किं न रेमे। अपि तु रेम एव। राधा गोपी नारायणेन सह रतिं चकार इति सुप्रसिद्धमुपाख्यानं एतत्। उक्तं च—'अङ्गुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो नो चक्री किं कुलालो न हि धरणिधरः किं द्विजिह्वः फणीन्द्रः। नाहं घोराहिमर्दी किमसि खगपतिर्नो हरिः किं कपीश इत्येवं गोपवध्वा चतुरमभिहितः पातु वश्चक्रपाणिः॥' बृहस्पतेर्वाचस्पतेः पत्नी भार्या द्विजराजेन चन्द्रेण सह किं न रेमे। अपि तु रेम एव। अस्य कथा—बृहस्पतिपत्नी चन्द्रस्य सह निधुवनं विधाय बुधाभिधानमसुवत् बुधमलब्ध। अत एवासौ विधुर्गुरुशापात् कुष्ठी बभूव। तारा च वालिना सह किं न रेमे। अपि तु रेम एव। तारा सुग्रीवमहिला वालिना सह चिरं चिक्रीडेति महती लौकिकी श्रुतिर्वर्तते। महासत्त्वेषु महासाहसेषु हि निश्चयेन जगति संसारे न किंचिद्दुष्करमतिदुःसाध्यं किमपि नास्ति। अन्यत्र विरक्ते चेतसि रागप्रत्यानयनात्। विरक्ते मनसि रागः प्रत्यानेतुं न शक्यत इत्यर्थः। को हि नामायःपिण्डे इव तप्तातप्ते मनसि संधातुमर्हति। हि निश्चयेन। कः पुमान्। नामेति संभावनायाम्। अयःपिण्डे लोहगोलकाविव तप्तातप्तं न युनक्ति अतप्तेन सह तप्तं च युक्तं तप्ते मनसि चित्ते द्वे संधातुं मेलयितुमर्हति। अपि तु न कश्चिदर्हतीत्यर्थः। तप्तेन सह अतप्तं न युनक्ति। किं चास्ति विशेषः। परं केवलमकुहन एव ईर्ष्यारहित एव बुद्धिमान् पुमान् पुरंध्रीषु स्वश्रेयसं कल्याणमवाप्नोति। ईर्ष्यालुस्तु म्रियत इत्यर्थः। अन्यथा कृत्या देव्या आराधकः पुमान् इव यथा ध्रुवं निश्चयेन पञ्चजनः पुरुषः पञ्चतामञ्चेत् मरणं प्राप्नुयात्। भवेद्वावश्यमक्षिगतः वाथवा अवश्यं निश्चयेन अक्षिगतो द्वेष्यो भवेत्। तत्तस्मात् कारणात्



यथा चेयं ममात्मजस्य राज्याभिषेकवार्ता प्रतिस्वप्नविधि किंवदन्ती च बाढमुच्छलिता। सा यदि दैवात्तथैव परमार्थसती तदाचिरात्प्रकामं मे मनोरथाः फलिताः। सिद्धं च मे समीहितम्। न चैतदाश्चर्यम्। अनुकूलं हि दैवं करोति कुरङ्गमपि कण्ठीरवातिवर्तनम्। अचलानपि च विदारयति नलदण्डेन। केवलमत्रोत्तायकत्वं परिहर्तव्यम्। उत्तायकस्य हि पुरुषस्य हस्तायातमपि कार्यं निधानमिव न सुखेन जीर्यति। भवति च जीवितव्यसंदेहाय। किं च न खलु बुभुक्षितवशादुदुम्बराणि पच्यन्ते। नाप्युद्भवच्छक्यते पातुम्' इति च वितर्क्य, तथा—

> 'अनुनयत वदत मधुरं यत्कार्यं तदपि मानसे कुरुत।
> रौति कलं हि मयूरः सविषं च भुजङ्गमं दशति॥

---

एष राजा यावत्कालं मयि ममोपरि रोषविषं क्रोधपुत्रं न वर्षति न रक्षति तावत्कालं अहमेव अस्य राज्ञ उपरि तत् रोषविषं वर्षामि मुञ्चामि। यथा च येन प्रकारेण इयं एषा ममात्मजस्य राज्याभिषेकवार्ता प्रतिस्वप्नविधि किंवदन्ती च दीक्षाग्रहणं लोकवार्ता च बाढमतिशयेनोच्छलिता उद्गता वर्तते। सा किंवदन्ती इयं यदि चेत् दैवात् पुण्ययोगात् तथैव परमार्थसती सत्येन सत्या भविष्यति तदा अचिरादिदानीमेव प्रकाममतिशयेन मे मम मनोरथाः फलिताः वाञ्छितानि पूर्णानि संजातानि। मे मम समीहितं सिद्धं च सेत्स्यत्येव। न च नैव एतत् मनोरथसिद्धिलक्षणं कार्यं आश्चर्यं न वर्तते। अनुकूलं हि दैवं पुण्यं यदा हितं भवति तदा कुरङ्गमपि कण्ठीरवातिवर्तनं करोति सिंहस्यापि मारकं करोति। अचलानपि च विदारयति नलदण्डेन अनुकूलं दैवं अचलानपि च पर्वतानपि च नलदण्डेन पोटगलदण्डेन विदारयति शतखण्डीकरोति। अत्र कार्ये केवलं उत्तायकत्वं उत्सुकत्वं अस्थिरत्वं परिहर्तव्यम्। हि यस्मात् कारणात् उत्तायकस्यास्थिरस्य पुरुषस्य हस्तायातमपि कार्यं निधानमिव सुखेनानायासेन न जीर्यति परिणमति। जीवितव्यसंदेहाय च भवति। उत्तायकत्वे मरणमपि चोत्पद्यत इत्यर्थः। किंच विशेषमाह—न खलु बुभुक्षितवशात् उदुम्बराणि जघनेफलानि सलपूसस्यानि न पच्यन्ते न परिणमन्ति। नापि नैव उद्भवदुत्कलत् जलादिकं पातुं शक्यते। आस्वादितुं शक्यते इत्यर्थः। इति च वितर्क्य सचिवं गविष्ठिरं प्रहितवती। पुनश्च किं कृत्वा पूर्वं सचिवं प्रहितवती। इति च विमृश्य इति च पर्यालोच्य। इतीति किम्। तथा तेनैव प्रकारेण अनु[दा]त्तायकप्रकारेण।

**अनुनयतेत्यादि**। अनुनयत यूयं मानयत। मधुरं कर्णामृतप्रायं वदत ब्रूत। यूयं यत्कार्यं कर्तव्यं मानसे चित्ते वर्तते तदपि तच्च कुरुत कुरुध्वम्। अमुमेवार्थं दृष्टान्तेन द्रढयति—मयूरः शुक्लापाङ्गः सरस्वतीवाहनः हि यस्मात् कारणात् कलं मधुरं रौति शब्दं करोति। सविषं विषसहितं भुजङ्गमं च दशति भक्षयति॥

मूर्ध्ना वहति लोकोऽयं यथा दग्धुमिहेन्धनम्।
अनुशील्य क्षयं नेयस्तथारातिर्महात्मना ॥
पुंसामसारसत्त्वानां किं कुर्याद्विक्रमक्रमः।
भस्मीभवन्ति काष्ठानि तेजसानुगतान्यपि ॥
ज्ञानवानपि कार्येषु जनः प्रायेण मुह्यति।
हस्तन्यस्तप्रदीपस्य किं न स्खलति शेमुषी ॥
प्रायः सरलचित्तानां जायते विपदागमः।
ऋजुर्याति यथा छेदं न वक्रः पादपस्तथा ॥
रक्तभावं समस्तानां प्रदर्श्येदिति[1] यः पुमान्।
आदित्यवत्स किं न स्यात्पादाक्रान्तजगत्त्रयः ॥

---

**मूर्ध्नेत्यादि**। अयं लोकः यथा इन्धनं काष्ठभारं इह संसारे दग्धुं भस्मीकर्तुं मूर्ध्ना मस्तकेन वहति उच्चलति, तथा तेनैवेन्धनभारौघप्रकारेण अरातिः शत्रुः अनुशील्य समाधानं नीत्वा क्षयं नेयो विनाशं प्रापणीयः। केन कर्तृभूतेन। महात्मना नीतिशास्त्रचक्षुना। दृष्टान्तः ॥

**पुंसामित्यादि**। पुंसां असारसत्त्वानां सत्त्वरहितानां विक्रमक्रमः पराक्रमपरिपाटिका किं कुर्यात्। अपि तु न किमपि कुर्यादित्यर्थः। अमुमेवार्थं दृष्टान्तेन द्रढयति—काष्ठानि इन्धनानि तेजसा अनुगतान्यपि अग्निना सहितान्यपि भस्मीभवन्ति दहन्ते ॥

**ज्ञानवानित्यादि**। ज्ञानवानपि जनः प्रायेण कार्येषु मुह्यति अज्ञानवान् भवति। आक्षेपेण द्रढयति—हस्तन्यस्तप्रदीपस्य करकृतदीपकस्य पुरुषस्य शेमुषी किं न स्खलति। अपि तु स्खलत्येव ॥

**प्राय इत्यादि**। सरलचित्तानां पुरुषाणां प्रायो भूयस्त्वेन विपदागमः मरणं जायते। अमुमेवार्थं दृष्टान्तेन द्रढयति—ऋजुः सरलः पादपो यथा छेदं याति द्विधा भवति तथा वक्रः पादपः छेदं न याति। एतावता कुटिलेनैव भवितव्यम् ॥

**रक्तभावमित्यादि**। यः पुमान् [समस्तेषु रक्तभावमनुरक्ततामनुरागं दर्शयेत्, स किं पादाक्रान्तजगत्त्रयः पादेन चरणेनाक्रान्तं जगत्त्रयं येन तादृक् जगत्त्रयस्वामी न स्यात्। अपि तु स्यादेव। अमुमेवार्थं दृष्टान्तेन द्रढयति—आदित्यवत्। यथा सूर्यः पूर्वमरुणतां दर्शयति, ततः किरणैर्जगत्त्रयमाक्रामति ॥

---

१. 'दर्शयेदिति' इत्येव पाठो भवेत्.



बहिर्मृदुर्लघूत्थानः पूर्वं यः स्यात्प्ररोहवत्।
किमसौ न भिनत्त्येव प्राप्य कालं महीभृतः ॥
शूरोऽपि सत्त्वयुक्तोऽपि नीतिं वेत्ति न यो नरः।
तत्र संनिहिता नित्यमापदः शरभोपमे ॥

अपि च।

धूर्तेषु मायाविषु दुर्जनेषु स्वार्थैकनिष्ठेषु विमानितेषु।
वर्तेत यः साधुतया स लोके प्रतार्यते मुग्धमतिर्न केन ॥

इति च विमृश्य, शठप्रतिशठन्यायेन किमपि निःशलाके शिक्षयित्वा कुमारवयस्येनालकभञ्जनेनाधिष्ठितं **गविष्ठिर**ममात्यं प्रहितवती। स तथैवागत्य प्रविश्य च निवेदितावसरो मामुन्मूलितमगमिवातीव परिम्लानम्, आ-

---

**बहिरित्यादि**। यः पुमान्] पूर्वं प्रथमं बहिर्बाह्ये मृदुः कोमलः स्यात् भवति, लघूत्थानश्च स्यात् गुर्वितरोत्पत्तिश्च भवति। किंवत्। प्ररोहवत् पिप्पल्याङ्कुरवत्। असौ पुमान् कालं प्राप्य महीभृतः नृपात् किं न भिनत्ति। अपि तु भिनत्त्येव। यथा प्ररोहे अङ्कुरो मृदुर्लघूत्थानः कालेन पर्वतमपि भिनत्ति। आक्षेपः ॥

**शूर इत्यादि**। शूरोऽपि सत्त्वयुक्तोऽपि यो नरः नीतिं न्यायशास्त्रं न वेत्ति न जानाति, तत्र नरे नित्यं आपदो मृत्यवः संनिहिताः समीपवर्तिन्यो भवन्ति। कथंभूते तत्र नरे। शरभोपमे अष्टापदसदृशे। यथाष्टापदो मेघगर्जनेनैव म्रियते। उपमालंकारः ॥

अपि च तथा च। **धूर्तेष्वित्यादि**। धूर्तेषु वञ्चकेषु, मायाविषु सकपटेषु, दुर्जनेषु शत्रुषु, स्वार्थैकनिष्ठेषु आत्मकार्यतत्परेषु, विमानितेषु मानभङ्गं प्रापितेषु, पुरुषेषु यः पुमान् साधुतया हिततया वर्तेत प्रवर्तेत स मुग्धमतिर्निर्विवेकः केन पुरुषेण न प्रतार्यते। अपि तु सर्वेणापि वञ्च्यत इत्यर्थः। आक्षेपालंकारः ॥

पुनश्च किं कृत्वा अमात्यं सचिवं प्रहितवती। शठप्रतिशठन्यायेन शुकपिच्छलुञ्चनस्त्रीशिरोमुण्डनप्रकारेण किमपि अनिर्वचनीयं निःशलाके एकान्ते गविष्ठिरं सत्यासत्यं शिक्षयित्वा शिक्षां दत्त्वा। कथंभूतं गविष्ठिरम्। कुमारवयस्येन कुमारकालमित्रेण अलकभञ्जनेन अलकभञ्जननामकेन अधिष्ठितं सहितम्। स गविष्ठिरो मां प्रति एवममुना प्रकारेण व्यजिज्ञपत्। तथैव निःशलाकशिक्षणप्रकारेण आगत्य उपढौक्य। न केवलं आगत्य। किंतु प्रविश्य च तिलकभवनविलासनाम्नि भवने प्रवेशं कृत्वा। कथंभूतः सन् प्रविश्य। निवेदितावसरः द्वारपालेन सूचितावसरः। पुनश्च किं कृत्वा व्यजिज्ञपत्। मां अवलोक्य दृष्ट्वा। कथंभूतं माम्। अतीव परिम्लानं अतिशयेन गात्रविनामसहितम्। कमिव। उन्मूलितं अगमिव यथोन्मूलित उत्पादितः अगो

लिख्यपरामृष्टं चित्रमिव मलिनच्छायम्, अग्निलङ्घितं रत्नमिव नष्टतेजसम्, उत्पाटितपक्षं तार्क्ष्यमिव गलितप्रभावमवलोक्य 'महान्खल्वस्य महीपतेर्नवग्रहस्येव गजस्य दौर्मनस्याभिनिवेशः। कुतोऽन्यथाद्यैवायं नीलिकोपदेहदूषितदेहस्त्रिपथगाप्रवाह इव नितरां मलीमसच्छविः समयादि' इति परामर्शविस्मितान्तरङ्गः कृतागमनपर्यनुयोगश्चैवं मां व्यजिज्ञपत्—'देव, देवीसंमुखेनेदमाह—यदुत देवः किलाद्य दुःस्वप्नोपशमनार्थं भगवत्याः **कात्यायन्याः** पिष्टकुक्कुटेन बलिमुपहर्तुमाद्दत इति कर्णपरम्परया श्रुतम्, तद्यदि सत्यं तदास्तामसौ ताम्रचूडस्तावत्। अहमेवात्मना परिकल्पिततदुपहारवर्त्मना परितोषयामि भगवतीम्। प्रशाम्यन्तु देवस्य सर्वेऽपि प्रत्यूहव्यूहाः। प्रवर्धतां च देवस्ये-

---

वृक्षः परिम्लानो भवति। पुनः कथंभूतम्। मलिनच्छायं मलीमसतेजसम्। किमिव। आलिख्यपरामृष्टं चित्रमिव लिखित्वा(?)दिलोपितमालेख्यमिव। पुनः कथंभूतम्। नष्टतेजसं दीप्तिरहितम्। किमिव। अग्निलङ्घितं रत्नमिव यथाग्निनाकुलितं माणिक्यं नष्टतेजो भवति। पुनः कथंभूतम्। गलितप्रभावं नष्टमाहात्म्यम्। कमिव। उत्पाटितपक्षं तार्क्ष्यमिव लुञ्चितपत्रं गरुडमिव। अवलोक्य कथंभूतः सन् गविष्ठिरः मां व्यजिज्ञपत्। इत्यमुना प्रकारेण परामर्शविस्मितान्तरङ्गः परामर्षेण विचारेण विस्मितमाश्चर्यं प्राप्तमन्तरङ्गं यस्य स तथोक्तः। पुनः कथंभूतः सन्। कृतागमनपर्यनुयोगः प्रश्नो यस्य स तथोक्तः। किमर्थं भवानागत इति मया पृष्ट इत्यर्थः। इतीति किम्। महान् खलु अस्यैतस्य महीपतेर्यशोधरमहाराजस्य दौर्मनस्याभिनिवेशः। उद्गतचित्तताभिप्राय इत्यर्थः। उक्तं च—'दुर्विमाना अन्तर्मनाः स्यादुक्तमनाः'। कस्येव। नवग्रहस्य गजस्येव सद्योगृहीतस्य हस्तिन इव। कुतोऽन्यथा अद्यैवायं अन्यथा यद्ययं दुर्मना न भवति तर्हि अद्यैव इदानीमेव अयं राजा नितरामतिशयेन मलीमसच्छविः मलिनतादूषितकान्तिः कुतः समयादि संजातः। क इव। त्रिपथगाप्रवाह इव गङ्गानदीपूरमिव। कथंभूतः त्रिपथगाप्रवाहः। उज्ज्वलस्यापि गङ्गाप्रवाहस्य मलिनताहेतुगर्भितं विशेषणमाह—नीलिकोपदेहदूषितदेहः नीलिकया गुलिकया उपदेहेन उपचयेन मिश्रणेन दूषितो मलिनीकृतः देहः कायो यस्य त्रिपथगाप्रवाहस्य स तथोक्तः। एवं कथमिति चेत्—हे देव, देवीसंमुखेन इदं वचनमाह ब्रवीति। इदं किमित्याह—यदुत यदेव देवो नरेन्द्रः किलेति अद्य अस्मिन् दिवसे दुःस्वप्नोपशमनार्थं दुःस्वप्नोपशान्त्यर्थं भगवत्याः परमेश्वर्याः कात्यायन्याः कात्यायनीनामकुलदेवतायाः पिष्टकुक्कुटेन बलिं पूजां उपहर्तुं दातुं आद्दत आदरपरो वर्तते इतीदृशं कर्णपरम्परया लोकवार्त्तया श्रुतं मया आकर्णितम्। तत् बलिदानं यदि चेत् सत्यं वर्तते, तदा तस्मिन् काले आस्तां तिष्ठतु असौ ताम्रचूडस्तावत्कालम्। अहमेव आत्मना स्वयमेव परिकल्पिततदुपहारवर्त्मना विहिततत्पूजामार्गेण भगवतीं भवानीं चण्डिकां परितोषयामि प्रीणयामि। एवंकृते देवस्य मम स्वामिनः



दमाचन्द्रार्कमसमश्रीप्राज्यं राज्यम्। न च मया विना भवति देवस्य कोऽप्यूनः प्रदेशः। मद्विधानां हि देवस्य किंकरीणामतीव सुलभत्वात्। नीतिरपि तथास्ति—

'आत्मानं सततं रक्षेद्दारैरपि धनैरपि।' इति।

अथ ममैवंविधे प्रेषणावरोधे देवो न करोति करुणां तदा मिथुनचरस्य पक्षिणश्चक्रवाकीव देवस्याहं सहचर्यत एव रात्रौ वियुक्तासि, सरसः कमलिनीवात एव जडरतासि, जलनिधेर्वेलेवात एव चपलासि, नभसः शशिप्रतिमेवात एव सकलङ्कासि, विटपिनश्छायेवात एवान्योपभोग्यासि, कुलशैलस्य मेखलेवात एव क्षुद्राधिष्ठितासि, तपनस्य प्रभेवात एव संतापिकासि, रथस्य मार्गभूमिरिवात एव पांशुलासि, प्रदीपस्य शिखेवात एव

---

सर्वेऽपि प्रत्यूहव्यूहा विघ्नसमूहाः प्रशाम्यन्तु उपशमं यान्तु। देवस्य इदं राज्यं आचन्द्रार्कं प्रवर्धतां च। कथंभूतं राज्यम्। असमश्रीप्राज्यं अनुपमं यातुः(?)। देवस्य मम प्राणवल्लभस्य कोऽपि प्रदेशः किमपि स्थानं न च मया विना ऊनो भवति। मद्विधानां मम सदृशानां किंकरीणां दासीनां देवस्य हि निश्चयेन अतीव सुलभत्वात्। नीतिरपि न्यायमार्गोऽपि तथास्ति—आत्मानं सततं रक्षेत् प्रतिपालयेत् दारैरपि स्त्रीभिरपि धनैरपि। अथ चेत् मम एवंविधे बलिविधानलक्षणे प्रेषणावरोधे कार्यकारणार्हणकर्तव्ये यदि देवः करुणां दयां न करोति मम मरणं नेच्छति तदा तस्मिन् काले देवस्य मम वल्लभस्य अहं सहचरी भवामि। केव। मिथुनचरस्य पक्षिणश्चक्रवाकस्य चक्रवाकीव। यशोधरश्चिन्तयति—अत एव कारणात् रात्रौ वियुक्तासि। पुनश्च केव सहचरी भवामि। सरसः कमलिनीव। यशोधरश्चिन्तयति—अत एव जडरतासि मूर्खे कुब्जे रता वर्तसे। पद्मिनी तु जलरता भवति। पुनश्च केव सहचरी भवामि। जलनिधेः वेलेव अब्धिविकृतिरिव। यशोधरश्चिन्तयति—अत एव कारणात् त्वं चपला असि वर्तसे। पुनश्च केव सहचरी भवामि। नभसः आकाशस्य शशिप्रतिमेव चन्द्रमूर्त्तिरिव। यशोधरश्चिन्तयति—अत एव कारणात् सकलङ्का कलङ्कसहिता असि वर्तसे। पुनश्च केव सहचरी भवामि। विटपिनो वृक्षस्य छायेव अनातप इव। यशोधरश्चिन्तयति—अत एव कारणात् अन्योपभोग्यासि जारभोग्या वर्तसे। पुनश्च केव सहचरी भवामि। कुलशैलस्य मेखलेव तटीव। यशोधरश्चिन्तयति—अत एव कारणात् क्षुद्राधिष्ठितासि क्षुद्रेण हीनेन कुब्जेन सहिता वर्तसे। यथा कुलशैलमेखला क्षुद्राधिष्ठिता व्याघ्रादिसहिता भवति। पुनश्च केव सहचरी भवामि। तपनस्य प्रभेव द्युतिरिव। यशोधरश्चिन्तयति—अत एव संतापिकासि संतापदायिनी वर्तसे। पुनश्च केव सहचरी भवामि। रथस्य मार्गभूमिरिव। यशोधरश्चिन्तयति—अत एव पांशुलासि कुलटा वर्तसे। मार्गभूमिरपि धूलीसहिता

मलिनोद्गारासि, वसन्तस्य वनलक्ष्मीरिवात एव मन्मथकथासनाथासि, मलयाचलस्य चन्दनलतेवात एव कटुस्वभावासि, गजस्य मदलेखेवात एव कामचारप्रवर्तनासि, हिमगिरेर्गङ्गेवात एव नीचानुगतासि, रत्नस्य रागवर्तिरिवात एव परभागघटितासि। एवमन्यदपि ममान्यथार्थोपकल्पनविषयमभिधाय तद्देवस्य सर्वदा राज्यसुखं दायभागिनीव समांशतयानुभूयेदानीमेकाक्येवं परमार्थेनोपस्थितप्रत्यवायवचनमनीषया वा देवः प्रव्रजति । अहं तु पुत्रस्य श्रियमनुभवन्ती गृह एव प्रतिष्ठामि। इत्यतीवासंगतमुभयकुलानुचितं शिष्टजनविगर्हितं च। न चैवमावयोरनुष्ठानाधिष्ठितयोः कोऽप्यागमविरोधो जनापवादानुबन्धो वा । तथा चोक्तम्—

---

भवति । पुनश्च केव सहचरी भवामि । प्रदीपस्य शिखेव ज्वालेव । यशोधरश्चिन्तयति—अत एव मलिनोद्गारासि धूमोद्गमनकारिणी वर्तसे । पुनश्च केव सहचरी भवामि । वसन्तस्य वनलक्ष्मीरिव मधुमासद्रुयस्य वनलक्ष्मीर्यथा सहचारिणी भवति । यशोधरश्चिन्तयति—अत एव मन्मथकथासनाथासि कामकथासंयुक्तासि । पुनश्च केव सहचरी भवामि । मलयाचलस्य चन्दनलतेव मलयपर्वतस्य चन्दनवल्लीव । यशोधरश्चिन्तयति—अत एव कटुस्वभावासि कटुपरिणामिनी वर्तसे । पुनश्च केव सहचरी भवामि । गजस्य मदलेखेव दानधारेव। यशोधरश्चिन्तयति—अत एव कारणात् कामचारप्रवर्तनासि यथेष्टपर्यटनासि। पुनश्च केव सहचरी भवामि । हिमगिरेर्गङ्गेव हिमाचलस्य जाह्नवीव। यशोधरश्चिन्तयति—अत एव नीचानुगतासि नीचानुगामिनी वर्तसे। पुनश्च केव सहचरी भवामि। रत्नस्य रागवर्तिरिव मणेस्तेजोवर्तिरिव.। यशोधरश्चिन्तयति—अत एव कारणात् परभागघटितासि परस्य विटस्य भागाय निर्मिता वर्तसे। यथा रत्नवर्तिः परभागेन शोभया घटिता भवति। एवममुना प्रकारेण अन्यदपि ममानेन अन्यथार्थोपकल्पनविषयं काकुवक्रोक्तिविषयं अभिधाय उक्त्वा तत्तस्मात् कारणात् देवस्य मम प्राणवल्लभस्य सर्वदा सर्वकालं राज्यसुखं नार्पितं सौख्यं दायभागिनीव भागधेयभागिनीव समांशतया समभागतया अनुभूय भुक्त्वा इदानीं एकाकी एक एव देव एव एवममुना प्रकारेण देवः प्रव्रजति दीक्षां गृह्णाति । देवः किमर्थं प्रव्रजति । परमार्थेन मोक्षसुखाभिलाषकतया उपस्थितप्रत्यवायवचनमनीषया वा आगतया अनिराकरणबुद्ध्या वा । अहं तु पुत्रस्य यशोमतेः श्रियं लक्ष्मीमनुभवन्ती भुञ्जाना गृह एव मन्दिर एव प्रतिष्ठामि । इति अतीव असंगतं अयुक्तं वर्तते । न केवलमसंगतं उभयकुलानुचितं श्वशुरपितुः कुलायोग्यम् । शिष्टजनविगर्हितं निन्दितं च वर्तते । न च नैव एवममुना प्रकारेण आवयोस्तव मम च अनुष्ठानाधिष्ठितयोश्चारित्रायुक्तयोः कोऽपि कश्चिदागमविरोधो न वर्तते । जनापवादानुबन्धो लोकापवादसंबन्धो वा न वर्तते । तथा चोक्तम्—सहचरी भवामि इत्युपरिवचनमस्ति ।



'संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् ।
पुत्रेषु दारान्निक्षिप्य वनं गच्छेत्सहैव वा ॥
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषितम् ।
पतिं शुश्रूषयेद्यत्तु तेन स्वर्गे महीयते ॥'

किं च—

'विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥' इति ।

तथा च श्रुतिः—किल वानप्रस्थभावेऽपि **रामस्य सीता** सधर्मचारिण्यासीत् । **द्रौपदी धनंजयस्य, सुदक्षिणा दिलीपस्य, लोपामुद्रागस्त्यस्य, अरुन्धती वशिष्ठस्य, रेणुका** च **जमदग्नेरिति** । पतिविरहे ह्येकेनाप्यङ्गुष्ठेन तपस्यन्त्यः स्त्रियो भवन्त्यवश्यं धिक्कारगोचराः । यथा **प्रयागे** प्रायोपवेशनस्थितापि **ब्रह्मबन्धू** ब्राह्मणी **गोविन्देन** परिव्राजा

---

**संत्यज्येत्यादि** । ग्राम्यं सर्वलोकसाधारणं आहारं भुक्तिं संत्यज्य, श्यामाकनीवारादिफलपत्रादौ च प्रवृत्तिं कृत्वेत्यर्थः । सर्वं परिच्छदं परिवारं संत्यज्य पुत्रेषु उद्वहेषु दारान् कलत्राणि निक्षिप्य पुत्रान् समर्प्य वनं गच्छेद्व्रजेत् वाथ वा दारैः सहैव गच्छेत् ॥

**नास्तीत्यादि** । स्त्रीणां पृथग्भिन्नो यज्ञः क्रतुर्नास्ति, न व्रतम्, नापि उपोषितमुपवासो वर्तते । किं तर्हि । पतिं भर्तारं शुश्रूषयेत् । यद्यस्मात् कारणात् नु इति वितर्क्ये तेनैव कारणेन स्त्री स्वर्गे महीयते पूज्यते ॥

किं च विशेषोऽस्ति—**विशील इत्यादि** । विशीलः शीलरहितः, कामवृत्तो वा स्वेच्छाचारी वा, गुणैर्वा परिवर्जितो गुणरहितो वा । ईदृग्विधः पतिः साध्व्या पतिव्रतया उपचर्यः सेवनीयः । कथम् । सततम् । किंवत् । देववत् ब्रह्मविष्णुमहेश्वरसूर्यादिवत् ॥

तथा च श्रुतिर्वेदेऽप्युक्तमस्ति—किलेति श्रूयते । वानप्रस्थभावेऽपि वनप्रस्थानकालेऽपि रामस्य काकुत्स्थस्य सीता जनकप्रतिपालिता सुता सधर्मचारिणी सहगमना आसीद्बभूव । धनंजयस्यार्जुनस्य द्रौपदी पाञ्चाली द्रुपदनृपनन्दना वानप्रस्थभावे सधर्मचारिणी आसीत् । सुदक्षिणा दिलीपस्य सहचारिणी आसीत् । लोपामुद्रानाम्नी अगस्त्यभार्या अगस्त्यसहचारिणी आसीत् । अरुन्धतीनाम्नी वशिष्ठस्य सहचारिणी आसीत् । रेणुका च कन्या कुब्जजा जमदग्नेः परशुरामस्य पितुः सहचारिणी आसीत् । पतिविरहे भर्तुर्विप्रलम्भे हि निश्चयेन एकेनापि अङ्गुष्ठेन पादज्येष्ठेन तपस्यन्त्यः कुर्वन्त्यः स्त्रियो अवश्यं निश्चयेन धिक्कारगोचरा भवन्ति । निन्द्या भवन्तीत्यर्थः । यथा धिक्कारप्रकारेण प्रयागे वटतितीर्थे प्रायोपवेशनस्थितापि सती ब्रह्मबन्धूनाम्नी ब्राह्मणी गोवि-

सह किल परीवादभागिनी बभूवेति । तथोक्तग्रहणदिवसे चाम्बदेव्या सह मदीये निलये प्रवहणं कर्तव्यमिति चाभ्यर्थ्य विरते तस्मिन्नहमिदमवादिषम्—'अहो सत्ययुधिष्ठिर **गविष्ठिर**, यदि नर्मकर्मणापि कदाचिन्महादेव्याः प्रतिकूलमाचरितवानस्मि तदा त्वमेवात्र साक्षी । तदेवं निवेदय देव्याः—यदाह भवती तत्सर्वं देवेन प्रतिपन्नम् । अन्यत्र पूर्वमुत्थापितात्पक्षात् । इति निवेदितेतिकर्तव्ये सबहुमानं विसर्जिते च तदमात्ये मया चिन्तितम्—'अहो महादेव्यामतीव खलु संवीणताबहिःस्थायाम् । किं च—

राज्यस्थितं मामवहाय यैषा कुब्जेन सार्धं रतिमातनोति ।
सा मे वनस्थस्य मुमुक्षुवृत्तेर्भवेत्सदाचारमतिः किलेति ॥
देवैर्मनुष्यैरथ राक्षसैर्वा निसर्गतो गूढतरप्रचारा ।
ईदृक्तया ज्ञातुमियत्तया वा न शक्यते स्त्रीजनचित्तवृत्तिः ॥

---

न्देन परिव्राजा गोविन्दनामकेन शिखाधारिणा तपस्विना सह किलेत्यरुचौ परीवादभागिनी बभूव गोविन्देन भुक्तेति निन्दां प्राप । तथोक्तग्रहणदिवसे च अम्बदेव्या सह चन्द्रमत्या सार्धं मदीये निलये प्रवहणं कर्तव्यं गणभोजनं विधातव्यमिति ईदृशं चाभ्यर्थ्य याचयित्वा तस्मिन् गविष्ठिरे विरते सति अहं यशोधर इदमीदृशमवादिषमुक्तवान् । किं अवादिषमित्याह—अहो सत्ययुधिष्ठिर युधिष्ठिरमहाराजवत् सत्यवादिन्, हे गविष्ठिर महादेव्याः सचिव, नर्मकर्मणा प्रियकरेणापि कदाचित्कस्मिंश्चिदवसरे महादेव्याः अमृतमतेः प्रतिकूलमहितं अहमाचरितवानस्मि कृतवान् वर्ते तदा त्वमेवात्र साक्षी तस्मिन् काले भवानेव प्रतिभूर्वर्तते । तत्तस्मात् कारणात् देव्या मत्कान्ताया एवं निवेदय कथय । एवं कथमिति चेत्—यत्किमपि भवत्याहेति तत्सर्वं देवेन राज्ञा प्रतिपन्नमङ्गीकृतम् । पूर्वमुत्थापितात्पक्षादिति पूर्वमुक्तात्पक्षाद्देवीशरीरबलिदानकार्यादन्यत्र विना । इतीदृशं निवेदितेतिकर्तव्ये निर्धारितकार्ये सबहुमानमतिसंमानसहितं यथा भवत्येवं तदमात्ये देव्या मन्त्रिणि विसर्जिते सति मया यशोधरेण चिन्तितम् । किं विचारितम् । अहो महादेव्यां अतीवातिशयेन अबहिःस्थायां आकार उभौ खलु निश्चयेन संवीणता समीचीनत्वं वर्तते ॥

किं च विशेषमाह—**राज्यस्थितमित्यादि** । राज्यस्थितमिदं राज्ये प्रवर्तमानं मामवहाय त्यक्त्वा यैषा महादेवी कुब्जेन सार्धं रतिं भोगानुभवमातनोति आचरति । सा देवी मे मम वनस्थस्य वने तिष्ठतः मुमुक्षुवृत्तेर्मोक्षाभिलाषिणः किलेत्यरुचौ सदाचारमतिर्भवेत् शीलवती संजायेत । आक्षेपः ॥

**दैवैरित्यादि** । देवैरिन्द्रादिप्रमुखैः, अथ मनुष्यैः पुरुषैः, अथ राक्षसैः क्रव्यादैर्वा स्त्रीजनचित्तवृत्तिः ज्ञातुं न शक्यते । कथंभूता स्त्रीजनचित्तवृत्तिः । निसर्गतः गूढतरप्रचारा अतीव



इहैव वात्स्यायनगोत्रजस्य पुत्री **भृगोः काञ्चनिके**तिनाम्नी ।
पतिं च पुत्रं च विटं च हत्वा भर्त्रा तु सार्धं दहनं विवेश ॥

अथवैतदप्यस्यामसंभाव्यम् । राभसिको हि लोकः प्रायेणान्धयष्टिरिव परामर्शमकृत्वा शुभाशुभाय वा कर्मणे तोलयत्यात्मानम् । इयं पुनः प्रकृत्यैव विषजातिरिव दुष्टस्वभावा, मकरदंष्ट्रेव कुशीलिनी, कर्णिसुतकथेव बहुकूटकपटवेष्टिता, कुमारविद्येवानेककुहुकवेदिनी, खड्गीव जिह्वयापि स्पृशन्ती दारयत्यङ्गानि । छलयति च नियतिरिव बुद्ध्या बृहस्पतिमपि पुरुषम् । मदीयं तु विलसितं स्वहस्ताङ्गाराकर्षणमिव मे संजातम् । अस्याश्च खल्वबिल्वसंयोगसमम् ।

कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम् ।
दुर्लभः स पुनः कालस्तस्य कर्म चिकीर्षतः ॥

---

गहनरूपा । चित्तवृत्तिः कथं ज्ञातुं न शक्यते । ईदृक्तया ईदृशी चित्तवृत्तिर्वर्तते, इयत्तया एतावती चित्तवृत्तिर्वर्तते, एतत् ज्ञातुं न शक्यते । अतिशयालंकारः ॥

**इहैवेत्यादि** । इहैव भरतक्षेत्रे उज्जयिन्यां नगर्यां वात्स्यायनगोत्रजस्य वात्स्यायनऋषिकुले संजातस्य भृगोर्भृगुनामब्राह्मणस्य पुत्री काञ्चनिकेतिनाम्नी पतिं च पुत्रं च विटं च कामुकं च एतत्त्रयं हत्वा भर्त्रा सार्धं तु दहनं विवेश गमनं चकार । आक्षेपः ॥

अथवा एतदपि अस्यां महादेव्यां असंभाव्यम् । इयं म्रियते इति न घटते, मां मारयिष्यति, इयं न मरिष्यतीत्यर्थः । किमितीयं न मरिष्यते, कस्मान्न मरिष्यते । यस्मात् कारणात् राभसिको हि लोको अविचार्य उत्सुकत्वेन कार्यकर्ता लोकः प्रायेण अन्धयष्टिरिव परामर्शमकृत्वा विचारणामविधाय शुभायाशुभाय वा यथा कर्मणे आत्मानं तोलयति संशयं नयति । यथा अन्धस्य पुरुषस्य यष्टिरविचारपूर्वं यत्र तत्र पतति तथा लोकः अविचार्य कार्यं करोति । लोकः खलु म्रियते, इयं तु न मरिष्यत इत्यर्थः । इयं महादेवी पुनः प्रकृत्यैव दुष्टस्वभावा वर्तते । केव । विषजातिरिव । यथा विषभेदः स्वभावेन दुष्टो भवति तथा इयम् । पुनः कथंभूता इयम् । मकरदंष्ट्रेव कुशीलिनी दुष्टशीला वर्तते । पुनः कथंभूता इयम् । कर्णिसुतकथेव मूलदेवचरित्रमिव बहुकूटकपटवेष्टिता वर्तते । पुनः कथंभूता इयम् । कुमारविद्येव कुमारो धूर्तशास्त्रकर्ता तस्य विद्येव अनेककुहुकवेदिनी मायाकारज्ञायिका वर्तते । पुनः कथंभूता इयम् । खड्गीव वार्ध्राणसीव जिह्वयापि स्पृशन्ती अङ्गानि दारयति । इयं देवी बुद्ध्या कृत्वा बृहस्पतिमपि पुरुषं बृहस्पतिसदृशमपि तं छलयति प्रतारयति । केव । नियतिरिव । मदीयं तु विलसितं मम चेष्टितं स्वहस्ताङ्गाराकर्षणमिव मे संजातम् । अस्याश्च विलसितं खल्वबिल्वसंयोगसमं संजातम् । यथा समुद्रमुक्ता कीलिका युगच्छिद्रे प्रविशति तथा इयमपि ॥

**काल इत्यादि** । कालश्च प्रस्तावः सकृदेकवारं अभ्येत्यागच्छति । यं कालकाङ्क्षिणं

एतदेवार्थशास्त्रस्य नित्यमध्ययने फलम् ।
यत्परानभिसंधत्ते नाभिसंधीयते परैः ॥

इति मां च नीतिमसौ बहुधा पठति । स्वभावसुभगावेशोऽपि च शास्त्रोपदेशः स्त्रीषु शस्त्रीष्विव पयोलवः परं परोपघातायैव प्रभवति ।

किं च ।

इच्छन्गृहस्यात्मन एव शान्तिं स्त्रियं विदग्धां खलु कः करोति ।
दुग्धेन यः पोषयते भुजङ्गीं पुंसः कुतस्तस्य सुमङ्गलानि ॥

इति बुद्धिवृद्धैरुपदिश्यमानमिदं पूर्वमेव नाचरितम् । तदहमेवमाकलयेयम्—मत्तपःप्रत्यवायपरः सकलजनरञ्जनकरश्चायमस्याः सर्वोऽपि मृदुनोपायेन कार्योपक्रमः । श्रूयते ह्यात्मनः किल स्वच्छन्दवृत्तिमिच्छन्ती विषदूषितमद्यगण्डूषेण **मणिकुण्डला** महादेवी **यवनेषु** निजतनुज-

---

नरं प्रस्ताववाञ्छकं पुरुषं स पुनः कालोऽवसरः दुर्लभो भवति । किं कुर्वतः । तस्य कर्म चिकीर्षतः कर्म कर्तुमिच्छतः । अत्रायमर्थः—इयं जानाति यशोधरस्य मृत्युकरणे अयमेव प्रस्तावः स पश्चान्नायास्यति । जात्यलंकारः ॥

**एतदित्यादि** । एतदेवेदमेवार्थशास्त्रस्य नीतिशास्त्रस्य नित्यमध्ययने सदाकालपठने फलम् । एतत्किम् । यत् परान् शत्रून् अभिसंधत्ते वञ्चयति, परैः शत्रुभिर्न अभिसंधीयते न वञ्च्यते । जातिः ॥

इतीदृशीं मां मह्यं च नीतिं शास्त्रं असौ देवी बहुधा अनेकप्रकारेण पठति । स्वभावेन प्रकृत्या सुभगावेशोऽपि परेषां प्रीतिजनकाभिप्रायोऽपि शास्त्रोपदेशः स्त्रीषु विषयप्रकृतः सन् शस्त्रीष्विव असिपुत्रिकास्विव पयोलवो जललेशः परं केवलं परोपघातायैव प्रभवति संजायते ॥

किं च विशेषोऽस्ति—**इच्छन्नित्यादि** । गृहस्य निजावासस्यात्मनः जीवस्य शान्तिं निर्विघ्नतां इच्छन्नभिलषन् कः पुमान् खलु स्त्रियं विदग्धां चतुरां करोति । अपि तु न कश्चिदित्यर्थः । यः पुमान् भुजङ्गीं दुग्धेन पोषयते पुष्णाति तस्य पुंसः सुमङ्गलानि शोभनसुखानि कुतः । न कुतोऽपीत्यर्थः ॥

इतीदृशं शास्त्रं बुद्धिवृद्धैर्विद्वद्भिरुपदिश्यमानमिदं शास्त्रं पूर्वमेव आदित एव मया नाचरितं न कृतम् । तत्तस्मात् कारणात् अहमेवममुना प्रकारेण आकलयेयं जानामि । एवं कथमिति चेत्—अस्या महादेव्याः सर्वोऽपि कार्योपक्रमः कार्योदितः मत्तपःप्रत्यवायपरः परमदीक्षायां दोषतत्परः । न केवलं मत्तपःप्रत्यवायपरः सकलजनरञ्जनकरश्च मृदुनोपायेन कोमलोपायेन वर्तते । श्रूयते हि यस्मात् कारणात् आत्मनः स्वस्य किलेत्यरुचौ यवनेषु म्लेच्छमण्डलेषु मणिकुण्डलानाम्नी महादेवी आत्मनः स्वच्छ-



राज्यार्थम**जराजं** राजानं जघान, विषालक्तकदिग्धेनाधरेण **वसन्तमतिः सूरसेनेषु सुरतविलासम्**, विषोपलिप्तेन मेखलामणिना **वृकोदरी दशार्णेषु मदनार्णवम्**, निशितनेमिना मुकुरेण **मदिराक्षी मगधेषु मन्मथविनोदम्**, कबरीनिगूढेनासिपत्रेण **चण्डरसा पाण्डुषु मुण्डीरम्**, इति ।

यतः ।

यथोच्छिखण्डा मण्डूक्यो लोकविप्लवहेतवः ।
तथा स्त्रियः स्वभावेन भर्तृव्यसनतत्पराः ॥

सांप्रतं च मे समस्तापि कार्यपरिणतिः 'शिरो मुण्डयित्वा नक्षत्रप्रश्नः' इतीमं न्यायमनुसरति । न चास्ति मत्तः परोऽतीव प्रमादी । यस्मात्

अन्तःपुरे भूमिपतिर्मदान्धः करोति यः संगतिमङ्गनाभिः ।
तस्य ध्रुवं स्यादचिरेण मृत्युर्बिलप्रवेशादिव दर्दुरस्य ॥

---

न्दवृत्तिं स्वेच्छाचारमिच्छन्ती निजतनुजराज्यार्थं विषदूषितमद्यगण्डूषेण विषमिश्रितसुरागुलगुलकेन अजराजनामानं राजानं जघान मारितवती । तथा च श्रूयते—सूरसेनेषु सूरसेननाम्नि देशे वसन्तमतिनाम्नी महादेवी विषालक्तकदिग्धेन विषेण मिश्रो योऽसावलक्तको लाक्षारसस्तेन दिग्धेन लिप्तेन अधरेण सुरतविलासं नाम राजानं जघान । तथा च श्रूयते—दशार्णेषु वृकोदरीनाम्नी महादेवी विषोपलिप्तेन मेखलामणिना कटिमेखलारत्नेन मदनार्णवं नाम राजानं जघान । तथा च श्रूयते—मगधेषु मगधनाम्नि देशे मदिराक्षीनाम्नी महादेवी निशितनेमिना तीक्ष्णधारेण मुकुरेण दर्पणेन मन्मथविनोदं नाम राजानं जघान । तथा च श्रूयते—पाण्डुषु पाण्डुनाम्नि देशे चण्डरसानाम्नी महादेवी कबरीनिगूढेन केशविन्यासगुप्तेन असिपत्रेण मुण्डीरं नाम राजानं जघानेति ॥

यतः कारणात्—**यथेत्यादि** । यथा येन प्रकारेण उच्छिखण्डाः शिखासहिता मण्डूक्यो दर्दुर्यः वर्षासु लोकविप्लवहेतवः लोकानां उत्पातकारणं भवन्ति । तथा तेनैव प्रकारेण स्वभावेन प्रकृत्यैव स्त्रियो भर्तृव्यसनतत्परा भवन्ति भर्तुः कान्तस्य पक्षे राज्ञो दुःखोपनिपातिन्यो भवन्ति । दृष्टान्तालंकारः ॥

सांप्रतं च मे मम समस्तापि कार्यपरिणतिः कर्तव्योदयः शिरो मुण्डयित्वा क्षौरकर्म कृत्वा नक्षत्रप्रश्नः नक्षत्रप्रच्छनं इति ईदृशं इमं एतं न्यायं नीतिं अनुसरति अनुगच्छति । इतिशब्देनोक्तार्थत्वात् प्रश्नशब्दात् प्रथमैव । उक्तं च—'पुष्यपुनर्वसुरेवतीचित्राश्रवणधनिष्ठामृगाश्विनीहस्ताण्यगुणो नवभिः क्षुरकर्म बलधृतिकार्यकरः शुभकर्ता ।' इति । न चास्ति मत्तः परो मत्परः अतीव प्रमादी ॥

यस्मात् कारणात्—**अन्तःपुरे इत्यादि** । अन्तःपुरे शुद्धान्ते भूमिपतिर्यो राजा मदान्धः सन् अङ्गनाभिः संगतिं करोति, तस्य भूमिपतेः ध्रुवं अचिरेण मृत्युः स्यात् । बिलप्रवेशात् दर्दुरस्येव । दृष्टान्तः ॥

इति प्रत्यहमधीयानोऽपि तस्या दुष्कर्मणः सद्मनि संवासपरः समभवम् । अपि च ।

अज्ञानभावादथवा प्रमादादुपेक्षणाद्वात्ययभाजि कार्ये ।
पुंसः प्रयासो विफलः समस्तो गतोदके कः खलु सेतुबन्धः ॥
विहाय शास्त्राण्यवमत्य मन्त्रिणो मित्राण्यवज्ञाय निरुद्ध्य बान्धवान् ।
भवन्ति ये दुर्नयनीतयो नृपाश्चिराय तिष्ठन्ति न तेषु संपदः ॥
न चापि मे सन्ति विनीतचेतसस्तुलासमाः कार्यविचारकर्मणि ।
अमी सदा ये च समीपवृत्तयो मनः परं ते मदयन्त्युपाकृताः ॥

अपि च ।

प्रशास्ति यः श्रोतृवशेन धर्मं नृपेच्छया यो निगृणाति कार्यम् ।
अकल्पकामोपचयेन वैद्यस्त्रयस्त एते कलिकालपादाः ॥

---

इतीदृशं शास्त्रं प्रत्यहं निरन्तरमधीयानोऽपि पठन्नपि तस्याः दुष्कर्मणो दुरात्मिकायाः अमृतमतेः सद्मनि निवासे संवासपरः सहवासतत्परोऽहं समभवं संजातः ॥

अपि च तथा च । **अज्ञानेत्यादि** । अज्ञानभावात् ज्ञानरहितत्वात् अथवा प्रमादात् असावधानतया उपेक्षणाद्वा अनादराद्वा कार्ये अत्ययभाजि कालातिपातसहिते सति पुंसः समस्तः प्रयासः श्रमो विफलो निरर्थको भवति । गतोदके जलनिर्गमे सति सेतुबन्धः पालिबन्धः कः खलु वर्तते । न कश्चिदित्यर्थः । आक्षेपः ॥

**विहायेत्यादि** । विहाय परित्यज्य शास्त्राणि नीतिसिद्धान्तान् अवमत्य अवगणय्य मन्त्रिणः मित्राणि अवज्ञाय सखीन् अनादृत्य बान्धवान् निरुध्य आदृत्य ये नृपा दुर्नयनीतयो भवन्ति तेषु नृपेषु चिराय संपदो लक्ष्म्यो न तिष्ठन्ति नासते । जात्यलंकारः ॥

**न चापीत्यादि** । न चापि मे मम विनीतचेतसः विनयग्राहिणः न सन्ति न वर्तन्ते । कथंभूतास्ते विनीतचेतसः । कार्यविचारकर्मणि तुलासमास्तुलासदृशदण्डसमाना न सन्ति । कार्यविचारका न सन्तीत्यर्थः । ये च अमी एते सदा समीपवृत्तयो वर्तन्ते निकटवर्तिनः सन्ति । ते परं केवलं उपाकृताः स्वीकृताः सन्तः मनो मानसं चित्तं मदयन्ति मदयुक्तं कुर्वन्ति । ते शास्त्रबाह्या वर्तन्ते इत्यर्थः । उपमालंकारः ॥

अपि च तथा च । **प्रशास्तीत्यादि** । यः पुमान् श्रोतृवशेन श्रावकाधीनत्वेनधर्मक्रियां प्रशास्ति कथयति । यः श्रोता यद्धर्मरतो भवति व्याख्यातापि तं धर्ममुपदिशतीत्यर्थः । नृपेच्छया यः कार्यं निगृणाति राजाभीष्टं मन्त्रं मन्त्री कथयति । अकल्पकामोपचयेन ज्वरादिरोगपीडितपुरुषेच्छावर्धनेन कृत्वा यो वैद्यो भवति रोगिणो यादृशं रोचते तादृशमेवोपदिशति । ते एते पूर्वोक्ता धर्मशास्त्रमन्त्रकथकरोगीच्छासमानवैद्यास्त्रयः कलिकालपादा



एकैकमेषां गुणमाकलय्य मया ह्यमी मन्त्रिपदे नियुक्ताः ।
सिंहेषु दृष्टं यदि नाम शौर्यं क्षेमास्ति किं तैः सह संगतस्य ॥
प्रवर्तते यो नृपतिः खलानां प्रमाणयन्नात्महिताय वाचः ।
नूनं स कल्याणमतिर्न किं स्यादाशीविषैः केलिकरो यथैव ॥
प्रतिक्षणं संशयितायुषो ये न येष्वपेक्षास्ति च कार्यवादे ।
त एव मन्त्रेऽधिकृता नृपाणां न ये जलौकासमवृत्तयश्च ॥

किं च ।

प्रजाविलोपो नृपतीच्छया स्यात्प्रजेच्छया चाचरिते स्वनाशः ।
न मन्त्रिणां वेधविधायिनीवत्सुखं सदैवोभयतः समस्ति ॥

---

भवन्ति । कलिकालः पापिष्ठः त्रिभिः पादैः प्रवर्तते । यद्यस्य चत्वारः पादा भवन्ति तदा सर्वः अधर्म एव वर्तेत इत्यभिप्रायः । रूपकालंकारः ॥

**एकैकेत्यादि** । एषां मन्त्रिपदे नियुक्तानां एकैकं गुणं दयावत्वादिकं आकलय्य ज्ञात्वा मया अनुमीयते मन्त्रिपदे नियुक्ता अधिकृताः । एकैकेन गुणेन कार्यकृतो न भवन्तीत्यर्थः । यदि चेत् । नामेति संभावनायाम् । सिंहेषु शौर्यं दृष्टमवलोकितं तर्हि तैः सिंहैः सह संगतस्य मिलितस्य पुंसः किं क्षेमास्ति कुशलं भवति । अपि तु न भवतीत्यर्थः । आक्षेपालंकारः ॥

**प्रवर्तते इत्यादि** । यो नृपतिः खलानां वाचः आत्महिताय प्रमाणयन् सन् प्रवर्तते । स नृपतिः नूनं किं कल्याणमतिर्न स्यात् । अपि तु भवत्येव । क इव कल्याणमतिर्भवेत् । आशीविषैः सर्पैःसह यथैव येन प्रकारेण केलिकरः पुमान् कल्याणमतिर्भवेत् । तथापीत्यर्थः । काकुवक्रोक्त्यलंकारः ॥

**प्रतिक्षणमित्यादि** । प्रतिक्षणं ये मन्त्रिणः संशयितायुषः संशयं प्राप्तजीवितव्याः असौ राजा अस्मान् मारयिष्यति इति भयभीतचेतसो भवन्ति । येषु मन्त्रिषु कार्यवादे मन्त्रोपदेशे अपेक्षा धनग्रहणेच्छा च नास्ति न विद्यते । त एव मन्त्रिणः मन्त्रे नृपाणां अधिकृता अधिकारिणो भवन्ति । ये मन्त्रिणः जलौकासमवृत्तयश्च न भवन्ति यथा जलौका रक्तपाः स्तने धृताः सत्यो रुधिरमाकर्षन्ति न तु क्षीरम्, तथा ये मन्त्रिणः दोषान् गृह्णन्ति न गुणान् उपदिशन्ति त एव मन्त्रिणः अधिकृताः । उपमालंकारः ॥

किं च विशेषमाह—**प्रजेत्यादि** । नृपतीच्छया राजेच्छया प्रजाविलोपः स्यात् । प्रजेच्छया आचरिते च स्वनाशो भवति । यतो राजा धनं धातुं न वाञ्छति । तेन कारणेन मन्त्रिणां उभयतः प्रकारेण राजेच्छया प्रजेच्छया चलतां मन्त्रिणां सदैव सुखं न समस्ति किंतु दुःखमेव भवति । किंवत् । वेधविधायिनीवत् यथा वेधविधायिनी घण्टिकिका मस्तके घट्टनेन कुट्यते, मुखे तु पाषाणादिको मुखभङ्गं करोति । उपमालंकारः ॥

तथाप्यमीभिः कुशलोपदेशैर्भाव्यं नृपे दुर्नयचेष्टितेऽपि।
अन्धः स्खलेद्यद्यपि चात्मदोषाद्दाकर्षकं तत्र शपन्ति लोकाः॥
यतो यथार्थं वदतां नराणामात्मक्षयः स्यात्परमेक एव।
राष्ट्रस्य राज्ञो ध्रुवमात्मनश्च मिथ्योपदेशस्तु करोति नाशम्॥
तदेतदित्थं मम दुर्नयेन दुर्मन्त्रिणां संश्रयणेन चैव।
यथायथं कार्यमिदं प्रयातं देवोऽपि शक्तो घटनाय नास्य॥
गविष्ठिरस्यापि मया पुरस्तात्किंचित्प्रतिज्ञाविषयीकृतं च।
सत्यच्युतानां किमु जीवितेन राज्येन वा लोकविगर्हितेन॥
दैवे तु पुंसः प्रतिकूलवृत्तौ विवेकिता नैव भवेद्गुणाय।
किं लक्ष्मणस्यास्ति रणेषु भङ्गः सीतामसौ येन मुमोच रामः॥

---

**तथापीत्यादि**। तथापि यद्यप्येवं उभयतोऽपि सुखं न वर्तते तथापि दुर्नयचेष्टिते अन्यायकारके नृपे अमीभिः मन्त्रिभिः कुशलोपदेशैः श्रेयस्करोपदेशैः भाव्यं भवितव्यम्। अमुमेवार्थं दृष्टान्तेन द्रढयति—अन्धः पुमान् आत्मदोषात् निजचक्षुर्दोषात् यद्यपि स्खलेत् तथापि तत्र अन्धे आकर्षकं अतानकं पुमांसं लोकास्तत्र शपन्ति आक्रोशन्ति। मन्त्रिणमेव दूषयन्तीत्यर्थः। दृष्टान्तालंकारः॥

**यतो यथार्थमित्यादि**। यतो यस्मात् कारणात् यथार्थं सत्यं वदतां नराणां मन्त्रिणां परं केवलमेक एव आत्मक्षयः स्यात् सचिव एव म्रियते। मिथ्योपदेशस्तु मिथ्यामन्त्रस्तु राष्ट्रस्य देशस्य राज्ञो नृपस्य आत्मनश्च सचिवस्य च ध्रुवमिति निश्चयेन नाशं करोति विध्वंसं विदधाति। समुच्चयालंकारः॥

**तदित्यादि**। तत्तस्मात् कारणात् एतत् पूर्वोक्तं इदं कार्यं यथायथमात्मानुसारेण प्रयातं नष्टम्। केन प्रणष्टम्। मम दुर्नयेन। न केवलं मम दुर्नयेन दुर्मन्त्रिणां संश्रयणेन चैव। अस्य कार्यस्य घटनाय देवोऽपि न शक्तः। समुच्चयालंकारः॥

**गविष्ठिरस्येत्यादि**। गविष्ठिरस्यापि पुरस्तात् मया किंचिद्वचनं प्रतिज्ञाविषयीकृतं प्रतिज्ञातम्। प्रतिपन्नमित्यर्थः। तद्यदि न करोमि महादेवीमन्दिरं न गच्छामि न च भुजे, तर्हि सत्यच्युतानां पुरुषाणां जीवितेन प्राणितेन किमु। वाथ वा राज्येन किमु। न किमपि। कथंभूतेन जीवितेन राज्येन च। लोकविगर्हितेन लोकैर्निन्दितेन। आक्षेपालंकारः॥

**दैवे इत्यादि**। दैवे पुंसः प्रतिकूलवृत्तौ पराङ्मुखे सति विवेकिता चतुरत्वं गुणाय नैव भवेत् गुणकारिणी न स्यात्। अमुमेवार्थं लोकप्रसिद्धदृष्टान्तेन द्रढयति—लक्ष्मणस्य सौमित्रे रणेषु किं भङ्गोऽस्ति भवति। येन कारणेन असौ रामः श्रीसीतां मुमोच वनमध्ये सीतां एकाकिनीं मुक्त्वा लक्ष्मणस्य साहाय्यं कर्तुं गतः। दृष्टान्ताक्षेपौ॥



तदत्र दैवमेव शरणम्।' इति विचिन्त्य किंचिन्निद्रासुखमनुभूय प्रबुध्य च

'कुर्वन्मन्दितिमन्दिरेषु करिणामानन्दलीलारसं
नासाग्रस्फुरितेन केलिरभसं वाजिव्रजानां वहन्।
क्रीडाशैलनिकुञ्जकन्दरभुवां नृत्तं दधन्केकिना-
मद्यायं किमकाण्ड एव नगरे तूरध्वनिः श्रूयते॥'

इति **बुधप्रबोधं** संधिविग्रहिणमापृच्छमाने, वातायनोपान्तवर्तिनी निवर्त्य च नेत्रे

'नृत्यैः समं वारविलासिनीनां संगीतकस्यापि महाप्रबन्धः।
गृहेषु सर्वेषु च पूर्णकुम्भाः पुष्पाक्षतव्याकुल एष लोकः॥'

---

हे मारदत्त महाराज, त्रिशूलिनीनिलयं चण्डिकाभवनं अहं अनुजगाम चन्द्रमतेर्मातुः पृष्ठतो गतवान्। किं कृत्वा पूर्वम्। इतीदृशं विचिन्त्य। इतीति किम्। तत्तस्मात् कारणात् अत्रास्मिन् कार्ये चण्डीभवनगमनादिकाय दैवमेव शरणं गतिरिति। तथा चोक्तम्—'नेता यत्र बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावणो वाहनः। इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम्॥' पुनश्च किं कृत्वा पूर्वम्। किंचिन्मनाक् निद्रासुखमनुभूय। पुनः किं कृत्वा। प्रबुध्य च जागरित्वा च। कस्मिन् सति त्रिशूलिनीनिलयमनुजगाम। वैकुण्ठमतिना वैकुण्ठमतिनामकेन वरिष्ठकेन क्षेत्रपालेन इत्यागत्य विज्ञप्ते सति। कस्मिन् सति विज्ञप्ते। इत्यमुना प्रकारेण बुधप्रबोधं बुधप्रबोधनामानं संधिविग्रहिणं महाद्भूतं आपृच्छमाने मयि पृच्छति सति। इतीति किम्। भोः संधिविग्रहिन्। **कुर्वन्नित्यादि**। अद्य अयं अकाण्ड एव अप्रस्ताव एव नगरे तूरध्वनिः किं श्रूयते। किं कुर्वन् ध्वनिः। मन्दितिमन्दिरेषु राजमन्दिरेषु करिणां आनन्दलीलारसं कुर्वन्। पुनः किं कुर्वन्। नासाग्रस्फुरितेन घोणास्फुरणेन वाजिव्रजानां केलिरभसं क्रीडोत्सुकत्वं वहन् आचरन्। पुनः किं कुर्वन्। केकिनां मयूराणां नृत्तं दधन्। कथंभूतानां केकिनाम्। क्रीडाशैलनिकुञ्जकन्दरभुवां क्रीडाशैलानां ये निकुञ्जा लतादिपिहितोदरस्थानानि तेषु कन्दरेषु भू स्थानं येषां ते तथा तेषाम्। जात्यलंकारः॥

किं कृत्वा पूर्वं संधिविग्रहिणमापृच्छमाने मयि सति। वातायनोपान्तवर्तिनी गवाक्षसमीपवर्तमाने द्वे नेत्रे निवर्त्य च। पुनश्च कस्मिन् सति वरिष्ठकेन विज्ञप्ते। इत्यस्य च एतस्य च हेतुविमर्शजातचेतसि मयि सति कारणलोचनोत्पन्नमनसि मयि सति। इतीति किम्—**नृत्यैरित्यादि**। नृत्यैः समं वारविलासिनीनां संगीतकस्यापि गीतनृत्यवादित्रस्यापि महाप्रबन्धः प्रघट्टको वर्तते। सर्वेषु गृहेषु पूर्णकुम्भाः मङ्गलकलशाश्च वर्तन्ते। एष लोक पुष्पाक्षतव्याकुलश्च वर्तते। समुच्चयालंकारः॥

इत्यस्य च हेतुविमर्शजातचेतसि मयि, 'देव, परिकल्पितनिखिलनमसितोपचारा **चन्द्रमति**महादेवी सपरिवारा चण्डिकाचरणार्चनायोच्चलिता प्राप्ता च पुरवीथीमध्यम्, यतोऽयमाकर्ण्यते महानातोद्यध्वनिः । तदर्थं चैष नगरे पौराणामुद्यामोद्यमः । तत्र देवः कालविलम्बनमकृत्वा सज्जीभवतु मज्जनादिषु क्रियासु ।' इत्यागत्य **वैकुण्ठमति**ना वरिष्ठकेन विज्ञप्ते तथैव तद्वचनं सफलीकृत्य,

न व्रतमस्थिग्रहणं शाकपयोमूलभैक्षचर्या वा ।
व्रतमेतदुन्नतधियामङ्गीकृतवस्तुनिर्वहणम् ॥

इत्यनुस्मृत्य, विहिततदाराधनोचिताचारे समारुह्याभ्रमूनाम करेणुकामाचार्यपुरोहितसखे भैरवीभवनं प्रति गन्तुमुद्यते च तैस्तैरुपालिङ्गैरभावि,

---

किं विज्ञप्ते सति त्रिशूलिनीनिलयमनुजगाम । हे देव हे राजन्, चन्द्रमतिमहादेवी चण्डिकाचरणार्चनार्थमुच्चलिता उज्जगाम । कथंभूता सती उच्चलिता । परिकल्पितनिखिलनमसितोपचारा निष्पादितसमस्तोपयाचितकव्यहव्यव्यवहारा । महादेवी सपरिवारा न केवलं उच्चलिता पुरवीथीमध्यं प्राप्ता उपढौकिता च । यतः कारणात् अयं आकर्ण्यते महान् आतोद्यध्वनिः । तदर्थं चण्डिकाचरणार्चननिमित्तं एषोऽयं नगरे पौराणां उद्यामोद्यमो महोत्सवोत्साहो वर्तते । तत्र चण्डिकाचरणार्चने देवो राजाधिराजः श्रीयशोधरः कालविलम्बनमकृत्वा तैलामलं नीत्वा मज्जनादिषु क्रियासु सज्जीभवतु उद्यतो भवतु । किं कृत्वा त्रिशूलिनीनिलयमनुजगाम । तद्वचनं वैकुण्ठमतिनामवरिष्ठकवचनं तथैव स्नानादिकर्मप्रकारेण सफलीकृत्य सफलं विधाय । पुनश्च किं कृत्वा त्रिशूलिनीनिलयमनुजगाम । इत्यमुना प्रकारेण अनुस्मृत्य चिन्तयित्वा । इतीति किम् । **नेत्यादि** । उन्नतधियां महानुभावानां अस्थिग्रहणं कर्णयोः शङ्खकुण्डलधरणं व्रतं न भवति । वाथ वा शाकपयोमूलभैक्षचर्या शाकं च व्यञ्जनमात्रभक्षणम्, पयश्च क्षीरपानं जलपानं वा, मूलं च कन्दभक्षणम्, भैक्षचर्या च भिक्षासमूहभोजनं व्रतं न भवति । किं तर्हि व्रतं उन्नतधियां पुरुषाणाम् । एतत् । किम् । अङ्गीकृतवस्तुनिर्वहणम् । अङ्गीकृतपदार्थनिर्वाह इत्यर्थः । पुनश्च किं कृत्वा त्रिशूलिनीनिलयमनुजगाम । तैस्तैरुपालिङ्गैर्दुर्निमित्तैरेवं अभावि भूयते स्म, तथापि तदपि नियतिर्भवितव्यता केन पुरुषेण लङ्घ्यते इति वचनं सत्यतां नयन्निव । कस्मिन् सति उपालिङ्गैरभावि । मयि विहिततदाराधनोचिताचारे विहितः कृतः तस्याश्चण्डिकाया आराधने पूजने उचितो योग्य आचारः क्रिया येन स तथा तस्मिन् । किं कृत्वा पूर्वं अनुजगाम । अभ्रमूनाम करेणुकां ऐरावणपत्नीनाम हस्तिनीं समारुह्य चढित्वा । कथंभूते सति मयि । आचार्यपुरोहिता उच्येते सखायौ समीपवर्तिनौ यस्य स तथा तस्मिन् ।



तथापि 'नियतिः केन लङ्घ्यते' इति सत्यतां नयन्निव 'हंहो विवेकबृहस्पते, स्वभावत एव महासत्त्ववसते कण्ठगतेष्वपि प्राणेषु किमनुचितेनाचरितेनात्मनः प्रियं कर्तुं युक्तम्' इति मतिक्रयेव प्रतिलोमतया बृंहितमिङ्गितं च मतङ्गजगणिकया, 'कथमयं विद्वानप्यहितोपदेशाद्दुःखमकराकरवति भवोदन्वति निमङ्क्तुमुद्युक्तः' इति कृतकृपयेव कम्पितकम्पितमवन्या, 'अये दुर्वासनावश, विशामीश, कथमीदृग्विधेरभिसंधेरेष्यत्कल्मषनिषेकमातङ्कं भवान्सहिष्यते' इति सूचयतेव धूमधूसरतामुपगतमाशावलयेन, 'अयि पञ्चमीकललोकपाल, त्वज्जन्मजनितपुष्पवर्षेण दुरेनसोऽस्माद्दशमीस्थस्य भवतः कथं मया सोढव्या भविष्यन्ति चिताचित्रभानोः

---

'राजाहःसखिभ्यः' इति वचनाददन्तो निपातः । मयि कथंभूते सति दुर्निमित्तैरभावि । भैरवीभवनं प्रति गन्तुमुद्यते च सति चण्डिकाप्रासादं प्रति चलितुं उद्यमं प्राप्ते सति । एवं दुर्निमित्तैरभावीति एवं कथमिति चेत्—इति मतिकया इव ईदृग्बुद्धिसहितया इव प्रतिलोमतया विपरीततया प्रसिद्धया अभ्रमुनामिकया मतङ्गजगणिकया इभ्या बृंहितं गर्जितम्, न केवलं बृंहितं इङ्गितं चेष्टितं च । इतीति किम् । हंहो अहो विवेकबृहस्पते यशोधरमहाराज, स्वभावत एव प्रकृत्यैव महासत्त्ववसते महाधर्मपरिणामनिवासे प्राणेषु कण्ठगतेष्वपि अनुचितेन आचरितेन आचारेण आत्मनः प्रियं कर्तुं युक्तं किम् । अपि तु न युक्तमित्यर्थः । अवन्या भूम्या कम्पितकम्पितं दुःखेन कम्पितम् । कथंभूतया अवन्या । उत्प्रेक्ष्यते—तस्मात् कारणात् कृतकृपया इव । इतीति किम् । अयं यशोधरो विद्वानपि अहितोपदेशात् पापोपदेशात् भवोदन्वति संसारसमुद्रे निमङ्क्तुं ब्रूडितुं कथमुद्युक्तः । कथंभूते भवोदन्वति । दुःखमकराकरवति दुःखमकरसहिते । आशावलयेन दिग्मण्डलेन धूमधूसरतां धूमेन ईषत्पाण्डुरत्वं उपगतं प्राप्तम् । आशावलयेन किं कुर्वता । उत्प्रेक्षते—इतीदृशमभिप्रायं सूचयता इव कथयता इव । इतीति किम् । अये इति विषादार्थे । उक्तं च—'संभ्रमे स्मरणे चैव अये क्रोधविषादयोः ।' अये दुर्वासनावश दुष्टस्वभावपराधीन, अये विशामीश राजन् यशोधरमहाराज, ईदृग्विधेः अभिसंधेः मनोभिप्रायात् आतङ्कं दुःखसंतापं भवांस्त्वं कथं केन प्रकारेण सहिष्यते क्षमिष्यते । कथंभूतं आतङ्कम् । एष्यत्कल्मषनिषेकं एष्यत्समूहदानागमिष्यत् कल्मषनिषेकः पापबन्धो यत्रातङ्के स तथोक्तस्तम् । अम्बरेण उल्काज्वालाभिराडम्बरितं ओढोपितम् । कथंभूतेन अम्बरेण । उत्प्रेक्ष्यते—इत्यमुना प्रकारेण शोकानलोल्बणेनेव शोकः पश्चात्तापः स एवानलो दाहः संतापकारकत्वात् तेन उल्बणमुद्रिक्तं तत्तथा तेन । इतीति किम् । अयि प्रश्ने अनुनये वा । अहो पञ्चमीकललोकपाल हे मध्यमलोकपाल, अस्माद्दुरेनसः अस्माद्दुष्टपापात् दशमीस्थस्य

कलुषितानिमिषमुखाः शिखालेखाः' इति शोकानलोल्बणेनेवोल्काज्वालाभिराडम्बरितमम्बरेण, 'अयि प्रतिपन्नोत्पथकथ पृथ्वीनाथ, तेषु तेषूत्सवेषु संपादितानन्ददुन्दुभिनादयासुष्मादनुदर्कशर्मणः कर्मणस्त्वयि कथाशेषे सति कथं नु मया नाम कर्णकटुप्रभावस्त्वद्बान्धवहारावः श्रोत्रव्यो भविता' इति शोचनादिव प्रवृत्तबाष्पस्यन्दया दुर्दिनीभूतं दिवा, 'त्वमेवमवश्यमहो राजन्, जानीहि। न खलु भवत्ययमायतिषु हिताय क्रियोपायः। तदलमत्राग्रहेण। निवृत्य गम्यतां हर्म्यम्' इत्याचरितदाक्षिण्येन सुहृदेव प्रतिवातं पांशु-

---

मृतस्य भवतस्तव चिताचित्रभानोश्चितानलस्य मृतकाग्नेः शिखालेखा ज्वालाग्राणि कथं केन प्रकारेण मया सोढव्याः सहनीया भविष्यन्ति। कथंभूतेन मया। त्वज्जन्मजनितपुष्पवर्षेण त्वज्जन्मनि जनितो निष्पादितः पुष्पवर्षाः पुष्पवृष्टिर्येन मया स तथा तेन। कथंभूताः शिखालेखाः। कलुषितानिमिषमुखाः कलुषितानि मलिनीकृतानि अनिमिषाणां देवानां मुखानि यैस्ते तथोक्ताः। दिवा भूमिसमीपवर्तिना आकाशेन दुर्दिनीभूतं मेघच्छलीभूतम्। जलकणचूर्णेन व्याप्तमित्यर्थः। कथंभूतया दिवा। उत्प्रेक्ष्यते—इत्यमुना प्रकारेण शोचनात् शोककरणात् प्रवृत्तबाष्पस्यन्दया इव प्रवृत्तः संजातः बाष्पस्यन्दः अश्रुपतनं यस्याः सा तथा तया। इतीति किम्। अयि कोमलालापे। अहो प्रतिपन्नोत्पथकथ अङ्गीकृतोन्मार्गवार्त्त पृथ्वीनाथ हे राजन्, असुष्मात् एतस्मात् अनुदर्कशर्मणः न विद्यते उदर्के उत्तरफले शर्म सुखं यस्मिन् तत् अनुदर्कशर्म तस्मात् ईदृग्विधात् कर्मणः कुर्कुटवधात् पापात् त्वयि भवति कथाशेषे सति मृतिं प्राप्ते सति। नु इति प्रश्ने। कथं केन प्रकारेण। नामेति संभावनायाम्। त्वद्बान्धवहारावः भवतो बन्धुवर्गस्य रोदनध्वनिः कथं श्रोतव्यो भविता श्रवणीयो भविष्यति। न कथमपि श्रोतव्यो भविष्यतीत्यर्थः। कथंभूतो हारावः। कर्णकटुप्रभावः। कर्णशूलप्राय इत्यर्थः। कथंभूतया मया। तेषु तेषु प्रसिद्धेषु राज्याभिषेकपुत्रजन्मदिग्जयनादिषु उत्सवेषु संपादितानन्ददुन्दुभिनादया संपादित उत्पादित आनन्ददुन्दुभीनां नादो यस्यां सा तथा तया। पांशुलक्षणेन पांशवो रजांसि लक्षणं चिह्नं यस्य स पांशुलक्षणः तेन वायुना प्रतिवातं संमुखमायान्तम्। कथंभूतेन पांशुलक्षणेन। उत्प्रेक्ष्यते—इत्यमुना प्रकारेण आचरितदाक्षिण्येन विहितप्रतिपत्तिना सुहृदा इव अभीष्टमित्रेणेव प्रतिवातम्। इतीति किम्। अहो राजन् हे पृथिवीपते यशोधरमहाराज, त्वं भवान् एवममुना प्रकारेण अवश्यं निश्चयेन जानीहि प्रतीहि। एवं कथमिति चेत्—अयं क्रियोपायः खलु आयतिषु उत्तरकालेषु हिताय सौख्याय न भवति। तत्तस्मात् कारणात् अत्र क्रियोपाये आग्रहेण आक्षेपेण अलं पूर्णम्। निवृत्य व्याघुट्य हर्म्यं गृहं गम्यतां त्वया व्रज्यतामिति। आतपत्रेण भुवि निपतितं निपत्यते स्म।



लक्षणेन, 'खरकिरणकरनिवारण एवाहं प्रभवामि, न पुनरापातचण्डे यमदण्डे' इति धियेव भुवि निपतितमातपत्रेण, 'न भवतीयं सा परागसंततिर्यास्माभिः शक्यते निवारयितुम्। एषा त्वपरैव यन्निवारणे न कुशलः प्रलयकालानिलोऽपि' इति चिन्तयेव विनिकीर्णं विलासिनीकरेभ्यश्चामरनिवहेन, 'महापुरुष, एवमशुभाभिनिवेशेषु युष्मादृशेषु न चिरमस्मादृशैः कल्याणपरम्पराचिह्नविनिवेशैः सह समागमः' इति प्रकटितसाचिव्येनेव कुटिलितं पताकासंतानेन, 'सर्वदा महोत्सवपुरश्चारिणामस्माकं किमेवमसदृशधर्मणि कर्मणि विनियोगो युक्तः' इति स्वदुःखनिवेदनादिव घर्घरितमातोद्यवाद्येन, 'यद्यपि देवः काम-

---

कथम्। उत्प्रेक्ष्यते—इति धियेव। इतीति किम्। अहमातपत्रं खरकिरणकरनिवारणे सूर्यरश्मिनिषेधे एव प्रभवामि समर्थं भवामि। न पुनः आपातचण्डे यमदण्डे। आगमदुर्निवारे मरणकाले इत्यर्थः। पुनश्च केन दुर्निमित्तेनाभावि। विलासिनीकरेभ्यः वारवनिताहस्तकमलेभ्यः सकाशात् चामरनिवहेन विनिकीर्णं विविधं यत्र तत्र निपतितम्। किमिति विनिकीर्णम्। उत्प्रेक्ष्यते—इति ईदृश्या चिन्तया इव। इतीति किम्। इयं सा परागसंतती रेणुमण्डली। सा का। या अस्माभिश्चामरैर्निवारयितुं निषेद्धुं शक्यते क्षम्यते। का तर्हि परागसंततिः। एषा योगिनां प्रत्यक्षीभूता अपरैव अन्यैव। एषा का। यन्निवारणे यस्याः परागसंततेर्निषेधे प्रलयकालानिलोऽपि कल्पान्तकालवातोऽपि न कुशलो न समर्थो भवति। पुनश्च केनोपालिङ्गेनाभावि। पताकासंतानेन कुटिलितं वक्रितम्। कथंभूतेन पताकासंतानेन। उत्प्रेक्ष्यते—इत्यमुना प्रकारेण प्रकटितसाचिव्येनेव स्फुटीकृतमन्त्रित्वेनेव। हे राजन्, एवंविधं पातकं कर्तुं यदि यासि तत्त्वमेव याहि। अस्माभिस्तत्र न गम्यत इत्यर्थः। इतीति किम्। हे महापुरुष, युष्मादृशेषु पुरुषेषु अस्मादृशैः पुरुषैः सह समागमो न चिरं भवति। स्तोकेनैव कालेन अस्मद्विधैः विष्वद्यत(?) इत्यर्थः। कथंभूतेषु युष्मादृशेषु। एवममुना प्रकारेण जीववधे अशुभाभिनिवेशेषु पापकर्माभिप्रायेषु। अस्मादृशैः कथंभूतैः। कल्याणपरम्पराचिह्नविनिवेशैः कल्याणानां श्रेयसां परम्परा श्रेणिः बहूनि कल्याणानि तेषां चिह्नाय लाञ्छनाय विनिवेशो विन्यासो येषां अस्मादृशां ते तथा तैः। पुनश्च केनोपालिङ्गेनाभावि। आतोद्यवाद्येन वादित्रध्वनिना घर्घरितं कुत्सितशब्दितम्। कस्मात् घर्घरितम्। उत्प्रेक्ष्यते—इत्यमुना प्रकारेण स्वदुःखनिवेदनादिव स्वदुःखकथनादिव। इतीति किम्। हे महापुरुष, एवं ईदृग्विधे कर्मणि अशुभाचारे अस्माकं विनियोगोऽधिकारः किं युक्तः। अपि तु न युक्तो भवतीत्यर्थः। कथंभूते कर्मणि। असदृशधर्मणि विपरीतस्वभावे जीववधलक्षणे। कथंभूतानामस्माकम्। सर्वदा सर्वकालं महोत्सवपुरश्चारिणां पुत्रजन्मोत्सवमहामुनिबन्धनादिषु अग्रगामिनाम्। पुनश्च केनोपालिङ्गेनाभावि। तोरणेन पुरोऽग्रतः निपत्य तिर्यग्भूतम्। कस्मात् तिर्य-

क्रोधाभ्यामज्ञानेन वाद्यान्यथाभावः संजातः, तथापि न खलु भवत्प्रसादान्निरन्तरश्रीविलासप्रकाशानामस्मादृशानामुपेक्षितुमुचितम्' इति बुद्ध्येव निपत्य पुरस्तिर्यग्भूतं तोरणेन, 'क्षितिप, अद्यापि न किंचिद्विनश्यति । तदावासमनुसृत्यापरमेव किंचिदिहामुत्र च शिवकरप्रतिष्ठानमनुष्ठानमाचरितव्यम्' इत्युपदिशतेव पृष्ठतः शब्दितं दधिमुखेन, 'हे महीपाल, किं कोऽपि परोपरोधादात्मन्यात्मन्यश्रेयांसि कुर्वन्नवलोकितोऽस्ति, येनत्थमकत्थने पथि प्रस्थितोऽसि' इत्युपहसतेवापाचीनतया वासितमादित्यसुतेन, एवमन्यैरपि सद्योदुरन्तफलप्रदायिसङ्गैस्तैस्तैरुपालिङ्गैरभावि, तथापि 'नियतिः केन लङ्घ्यते' इति सत्यतां नयन्निव त्रिशूलिनीनिलयमनुजगाम ।

---

ग्भूतम् । उत्प्रेक्ष्यते—इति बुद्ध्येव ईदृशेनाभिप्रायेण । इतीति किम् । यद्यपि यदपि देवो राजा कामक्रोधाभ्यां रागद्वेषाभ्यां अज्ञानेन व्यामोहेन वा अद्य इदानीं अन्यथाभावः विपरीतपरिणामः संजात उत्पन्नः, तथापि तदपि अस्मादृशानां अस्माकं खलु निश्चयेन उपेक्षितुं भवद्विषये अनादरं कर्तुं नोचितं न युक्तम् । अन्तरेव भवनं वारयामः, गन्तुं न दद्म इति भावः । कथंभूतानां अस्मादृशानाम् । भवत्प्रसादात् त्वत्प्रसादात् निरन्तरश्रीविलासानां निरन्तरमविच्छिन्नं श्रीणां विलासो भोगः तस्य प्रकाशः प्रादुर्भावो येभ्यस्ते तथा तेषाम् । पुनः केनोपालिङ्गेनाभावि । दधिमुखेन गर्दभेन पृष्ठतः शब्दितं शब्दं चक्रे । किं कुर्वता दधिमुखेन । उत्प्रेक्ष्यते—इतीदृशं उपदिशतेव उपदेशं ददतेव । इतीति किम् । क्षितिप, अद्यापि न किंचिद्विनश्यति किमप्यरुचिरं भवति । तत्तस्मात् कारणात् आवासं राजमन्दिरं अनुसृत्य गत्वा अपरमेव इतरदेव किंचित्किमपि अनुष्ठानमाचरणं आचरितव्यं त्वया कर्तव्यम् । कथंभूतमनुष्ठानम् । इहास्मिन्भवे अमुत्र च भविष्यज्जन्मनि शिवकरं श्रेयस्करं प्रतिष्ठानं मूलं यस्यानुष्ठानस्य तच्छिवकरप्रतिष्ठानम् । पुनश्च केनोपालिङ्गेनाभावि । आदित्यसुतेन काकेन अपाचीनतया प्रतिकूलतया वासितं रुतं चक्रे । किं कुर्वता आदित्यसुतेन । उत्प्रेक्ष्यते—इत्यमुना प्रकारेण उपहसतेव उपहासं कुर्वतेव । इतीति किम् । हे महीपाल, परोपरोधात् पराग्रहात् अश्रेयांसि पापानि कुर्वन् विदधन् किं कोऽपि अवलोकितोऽस्ति, येन कारणेन इत्थममुना प्रकारेण अकत्थने पथि अश्लाघनीये मार्गे त्वं प्रस्थितोऽसि गन्तुं प्रवृत्तोऽसि । कथंभूतैरुपालिङ्गैः । एवमीदृशैरन्यैरपि तैस्तैः शकुनशास्त्रप्रसिद्धैरुपालिङ्गैरभावि । पुनः कथंभूतैः । सद्योदुरन्तफलप्रदायिसङ्गैः सद्यस्तत्कालं दुरन्तो दुष्टस्वभावः तस्य फलप्रदायी फलदायकः सङ्गः संगतिर्येषां तानि तथोक्तानि तैः । नियतिः केन लङ्घ्यते इति । तथा चोक्तं समन्तभद्रेण महामुनिना—'अलङ्घ्यशक्तिर्भवितव्यतेयं हेतुद्वयाविष्कृतकार्यलिङ्गा । अनीश्वरो जन्तुरहं क्रियार्तः संहत्य कार्येष्विति साध्ववादी ॥'



तत्र च सवित्र्या प्रोक्षितदक्षिणानां च ब्राह्मणानां वचनात्

सर्वेषु सत्त्वेषु हतेषु यन्मे भवेत्फलं देवि तदत्र भूयात् ।<br>
इत्याशयेन स्वयमेव देव्याः पुरः शिरस्तस्य चकर्त शस्त्र्या ॥<br>
विज्ञानिनां शिल्पविशेषभावादेवंविधान्मेऽभिनिवेशतश्च ।<br>
स हन्यमानो हि न कामवस्थां सचेतनादप्यधिकां चकार ॥<br>
पिष्टं च मांसं परिकल्प्य तस्य महानसे प्रेषितवांस्ततश्च ।<br>
अन्येद्युरम्बासहितस्य देवी सा मे व्यधाद्भोजनमादरेण ॥<br>
तया सुतेन स्नुषया च मात्रा सार्धं मुदैकत्र कृताशनस्य ।<br>
सा दुष्टधीर्मे जननीयुतस्य संचारयामास विषामिषाणि ॥<br>
वैद्याय दूताः प्रहिता हि यावद्यावद्गृहेष्वौषधमीक्ष्यते च ।<br>
जातं नृपे दृष्टिविषं जनानामिति स तावद्विससर्ज लोकम् ॥

---

तत्र च त्रिशूलिनीनिलये सवित्र्या मात्रा सह प्रोक्षितदक्षिणानां ब्राह्मणानां वचनात्—

**सर्वेष्वित्यादि** । इतीदृशेन आशयेन स्वयमेव आत्मनैव यशोधरो देव्याः पुरस्तस्य कुर्कुटस्य शिरो शस्त्र्या छुरिकया कृत्वा चकर्त संचिच्छेद । इतीति किम् । हे देवि चण्डिके, सर्वेषु सत्त्वेषु हतेषु यत्किमपि फलं भवेत् तत्फलं अत्र मे मम भूयाद्भवतु । अतिशयालंकारः ॥

**विज्ञानिनामित्यादि** । स कुर्कुटः हन्यमानो हिंस्यमानः सन् सचेतनात् जीवकुर्कुटादपि अधिकां कां अवस्थां न चकार । अपि तु सर्वामप्यवस्थां चकार । कस्मात् । विज्ञानिनां लेपकराणां शिल्पविशेषभावात् विज्ञानिनामतिशयत्वात् । न केवलं तस्मात् । एवंविधात् सर्वजीववधसंकल्पात् मे ममाभिनिवेशतश्च अभिप्रायाच्च । व्यतिरेकालंकारः ॥

**पिष्टमित्यादि** । तस्य कुर्कुटस्य पिष्टं च मांसं परिकल्प्य महानसे रसवतीगृहे अहं प्रेषितवान् । ततश्च तस्माद्दिवसात् अनन्तरमन्येद्युरन्यस्मिन्नहनि सा देवी अमृतमतिरम्बासहितस्य मातृसहितस्य मे मम आदरेण भोजनं व्यधात् चक्रे । रूपकालंकारः ॥

**तयेत्यादि** । सा अमृतमतिर्दुष्टधीः पापिष्ठा मे मम विषामिषाणि विषभोजनानि संचारयामास प्रवेशितवती । कथंभूतस्य मे । जननीयुतस्य । मम मदीयजनन्याश्च विषभोजनं दत्तवतीत्यर्थः । कथंभूतस्य मे । मात्रा सार्धं मुदा हर्षेण एकत्र कृताशनस्य एकस्मिन् भाजने उपविष्टस्य । न केवलं मात्रा कृताशनस्य, किं तु तया प्रसिद्धया कुसुमावलीनामधेयया स्नुषया वध्वा सुतेन च यशोमतिनाम्ना पुत्रेण च सार्धं सह कृताशनस्य उपविष्टस्य । यशोमतिकुसुमावल्योरेकं भाजनम्, चन्द्रमतियशोधरयोश्चैकं भाजनमित्यर्थः । सहोक्त्यलंकारः ॥

**वैद्यायेत्यादि** । यावत् यावत्कालं वैद्याय दूताः प्रहिताः, यावत् यावत्कालं गृहेषु

एकान्तमालोक्य विकीर्य केशान्हा नाथ नाथेति गिरं गिरन्ती ।
निपत्य मे वक्षसि दुःखितेव रुरोध कण्ठं यमपाशिकेव ॥

अन्येऽपि ये स्त्रीष्वनुरक्तचित्ता विश्वासमायान्ति नराः प्रमत्ताः ।
प्रायो दशेयं ननु तेष्ववश्यं नदीतटस्थेष्विव पादपेषु ॥

आकल्पं परिपूर्णकामितफलाः कामं भवन्तु प्रजाः
क्षोणीशाः प्रतिपालयन्तु वसुधां धर्मानुबद्धोत्सवाः ।
सन्तः सन्तु सरस्वतीप्रणयिनः सार्धं श्रियः संगमै-
र्भूयादेष जिनोक्तिमौक्तिकलतारामस्त्रिलोकीमुदे ॥

---

औषधं चेक्ष्यते, तावत् तावत्कालं इति एतस्मात् कारणात् लोकं विससर्ज स्म । स्म इति किलार्थे । ननु अतीतार्थे परोक्षतयैव अतीतार्थस्य प्रयुक्तत्वात् 'अन्यथा स्मेनातीते' इति वचनात् वर्तमानो प्राप्नोति । इतीति किम् । नृपे राजनि जनानां लोकानां दृष्टिविषं जातं समुत्पन्नम् । जात्यलंकारः ॥

**एकान्तमित्यादि** । एकान्तं अडक्षीणमालोक्य दृष्ट्वा केशान् विकीर्य । हा इति खेदे । नाथ नाथ इति गिरं वाणीं गिरन्ती कथयन्ती मे मम वक्षसि दुःखितेव निपत्य यमपाशिकेव यमपाशिकासदृशी कण्ठं रुरोध दीनां चम्पितवती । तदन्तैः पीडयित्वा वादिभवतीति पुष्पदन्तः(?) । उपमालंकारः ॥

**अन्येऽपीत्यादि** । ये नरा अन्येऽपि न केवलं यशोधरः अपरेऽपि स्त्रीषु विषये अनुरक्तचित्ता अनुरागिताः सन्तः प्रमत्ता असावधाना विश्वासमायान्ति विश्रब्धा भवन्ति, अवश्यं निश्चयेन इयं दशा ईदृशी अवस्था प्रायो बाहुल्येन तेषु पुरुषेषु स्ववसितेषु भवति । कथंभूतेषु । नदीतटस्थेषु तरङ्गिणीतटवर्तिषु पादपेष्विव वृक्षेष्विव । उपमालंकारः ॥

**आकल्पमित्यादि** । एष प्रत्यक्षीभूतः अमृतमतिमहादेवीदुर्विलसनो जिनोक्तिमौक्तिकलतारामः जिनवचनमुक्ताफलवल्लीवनं त्रिलोकीमुदे त्रिभुवनानन्दाय भूयाद्भवतु । पुनश्च किं भूयात् । प्रजाः लोकाः आकल्पं प्रलयकालपर्यन्तं परिपूर्णकामितफलाः कामं भवन्तु संजायन्ताम् । क्षोणीशाः वसुधां प्रतिपालयन्तु रक्षन्तु । कथंभूताः क्षोणीशाः । धर्मानुबद्धोत्सवा धर्मेषु पूजादानादिषु अनुबद्धो उत्सव आनन्दो यैस्ते तथोक्ताः । सन्तो विद्वांसः सरस्वतीप्रणयिनः जिनवचनस्नेहिनः सन्तु । कथम् । सार्धं सह । कैः । श्रियः संगमैर्लक्ष्म्याः संयोगैः । अतिशयालंकारः ॥



मया वागर्थसंभारे भुक्ते सारस्वते रसे ।
कवयोऽन्ये भविष्यन्ति नूनमुच्छिष्टभोजनाः ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्य-
पद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा
विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महा-
काव्येऽमृतमतिमहादेवीदुर्विलसनो नाम
चतुर्थ आश्वासः ॥

---

**मयेत्यादि** । मया सोमदेवेन वागर्थसंभारे शब्दसंस्कारे शब्दार्थसंस्कारसहिते सारस्वते रसे शास्त्रामृतरसे भुक्ते आस्वादिते सति येऽन्ये कवयो भविष्यन्ति सदुक्तशब्दार्थेभ्यो येऽन्यत् किंचिदपूर्वशब्दमर्थं च विदधन्ते ते कवयः नूनमिति निश्चयेन उच्छिष्टभोजनाः फेलाभुज इव उच्छिष्टं भोक्ष्यन्ते । रूपकोपमालंकारः ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये अमृतमतिमहादेवीदुर्विलसनो नाम चतुर्थ आश्वासः । अयममृतमतिमहादेवीदुर्विलसनो नाम चतुर्थ आश्वासस्तस्यायं परिच्छेदः समाप्त इत्यर्थः । शेषं व्याख्यानं पूर्ववद्वेदितव्यम् ॥

इति श्रीविद्यानन्दिभट्टारकप्रियशिष्येण भट्टारकश्रीमल्लिभूषणगुरुपरमाभीष्टगुरुभ्रात्रा श्रीलक्ष्मीचन्द्रभट्टारकाभिमतेन सिंहनन्दिगुरुमुहुःप्रार्थनया यतिसिद्धान्तसागरव्याख्याकृतिनिमित्तं भट्टश्रीनीलकण्ठविद्वद्ब्रह्मराक्षसनामरुद्रटादिनवनवतिमहावादिलब्धविजयेन तर्कव्याकरणच्छन्दोलंकारसिद्धान्तसाहित्यादिशास्त्रनिपुणमतिना प्राकृतव्याकरणाद्यनेकशास्त्ररचनाचञ्चुना सूरिश्रीश्रुतसागरेण विरचितायां यशस्तिलकचन्द्रिकाभिधानायां यशोधरमहाराजचरितचम्पूमहाकाव्यटीकायाममृतमतिमहादेवीदुर्विलसननाम्नश्चतुर्थस्याश्वासस्य चन्द्रिका परिसमाप्ता ॥

---

पञ्चम आश्वासः।

श्रीमानशेषभुवनाधिपतिर्जिनेन्द्र-
श्चन्द्रप्रभस्तव तनोतु मनीषितानि ।
यद्वीक्षणादपि मनःकुमुदाकरः स्या-
ल्लोकस्य लोचनदलामृतपूरसारः ॥
त्वं सर्वस्य सदागतिर्जिनपते त्वं नाथ कर्मान्तभू-
स्त्वं दाता वरदस्त्वमद्भुतरुची लोकेश ते ज्योतिषी ।
त्वन्नामामृतमत्र योगिविषयं त्वं देव तेजः परं
त्वं चानङ्गन सर्वगोऽपि नियतः पायाः समस्तो जगत् ॥

---

अथेदानीं श्रीयशोधरमहाराजस्य भवभ्रमणवर्णनो नाम पञ्चम आश्वासः श्रीसोमदेवसूरिणा प्रारभ्यमाणो यस्तस्यादौ अभीष्टदेवनमस्कारार्थं **श्रीमानित्याद्याह**—चन्द्रप्रभो जिनेन्द्रस्तव भवतः मनीषितानि श्रेयांसि तनोतु वर्धयतु । कथंभूतश्चन्द्रप्रभः । श्रीमान् बहिरन्तर्लक्ष्मीविराजमानः । पुनः कथंभूतः । अशेषभुवनाधिपतिः अशेषाणि भूर्भुवःस्वर्लक्षणानि त्रीणि जगन्ति तेषामधिपतिः स्वामी । कोऽसौ चन्द्रप्रभः । यद्वीक्षणादपि आस्तां तावत्स्नपनपूजनस्तवनजपनध्यानादिकम्, यस्य स्वामिनः वीक्षणादपि मनःकुमुदाकरः चित्तकैरववनं लोकस्य भव्यजीवगणस्य लोचनदलामृतपूरसारः लोचनानि तान्येव दलानि तेषाममृतपूरः अमृतधाराप्रवाहस्तेन सारः सुकृतार्थः मोक्षामृतभृत(?) स्यादित्यर्थः । उपमालंकारः ॥

**त्वमित्यादि** । हे जिनपते, त्वं भवान् सर्वस्य प्राणिगणस्य सदागतिः सर्वकालमेव शरणः । अर्तिमथनसमर्थ इत्यर्थः । हे नाथ त्रिभुवनप्रभो, त्वं भवान् कर्मान्तभूः अष्टकर्मविनाशभूमिः । हे भगवन्, त्वं दाता अभ्युदयनिःश्रेयससुखदायकः । त्वं वरदः वाञ्छितवरदायकः । हे लोकेश हे त्रिभुवनपते, ते तव ज्योतिषी ज्ञानदर्शनलक्षिते चक्षुषी वर्तेते । कथंभूते ज्योतिषी । अद्भुतरुची आश्चर्यकारिणी रुक् दीप्तिः लोकालोकप्रकाशिका ययोर्ज्योतिषोस्ते अद्भुतरुची । हे भगवन्, त्वन्नामामृतं भवतो नामैव अमृतं विद्यमानममृतमरणं(?) यत्र तत्त्वन्नामामृतं परमनिर्वाणसुखकारणत्वात् अत्र अस्मिन् संसारे योगिविषयं योगिनां गौतमादीगणधरादीनां विषयो गम्यता यत्र तद्योगिविषयम् । हे देव परमाराध्य, त्वं भवान् परमुत्कृष्टं तेजोऽग्निरूपः । कर्ममलकलङ्कदाहकत्वात् । हे अनङ्गन, न विद्यमानाङ्गना स्त्री यस्य सोऽनङ्गनस्तस्य संबोधनं हे तथोक्त । त्वं च भवांश्च सर्वगोऽपि ज्ञानेन लोकालोकव्यापकोऽपि सन् नियतो मर्यादीभूतः । चरमशरीरप्रमाणत्वात् । जगत् जगतिस्थितप्राणिगणं समस्तः अज्ञानात् पायाः रक्ष । अयं भावः—क्षितिजलपवनहुताश-



तदन्वहो सकलदिक्सीमन्तिनीसीमन्तसंतानितप्रतापसिन्दूर दुरितविदूर, तस्माद्दुरन्तव्यसनव्यालव्यासङ्गपाशाद्दुरभिनिवेशात्

हिमालयाद्दक्षिणदिक्कपोलः शैलः सुवेलोऽस्ति लताविलोलः ।
चकार यः कान्ततयामरीणां वीतस्पृहं नाम नगेषु चेतः ॥

---

नयजमानाकाशसोमसूर्यादीश्च शंभोरष्टमूर्तयस्तस्मै निरासार्थं परमेश्वरस्य चन्द्रप्रभस्य अष्टमूर्तिगमितवृत्तमिदं युक्तम् । सदागतिरिति पदेन पवनमूर्तिः सूचितः । कर्मान्तभूरित्यनेन क्षितिमूर्तित्वं सूचितम् । अस्यायमर्थः—कर्मणामन्तः कर्मक्षयस्तस्य भूः प्रायो गणधरादिव समूहः भव्यगणो वा तं अवति रक्षति इति कर्मान्तभूः । कर्मान्तभू एतस्मात् पदात् 'अव रक्ष पालने' इत्यस्य धातोर्वर्तते तेन कर्मान्तभू अवतीति कर्मान्तभूः । 'क्विप्' इत्यनेन क्विपि प्रत्यये 'सरिश्विव्यस्तिविमविज्वरित्वरामुपधायाः' इत्यनेन अकारेण सह वकारस्य ऊद्दत्वादेश उशस्तेन समानलक्षणे संधौ कृते सति कर्मान्तभूरिति शब्दः संजायते । 'वेर्लोपोऽपृक्तस्य' इति वचनात् क्विप्प्रतीयते । पश्चात् सौ सति विसर्गः संजायते । तेन कर्मान्तभूरिति निष्पद्यते । शब्दश्लेषोऽत्र । दाता इत्यनेन यजमानत्वं सूचितम् । ज्योतिषी इत्यनेन सोमसूर्यौ कथितौ । त्वन्नामामृतमूर्त्यत्र जलमूर्तित्वं प्रतिपादितम् । परं तेज इत्यनेन पदेन अग्निमूर्तित्वं भगवतः प्रतिपादितम् । सर्वगोऽपि इत्यनेन पदेन अनङ्गन इति संबोधनपदेन वा आकाशमूर्तित्वमुक्तमिति ज्ञातव्यम् । रूपकालंकारः, श्लेषालंकारश्च कथ्यते ॥

तदनु तत्पश्चात् विषप्रयोगमारणादनन्तरं अहो सकलदिक्सीमन्तिनीसीमन्तसंतानितप्रतापसिन्दूर सकलाश्च ता दिशश्च ता एव सीमन्तिन्यः स्त्रियस्तासां सीमन्तेषु शिरस्थकेशमार्गेषु संतानितो दीर्घीकृतः प्रताप एव सिन्दूरो गर्भनागो यस्य स तथोक्तस्तस्य संबोधनं हे तथोक्त । हे दुरितविदूर पापाद्विप्रकृष्ट । तस्मात् दुरभिनिवेशात् कुर्कुटवधपापाभिप्रायात् । कथंभूतात् दुरभिनिवेशात् । दुरन्तव्यसनव्यालव्यासङ्गपाशात् दुरन्तः दुःस्वभावं यद्व्यसनं दुःखोपपातस्तदेव व्यालो दुष्टगजः कालसर्पो वा तस्य व्यासङ्गः संगमः स एव पाशो बन्धनं यत्र दुरिदभिनिवेशे स तथोक्तस्तस्मात् । तस्याचलस्य सुवेलपर्वतस्य ऐशान्यां दिशि ईशानकोणे उपत्यकायां पर्वतस्य समीपवर्तिन्यां भूमौ निसर्गात् उदकवत्यां स्वभावेन सजलायां यः पादपोऽस्ति वृक्षो वर्तते, तत्र वृक्षे प्रचाकिनां कुले मयूराणां कुले अहं यशोधरः अवाप्तजन्मा संप्राप्तजन्मा अभूवम् । इति क्रियाकारकसंबन्धः । तस्य पर्वतस्य समीपे या नदी वर्तते, तस्या नद्यास्तटे यो वृक्षो वर्तते, तस्मिन् मयूरकुले अहं मयूरो जात इत्यर्थः ॥

तस्य कस्य अचलस्य । **हिमालयादित्याह**—यः शैलः सुवेलो नाम पर्वतोऽस्ति । कथंभूतः शैलः । हिमालयात् गङ्गाप्रसूतिपर्वतात् दक्षिणदिक्कपोलः दक्षिणस्या दिशः कपोल इव गण्डस्थल इव वर्तते । कथंभूतः शैलः । लताविलोलो लता विलोला मन्दवातकम्पिता-

नभः परिच्छेत्तुमिवोद्यतस्य द्रष्टुं दिगन्तानिव विस्तृतस्य ।
ऊर्ध्वत्वतिर्यक्त्वमहत्त्वमुच्चैर्न शक्यते यस्य जनेन मातुम् ॥
नमेरुसंतानकपारिजातमाकन्दमन्दारमनोहरासु ।
यस्यामराः केलिकृतः स्थलीषु स्मरन्ति नो नन्दनकाननस्य ॥
फलैस्तरूणाममृतानुकूलैर्मणिप्रकाशैश्च दरीनिवेशैः ।
दिवौकसां सद्मसुखानि यत्र लोकः स्थितः प्रार्थयते न जातु ॥
यत्तुङ्गशृङ्गाग्रविलम्बिबिम्बः पर्यन्तनक्षत्रमणिप्रचुम्बः ।
आभाति राकातुहिनांशुमाली प्रसाधितं छत्रमिवाम्बरस्य ॥

---

श्चपला यत्र स तथा । यः शैलः कान्ततया मनोहरतया अमरीणां देवाङ्गनानाम् । नामेति संभावनायाम् । नगेषु पर्वतेषु वीतस्पृहं काङ्क्षारहितं चेतो हृदयं चकार कृतवान् । रूपकातिशयालंकारः ॥

**नभः परिच्छेत्तुमित्यादि** । यस्य सुवेलशैलस्य ऊर्ध्वत्वतिर्यक्त्वस्य च महत्त्वं गुरुत्वं उच्चैरतिशयेन मातुं जनेन न शक्यते न समर्थो भूयते । कथंभूतस्य शैलस्य । तत्कारणगर्भितं विशेषणमाह—नभ आकाशं परिच्छेत्तुमिव वा भङ्क्तुमिव उद्यतस्योर्ध्वंगतस्य । कथंभूतस्य । दिगन्तान् द्रष्टुमिव विस्तृतस्य दीर्घतां प्राप्तस्य । उत्प्रेक्षालंकारः ॥

**नमेर्वित्यादि** । यस्य सुवेलशैलस्य स्थलीषु उन्नतप्रदेशेषु केलिकृतः क्रीडाकारिणः अमरा देवा नन्दनकाननस्य स्वर्गलोकवनस्य नो स्मरन्ति न अधिपन्ति । 'स्मृत्यर्थं कर्मणि' इति वचनात् कर्मणि षष्ठी । कथंभूतासु स्थलीषु । नमेरुसंतानकपारिजातमाकन्दमन्दारमनोहरासु नमेरवश्च, संतानकाश्च, पारिजाताश्च । एते त्रयोऽपि देववृक्षविशेषा मानवतरुविशेषाश्च कथ्यन्ते । माकन्दाश्च आम्रतरवः, मन्दाराश्च देववृक्षविशेषा पारिभद्राश्च, तैर्मनोहरा हृदयानुरञ्जिकास्तासु । समुच्चयातिशयालंकारः ॥

**फलैरित्यादि** । यत्र सुवेलपर्वते स्थितो लोको दिवौकसां सद्मसुखानि विमानसौख्यानि जातु कदाचित् न प्रार्थयते । कैः कृत्वा सद्मसुखानि न प्रार्थयते । तरूणां फलैः कृत्वा । कथंभूतैः फलैः । अमृतानुकूलैः अमृतवदनुकूलानि स्वादुवन्ति तानि तैः । पुनः कैः कृत्वा । दरीनिवेशैर्गुहास्थानैः । कथंभूतैः । मणिप्रकाशैः रत्नतेजोवद्भिः । हेतूपमातिशयालंकारः ॥

**यत्तुङ्गेत्यादि** । यस्य सुवेलपर्वतस्य तुङ्गं यत् शृङ्गं तस्याग्रे उपरितनभागे विलम्बी स्थितिकरः बिम्बो मण्डलं यस्य राकातुहिनांशुमालिनः स यत्तुङ्गशृङ्गाग्रविलम्बिबिम्बः । एवंगुणविशिष्टो राकातुहिनांशुमाली पूर्णिमाचन्द्रः आभाति शोभते । कथंभूतो राकातुहिनांशुमाली । पर्यन्तनक्षत्रमणिप्रचुम्बः पर्यन्तेषु नक्षत्राण्येव मणयस्तान् प्रचुम्बतीति । कथमिव तुहिनांशुमाली । अम्बरस्य प्रसाधितं छत्रमिव । उपमालंकारः ॥



यश्चित्रमेघाम्बरमण्डिताङ्गः समन्ततश्चामरचारुसङ्गः ।
पूषातपत्रो द्विजगीतकीर्तिरिन्द्रोत्सवस्येव बिभर्ति लक्ष्मीम् ॥

यश्च क्वचित्कटिकटकदंष्ट्रोत्पाटिताटनिपुटकिनीकन्ददन्तुरदरवदनविन्यासः साट्टहास इव, क्वचिन्निकटतटतटाकोदरदरद्देहदौलेयकपालसंकुलः प्रतिपन्नकपालिकुल इव, क्वचिन्निखिलतरूपनीतानेकनेत्रसंततिः शतधृतिरिव, क्वचित्प्रान्तप्रवृत्तापगाप्रवाहविषमवलनः पवनाशन इव, क्वचित्केसरिकिशोरखरनखरोत्खातकरिकुम्भस्थलोच्छलन्मुक्ताफलजालजटिलवल्लरीप्र-

---

**यश्चित्रेत्यादि** । यः पर्वतः इन्द्रोत्सवस्य लक्ष्मीं बिभर्तीव धरतीव । कथंभूतो यः । चित्रमेघाम्बरमण्डिताङ्गः चित्रा नानावर्णा ये मेघास्त एव अम्बराणि तैर्मण्डितमङ्गं यस्य स तथोक्तः । इन्द्रोत्सवपक्षे चित्रमेघानामावा(?)वसुविशेषः । अत एव इन्द्रसवास इति नाम वर्तते । पुनः कथंभूतो यः । समन्ततश्चामरचारुसङ्गः समन्ततः चामराणां चमरीमृगाणां समूहेन चारुसङ्गः । इन्द्रोत्सवपक्षे अमराणां चारुः सङ्गो यस्य इन्द्रोत्सवस्य स तथा । पुनः कथंभूतो यः । पूषातपत्रः पूषा श्रीभास्कर आतपत्रं यस्य । पक्षे पूषावत् सूर्यवत् तेजोविराजितं यस्य इन्द्रोत्सवस्य । पुनः कथंभूतो यः । द्विजगीतकीर्तिः द्विजैः पक्षिभिर्गीता कीर्तिर्यस्य स तथोक्तः । पक्षे द्विजैर्ब्राह्मणैर्गीता कीर्तिर्यस्य सः । श्लेषोपमालंकारः ॥

**यश्चेति** । यश्च सुवेलशैलः क्वचित् कस्मिंश्चित् स्थाने कटिकटकदंष्ट्रोत्पाटिताटनिपुटकिनीकन्ददन्तुरदरवदनविन्यासः कटिनां शूकराणां कटकं समूहस्तस्य दंष्ट्राभिरुत्पाटिता अटनिपुटकिनीनां तरलपद्मिनीनां ये कन्दा मूलानि तैर्दन्तुर उन्नतदन्तो दराणां गुहानां वदनविन्यासो यस्य पर्वतस्य स तथोक्तः । उत्प्रेक्षते—साट्टहास इव । पुनः कथंभूतः । क्वचित् निकटतटतटाकोदरदरद्देहदौलेयकपालसंकुलः तटस्य निकटे निकटतटे निकटतटवर्तीनि यानि तटाकानि सरोवराणि तेषामुदरेषु मध्येषु दरद्देहा विदार्यमाणशरीरा ये दौलेयाः दुलेः कमठ्या अपत्यानि दौलेयाः कच्छपास्तेषां कपालैः पृष्ठवंशैः संकुलो व्याप्तः स तथोक्तः । उत्प्रेक्षते—प्रतिपन्नकपालिकुल इव प्रतिपन्नमङ्गीकृतं कपालिनां रुद्राणां कुलं येन स तथा अङ्गीकृतरुद्रकुल इव । पुनः कथंभूतः । क्वचित् निखिलतरूपनीतानेकनेत्रसंततिः निखिलानां तरूणां उपनीता अनेकनेत्राणां तरुमूलानां मृगविशेषाणां च संततिः समूहो येन स तथोक्तः । उत्प्रेक्षते—शतधृतिरिव यथा इन्द्रः अनेकलोचनसहितो भवति । पुनः कथंभूतः । क्वचित् प्रान्तप्रवृत्तापगाप्रवाहविषमवलनः प्रान्ते समीपे प्रवृत्ताः प्रवहन्त्यो या आपगा नद्यस्तासां प्रवाहाणां विषमं वक्रं वलनं यत्र स तथोक्तः । उत्प्रेक्षते—पवनाशन इव सर्प इव । पुनः कथंभूतः । क्वचित् केसरिकिशोरखरनखरोत्खातकरिकुम्भस्थलोच्छलन्मुक्ताफलजालजटिलवल्लरीप्रतानः केसरिकिशोराणां तरुणसिंहानां खराः कठिना ये नखरा नखास्तैरुत्खातानि विदारितानि यानि कुम्भस्थलानि शिरःपिण्डस्थलानि तेभ्य उच्छलन्ति यानि मुक्ताफलजालानि तैर्जटिला मिश्रिताः

तानः कामिनीकुन्तलसंतान इव, क्वचिद्वनेचरसहचरीचरणनखनक्षत्रपवित्रोपत्यकानिचयः सुरशिलोच्चय इव, क्वचिन्निर्झरजलजर्जरितशिलान्तः कृतकुञ्जरतटाघातः सामन्त इव, नाकलोक इव कुशिकसुतावलोकः, शरदागम इव कृतकमलसमागमः, सरस्वतीसभादेश इव पुण्डरीकावकाशोपदेशः, समीक्षासिद्धान्त इव कपिलकुलकान्तः, शुद्धान्त इव सकञ्चुकिवृत्तान्तः, पवनमार्ग इव सदन्तोत्सर्गः, सरोवकाश इव पारापतनिवेशः,

---

वल्लरीणां वल्लीनां प्रतानाः समूहा यत्र स तथोक्तः । उत्प्रेक्षते—कामिनीनां कुन्तलसंतान इव । पुनः कथंभूतः । क्वचित् वनेचरसहचरीचरणनखनक्षत्रपवित्रोपत्यकानिचयः वनेचराणां भिल्लानां सहचरीणां ये चरणनखास्त एव नक्षत्राणि उडूनि उडवो वा तैः पवित्र उपत्यकानिचयः पर्वताधोभूमिसमूहो यस्य सः । उत्प्रेक्षते—सुरशिलोच्चय इव मेरुगिरिरिव यथा मेरुगिरिर्नक्षत्रैर्मण्डितो भवति । पुनः कथंभूतः । क्वचित् निर्झरजलजर्जरितशिलान्तः निर्झरजलेन क्षरणपयसा जर्जरितः शतखण्डीकृतः शिलानामन्तः प्रान्तो येन स तथोक्तः । उत्प्रेक्षते—सामन्त इव देशपतिरिव । कथंभूतः सामन्तः । कृतकुञ्जरतटाघातः कृतः कुञ्जरतटानां गजपार्श्वानांआघातो निष्ठुरप्रहारो येन स कृतकुञ्जरतटाघातः । पुनः कथंभूतः । कुशिकसुतावलोकः कुशिकसुतानामुलूकानामवलोको लोचनद्युतिर्यैन स तथा । उत्प्रेक्षते—नाकलोक इव यथा नाकलोकः कुशिकसुतस्य इन्द्रस्य अवलोकः दर्शनं यत्र स तथोक्तः । पुनः कथंभूतः । कृतकमलसमागमः कृतो विहितः कमलानां[1] मृगाणां समागमः संमुखागमनं येन स तथा । उत्प्रेक्षते—शरदागम इव यथा शरदागमः कृतकमलसमागमः विहिताब्जसमागमो भवति । पुनः कथंभूतः । पुण्डरीकावकाशोपदेशः पुण्डरीकाणां व्याघ्राणां अवकाशस्य उप समीपे देशः प्रदेशो यत्र स तथोक्तः । उत्प्रेक्षते—सरस्वतीसभादेश इव यथा सभादेशः पुण्डरीकस्य श्वेतकमलस्य अवकाशेन(?) अभि यथा वा स्यात् उपदेशो व्याख्यानं यत्र व्यञ्जकापरपर्यायः । पुनः कथंभूतः । कपिलकुलकान्तः कपिलानां मर्कटानां कुलैः समूहैः कान्तः, अथ वा मर्कटकुलानां कान्तोऽभीष्टः । उत्प्रेक्षते—समीक्षासिद्धान्त इव यथा समीक्षासिद्धान्तं सांख्यशास्त्रं कपिलकुलस्य शिष्यवर्गस्य कान्तोऽभीष्टो भवति । पुनः कथंभूतः । सकञ्चुकिवृत्तान्तः सकञ्चुकिनां सर्पाणां वृत्तान्तः कृतकुण्डलीमध्यो यस्य स तथा । उत्प्रेक्षते—शुद्धान्त इव यथा शुद्धान्तो नः (?) परं सकञ्चुकिवृत्तान्तो भवति स्थापत्यवार्तासहितो भवति । पुनः कथंभूतः । सदन्तोत्सर्गः सत्समीचीनः दन्तानां तटानां उत्सर्गः उत्कृष्टसृष्टिर्यस्य स तथा । उत्प्रेक्षते—पवनमार्ग इव यथा पवनमार्ग आकाशः सदन्तोत्सर्गः समीचीनव्याप्तिको भवति । पुनः कथंभूतः । पारापतनिवेशः पारापतानां कलरवाणां निवेशः स्थितिर्यत्र स तथा । उत्प्रेक्षते—सरोवकाश इव

---

१. 'कमलस्तु मृगान्तरे' इति हैमः.



कात्यायनीनिलय इव विहितहेरम्बप्रणयः, पिङ्गलेक्षणावास इव शाक्करनिवासः, कल्याणापघन इव समदनः, अनात्मवानपि सचेतकः, अबीभत्सुरपि कपिध्वजचिह्नः, अमेरुशरासनोऽपि सदुर्गः, अमनसिजरसोऽपि संजातभोगिनीसङ्गः, अरेवतीपतिरपिताललाञ्छनः, अवैवधिकोऽपि विहङ्गिकाध्यासितस्कन्धः, अकुसुमायुधोऽपि सपुष्पबाणः,

---

यथा सरोवकाशः पारापतनिवेशो भवति । पुन कथंभूतः । विहितहेरम्बप्रणयः विहितो हेरम्बैर्महिषैः प्रणयो यत्र स तथा । उत्प्रेक्षते—कात्यायनीनिलय इव यथा कात्यायन्या निलयः विहितहेरम्बप्रणयो कृतविघ्नराजस्नेहो भवति । पुनः कथंभूतः । शाक्करनिवासः शाक्कराणां गवां निवासः शाक्करनिवासः । उत्प्रेक्षते—पिङ्गलेक्षणावास इव यथा पिङ्गलेक्षणावासो रुद्रावासः शाक्करनिवासो वृषभनिवासो भवति । पुनः कथंभूतः । समदनः सह मदनै राजवृक्षैर्वर्तते इति समदनः । उत्प्रेक्षते—कल्याणापघन इव यथा कल्याणापघनः विवाहदिनशरीरं समदनो भवति, समानः सूरो वा । पुनः कथंभूतः । अनात्मवानपि सचेतकः ननु यः अनात्मवान् अजितेन्द्रियः स सचेतकः आत्मज्ञानवान् कथं भवति । विरुद्धमेतत्परिह्रियते—अनात्मवान् अचेतः सचेतको हरीतकीवृक्षसहितः । पुनः कथंभूतः । अबीभत्सुरपि कपिध्वजचिह्नः ननु यो अबीभत्सुः बीभत्सुना पार्थेन रहितः स कपिध्वजचिह्नः वानरसहितध्वजः कथं भवति । विरुद्धमेतत्परिह्रियते—अबीभत्सुः अक्रूरः कपयो मर्कटा ध्वजास्तरवश्चिह्नं यस्य ।पुनः कथंभूतः ।अमेरुशरासनोऽपि सदुर्गः ननु यो अमेरुशरासनो अरुद्रः स सदुर्गः पार्वतीसहितः कथं भवति । विरुद्धमेतत्परिह्रियते—अमेरवो न मेरुवृक्षाः शराश्च बाणतृणानि असनाश्च सर्जकवृक्षाः प्रियालवृक्षाश्च यत्र सः अमेरुशरासनोऽपि निश्चयेन स दुर्गो विषमप्रदेशसहितः । पुनः कथंभूतः । अमनसिजरसोऽपि संजातभोगिनीसङ्गः ननु यो अमनसिजरसः कामरागरहितः स संजातभोगिनीसङ्गः उत्पन्नभोग्यस्त्रीसङ्ग अवरुद्धस्त्रीसंगमः कथं भवति । विरुद्धमेतत्परिह्रियते—पर्वतस्य मनसिजरसो भवति अचेतनत्वात् । संजातभोगिनीसङ्गः उत्पन्नसर्पिणीसङ्गः सुखम् । पुनः कथंभूतः । अरेवतीपतिरपि ताललाञ्छनः ननु यः अरेवतीपतिः बलभद्रो न भवति स ताललाञ्छनस्तालवृक्षसहितध्वजः कथं भवति । विरुद्धमेतत्परिह्रियते—अरेवतीपतिर्बलभद्रो न भवति रेवतीक्षेत्ररहितस्तदुपलक्षणं अन्येषामपि क्षेत्राणां अवस्थानत्वात् 'शिलायां सस्यं न भवति' इति वचनात् । ताललाञ्छनस्ताडवृक्षोपलक्षितः । पुनः कथंभूतः । अवैवधिकोऽपि विहङ्गिकाध्यासितस्कन्धः ननु यः अवैवधिको न भवति स विहङ्गिकाध्यासितस्कन्धः कावधाकावेन समाश्रितस्कन्धः(?) कथं भवति । विरुद्धमेतत्परिह्रियते—न विद्यते वैवधिकं तारोद्यसमूहो यस्य । विहङ्गिकाभिः पक्षिणीभिरध्यासितस्कन्धः समाश्रिततटप्रदेशः । पुनः कथंभूतः । अकुसुमायुधोऽपि सपुष्पबाणः ननु यः अकुसुमायुधः कामदेवो न भवति स पुष्पबाणः कुसुमशरः कथं भवति । विरुद्धमेतत्परिह्रियते—अकुरभूमिः सुष्ठु मा शोभा यस्य सुमः आस-

किं च ।

पाताले पादमूलोपलविलसदहिव्यूहवृत्तान्तकान्त-
स्तिर्यक्प्राग्भारभागाश्रयशबरवधूबन्धुराधित्यकान्तः ।
ऊर्ध्वं गन्धर्वरामारतिरभसभरोल्लोलचूलाकराल-
स्त्रैलोक्यालोक्यलक्ष्मीर्जयति गिरिरयं मेरुलीलासरालः ॥

तस्य सुरसुन्दरीसमाजसेवितसकलमेखलस्याचलस्यैशान्यां दिशि निसर्गादुदकवत्यामुपत्यकायामस्ति भो भुवनत्रयीव्यवहाराहितागण्यगुणपण्य, पुण्यजनानन्दावापः पादपः । यः खल्वनेकविकिरकुलकामिनीनिशितशिखोल्ले-

---

मन्तात् युधः सिंहगजादीनां युधः संग्रामो यत्र स अकुसुमायुधः सह पुष्पैः वर्तते बाणास्तरुविशेषा यत्र ॥

किं चास्ति विशेषः । **पाताले इत्यादि** । अयं गिरिरेष पर्वतो जयति । कथंभूतः । मेरुलीलासरालः मेरुपर्वतशोभासंयुक्तः । कथंभूतोऽयं गिरिस्तत्कारणगर्भितं विशेषणमाह—पाताले पर्वतस्य अधस्तनभागे पादमूलोपलविलसदहिव्यूहवृत्तान्तकान्तः पादमूलस्य ये उपलास्तत्र विलसन्तः क्रीडन्तो ये अहिव्यूहाः सर्पसमूहास्तेषां वृत्तान्तेन कुण्डलीकृतशरीरपर्वतेन कान्तो मनोहरः जलस्वभावे, मेरुपक्षे नागदेवकथामनोहरः । पुनः कथंभूतः । तिर्यक्प्राग्भारभागाश्रयशबरवधूबन्धुराधित्यकान्तः तिर्यक्प्राग्भारस्य तिरश्चीनविस्तारस्य ये भागाः प्रदेशास्तत्र आश्रयो यासां शबरवधूभिः किरातकामिनीभिर्बन्धुरा या अधित्यकार्धभूमिस्तस्या अन्तो यस्य सः, मेरुपक्षे वरसहिता या वध्वः अमराङ्गनाविद्याधर्यादयस्ताभिर्बन्धुरः अधित्यकाया अन्तः पर्यन्तो यस्य । पुनः कथंभूतः । ऊर्ध्वं उर्ध्वप्रदेशेषु ये गन्धर्वा गायनास्तेषां रामास्तासां रतिरभसभरेण संभोगक्रीडावेगातिशयेन उल्लोला चपला या चूला अग्रं तया कराल उन्नतः, मेरुरपि गन्धर्वरामारतिमान् भवति । पुनः कथंभूतः । त्रैलोक्यालोक्यलक्ष्मीः त्रैलोक्यस्य अधोमध्योर्ध्वलक्षणस्य आलोक्या निरीक्षणीया लक्ष्मीः शोभा यस्य स तथा । हेतूपमालंकारः ॥

भो भुवनत्रयीव्यवहाराहितागण्यगुणपण्य भुवनानां त्रयी त्रैलोक्यं तस्या व्यवहारा आहितमाचरितं अगण्यं गणनातीतं गुणपण्यं यस्य स तस्य संबोधनं हे तथोक्त मारदत्तमहाराज, तस्य पूर्वोक्तवर्णनस्य अचलस्य ऐशान्यां दिशि ईशानदिक्कोणे निसर्गात् उदकवत्यां उपत्यकायां पर्वतासन्नभूमौ पादपोऽस्ति । कथंभूतः पादपः । पुण्यजनानन्दावापः पुण्यजनानांयक्षाणां आनन्दस्य आवापः । कथंभूतस्याचलस्य । सुरसुन्दरीसमाजसेवितसकलमेखलस्य । यः पादपः कथंभूतः । खलु अनेकविकिरकुलकामिनीनिशितशिखोल्लेखनखमुखविलिख्यमानशाखाभुजशिखरः······················ शिखानां चूलिकानां उल्लेखा अग्राणि तैरुपलक्षितानि नखमुखानि तैर्विलिख्यमानानि चुण्ट्यमानानि शाखानां



खनखमुखविलिख्यमानशाखाभुजशिखरः, शिखरशिखाडम्बरितनिबिडनीडक्रीडदण्डजडिम्भतुण्डखण्ड्यमानकुपलपर्यन्तः, कुपलपर्यन्तसंचरच्चारणचमूविमानमणिकिङ्किणीजालविलुण्ठितविटपाग्रपल्लवपुटपटलः, पल्लवपुटपटलान्तरालखेलद्वाचालकीरकुटुम्बिनीकृतकितवालापविस्मापितपथिकसार्थः, पथिकसार्थकथारथायातमिलितानेकदेशिकोचितविचित्रवार्ताकर्णनोदीर्णवचनवनदेवतोत्तरलतरलहस्ताहूयमानसहचरीनिचयः, सहचरीनिचयकरकिशलयसंवाहनसुखसुप्तागन्तुकलोकोपसेव्यमानबहलशीतलच्छायाच्छन्नतलदेशः, छायाच्छन्नतलदेशाश्रयमूर्छदतुच्छवाञ्छागच्छदविच्छिन्नखिन्ना-

---

लतानां भुजशिखराणि यस्य स तथोक्तः । पुनः कथंभूतः । शिखरशिखाडम्बरितनिबिडनीडक्रीडदण्डजडिम्भतुण्डखण्ड्यमानकुपलपर्यन्तः शिखरस्य पादपशिखरस्य शिखा अग्राणि तत्र आडम्बरितानि विस्तृतानि निबिडानि यानि नीडानि मालकास्तत्र क्रीडन्तो ये अण्डजाः पक्षिणस्तेषां डिम्भास्तेषां तुण्डानि तैः खण्ड्यमानाश्छेद्यमानाः कुपलपर्यन्ता यस्य स तथोक्तः । पुनः कथंभूतः । कुपलपर्यन्तसंचरच्चारणचमूविमानमणिकिङ्किणीजालविलुण्ठितविटपाग्रपल्लवपुटपटलः·······································
देवविशेषसैन्यव्योमयानानि तेषां मणिकिङ्किणीजालानि रत्नजडितसुवर्णक्षुद्रघण्टिकासमूहास्तैर्विलुण्ठितानि त्रोटितानि विटपाग्राणां शाखाकटप्रूणां पल्लवपुटपटलानि यस्य स तथोक्तः । पुनः कथंभूतः । पल्लवपुटपटलान्तरालखेलद्वाचालकीरकुटुम्बिनीकृतकितवालापविस्मापितपथिकसार्थः पल्लवपुटपटलान्तरालेषु प्रवालयोगसमूहमध्येषु खेलन्त्यः क्रीडन्त्यो वाचाला बहुवचना याः कीरकुटुम्बिन्यः शुककामिन्यस्ताभिः कृता विरचिता ये कितवालापाः धूर्तमिथोभाषणानि तैर्विस्मापिता आश्चर्यं प्रापिताः पथिकसार्था यत्र पादपे स तथोक्तः । पुनः कथंभूतः । पथिकसार्थकथारथायातमिलितानेकदेशिकोचितविचित्रवार्ताकर्णनोदीर्णवचनवनदेवतोत्तरलतरलहस्ताहूयमानसहचरीनिचयः पथि मार्गे चरन्ति पथिकाः सह अर्थेन धनेन वर्तन्ते इति सार्था ये लोकास्तेषां कथा एव रथा जिह्वारथास्तैरायाता आगता···············स्तेषां उचिताः प्रस्तावागता विचित्राश्चमत्कारका या वार्ताः किंवदन्त्यस्तासां आकर्णनेन उदीर्णवचना उल्बणवाचो या वनदेवतास्तासामुत्तरलाश्चपला ये तरलहस्ताः पाणयस्तैराहूयमानाव्याह्रियमाणाः सहचरीणां वनदेवभार्याणां निचयः समूहो यत्र स तथोक्तः । पुनः कथंभूतः । सहचरीनिचयकरकिशलयसंवाहनसुखसुप्तागन्तुकलोकोपसेव्यमानबहलशीतलच्छायाच्छन्नतलदेशः सह चरन्ति सार्धं गच्छन्तीति सहचर्यो भार्यास्तासां निचयस्तस्य करकिशलैर्यत्संवाहनं पादमर्दनं तस्मात् यत्सुखं तेन सुप्ता निद्रां प्राप्ता ये आगन्तुकलोकाः पथिकजनास्तैरुपसेव्यमाना स्वीक्रियमाणा या बहला घना शीतला अनुष्णा छाया तया छन्नः संवृतस्तलदेशो यस्य स तथोक्तः । पुनः कथंभूतः । छायाच्छन्नतलदेशा-

ध्वन्यसंबाधकलहाकुलितपुरःप्रयातपान्थसंदर्भः, पान्थसंदर्भपरिभ्रमश्रमविश्राम्यदाश्रमार्भकदर्भगर्भितस्कन्धाभोगपरिसरः, स्कन्धाभोगपरिसरोपरचितवनचरनिवासनिषण्णषिङ्गाध्वगमिथुनरतधृष्टताकुलितशकुन्तप्रजः, प्रजापतिरिव प्रदर्शितानेकवर्णप्रसूतिः, निखिलभुवनविनिर्माणप्रदेश इव दलबहुलः, काकुत्स्थकथावतार इव कपिकुलविलुप्यमानपलाशप्रसरः, सत्रमण्डप इव द्विजराजविराजितः, पर्जन्यागम इव श्यामलिताखिलदिग्व-

श्रयमूर्छदतुच्छवाञ्छागच्छदविच्छिन्नखिन्नाध्वन्यसंबाधकलहाकुलितपुरःप्रयातपान्थसंदर्भः छायया अनातपेन च्छन्नो योऽसौ तलदेशोऽधःप्रदेशस्तस्याश्रयाय वा मूर्च्छन्तो वर्धमाना या अतुच्छवाञ्छा प्रचुराभिलाषा तया आगच्छन्तो निमिलन्तोऽविच्छिन्ना अविरला खिन्नाः श्रान्ता येऽध्वन्याः पथिकास्तेषां संबाधेन संघट्टनेन यः कलहस्तेनाकुलितपुरःप्रयातः प्रथममागतः पान्थसंदर्भः पथिकसमूहो यत्र स तथोक्तः । पुनः कथंभूतः । पान्थसंदर्भपरिभ्रमश्रमविश्राम्यदाश्रमार्भकदर्भगर्भितस्कन्धाभोगपरिसरः पान्थानां संदर्भेण समूहेन सह परिभ्रमः पर्यटनं तस्मात् योऽसौ श्रमस्तेन विश्राम्यन्तः विश्रामं कुर्वन्तो ये आश्रमार्भकास्तपस्विबालकास्तेषां दर्भैः कुशैर्गर्भित आच्छादितः स्कन्धाभोगपरिसरः प्रकाण्डविस्तारपर्यन्तभूमिर्यस्य पादपस्य स तथोक्तः । पुनः कथंभूतः । स्कन्धाभोगपरिसरोपरचितवनचरनिवासनिषण्णषिङ्गाध्वगमिथुनरतधृष्टताकुलितशकुन्तप्रजः स्कन्ध उच्यते तस्य आभोगः तस्य परिसरे पुरस्ताद्भूमौ उपरचिता निर्मापिता ये वनचरनिवासाः किरातभवनानि तेषु निषण्णा उपविष्टा ये षिङ्गाध्वगा विटपथिकास्तेषां मिथुनानां स्त्रीपुरुषयुग्मानां रतस्य मैथुनस्य या धृष्टता वैपरीत्यं निर्लज्जता तया आकुलिता शकुन्तप्रजा पक्षिबालका यत्र स तथोक्तः । पुनः कथंभूतः । प्रदर्शितानेकवर्णप्रसूतिः प्रदर्शिता प्रकटीकृता अनेकेषां बहूनां वर्णानां श्वेतपीतहरितारुणकृष्णानां प्रसूतिरुत्पत्तिर्येन पादपेन स तथा । क इव । प्रजापतिरिव यथा प्रजापतिर्ब्रह्मा अनेकवर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां प्रसूतिमुत्पत्तिं प्रदर्शयति । पुनः कथंभूतः । दलबहुलः पत्रप्रचुरः । क इव । निखिलभुवनविनिर्माणप्रदेश इव निखिलभुवनस्य विनिर्माणस्य रचनायाः प्रदेश इव स्थानमिव । सोऽपि दलबहुलः कारणबहुलो भवति । पुनः कथंभूतः । कपिकुलविलुप्यमानपलाशप्रसरः कपिकुलैर्वानरसमूहैर्विलुप्यमानस्त्रोट्यमानः पलाशप्रसरो यस्य स तथा । क इव । काकुत्स्थकथावतार इव काकुत्स्थकथाया रामायणस्य अवतार इव प्रवेश इव यथा काकुत्स्थकथायां कपिकुलैः सुग्रीवहनुमन्नलनीलाङ्गदवानरैर्विलुप्यमानो मार्यमाणः पलाशप्रसरः राक्षसव्यापारो यत्र स तथोक्तः । पुनः कथंभूतः । द्विजराजविराजितः द्विजराजैः पक्षिप्रधानैः विराजितः शोभितः । कं इव । सत्रमण्डप इव यथा सत्रमण्डपो दानशाला द्विजराजैर्मुख्यब्राह्मणैर्विराजितो भवति । पुनः कथंभूतः । श्यामलिताखिलदिग्वलयः



लयः, छन्दःप्रस्तार इव पादप्रबन्धावरुद्धवसुधः, क्षितिपजययात्राकाल इव सुच्छायपत्रः, काननश्रीप्रसाधितातपत्राभोग इव सुवृत्तमण्डलः, पुण्योदयदिवस इव संपादितफलपरम्परः, शरणागतसंभावनादिव दूरतरमभ्युत्थितः, प्राघूर्णकपरिरम्भसंभ्रमादिव प्रसारितशाखाभुजसहस्रः, स्वविभवसमर्पणोपचारादिव बद्धपुटकुड्मलप्रणामाञ्जलिः, सिद्धालय इवानेकशस्त्रिदशदयितोपयाचितपिष्टपञ्चाङ्गुलावरुद्धबुध्नः, कुबेरपुरनिवास इव प्ररोहदोलादक्षयक्षकुलकुमारः, पशुपतिरिव गामधिष्ठितः समीपतरविनायकश्च,

श्यामलितं नीलवर्णीकृतं अखिलं दिग्वलयं येन स तथोक्तः । क इव । पर्जन्यागम इव यथा पर्जन्यागमो वर्षाकालः श्यामलिताखिलदिग्वलयो भवति । पुनः कथंभूतः । पादप्रबन्धावरुद्धवसुधः पादप्रबन्धेन मूलसमूहेन अवरुद्धा व्याप्ता वसुधा पातालभूमिर्येन स तथा । क इव । छन्दःप्रस्तार इव यथा छन्दःप्रस्तारः पादप्रबन्धेनाक्षरसंघातसमूहैर्वसुधामवरुध्यते । पिङ्गलः किल पादप्रस्तारान् कुर्वन् भूमिं प्राप्नुवन् समुद्रमध्ये पतितः । उक्तं च—'पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः । यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् । प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥' इति । पुनः कथंभूतः । सुच्छायपत्रः सुच्छायानि शोभनानि यानि पत्राणि यस्य स तथा । क इव । क्षितिपजययात्राकाल इव क्षितिपानां जययात्राकालो दिग्विजयगमनावसरो यथा सुच्छायपत्रस्तेजस्विवाहनो भवति । पुनः कथंभूतः । सुवृत्तमण्डलः सुवृत्तं मुनिघं(?) मण्डलं वर्तुलत्वं यस्य स तथा । क इव । काननश्रीप्रसाधितातपत्राभोग इव काननश्रियः प्रसाधितो मण्डित आतपत्राभोग इव । पुनः कथंभूतः । संपादितफलपरम्परः संपादिता उपढौकिता फलपरम्परा येन स तथा । क इव । पुण्योदयदिवस इव यथा पुण्योदयदिवसः सुकृतविपाकफलपरम्परां संपादयति । पुनः कथंभूतः । दूरतरमभ्युत्थितः दूरतरं विप्रकृष्टं अभ्युत्थितः पथिकानां संमुखमागतः । कस्मात् । उत्प्रेक्षते—शरणागतसंभावनादिव शरणागतानां पथिकादीनां संभावनात् अनुकूलनादिव । पुनः कथंभूतः । प्रसारितशाखाभुजसहस्रः प्रसारितं शाखाभुजसहस्रं येन स तथा । कस्मात् । उत्प्रेक्षते—प्राघूर्णकपरिरम्भसंभ्रमादिव प्राघूर्णकानां आगन्तुकानां परिरम्भसंभ्रमात् आलिङ्गनादरादिव । पुनः कथंभूतः । बद्धपुटकुड्मलप्रणामाञ्जलिर्बद्धो पुटकुड्मलैः प्रणामाञ्जलिर्नमस्कारकरपोटकं येन स तथा । कस्मात् । उत्प्रेक्षते—स्वविभवसमर्पणोपचारादिव निजसंपत्प्रदानविनयादिव । पुनः कथंभूतः । अनेकशोऽनेकवारान् त्रिदशदयितानां उपयाचितैर्नमसितैर्हैतकारैः पिष्टपञ्चाङ्गुलै(?)श्चरोकैरवरुद्धं बुध्नं मूलप्रदेशो यस्य स तथा । क इव । सिद्धालयो देवभवनमिव देवाङ्गनोपयाचितपिष्टपञ्चाङ्गुलावरुद्धबुध्नो यथा सिद्धालयो भवति । पुनः कथंभूतः । प्ररोहदोलादक्षयक्षकुलकुमारः प्ररोहदोलासु जटाप्रेङ्खासु दक्षा यक्षकुलकुमारा यत्र स तथा । क इव । कुबेरपुरनिवास इव अलकानगरीमन्दिरमिव ।

नारायण इव वनमालाविभूषणः परिकल्पितभुजगशयनश्च, पितामह इव वयःपरिणतः शुचिच्छदपरिच्छदश्च, स्कन्द इव मयूरासनः सुरवाहिनीसंगमश्च, तापस इव विहितवल्कलपरिग्रहः कृतजटाबन्धश्च, समुद्र इव महासत्त्वसंश्रयः प्रवालपाटलितकटनिश्च, सत्पुरुष इव प्रियालोकनः परार्थघटनानिघ्नश्च,

यश्चानवरतमखिलजनोपसेव्यमानसर्वस्वः पवनवशविकाशधरेण पल्लवाधरेणोपहसतीव प्रतिवेशितरूनसिन्दुःसंचारे कान्तारे दैवादवाप्यमानसमा-

---

पुनः कथंभूतः । समीपतरविनायकश्च समीपतरा वीनां पक्षीणां नायका गरुडादयो यस्य स तथा । क इव । पशुपतिरिव यथा पशुपती रुद्रो गां वृषभं अधिष्ठितो भवति समीपतरलम्बोदरश्च भवति । पुनः कथंभूतः । वनमालाविभूषणः वनश्रेणीमण्डनः परिकल्पितभुजगशयनश्च परिकल्पितं रचितं भुजङ्गैः शयनं स्थितिर्यत्र स तथा । क इव । नारायण इव यथा नारायणो वनमालाविभूषणः वृन्दारिकाजालंधरदैत्यभार्यासहितो भवति नागशय्याशयनश्च भवति । पुनः कथंभूतः । वयःपरिणतः वयोभिः पक्षिभिः परि समन्तात् नतो नम्रीभूतश्च शुचिभिः पवित्रैश्छदैः पर्णैः परिच्छदः परिवृत आच्छादितश्च । क इव । पितामह इव यथा पितामहो ब्रह्मा वयःपरिणतो वृद्धो भवति । शुचिच्छदो हंसपक्षी स परिच्छदो वाहनो यस्य स तथा । पुनः कथंभूतः । मयूरासनः मयूराणामासनानि मालिका यत्र स मयूरासनः । सुरवाहिनीसंगमश्च सुरवाहिनी देवसेना तस्यां संगमो मेलापको यत्र स तथा । क इव । स्कन्द इव कार्तिकेय इव यथा स्कन्दः मयूरवाहनो भवति सुरवाहिनीसंगमश्च गङ्गानदीसंगमो भवति । पुनः कथंभूतः । विहितवल्कलपरिग्रहः कृतजटाबन्धश्च । क इव । तापस इव यथा तापसः विहितवल्कलपरिग्रहो भवति विहितकेकिविकारश्च भवति । पुनः कथंभूतः । महासत्त्वसंश्रयो महतः सत्त्वस्य बलस्य संश्रयः प्रवालपाटलितकटनिश्च प्रवालैर्बालपल्लवैः पाटलिता श्वेतरक्तीकृता कटनिस्तटं येन स प्रवालपाटलितकटनिः । क इव । समुद्र इव यथा समुद्रो महासत्त्वानां मकरादीनां संश्रय आश्रयो भवति प्रवालैर्विद्रुमरत्नदक्षैः पाटलितकटनिश्च भवति । पुनः कथंभूतः । प्रियालोकनः प्रियदर्शनः परार्थघटनानिघ्नश्च परेषां लोकांना पक्षादीनां च अर्थः प्रयोजनं तस्य घटना तस्यां निघ्नस्तत्परः । क इव । सत्पुरुष इव यथा सत्पुरुषः प्रियालोकनः परस्त्रीणां अवलोकनो भवति परोपकारतत्परश्च भवति ॥

यश्च पादपः पल्लवाधरेण प्रतिवेशितरून्निकटवृक्षानुपहसतीव उपहास्यं करोतीव । कथंभूतः पादपः । अनवरतमखिलजनोपसेव्यमानसर्वस्वः अखिलजनैरुपसेव्यमानं उपजीव्यमानं सर्वस्वं सर्वसंपद्यस्य स तथोक्तः । कथंभूतेन पल्लवाधरेण । पवनवशविकाशधरेण पवनवशेन कारणेन विकाशं विकसनं धरतीति तथा तेन । किमु-



गमनस्यार्थिजनस्याविधाय कमप्युपकारमरे खदिर, किं तवान्तःसारतया । सरल, वृथेदं सरलत्वम् । संपाक, मुधेयं राजवृक्षता । शाल्मले, निष्कारणं कण्टकितं वपुः । अर्जुन, आत्मखेदाय फलभारपरिग्रहः । तृणराज, निजफलविभवगोपनाय नितान्तं वृद्धिः । पूतीक, अर्थिजनाशाभङ्गाय मार्गावस्थितिः,

किं च ।

पान्थैः पल्लवलुण्टनं करटिभिः स्कन्धस्य संघट्टनं
संबाधो हरिभिः शकुन्तनिकरैः क्षोदस्तु किं वर्ण्यते ।
किं चान्यत्तव देवदेहसदृशस्त्रैलोक्यमान्यस्थिते-
रात्मीया इव यस्य याचकजनैः स्वच्छन्दसेव्याः श्रियः ॥



तमहो महाराज, विटपिनमधिवसति, तैस्तैः स्वैरविहारचरितैरनेकरत्नरचिता इव गिरिदरीर्विरचयति, विचित्रोद्गमस्तम्बतुरुम्बाडम्बरा इव शा-

---

पहसतीत्याह—अरे खदिर अरे भो दन्तधावन, अर्थिजनस्य कमप्युपकारं अविधाय तव अन्तःसारतया अन्तःकठिनतया किम् । न किमपि । कथंभूतस्य अर्थिजनस्य । अस्मिन् प्रत्यक्षीभूते दुःसंचारे कान्तारे कमिवात्मनि वने दैवात् दैवयोगात् अवाप्यमानसमागमनस्य । हे सरल हे देवदारु, इदं तव सरलत्वं वृथा । उपकारमकुर्वत इत्यर्थः । रे संपाक, इयमेषा राजवृक्षता मुधा । रे शाल्मले, तव निष्कारणं कण्टकितं वपुर्वर्तते । अरे अर्जुन, तव फलभारपरिग्रह आत्मखेदाय वर्तते अखाद्यत्वात् । रे तृणराज ताडतरो, निजफलविभवगोपनाय रक्षणाय नितान्तं वृद्धिः उन्नतत्वं वर्तते । अरे पूतीक करञ्जक, अर्थिजनाशाभङ्गाय मार्गावस्थितिस्तव वर्तते ॥

किं च मनाग्वर्णयामि—**पान्थैरित्यादि** । पान्थैः पल्लवानां लुण्टनं चुण्टनं क्रियते । करटिभिर्गजैः स्कन्धस्य प्रकाण्डस्य संघट्टनं संवसनं क्रियते । हरिभिर्वानरैर्वा संबाधः तव संबाधनं क्रियते । शकुन्तनिकरैः क्षोदः खननं क्रियते, स क्षोदः किं वर्ण्यते कथ्यते । किं च स्तोकमेवान्यत् तव भवतः । कथंभूतस्य । देवदेहसदृशः देवतासमानशरीरस्य । पुनः कथंभूतस्य तव । त्रैलोक्यमान्यस्थितेः त्रिभुवनजनमाननाचारस्य । यस्य तव श्रियः कर्मतापना याचकजनैरर्थिलोकैरात्मीया इव स्वच्छन्दं सेव्या यथेष्टं भोग्या वर्तन्ते । समासोक्त्युपमालंकारः ॥

अहो महाराज मारदत्त नृप, प्रचलाकिनां कुले मयूरकुले अरं अवाप्तजन्मा । किं कुर्वति प्रचलाकिनां कुले । विटपिनं अधिवसति सति । 'उपान्वध्याङ्वसः' इत्यधिकरणे कर्मत्वम् । पुनश्च किं कुर्वति सति । तैस्तैः प्रसिद्धैः स्वैरविहारचरितैः स्वेच्छापर्यटनचेष्टितैः गिरिदरीः पर्वतगुहाः अनेकरत्नरचिता इव विरचयति सति । पुनश्च किं कुर्वति सति । शाखिशिक्षाः वृक्षाणां चूला

खिशिखाः कुर्वाणे, दुश्च्यवनचापचापलाविला इव दिशो दर्शयति, चारुचि-
त्रोल्लेखा इव मेदिनीर्दधाने, विविधमणिमेचकिता इव सरसीः सज्जयति,
वनदेवताचामरचतुरा इव लतागृहावनीर्विनिर्माणे, केशपाशपेशला इवो-
पवनश्रियः संपादयति, शबरशिबिरशिखण्डमण्डनोचितकलापे, पुलिन्द-
सुन्दरीवतंसीकृतचन्द्रके, वनेचरवनिताहितबर्हवलयविनोदे, नरेश्वरश्रीला-
ञ्छनपिच्छमूर्च्छिनि, महामुनिसंयमोपधिनिबन्धनाङ्गरुहसंकुले, प्रचलाकिनां
कुलेऽहमवाप्तजन्मा । कदाचित्स्वनिःश्वासावसानसमीरसारितस्वल्पतरङ्गपर-
म्परम्, अतिजरण्डशिखण्डमण्डलीगतिस्खलितकलुषप्रसरम्, किमपि खे-

---

विचित्रोद्गमस्तम्बतुरुम्बाडम्बरा इव उत्तंसा पेया(?)इव कुर्वाणे विदधति सति । पुनश्च किं कुर्वति सति । दुश्च्यवनचापचापलाविला इव दिशो दर्शयति दुश्च्यवनस्य इन्द्रस्य चापं धनुस्तस्य चापलं तेन आविला युक्ता दिशः ककुभः दर्शयति प्रेक्षयति सति । पुनश्च किं कुर्वति सति । चारुचित्रोल्लेखा इव मेदिनीः दधाने चारूणि यानि चित्राणि आलेख्यानि तैरुल्लेखास्तत्सहिता इव भूमीं धरति सति । पुनश्च किं कुर्वति सति । विविधमणिमेचकिता इव सरसीः सज्जयति नानामाणिक्यकर्बुरिता इव सरसीः महासरोवराणि सज्जयति कुर्वति । पुनश्च किं कुर्वति सति । वनदेवताचामरचतुरा इव लतागृहावनीर्विनिर्माणे वनदेवतानां चामरचतुरा इव प्रकीर्णकशोभिता इव लतामण्डपभूमीं रचयति । पुनश्च किं कुर्वति सति । केशपाशपेशला इव कुन्तलहस्तमनोहरा इव उपवनश्रिय उद्यानशोभाः संपादयति उत्पादयति । कथंभूते प्रचलाकिनां कुले । शबरशिबिरशिखण्डमण्डनोचितकलापे शबराणां शिबिरः पेटकस्तस्य शिखण्डो मस्तकानि तेषां मण्डनोचिता भूषणयोग्याः कलापाः पिच्छसमूहा यस्य स तथोक्तं तस्मिन् । पुनः कथंभूते । पुलिन्दसुन्दरीवतंसीकृतचन्द्रके पुलिन्दानां सुन्दरीभिर्वतंसीकृतानि मुकुटीकृतानि कर्णपूरीकृतानि वा चन्द्रकानि पिच्छाग्राणि यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । वनेचरवनिताहितबर्हवलयविनोदे वनेचराणां भिल्लानां वनितास्ताभ्यो हितो गुणकारको बर्हवलयविनोदः पिच्छकङ्कणक्रीडा यस्य तत्तथोक्तं तस्मिन् । पुनः कथंभूते । नरेश्वरश्रीलाञ्छनपिच्छमूर्च्छिनि नरेश्वराणां श्रीकारयोग्यानि लाञ्छनानि चिह्नानि यानि पिच्छानि तैर्मूर्च्छति वृद्धिं गच्छति इत्येवंशीलं तत्तथा तस्मिन् । पुनः कथंभूते । महामुनिसंयमोपधिनिबन्धनाङ्गरुहसंकुले महामुनीनां दिगम्बराणां संयमोपधिः संयमोपकरणं पिच्छिका तस्य निबन्धनं कारणं अङ्गरुहा रोमाणि तैः संकुलं व्याप्तं तथोक्तं तस्मिन् । प्रचलाकिनां कुले अहमवाप्तजन्मेति संबन्धः । कदाचित्कस्मिंश्चिदवसरे पतङ्गजवनामकस्य पक्कणपतेः शबरालयस्वामिन आत्मजेन



दसमग्रमग्रेसरतरुणतररविकरनिकरनिरुध्यमानमार्गोदयः, वेशन्तोपान्तात्तो-
यमादायासंजातकलापोच्चयोऽप्यागामितत्संपत्तिवशात्प्रवृत्तप्रतीचीनचरणप्र-
चारः, सच्चरित्रचिक्कस्य दुराचारचिक्कणस्य **पक्कणपतेः पतङ्गजव**स्यात्मजेन
**गजशल्क**नाम्ना तत्रैव शकुन्तवातप्रमीसमूहमुपहन्तुमागतेन, सिन्धुररुधि-
रारुणहरिकण्ठकेशकान्तिभिर्दृष्टिदीधितिभिर्वीतंसजालानीव दिक्षु प्रतन्वता,
मयूरापाङ्गपाण्डुरैर्दशनदीप्तिप्रसरैराशामुखेषु मृगबन्धानिव प्रसारयता,

---

पुत्रेण गजशल्कनाम्ना अहं अवलोकितः । कथंभूतोऽहम् । वेशन्तोपान्तात् अन्यसरोवरसमीपात् तटात् तोयमादाय पीत्वा प्रवृत्तप्रतीचीनचरणप्रचारः प्रवृत्तः संजातः प्रतीचीनो विपरीतः पश्चाद्गमनः चरणप्रचारः पादप्रवर्तनं यस्य मम प्रवृत्तप्रतीचीनचरणप्रचारस्तोयं पीत्वा पश्चात् चरणप्रचारः । कस्मात् कारणात् । संजातपिच्छकलापस्तु वलकत्वान्न वर्तते यदार्द्रितभवन् भयात् पश्चाच्चरणाभ्यां गच्छतीत्याह । तत्कारणमाह—असंजातकलापोच्चयोऽपि अनुत्पन्नपिच्छकलापसमूहोऽपि आगामितत्संपत्तिवशात् आगामिनी भविष्यन्ती तस्य कलापोच्चयस्य या संपत्तिः संपत् तस्या वशात् कारणात् । कथंभूतं तोयम् । स्वनिःश्वासावसानसमीरसारितस्वल्पतरङ्गपरम्परम् स्वस्य निःश्वासस्य अवसानसमीरेन जलाचमनपाश्चात्यवायुना सारिता प्रेरिता स्वल्पतरङ्गपरम्परा अल्पलहरीश्रेणयो यस्य तोयस्य तत्तथोक्तम् । पुनः कथंभूतं तोयम् । अतिजरण्डशिखण्डमण्डलीगतिस्खलितकलुषप्रसरम् अतिजरण्डा अतिवृद्धा या शिखण्डमण्डली चूडामण्डली तस्या गत्या आन्दोलितेन स्खलितः स्फोटितः कलुषप्रसरः कश्मलव्याप्तिर्यस्य तोयस्य तत्तथोक्तम् । कथंभूतोऽहम् । किमप्यपूर्वं अनिर्वचनीयं खेदसमग्रं दुःखपरिपूर्णं यथा भवत्येवं अग्रेसरतरुणतररविकरनिकरनिरुध्यमानमार्गोदयः अग्रेसरा अग्रगामिनो ये तरुणतराः प्रौढयौवना रविकरनिकराः प्रस्तावान्मयूरसमूहास्तैर्निरुध्यमान आद्रियमाणः मार्गोदयो अध्वाग्रं यस्य मम स तथोक्तः । कथंभूतस्य पतङ्गजवस्य आरण्यचाण्डालस्य । सच्चरितचिक्कस्य सदाचारालसस्य । पुनः कथंभूतस्य पतङ्गजवस्य । दुराचारचिक्कणस्य पापाचारेषु आसक्तस्य । कथंभूतेन गजशल्कनाम्ना । तत्रैव वेशन्तोपान्ते शकुन्तवातप्रमीसमूहं शकुन्ताः पक्षिणो वातप्रम्यो वायुदेवतावाहनमृगास्तेषां समूहं यूथं कर्मतापन्नं उपहन्तुं मारयितुं आगतेनोपढौकितेन । किं कुर्वता गजशल्कनाम्ना । दृष्टिदीधितिभिर्लोचनकिरणैः वीतंसजालानि बन्धनसमूहान् दिक्षु दिशासु प्रतन्वता विस्तारयतेव । उक्तं च—'वीतं शस्त्रोपकरणं बन्धने मृगपक्षिणाम् ।' कथंभूतैर्दृष्टिदीधितिभिः । सिन्धुररुधिरारुणहरिकण्ठकेशकान्तिभिः सिन्धुरस्य यूथनाथस्य गजस्य रुधिरेण अरुणा अव्यक्तरागा य हरिकण्ठकेशाः तद्वत्कान्तिः शोभा येषां दृष्टिदीधितीनां ते तथोक्तास्तैः । पुनः किं कुर्वता गजशल्कनाम्ना । दशनदीप्तिप्रसरैः आशामुखेषु मृगबन्धान् मृगबन्धनानि प्रसारयतेव रोपयतेव । कथंभूतैर्दशनदीप्तिप्रसरैः । मयूरापाङ्गपाण्डुरैः ............................ । पुनः किं कुर्वता गजशल्कनाम्ना । भाविभवान्ध-

भाविभवान्धकारपटलैरिव लताप्रतानदलैस्तिरोहिततनुना, शनिनेव मषीमाषाङ्गारकालकायेन पलिशदेशाश्रयिणा तेनान्तकेनेवावलोकितः। पक्षाणामद्यापि पक्षतिप्रदेश एवासादितोदयत्वादतिदीनरयत्वाच्च रोदस्योरन्यतरस्मिन्नपि विषये विहर्तुमसमर्थः, परिगृह्य पञ्जरे कृतकारागारक्रियः, प्ररूढप्रचलाकप्रचयश्च, तज्जनकेन पौराङ्गनापाङ्गपताकितशालायां **विशालायां** पुरि **यशोमति**महाराजायोपायनीकृतः, समवलोक्य च तां संसारसारावनीं तन्निसर्गादेव सुन्दरं मन्दिरं च दैवादाविर्भूतभूतभवसंभालनः,

---

कारपटलैरिव लताप्रतानदलैस्तिरोहिततनुना लतानां वल्लीनां प्रतानः समूहस्तस्य दलैः तिरोहिततनुना आच्छादितशरीरेण। कथंभूतैर्लताप्रता नदलैः। भाविभवान्धकारपटलैरिव भावि भविष्यत् यद्भवान्धकारं जन्मजन्माज्ञानं तस्य पटलैरिव अज्ञानान्धकारसमूहैरिव। पुनः किं कुर्वता गजशल्कनाम्ना। मषीमाषाङ्गारकालकायेन मषी च कज्जलं माषाश्च वृष्यकणा अङ्गाराश्च विध्यताग्निखण्डानि तद्वत् कालः कृष्णवर्णः कायो यस्य स तथा तेन। केनेव। शनिनेव सप्तमग्रहेणेव। पुनः किं कुर्वता गजशल्कनाम्ना। पलिशदेशाश्रयिणा यत्र स्थित्वा मृगा हन्यन्ते स प्रदेशः पलिश उच्यते। तं देशमाश्रयतीत्येवमवश्यं पलिशदेशाश्रयी तेन ईदृग्विधेन तेन गजशल्कनाम्ना पतङ्गजवपुत्रेण अन्तिकेनेव यमरूपेणेव। अहमवलोकित इति संबन्धः। कथंभूतोऽहम्। रोदस्योर्द्यावाभूम्योरन्यतरस्मिन्नपि विषये स्थाने विहर्तुं पर्यटितुमसमर्थः। न आकाशे न भूमौ विहर्तुं समर्थ इत्यर्थः। कस्माद्विहर्तुमसमर्थ इत्याह—पक्षाणां पिच्छानां अद्यापि पक्षतिप्रदेशे एव पक्षतिः पक्षमूलेन यः प्रदेश एव आसादितोदयत्वात् प्राप्तप्रादुर्भूत्युदयत्वात्। तेन कारणेन आकाशे उदेतुं असमर्थः। तर्हि भूमौ कथं विहर्तुं असमर्थ इत्याह—अतिदीनरयत्वाच्च अतिदीनवेगत्वाच्च। तेन भूमावपि विहर्तुं असमर्थः। परिगृह्य मां गृहीत्वा पञ्जरे पक्षिगृहे कृतकारागारक्रियः। बन्दीकृत इत्यर्थः। पुनः कथंभूतोऽहम्। प्ररूढप्रचलाकप्रचयश्च प्रादुर्भूतपिच्छकलापश्च। पुनः कथंभूतोऽहम्। तज्जनकेन गजशल्कस्य पित्रा पतङ्गजवेन विशालायां पुरि उज्जयिन्यां पत्तने यशोमतये महाराजाय उपायनीकृतः प्राभृतीकृतः। कथंभूतायां विशालायाम्। पौराङ्गनापाङ्गपताकितशालायाम् पौराङ्गनानां अपाङ्गाः कटाक्षप्रान्तास्तैः पताकिता ध्वजसंयुक्तीकृताः शाला गृहाणि यत्र सा तथा तस्याम्। कथंभूतोऽहम्। दैवात् आविर्भूतभवसंभालनः। प्रकटीभूतजातिस्मर इत्यर्थः। किं कृत्वा पूर्वं जातिस्मरो जातः। तां विशालानाम्नीं पुरीं समवलोक्य दृष्ट्वा। कथंभूतां ताम्। संसारसारावनीं संसारे यानि साराणि पुरुषरत्नादीनि तेषां अवनीं भूमिम्। न केवलं तां समवलोक्य। तत्पूर्ववर्णनोपेतं निसर्गादेव सुन्दरं मन्दिरं प्रासादं च समवलोक्य। पुनः कथंभूतोऽहम्। इत्यमुना प्रकारेण क्षणं उपजातान्तर्बाष्पोदन्त उपजात



सैवेयं नगरी, तदेव भवनं, ता एव केलीधराः,
सैवैषा वनभूः, स एव सरसीसारे विलासाचलः,।
सैवासौ वनिता, स एव तनयस्ते चैव मे बान्धवा-,
श्चित्रं केवलमेक एव हि कथं जातोऽहमन्याकृतिः॥

इति क्षणमुपजातान्तर्बाष्पोदन्तः, पुनरन्तःपुरकृशोदरीणां निवासतरुस्कन्धावरोहकाशैरिवोत्सङ्गदेशैर्गिरिशिखरैरिव पयोधरैः प्रमदवनवल्लरीगहनैरिव बाहूपगूहनैः सरोजसरःप्राणैरिव मुखाघ्राणैः शयनकुञ्जकेलिचूलैरिव कुन्तलजालैर्विनोद्यमानः, पुत्र इव प्रियोपचारेषु सहचर इव विहारकर्मसु दीपोत्सवादिगृहः पर्वप्रासाद इव मण्डनविधिषु शिष्य इव नर्तनक्रियासु प्रणयस्थानमिवापरास्वपि क्रीडासु वरारोहाणां च स्वयं

---

उत्पन्नः अन्तर्बाष्पस्य लोचनमध्ये अश्रुपातस्य उदन्तो वृत्तान्तो यस्य स तथा॥

इतीति किम्—**सैवेयमित्यादि।** सैव नान्या इयं उज्जयिनी नगरी वर्तते। तदेव त्रिभुवनतिलकनामधेयं भवनं राजसदनं वर्तते। ता एव केलीधराः क्रीडाभूमयः वर्तन्ते। सैवैषा वनभूर्वर्तते। स एव पूर्वोक्त एव सरसीसारे सरोवरसमीपे विलासाचलः क्रीडापर्वतो वर्तते। सैव असौ वनिता जनितात्यन्तरागा अमृतमतिमहादेवी स्त्री वर्तते। स एव यशोमतिनाम तनयो वर्तते। त एव च मे मम बान्धवाः कुटुम्बवर्गाः वर्तन्ते। चित्रं आश्चर्यमेतत्। केवलं एक एव हि कथं अन्याकृतिरन्यादृशोऽहं जात इति। समुच्चयोपमालंकारः॥

पुनः कथंभूतोऽहम्। पुनः पुनरपि अन्तःपुरकृशोदरीणां शुद्धान्तस्त्रीणां वरारोहाणां वा उत्सङ्गदेशैः उपरितनप्रदेशैर्विनोद्यमानः। कथंभूतैरुत्सङ्गदेशैः। निवासतरुस्कन्धावरोहकाशैरिव आवासवृक्षप्रकाण्डावरोहावतारसदृशैरिव। न केवलमुत्सङ्गदेशैः, पयोधरैश्च विनोद्यमानः। कथंभूतैः पयोधरैः। गिरिशिखरैरिव। न केवलं तैः, बाहूपगूहनैश्च विनोद्यमानः। कथंभूतैर्बाहूपगूहनैः। प्रमदवनवल्लरीगहनैरिव निशान्तसारिणां क्रीडोचितोद्यानवल्लीवनैरिव। न केवलं तैः, मुखाघ्राणैः मुखचुम्बनैश्च विनोद्यमानः। कथंभूतैर्मुखाघ्राणैः। सरोजसरःप्राणैरिव कमलमण्डितसरोवरजीवितैरिव। न केवलं तैः, कुन्तलजालैश्च विनोद्यमानः। कथंभूतैः कुन्तलजालैः। शयनकुञ्जकेलिचूलैरिव शय्यातरुक्रीडाशिखण्डैरिव। पुनः कथंभूतोऽहम्। प्रतिनिकायं गृहं गृहं प्रति उपचाय्यमानः प्रतिपाल्यमानः। क इव। प्रियोपचारेषु हितकरणेषु पुत्र इव उपचाय्यमानः। पुनः क इव। विहारकर्मसु सहचर इव उपचाय्यमानः। पुनः क इव। मण्डनविधिषु भूषाविधानेषु पर्वप्रासाद इव दीपोत्सवादौ गृहमिवोपचाय्यमानः। पुनः क इव। नर्तनक्रियासु शिष्य इवोपचाय्यमानः। पुनः क इव। अपरास्वपि क्रीडासु रमणक्रियासु प्रणयस्थानमिव प्रेमवानिवोपचाय्यमानः। वरारोहाणां मत्तकामिनीनां च पुनः

नखनिस्तुषितमण्डलैः कलमतन्दुलैः प्रतिनिकायमुपचाय्यमानः, क्षितिपतिना च तेन जेमनावसरेषु स्वहस्तवर्तितकायैः प्रथमकवलैः संभाव्यमानः, तत्र लक्ष्मीविलासाकुले राजकुले सभास्तार इव प्रगल्भप्रचारः सुखेनाहमासांचक्रे ।

इतश्चास्ति खलु **विन्ध्याद्दक्षिणस्यां दिशि त्रिदशदेशाश्रयश्रीनिकटः करहाटो** नाम जनपदः । यत्र

सस्यसंपत्तिसंक्षिप्तसीमाभुवः, प्रचुरपथिकप्रियापणितपथिवस्तवः ।
सत्रवापीप्रपारामरम्योदयाः, पद्मिनीखण्डताण्डविततोयाशयाः ।
श्रीविलासोत्सवस्खलितसुरसमितयः, फुल्लफलपल्लवोल्लासिवनवृत्तयः ।

---

स्वयं आत्मनैव नखनिस्तुषितमण्डलैः नखैर्दूरीकृतनखसमूहैरेवंविधैः कलमतण्डुलैः कुमुदशालिसदकैरुपचाय्यमानः । क्षितिपतिना च राज्ञा च तेन यशोमतिना जेमनावसरेषु भोजनप्रस्तावेषु स्वहस्तवर्तितकायैर्निजकरनिर्मापितकायैः प्रथमकवलैरग्रपिण्डैः संभाव्यमानः संतोष्यमानः सन् । तत्र तस्मिन् लक्ष्मीविलासाकुले श्रीभोगपरिपूर्णे राजकुले राजमन्दिरे सभास्तार इव सभ्य इव प्रगल्भप्रचारः प्रौढप्रवेशः सुखेनानायासेन अहं मयूर आसांचक्रे स्थितवान् ॥

इतश्च एकस्मिन् पार्श्वे खलु विन्ध्यात् विन्ध्याचलनामपर्वतात् दक्षिणस्यां दिशि अपाच्यां ककुभि करहाटो नाम जनपदोऽस्ति । कथंभूतः करहाटः । त्रिदशदेशाश्रयश्रीनिकटः त्रिदशदेशाश्रया स्वर्गसंबन्धिनी श्रीः शोभा निकटे श्रियो वा निकटः समीपवर्ती स तथोक्तः । यत्र करहाटे ग्रामविनिवेशिकाः ग्रामविन्यासाः सन्ति । कथंभूताः । सस्यसंपत्तिसंक्षिप्तसीमाभुवः सस्यानां संपत्तयः श्रियो यथा वा ताभिः संक्षिप्ताः व्याप्ताः सीम्नां भुवो भूमयो येषु ग्रामविनिवेशिकेषु ते तथोक्ताः । 'रैश्चतुर्भिर्युता स्रग्विणी संमता' । पुनः कथंभूताः । प्रचुरपथिकप्रियापणितपथिवस्तवः प्रचुराभिः बह्वीभिः पथिकप्रियाभिः अध्वगभार्याभिः पणितानि क्रीतानि पथिवस्तूनि मार्गवस्तूनि येषु ते तथोक्ताः । पुनः कथंभूताः । सत्रवापीप्रपारामरम्योदयाः सत्राणि उपवनानि, वाप्यश्च दीर्घिकाः, प्रपाश्च पानीयशालाः, आरामाश्च उद्यानानि च तानि तै रम्या मनोहरा उदयाः प्रादुर्भावा उन्नतयो वा येषां ते तथोक्ताः । पुनः कथंभूताः । पद्मिनीखण्डताण्डविततोयाशयाः पद्मिनीखण्डैः कमलिनीवनैः ताण्डविता नर्तितास्तोयाशया तडागानि यत्र ते तथोक्ताः । पुनः कथंभूताः । श्रीविलासोत्सवस्खलितसुरसमितयः श्रीविलासोत्सवैः लक्ष्मीभोगमहोत्सवैः स्खलिताः तिरस्कृताः सुराणां समितयः समूहा यैस्ते तथा । पुनः कथंभूताः । फुल्लफलपल्लवोल्लासिवनवृत्तयः फुल्लानि



पिकवधूरुतमनोहारिसर्वर्तवः, सकलसंसारसुखसेवितागन्तवः ।
समरभरभागिभटभाववादोत्कटाः, खेलदुन्मदवृषोत्खाततटिनीतटाः ।
त्यागभोगप्रभावाद्भुतख्यातयः, शुद्धवर्णाश्रमाचरितविगतेतयः ।
प्रवणशरणागतोद्धरणकुलकीर्तयः, सन्ति धर्मार्थकामेषु समनीतयः ।
सुकृतफलभूमयो ग्रामविनिवेशिकाः, कामितावाप्तिविजितामरोद्देशकाः ॥
अपि च यत्र

सोत्सेधसौधशिखराश्रयशातकुम्भ-
शुम्भत्प्रभाप्रभु नभः प्रविभाव्य भूयः ।

---

फलानि व्युष्टयः पल्लवाश्च तैरुल्लासिन उल्लसनशीला वनवृत्तयः उद्यानवृत्तयो यत्र ते तथा । पुनः कथंभूताः । पिकवधूरुतमनोहारिसर्वर्तवः पिकवधूनां रुतैर्मनोहारिणः सर्वर्तवः हिमशिशिरवसन्तग्रीष्मवर्षाशरदो यत्र ते तथा । पुनः कथंभूताः । सकलसंसारसुखसेवितागन्तवः सकलैः संसारसुखैरिष्टस्रग्वनिताचन्दनादिभिः सेविता आश्रिता आगन्तवः पथिका यत्र ते तथा । पुनः कथंभूताः । समरभरभागिभटभाववादोत्कटाः समरभरं संग्रामभारं भजन्ते इत्येवंशीलाः समरभरभागिनस्ते च ते भटास्तेषां भावोऽभिप्रायस्तेन वादो युद्धं तेन उत्कटाः उल्बणाः । पुनः कथंभूताः । खेलदुन्मदवृषोत्खाततटिनीतटाः खेलन्त उन्मदा हर्षवन्तो ये वृषाः तैरुत्खातानि पतितानि तटिनीतटानि नदीकूलानि येषु ते तथा । पुनः कथंभूताः । त्यागभोगप्रभावाद्भुतख्यातयः त्यागभोगयोर्लक्ष्मीणां दानानुभवनयोः प्रभावेण महिम्ना अद्भुता आश्चर्यकारिणी ख्यातिः प्रसिद्धिर्येषां ते तथोक्ताः । पुनः कथंभूताः । शुद्धवर्णाश्रमाचरितविगतेतयः शुद्धा असंकीर्णा ये वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः, आश्रमाश्च ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चेति चत्वार आश्रमास्तेषां आचरितैराचरणैर्विगता विनष्टा ईतयो यत्र ते तथा । उक्तं च—'अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः । स्वचक्रं परचक्रं वा सप्तैते ईतयः स्मृताः ॥' पुनः कथंभूताः । प्रवणशरणागतोद्धरणकुलकीर्तयः प्रवणा अकुटिला ये शरणागतास्तेषामुद्धरणे रक्षणे कुलागता कीर्तिर्यत्र ते तथा । पुनः कथंभूताः । धर्मार्थकामेषु समनीतयः धर्मश्च अर्थश्च कामश्च तेषु समनीतयः समानन्यायाः । धर्मं विनाश्य धनं नोपार्जयन्ते, अर्थं विनाश्य भोगान्भुञ्जते, भोगान्विनाश्य धर्मार्थौ न क्रियते इति भावः । पुनः कथंभूताः । सुकृतफलभूमयः सुकृतस्य यानि फलानि तेषां भूमयः स्थानानि । पुनः कथंभूताः । कामितावाप्तिविजितामरोद्देशकाः कामितानां वाञ्छितफलानां अवाप्तिः प्राप्तिस्तया विजिता अमरोद्देशकाः स्वर्गलोका यैस्ते तथा । संकरालंकारः ॥

अपि च यत्र करहाटदेशे । **सोत्सेधेत्यादि** । यत्र कोका दिवापि कान्ताश्चक्रवाकीः सरःसु रहन्ति परित्यजन्ति । कस्मात् । संध्यागमादिव यथा संध्यागमे कोका कोकीस्त्यजन्ति । किं कृत्वा पूर्वम् । भूयो नभः प्रविभाव्य दृष्ट्वा । कथंभूतं नभः । सोत्सेधसौधशिख-

संध्यागमादिव दिवापि रहन्ति कान्ताः
कोकाः सरःसु कृतकूजितकण्ठपीठाः ॥

तत्र भवत इव सकलगोमण्डलाधिपते**र्गोधना**भिधानवसतेरस्ति खलु
गोकुलविशालं **श्रीशालं** नाम धनधान्यधामाराममनेदिष्ठं गोष्ठम् । यत्क्वचि-
दुन्निगलमण्डलवालाकुलितबस्तवर्करकम्, क्वचिद्गोपालपोतपारिप्लवोपदूयमा-
नवृद्धवृष्णिकम्, क्वचिद्वत्सेक्षणक्षरत्स्तनधेनुदुग्धधाराधाव्यमानधरापीठम्,
क्वचित्कालशेयकलशराशिविश्राणनप्रीयमाणातिथिपेटम्, क्वचित्पवनविनिवृ-
त्तनिचिकीनिटिलनिकटनिक्षिप्यमाणदधिदर्भदूर्वाक्षतप्रसवम्, क्वचिद्दलित-

---

राश्रयशातकुम्भशुम्भत्प्रभाप्रभु सोत्सेधा उन्नता ये सौधास्तेषां शिखराश्रयशातकुम्भं
सुवर्णं तस्य शुम्भन्ती शोभमाना या प्रभा तस्याः प्रभु व्यापकं तत्तथोक्तम् । कथंभूताः
कान्ताः । कृतकूजितकण्ठपीठाः कृतकूजितं कृतशब्दं कण्ठपीठं यासां तास्तथा । कोकानामपि
इदमेव विशेषणम् । तदा कृतकूजितानि कण्ठपीठानि येषां ते । हेतूपमालंकारः, भ्रान्ति-
मानलंकारश्च ॥

हे राजन् हे मारदत्त महाराज, तत्र करहाटदेशे गोधनाभिधानवसतेः गोविन्दस्य
गोधननाम्नः गोष्ठं श्रीशालं नाम गोकुलमस्ति । कथंभूतस्य गोधनाभिधानवसतेः । सक-
लगोमण्डलाधिपतेः सकलं च तद्गोमण्डलं सुरभीनां समूहस्तस्याधिपतिस्तस्य । कस्येव ।
भवत इव यथा भवान् सकलगोमण्डलाधिपतिः सर्वभूमण्डलस्य अधिपतिर्वर्तते ।
कथंभूतं गोष्ठम् । गोकुलविशालं अघ्न्यानां समूहैर्बहुलम् । पुनः कथंभूतम् । धनधान्यधाम
धनानां धान्यानां च धाम स्थानं वर्तते । पुनः कथंभूतम् । आराममनेदिष्ठं आरामाणां
नेदिष्ठं समीपवर्ति । यद्गोष्ठं क्वचित् कस्मिंश्चित्स्थाने उन्निगलमण्डलवालाकुलितबस्तवर्करकम्
उन्निगला बन्धनरहिता ये मण्डलवालाः शुनकशिशवस्तैराकुलिता विह्वलीकृता बस्तानां
छागानां वर्करकाः शिशवो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् गोपालपोतपारिप्लवो-
पदूयमानवृद्धवृष्णिकम् गोपालपोतानां पारिप्लवेन उपदूयमाना वृद्धवृष्णिका यत्र तत्तथो-
क्तम् । अत्र पारिप्लवं मैथुनक्रिया ज्ञातव्या । पुनः कथंभूतम् । क्वचित् वत्सेक्षणक्षरत्स्तन-
धेनुदुग्धधाराभिर्धाव्यमानं प्रक्षाल्यमानं धरापीठं यत्र तत्तथोक्तम् । पुनः कथंभूतम् ।
क्वचित् कालशेयकलशराशिविश्राणनप्रीयमाणातिथिपेटम् कालशेयस्य तक्रस्य कलशराशीनां
विश्राणनेन प्रीयमाणो अतिथीनां पेटः समूहो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्
पवनविनिवृत्तनिचिकीनिटिलनिकटेषु ललाटपरिभागेषु निक्षिप्यमाणाः दीयमानाः दधिदर्भ-
दूर्वाक्षतप्रसवा यत्र तथोक्तम् । पुनः कथंभूतम् । क्वचित् दलितदामदासेरकार्भकभ्रान्तिशङ्कित-
शकृत्करिखुरक्षुद्यमानाघ्ननिदेशपल्लवम् दलितदामदासेरकार्भकाणां त्रुटितबन्धनोष्ट्रबालकानां



दामदासेरकार्भकभ्रान्तिशङ्कितशकृत्करिखुरक्षुद्यमानाघ्ननिदेशपल्लवम्, क्वचि-
त्तरुणतराभीरोद्गूर्णघनद्रुघणघोरघातघूर्ण्यमानरणरभसक्षोभसंधुक्षितरक्ताक्षक-
क्षम्, क्वचिदुन्माथनाथहरियूथयुद्धबाध्यमानप्रष्ठौहीपक्षम्, क्वचिद्बष्कयणी-
क्षीरप्रतीक्ष्यमाणगृहगृहावग्रहणीगृहदेवताकुलम्, क्वचिद्गोमिथुनपरिणयो-
त्फुल्लपल्लवस्वावासिनीजनोच्चार्यमाणमङ्गलम्, क्वचिद्दधिमन्थमन्थानध्वनिवि-
निवर्त्यमानभवनबर्हिणम्, क्वचिन्माहेयीदोहव्याहाराहूयमानपयःपानपारप-
थिकगणम्, क्वचित्संदानदामिनीच्युतचपलतरतर्णकक्षोदरुदितदारकदीय-
मानजरतीरक्षाविधानम्, सुरसुरभिनिधानमिवैवमपराभिरपि गणतिथि-

---

भ्रान्त्या भ्रमणेन शङ्किता भीता ये शकृत्कर''स्वर्णकास्तेषां खुरैः क्षुद्यमाना अघ्ननिदे-
शपल्लवं तृणभक्षणद्रोणीप्रवालानि यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् तरुणतरा-
भीरोद्गूर्णघनद्रुघणघोरघातघूर्ण्यमानरणरभसक्षोभसंधुक्षितरक्ताक्षकक्षम् तरुणतराः प्रौढयौ-
वना ये आभीरा महाशूद्रास्तैरुद्गूर्णा उद्भ्रामिता ये घनाः प्रचुरा द्रुघणा मुद्गरास्तेषां घोरघातै-
र्निष्ठुरप्रहारैर्घूर्ण्यमाना मूर्च्छां प्राप्नुवन्तो रणरभसक्षोभेण युद्धवेगसंचलनेन संधुक्षितं क्रोध-
मितं रक्ताक्षाणां महिषाणां कक्षं समूहो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्
उन्माथनाथहरियूथयुद्धबाध्यमानप्रष्ठौहीपक्षम् उन्माथा बलवत्तरा उन्मृता ये नाथहरयो वृष-
भास्तेषां यूथः समूहस्तस्य युद्धेन संप्रहारेण बाध्यमानो लोठ्यमानः प्रष्ठौहीनां बालगर्भि-
णीनां गवां पक्षः परिग्रहो यत्र गोष्ठे तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् बष्कयणीक्षी-
रप्रतीक्ष्यमाणगृहगृहावग्रहणीगृहदेवताकुलम् बष्कयणीनां प्रौढवत्सानां गवां क्षीरेण प्रती-
क्ष्यमाणं पूज्यमानं गृहस्य या गृहावग्रहणी देहली तस्या गृहदेवतानां कुलं यत्र तत्तथो-
क्तम् । पुनः कथंभूतम् । क्वचित् गोमिथुनपरिणयोत्फुल्लपल्लवस्वावासिनीजनोच्चार्यमाण-
मङ्गलम् गोमिथुनस्य धेनुवृषभस्य यः परिणयो विवाहस्तस्मिन् उत्फुल्लपल्लवा विकसितपु-
ष्पपल्लवसहिता याः स्वावासिन्यः अविधवाः स्त्रियस्तासां जनेन समूहेन उच्चार्यमाणं उद्गीयमा-
नं मङ्गलं गीतधवलं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् दधिमन्थमन्थानध्वनि-
विनिवर्त्यमानभवनबर्हिणम् दधिमन्थे दध्यवलोडने योऽसौ मन्थानध्वनिर्मथनशब्दस्तेन
विनिवर्त्यमानाः नर्तनं कार्यमाणा भवनबर्हिणो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्व-
चित् माहेयीदोहव्याहाराहूयमानपयःपानपारपथिकगणम् माहेयीनां गवां दोहव्याहारेण
दोहनध्वनिना आहूयमानाः पयःपानाय क्षीरपानाय पारपथिकानां परदेशभवाध्वगानां
गणाः समूहा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् संदानदामिनीच्युतचपलत-
रतर्णकक्षोदरुदितदारकदीयमानजरतीरक्षाविधानम् संदानदामिनीच्युतो बन्धनार्गलनिर्गत-
श्चपलतरो योऽसौ तर्णको वत्सस्तस्य क्षोदेन चूर्णनेन रुदितो रोदनं प्राप्तो योऽसौ दारकः
बालकस्तस्य दीयमानं अर्प्यमाणं जरतीनां रक्षाविधानं रक्षणकरणं यत्र तत्तथोक्तम् । पुनः

भिर्गृष्टिभिः पूगतिथिभिः परेष्टुकाभिः सङ्कतिथिभिः समांसमीनाभिः बहुतिथिभिः सुव्रताभिः संख्यातीताभिः पलिक्नीभिः विगतवेहद्वसावतोकासंधिनीसृष्टिभिरुस्राभिर्वाजिवेसरवालेयकारेयजातिभिश्च प्रभूतम्, दधिदुग्धघृतोदधीनामिव समवायभूतम् । तत्र तस्य विक्रमासरालस्य व्रजपालस्य सद्मनि मृगदंशवंशे सा मदीया **चन्द्रमति**र्माता जवस्थानरूपातिरेकैरतिशयितसकलशालावृकलोकः कौलेयको बभूव जातयुवभावश्च । योग्यस्वभावः खल्वयं श्वेतपिङ्गलपराक्रमो निसर्गान्मार्गायुकक्रमश्च विश्वकद्रूरवनीन्द्राणां

---

कथंभूतम् । प्रभूतं प्रचुरम् । काभिः प्रभूतम् । एवं अपराभिरपि अन्याभिरपि गणतिथिभिर्बहुभिर्गृष्टिभिः सकृत्प्रसूताभिर्गोभिः । किमिव । सुरसुरभिनिधानमिव कामधेनूनां स्थानमिव । पुनश्च काभिः प्रभूतम् । पूगतिथिभिः बहुभिः परेष्टुकाभिः प्रचुरप्रसूतिभिर्गोभिः । पुनश्च काभिः प्रभूतम् । सङ्कतिथिभिर्बहुभिः समांसमीनाभिः प्रतिवर्षप्रसूतिभिर्गोभिः । समासमान्यायैव(?)प्रतिवर्षं प्रसूयते[1] । पुनश्च काभिः प्रभूतम् । बहुतिथिभिर्बहुभिः सुव्रताभिः सुखसंदोहाभिर्गोभिः । पुनश्च काभिः प्रभूतम् । संख्यातीताभिः बहुभिः पलिक्नीभिः अल्पदिनगर्भाभिर्गोभिः । कथंभूताभिर्गोभिः । विगतवेहद्वसावतोकासंधिनीसृष्टिभिः वेहच्च गलितगर्भा गौः, वसा च वन्ध्या गौः, अवतोका च विषाणविकला गौः, संधिनी च गर्भिणी सती वृषभेणाक्रान्ता गौः, तासां सृष्टिर्वेहद्वसावतोकासंधिनीसृष्टिः । विगता विनष्टा वेहद्वसावतोकासंधिनीसृष्टिर्यासां गवां तास्तथोक्तास्ताभिः । एताभिर्दोषिणीभिर्गोभी रहितं गोष्ठमित्यर्थः । उस्राभिर्गोभिः प्रभूतम् । पुनः कथंभूतं गोष्ठम् । वाजिवेसरवालेयकारेयजातिभिः प्रभूतम् वाजिनश्च, वेसराश्च द्विशरीराः, वालेयकाश्च गर्दभाः, आरेयाश्च मेषाः, तेषां जातिभिश्च प्रचुरम् । पुनः कथंभूतम् । दधिदुग्धघृतोदधीनामिव समवायभूतं दधिसागरक्षीरसागरघृतसागराणां समुच्चयमिव भूतम् । तत्र तस्मिन् गोष्ठे तस्य पूर्वोक्तस्य गोधननाम्नो गोकुलपतेः सद्मनि मृगदंशवंशे शुनककुले सा पूर्वोक्ता मदीया चन्द्रमतिर्माता कौलेयको बभूव कुर्कुरः संजातः । कथंभूतस्य गोधननाम्नः । विक्रमासरालस्य पराक्रमबहुलस्य । पुनः कथंभूतस्य । व्रजपालस्य गोकुलरक्षकस्य । कथंभूतः कौलेयकः । जवस्थानरूपातिरेकैः वेगबलरूपाधिकत्वैः कृत्वा अतिशयितसकलशालावृकलोकः अतिशयितः अतिशयं प्राप्तः सकलशालावृकलोकानां मध्ये कुर्कुरजनानां मध्ये अतिशयवानित्यर्थः । पुनः कथंभूतः । जातयुवभावश्च संजातयौवनश्च । तेन गोधननाम्ना दम्पतिना गोकुलस्वामिना तस्यामेव उज्जयिन्यां पुर्यां दैवात् सोऽपि कौलेयकोऽपि यशोमतिमहाराजाय प्राभृतं आनायि प्राभृतीकृतः । किं कृत्वा पूर्वम् । इत्यमुना प्रकारेणानुध्याय चिन्तयित्वा । इतीति किम् । अयं विश्वकद्रूः सारमेयः खलु अवनीन्द्राणां मृगयाविनोदस्य अच्छोदनक्रीडायाः योग्यस्वभावो वर्तते । कथंभूतः । श्वेतपिङ्गल-

---

१. 'समांसमीना तु या सा प्रतिवर्षं प्रजायते' इत्यभिधानचिन्तामणिः.



मृगयाविनोदस्येत्यनुध्याय तेन दम्पतिना तस्यामेव मालवीमुखेन्दुमण्डनरजन्यामुज्जयिन्यां **यशोमति**महाराजाय दैवात्सोऽपि प्राभृतमानायि । राजा तं नित्यजागरूकसुतमवलोक्य स्वगतम्—

'निर्मांसास्यः कपिलनयनः स्वल्पतीक्ष्णाग्रकर्णः
कुक्षिक्षामः पृथुलजघनः पूर्णवक्षःप्रदेशः ।
दुग्धस्निग्धप्रतनुदशनः सारमेयो महीशा-
माखेटाय प्रजवचरणः किंचिदाभुग्नवालः ॥

मन्ये चानेन शरमासुतेनाकुरङ्गमिव हरिणलाञ्छनम्, अरक्ताक्षमिव महिषवाहनम्, अदंष्ट्रायुधमिवादिवराहचरितम्, अहर्यक्षामिव सिंहवाहिनीम्, असत्त्वसंचाराश्च वनावनीधरधराः । मृगयामनोरथाश्चाद्य मे फलिष्यन्ति कामितकथाः ।' प्रकाशम्—'मद्विनोदानन्दनमते पशुपते, इत

---

पराक्रमः श्वेतपिङ्गलवत् सिंहवत् पराक्रम उद्यमो यस्य स तथा । पुनः कथंभूतः । निसर्गात् मार्गायुकक्रमः मार्गायुकाः मृगयाकुशलाः क्रमाश्चत्वारः पादा यस्य स तथा । कथंभूतायामुज्जयिन्याम् । मालवीमुखेन्दुमण्डनरजन्याम् मालवीनाम देशस्त्रीणां मुखानि तान्येव इन्दवस्तेषां मण्डने कान्तिकरणे रजनी पूर्णिमारात्रिस्तस्याम् । राजा यशोधरमतिस्तं नित्यजागरूकसुतं श्वानं अवलोक्य स्वगतं आत्मगतं विचारयति ॥

**निर्मांसास्य इत्यादि** । महीशानां आखेटाय पापर्द्धये सारमेय ईदृशो भवति । कथंभूतः । निर्मांसास्यः दुर्बलमुखः । पुनः कथंभूतः । कपिलनयनः पीतरक्तलोचनः । पुनः कथंभूतः । स्वल्पतीक्ष्णाग्रकर्णः स्वल्पं मनाक् तीक्ष्णाग्रौ तीक्ष्णप्रान्तौ कर्णौ यस्य सः । पुनः कथंभूतः । कुक्षिक्षामः··········· । पुनः कथंभूतः । पृथुलजघनः··········· । पुनः कथंभूतः । पूर्णवक्षःप्रदेशः स्थूलहृदयस्थलः । पुनः कथंभूतः । दुग्धस्निग्धप्रतनुदशनः दुग्धवत् स्निग्धाश्चिक्कणाः प्रतनवः सूक्ष्मा दशना यस्य स तथा । पुनः कथंभूतः । प्रजवचरणः························ । पुनः कथंभूतः । किंचिदाभुग्नवालः किंचिन्मनाक् आभुग्नो वक्रो वालः पुच्छो यस्य स तथा । रूपकजातिसमुच्चयालंकारः ॥

मन्येऽहमेवं जाने । अनेन शरमासुतेन हरिणलाञ्छनं चन्द्रं अकुरङ्गमिव मन्ये । चन्द्रस्य कुरङ्गमयं मारयिष्यतीत्यर्थः । महिषवाहनं यमं अरक्ताक्षमिव मन्ये । यमस्यापि महिषं मारयिष्यतीत्यर्थः । आदिवराहचरितं अदंष्ट्रायुधमिव मन्ये वराहरहितं जाने । सिंहवाहिनीं भवानीं अहर्यक्षामिव मन्ये सिंहरहितां जाने । वनावनीधरधराः वनमटवी, अवनीधरः पर्वतः, धरा पृथ्वी, एता असत्त्वसंचाराश्च मन्ये । सत्त्वानां प्राणिनां मृगव्याघ्रवराहभूगोचरप्राणिनः असंचारान् अप्रवेशान् मन्ये । मृगयामनोरथाश्च पापर्द्धिदोहदाश्च अद्य मे मम कामितकथाः फलिष्यन्ति । प्रकाशं स्फुटमाह—मद्विनोदानन्दनमते मत्क्रीडावर्ध-

इतः समानीयतामयं यक्षपुरुषः।' पशुपतिः—'यथाज्ञापयति देवः।' राजा प्राप्तमेनं श्वानं समं हस्ताभ्यां परामृश्य प्रलोभ्य तत्प्रियैस्तैस्तैर्वस्तुभिर्निष्ठीव्य च तदानने 'यत्राहं क्वचिदवतिष्ठे तत्रायं वराहवैरी संयमनीयः' इत्युक्त्वा वान्तादगणिमुख्याया**काण्डमृत्यवे** समर्पयामास ।

एवं स्वाचरितोपचितप्रयोगाद्विधिनियोगाद्वयोरप्यावयोस्तत्र पूर्वभवानुभूतभूमिव्यासे नृपनिवासे सह संवसतोरेकदा निशान्तनिवासाशयानामन्तःपुरपुरंध्रिकालंकारविकृतकायानां शम्भलीना**ममृतमति**महादेवीदर्शनायाशु प्रकाशितगतिकेलीनां गमनाभिनिवेशवशरसद्रसनामुक्तमणिकिङ्किणीजा-

---

नबुद्धे पशुपते हे शुनकपाल, इत इत एतस्मात् स्थानात् एतस्मिन् स्थाने अयमेष यक्षपुरुषः समानीयतां उपढौक्यताम् । पशुपतिर्ब्रूते—यथा आज्ञापयति देवस्तदहं करोमि । राजा इत्युक्त्वा इति भणित्वा अकाण्डमृत्यवे नाम्ने वान्तादगणिमुख्याय वान्तादानां शुनां ये गणयः प्रतिपालकास्तेषां मुख्यः तस्मै तथोक्ताय समर्पयामास दत्तवान् । इतीति किम्। भो अकाण्डमृत्यो, यत्र क्वचित् अहं अवतिष्ठे तिष्ठामि तत्र स्थाने अयं वराहवैरी श्वा संयमनीयो बन्धनीयः । किं कृत्वा पूर्वमकाण्डमृत्यवे बभाण । एनमेतं श्वानं प्राप्तं समं हस्ताभ्यां परामृश्य स्पृष्ट्वा । पुनः किं कृत्वा पूर्वम् । तत्प्रियैः तस्य वल्लभैस्तैस्तैर्वस्तुभिः प्रलोभ्य लोभयित्वा । पुनः किं कृत्वा पूर्वम् । तदानने तस्य मुखे निष्ठीव्य च ॥

एवममुना प्रकारेण विधिनियोगात् कर्मवशात् द्वयोरपि मयूरशुनकपर्याययोरावयोर्यशोधरचरमयूरचन्द्रमतिचरशुनकयोस्तत्र तस्मिन् त्रिभुवनतिलकनाम्नि नृपनिवासे सह संवसतोः सह तिष्ठतोः । एकदा एकस्मिन् प्रस्तावे सौधस्य अधिरोहणाध्वना आरोहणमार्गेण सप्तमं तलं अध्यारूढोऽस्मि अहं चढितोऽस्मि । कथंभूताद्विधिनियोगात् । स्वाचरितोपचितप्रयोगात् स्वेनात्मना यदाचरितमुपार्जितं कर्म तेनोपचितः पुष्टिं नीतः प्रयोगो व्यापारो यस्य स तथोक्तस्तस्मात् । कथंभूते नृपनिवासे । पूर्वभवानुभूतभूमिव्यासे पूर्वभवे यशोधरचन्द्रमतिभवान्तरे अनुभूतो भुक्तो भूमिव्यासो भूमिविस्तारो यस्य नृपनिवासस्य स तथा तस्मिन् । अहं कथंभूतः सन् सप्तमं तलमारूढः । शम्भलीनां दासीनां नूपुरनादेन मञ्जीरशब्दितेन विनोद्यमानमानसः विनोद्यमानं रम्यमाणं मानसं यस्य स तथा । कथंभूतानां शम्भलीनाम् । निशान्तनिवासाशयानां अन्तःपुरवसतिचेतसाम् । पुनः कथंभूतानां शम्भलीनाम् । अन्तःपुरपुरंध्रिकालंकारविकृतकायानां अन्तःपुरस्य या पुरंध्रिकास्तासामलंकारैर्विकृतो विकारं प्राप्तः कायो यासां तास्तासाम् । पुनः कथंभूतानां शम्भलीनाम्। अमृतमतिमहादेवीदर्शनाय मेलनाय आशु प्रकाशितगतिकेलीनाम्। कथंभूतेन नूपुरनादेन । गमनाभिनिवेशवशरसद्रसनामुक्तमणिकिङ्किणीजालकलकोलाहलेन गमनस्याभिनिवेशोऽभिप्रायस्तस्य वशेन अधीनतया रसञ्छब्दायमानं रसनायां कटिमेखलायां



लकलकोलाहलेन सजलजलधरध्वनिनेव नूपुरनादेन विनोद्यमानमानसः **सुभगकंदर्पा**भिधस्य सौधस्याधिरोहणाध्वना सप्तमं तलमध्यारूढोऽस्मि ।

तत्र च क्षणमात्रमिव स्थित्वा प्रतिनिवृत्तासु प्रतीपदर्शिनीष्वहं भूतभवानुभूतभवनभूमिसंभावनाविर्भूतान्तःकरणतया मनाग्विलम्बमानस्ता**ममृतमति**महादेवीं तेन कुब्जेन सह विहितमोहनामवलोक्य प्रवृद्धानवधिक्रोधविधुरधीलोचनः कोपाटोपत्रुटत्त्रोटिशल्कोल्काजालवर्षविष्यन्दनैस्तुण्डतण्डनैः, निबिडावेशवशविशीर्यमाणबर्हविहिताकालकेतूद्गतिभिः पक्षप्रहतिभिः, कीकसावसानविश्रान्तनखमुखमार्गोद्गलद्रुधिरधाराकाण्डताण्डवित-

---

मुक्तं बद्धं यन्मणिकिङ्किणीजालं अनेकविधमाणिक्यघटितसुवर्णक्षुद्रघण्टिकासमूहस्तस्य कलो मधुरो योऽसौ कोलाहलः प्रचुरशब्दस्तेन। पुनः कथंभूतेन नूपुरनादेन । सजलजलधरध्वनिना सजलो जलेन सह वर्तमानो यो जलधरो मेघस्तस्य ध्वनिरिव शब्दो यस्य तेन इव । कथंभूतस्य सौधस्य। सुभगकंदर्पाभिधस्य सुभगकंदर्प इत्यभिधा नाम यस्य तथा तस्य॥

तत्र तस्मिन् सुभगकंदर्पनामसौधसप्तमतले मनाग्विलम्बमानः सन् तेन शुनीसूनुना चन्द्रमतिचरकुर्कुरेण समवर्तिवशां यमाधीनां दशां अहं आनिन्ये प्रापितः । कया कृत्वा मनाग्विलम्बमानः । भूतभवानुभूतभवनभूमिसंभावनाविर्भूतान्तःकरणतया भूतोऽतीतो योऽसौ भवो यशोधरभवान्तरं तस्मिन् अनुभूतं भुक्तं यद्भवनं गृहं तस्य भूमेः संभावना संस्मरणं तया आविर्भूतं यदन्तःकरणं मनस्तस्य भावस्तत्ता तया । किं कृत्वा पूर्वम् । तत्र च सौधे क्षणमात्रमिव स्थित्वा ईषत्कालमुत्थो भूत्वा । कासु सतीषु मनाग्विलम्बमानः । तासु प्रतीपदर्शिनीषु स्त्रीषु प्रतिनिवृत्तासु व्याघुटितासु । किं कृत्वा पूर्वम् । तां प्रसिद्धां अजिनमहाराजपुत्रीममृतमतिमहादेवीं तेन कुब्जेन सह विहितमोहनां कृतसुरतक्रीडां अवलोक्य दृष्ट्वा । अहं कथंभूतः संजातः । प्रवृद्धानवधिक्रोधविधुरधीलोचनः प्रवृद्धोऽनवधिरमर्यादीभूतो योऽसौ क्रोधस्तेन विधुरं विकस्तंअन्ध(?) धीलोचनं यस्य मम स तथोक्तः। पुनः कथंभूतोऽहम् । तयोः कुब्जकामृतमत्योराचरितसुरतसुखान्तरायः कृतसंभोगसुखविघ्नः। कैः कृत्वा कृतान्तरायः। तुण्डतण्डनैश्चञ्चुघातैः। कथंभूतैस्तुण्डतण्डनैः।कोपाटोपत्रुटत्त्रोटिशल्कोल्काजालवर्षविष्यन्दनैः कोपस्य योऽसावाटोपस्तेन त्रुटन्ती शतखण्डीसंजायमाना या त्रोटिश्चञ्चुस्तस्याः शल्कानि खण्डानि तान्येव उल्काजालं पतत्सारमण्डलं तस्य वर्षो वर्षणं तेन विष्यन्दनानि शल्कानि येषु तुण्डनेषु तानि तथोक्तानि तैः । पुनः काभिः कृत्वाचरितसुरतसुखान्तरायः । पक्षप्रहतिभिः वामदक्षिणपक्षप्रताडनैः । कथंभूताभिः । निबिडावेशवशविशीर्यमाणबर्हविहिताकालकेतूद्गतिभिः निबिडो गाढो योऽसौ आवेशः क्रोधस्तस्य वशात् विशीर्यमाणानि यानि बर्हाणि पिच्छानि तैर्विहिता अकाले केतूद्गतिः अक-

संध्यारागसंततिभिः कृकाहतिभिश्च तयोराचरितसुरतसुखान्तरायः, संबाधविरिध्वावधानसविधशरीरिकया कयाचित्परिवारदारिकया सुप्रतिष्ठेन कयाचिद्वेत्रलतया कयाचित्तालवृन्तेन कयाचित्प्रकीर्णदण्डिकया कयाचिद्वाङ्गुलीजालेन कयाचिदनुपदीनया, तथापराभिरपि समुत्साहितसौविदल्लसदःशरीराभिरवरोधविलासिनीभिश्च तेन तेनोपकरणकलापेनातिनिर्दयहृदयं प्राणप्रयाणपर्यन्तजर्जरितकायः, केकिनमेनमापादितामृतमतिमहादेवीद्रोहं धरत बध्नीताहत मारयतेति परिदेवनमुखरमुखीभिः सोपानमार्गेण निलोठितः, शुनीसूनुना च तेन ममायमेतन्मयूरमारणे प्रेरणोप-

---

स्मात्केतुग्रहस्य उद्गतिः उदयो याभिस्तत्पक्षप्रहतिभिः । पुनः काभिः कृत्वाचरितसुरतसुखान्तरायः । कृकाहतिभिः शिरोग्रीवस्य आहतिभिस्ताडनैः । कथंभूताभिः । कीकसावसानविश्रान्तनखमुखमार्गोद्गलद्रुधिरधाराकाण्डताण्डवितसंध्यारागसंततिभिः कीकसानामस्थ्नामवसानेषु विश्रान्तानि तत्र लग्नानि यानि नखानि च मुखं च तेषां मार्गास्तेषु उद्गलन्त्य ऊर्ध्वमुच्छलन्त्यो या रुधिरधाराश्छटास्ताभिरकाण्डे ताण्डविता विस्तारिता संध्यारागसंततयः पटलानि याभिः कृकाहतिभिस्तास्तथोक्तास्ताभिः । पुनः कथंभूतोऽहम् । कयाचित् परिवारदारिकया कुटुम्बदास्या अतिनिर्दयहृदयं यथा भवत्येवं प्राणप्रयाणपर्यन्तजर्जरितकायः सुप्रतिष्ठेन पतद्ग्रहेण ताम्बूलादिभाजनसंपुटकेन । कथंभूतया दारिकया । संबाधविरिध्वावधानसविधशरीरिकया··························(?) । कयाचिद्दारिकया वेत्रलतया कृत्वा जर्जरितकायः, कयाचिदन्यया तालवृन्तेन व्यजनेन जर्जरितकायः, कयाचिद्दारिकया प्रकीर्णदण्डिकया जर्जरितकायः, कयाचिद्वाङ्गुलीजालेन पूगफलादिप्रसवकेन जर्जरितकायः, कयाचित् अन्यतरया अनुपदीनया उपानहा कृत्वा जर्जरितकायः । तथा दारिकाणां प्रकारेण अपराभिरपि अवरोधविलासिनीभिश्च अन्तःपुरनारीभिश्च तेन तेन प्रसिद्धेन उपकरणकलापेन कर्पूरकरण्डदर्व्यादिकेन जर्जरितकायः । कथंभूताभिरवरोधविलासिनीभिः । समुत्साहितसौविदल्लसदःशरीराभिः समुत्साहिता नि···नं प्रापिताः सौविदल्लानां स्थापत्यानां बुद्धाण्डकानां सदसः समूहस्य शरीराणि याभिस्तास्तथोक्ताभिः । पुनः कथंभूताभिरवरोधविलासिनीभिः । इत्यमुना प्रकारेण परिदेवनमुखरमुखीभिः रोदनविलपनवाचालवक्त्राभिः । इतीति किम् । एनमेतं केकिनं मयूरं आपादितामृतमतिमहादेवीद्रोहं आपादितो निष्पादितोऽमृतमतिमहादेव्या द्रोहो वधो येन स तथा तम् । धरत गृहीत यूयम्, बध्नीत बन्धनं प्रापयत यूयम्, आहत ताडयत यूयम्, मारयत जीवग्राहं गृह्णीत यूयम् । प्राणविनाशं प्रापयत यूयमित्यर्थः । एवं कृत्वा सोपानमार्गेण निलोठितः । आरोहणमार्गेण यापित इत्यर्थः । शुनीसूनुना चन्द्रमतिचरकुर्कुरेण तेन



क्रम इति मन्यमानेनापदान्तरेऽवसनशरीरतया समागतः समवर्तिवशां दशामहमानिन्ये ।

क्षितिपतिना च तेन समीपसंपादितद्यूतेन मुञ्च मुञ्चेमं चित्रपिङ्गलमतीवत्वरगलं गिरता सारकेलिमपहायाकर्षेण शीर्षदेशे दृढदत्तप्रहारकलः सोऽपि भण्डिलस्तामेव दिवसकरात्मजाश्रयस्थामवस्थामनुससार ।

राजा गलनिर्गतप्राणयोरावयोरकामकृतामुपसंपन्नतामवेत्य शोकातङ्कसंकुलकायः

> प्रासादमण्डनमणौ रमणीविनोदे
> क्रीडावनीधरशिलातलचित्रलेखे ।

---

पूर्वोक्तेन इति ईदृशं मन्यमानेन मानता आपदान्तरे निकटे अवसनशरीरतया अहं समागतः सन् समवर्तिवशां यमवशां दशामवस्थां आनिन्ये आनीतः । इतीति किम् । एतन्मयूरमारणे अयं मम प्रेरणोपक्रमो ज्ञात्वारम्भ उपक्रमः ॥

सोऽपि भण्डिलश्च श्वा तामेव अवस्थां अनुससार आश्रितः । कथंभूतां अवस्थां आनिन्ये । दिवसकरात्मजां दिवसकरात्मजा सा श्रीभास्करान्वयस्य आश्रये तिष्ठतीति या अवस्था सा ताम् । मरणावस्थां प्रापेत्यर्थः । भण्डिलः कथंभूतः । क्षितिपतिना यशोमतिना नृपेण आकर्षेण फलकेन कृत्वा शीर्षदेशे मस्तकोपरि दृढदत्तप्रहारकलः दृढा निष्ठुरा दत्ता विश्राणिता प्रहारस्य कला अवस्था यस्य भण्डिलस्य स तथा । किं कृत्वा पूर्वम् । सारकेलिमपहाय सारिप्रासक्रीडां परित्यस्य । कथंभूतेन क्षितिपतिना । समीपसंपादितद्यूतेन निकटतरनिष्पादितदुरोदरक्रीडेन । किं कुर्वता क्षितिपतिना । इममेतं चित्रपिङ्गलं मयूरं मुञ्च मुञ्च अतीवत्वरगलं अतिशयेन वेगवद्गलाशब्दं यथा भवत्येवं गिरता शब्दायता ॥

राजा यशोमतिकुमार इत्येवमन्वतिष्ठत् चकार । किं कृत्वा पूर्वम् । आवयोर्मयूरशुनकयोरकामकृतामनिच्छोत्पन्नामुपसंपन्नतां मृत्युमवेत्य विज्ञाय । कथंभूतयोरावयोः । गलनिर्गतप्राणयोः गलाभ्यां निर्गता निःसृताः प्राणा ययोस्तौ तयोः । कथंभूतो राजा । शोकातङ्कसंकुलकायः शोक एव आतङ्को रोगस्तेन संकुलो भृतः कायो यस्य स तथा । पुनश्च किं कृत्वा पूर्वम् । इत्यमुना प्रकारेण संशोच्य शोकं कृत्वा । इतीति किम्—

**प्रासादेत्यादि** । हे मयूर, त्वयि भवति कीर्तिशेषे मृते सति वधूनां स्त्रीणां केलिकरतालविधिं क्रीडाहस्तताडनविधानम् । नामेति संभावनायाम् । कः करिष्यति को विधास्यति । अपि तु न कश्चित् करिष्यतीति भावः । कथंभूतं केलिकरतालविधिम् । नृत्तानुगं

को नाम केलिकरतालविधिं वधूनां
नृत्तानुगं त्वयि करिष्यति कीर्तिशेषे ॥
सिंहः सुखं निवसतादचलोपकण्ठे
सोत्कण्ठमेणनिचयश्चरतात्स्थलीषु ।
सत्त्वाः परेऽपि विपिने विलसन्त्वशङ्कं
नाकं गतोऽयमधुना ननु विश्वकद्रुः ॥

इति संशोच्य 'हंहो स्वपरजनपरीक्षणमायाकार मायाकार, कार्यन्तामनयोर्भूदेवसंदोहसाक्षिणीः पितृलोकसब्रह्मचारिणीः पावकप्रदानवैहायिकान्वाहार्यपुरःसरसमयाः क्रियाः । प्रदाप्यन्तामनयोर्नाम्ना जननीजनकयोरिव सर्वत्र सत्रसभामण्डपाधिपाः प्रपाः' इत्यन्वतिष्ठत् ।

---

नर्तनानुसारि । कथंभूते त्वयि । प्रासादमण्डनमणौ प्रासादस्य राजसदनस्य मण्डने भूषणे मणिः शिरोरत्नं तस्मिन् । पुनः कथंभूते त्वयि । रमणीविनोदे.............. । पुनः कथंभूते त्वयि । क्रीडावनीधरशिलातलचित्रलेखे क्रीडावन्यां योऽसौ धरस्तस्य शिलातलं उपरितनभागस्तस्मिन् चित्रलेखायलेखा यस्माद्येन वा स तथा तस्मिन् । रूपकाक्षेपालंकारः ॥

**सिंह इत्यादि** । अयमेष विश्वकद्रुः श्वा नाकं गतः । ननु निश्चयेन । अधुना अचलोपकण्ठे सिंहः सुखं यथा भवत्येवं निवसतात् । एणनिचयः.........सोत्कण्ठं यथा स्यात् तथा स्थलीषु वनस्थानेषु चरतात् चरतु यथेष्टं विचरतु वा । परेऽपि सत्त्वा विपिने अशङ्कं यथा भवत्येवं विलसन्तु विशेषेण क्रीडन्तु । हेत्वलंकारः ॥

पुनः इतीति किम् । हंहो अहो स्वपरजनपरीक्षणमायाकार स्वश्च परश्च योऽसौ जनस्तस्य परीक्षणे मायाकार मानस्य श्रीनारायणवत्परीक्षक हे मायाकार हे प्रतीहार, कार्यन्तां विधाप्यन्ताम् । काः । अनयोः क्रियाः । कथंभूताः क्रियाः । भूदेवसंदोहसाक्षिणीः ब्राह्मणसमूहप्रत्यक्षाः । पुनः कथंभूताः । पितृलोकसब्रह्मचारिणीः पितृलोकसदृशा । पुनः कथंभूताः । पावकप्रदानवैहायिकान्वाहार्यपुरःसरसमयाः पावकप्रदानं चाग्निसंस्कारः, वैहायिकश्च कारटकः, अन्वाहार्यश्च मृतस्य मासिकक्रिया ते पुरःसराः प्रभृतयः षाण्मासिकसांवत्सरिकादयः समया काला यासु तास्तथा ताः । अनयोर्मयूरशुनकयोर्नाम्ना निमित्तेन । एतावुद्दिश्येत्यर्थः । प्रदाप्यन्तां प्रकर्षेण विश्राणनानि कार्यन्ताम् । काः प्रदाप्यन्ताम् । प्रपाः पानीयशालाः । किंवत् । जननीजनकयोरिव चन्द्रमतियशोधरयोरिव । प्रपाः क्व प्रदाप्यन्ताम् । सर्वत्र मम सर्वस्मिन्नपि देशे । कथंभूताः प्रपाः । सत्रसभामण्डपाधिपाः सत्रं भोजनशाला, सभाश्च गोष्ठिशालाः, मण्डपाश्च छत्रादिनिलयाः, तेषां अधिपाः अधिकारिणो वियोगिनो यासु प्रपासु तास्तथोक्ताः ॥



समस्तसत्त्वसदयहृदय, शुभधामोदय, पुनरस्ति खलु खेचरीसंगीतकमुखरचूलिकाचक्रवालात्सुवेलशैलादपरदिग्देवताविनोदायतनं **शिखण्डिताण्डवमण्डनं** नाम वनम् । यदेवं देहिनो वर्णनविषयतां नयन्ति । तथा हि—दुर्जनहृदयमिव दुःप्रवेशम्, प्रलयकालमिव भयानकम्, निगद्यागममिव गहनावसानम्, बुद्धाण्डकमिवालब्धमध्यसंचारम्, राजकुलमिव क्षुद्रलोकाधिष्ठितम्, वामेक्षणाचरितमिव स्वभावविषमम्, निःस्वामिकमिवामर्यादव्यवस्थम्, छत्रभङ्गमिव बहुकण्टकोपद्रवम्, खलोपदेशमिव दुरन्तम्, नृपतिचित्तमिव दुःखोपसेव्यम्, समराङ्गणमिव सखड्ग-

---

हे समस्तसत्त्वसदयहृदय हे सर्वजीवकरुणामानस, हे शुभधामोदय हे पुण्यतेजःप्रादुर्भाव, हे मारदत्त महाराज, पुनः पुनरपि मयूरभवशुनकभवान्तरादनन्तरं द्वितीयं भवान्तरं वर्ण्यते । तथा हि—सुवेलशैलात् अपरदिग्देवताविनोदायतनं अपरदिक् पश्चिमदिक् सैव देवता तस्याः विनोदायतनं क्रीडामन्दिरं शिखण्डिताण्डवमण्डनं नाम खलु वनमस्ति । कथंभूतात् सुवेलशैलात् । खेचरीसंगीतकमुखरचूलिकाचक्रवालात् खेचरीसंगीतकं गीतनृत्यवादित्रत्रयं तेन मुखरं चूलिकाचक्रवालं शिखरमण्डलं यस्य सुवेलशैलस्य स तथा तस्मात् । यद्वनमेवं देहिनो विद्वांसो वर्णनविषयतां नयन्ति वर्णनगोचरत्वं प्रापयन्ति । तथा हि तदेव वर्णनं करोति—कथंभूतं शिखण्डिताण्डवमण्डनं वनम् । दुष्प्रवेशं दुःखेन प्रवेष्टुं शक्यम् । किमिव । दुर्जनहृदयमिव यथा दुर्जनहृदयं दुष्प्रवेशं भवति । दुर्जनहृदयं प्रवेशं कर्तुं न शक्यते । पुनः कथंभूतम् । भयानकम् । किमिव । प्रलयकालमिव यथा कल्पान्तकालो भयानको भवति । पुनः कथंभूतम् । गहनावसानं अवसाने गहनम् । किमिव । निगद्यागममिव गणितशास्त्रमिव । पुनः कथंभूतम् । अलब्धमध्यसंचारं न लब्धो मध्यसंचारो यस्य तत्तथोक्तम् । किमिव । बुद्धाण्डकमिव आत्मज्ञानमिव । पुनः कथंभूतम् । क्षुद्रलोकाधिष्ठितं व्याघ्रादिसहितम् । किमिव । राजकुलमिव यथा राजकुलं असहिष्णुलोकसहितं भवति । पुनः कथंभूतम् । स्वभावविषमम् । किमिव । वामेक्षणाचरितमिव यथा स्त्रीणां आचरितं स्वभावेन विषमं वक्रं भवति । पुनः कथंभूतम् । अमर्यादव्यवस्थितं अपर्यन्तस्थितिकम् । किमिव । निःस्वामिकमिव यथा निःस्वामिकं नगरादिकं अमर्यादव्यवस्थं भवति अवधिनियमेन कथंचिच्चलति । पुनः कथंभूतम् । बहुकण्टकोपद्रवं सूक्ष्मतीक्ष्णकण्टकोपद्रवसहितम् । कमिव । छत्रभङ्गमिव यथा छत्रभङ्गः क्षुद्रशत्रूपद्रवसहितो भवति । पुनः कथंभूतम् । दुरन्तमन्तरहितम् । कमिव । खलोपदेशमिव यथा खलानामुपदेशो वञ्चकानां शास्त्रान्तरं दुष्टं स्वभावं भवति । पुनः कथंभूतम् । दुःखोपसेव्यं दुःखेनाश्रयणीयम् । किमिव ।

संघट्टम्, वेतालकुलमिव महादेहभीषणम्, कलिङ्गवनमिव दन्तिदुर्गमम्, स्वर्धुनीप्रवाहमिव कृताष्टापदावतारम्, नाटेरमिव सचित्रकम्, [1]वर्षारात्रमिव घनमेघरावम्, रघुवंशमिव मागधीप्रभवम्, चन्द्रमिवामृतास्पदम्, गिरिसुताचरितमिव विजयाविस्तृतम्, जलनिधिमिव जम्बुकाध्युषितम्, रथचरणपाणिमिव सुदर्शनाधारम्, युधिष्ठिरमिव मरुद्भवार्जुननकुलसहदे-

---

नृपतिचित्तमिव यथा नृपतिचित्तमाराधयितुं न शक्यते । पुनः कथंभूतम् । सखड्गसंघट्टं सह खड्गसंघट्टेन गण्डकयुद्धेन वर्तत इति सखड्गसंघट्टम् । किमिव । समराङ्गणमिव······ ························································ । पुनः कथंभूतम् । महादेहभीषणम्······························ । किमिव । वेतालकुलमिव व्यन्तरादिशेषसमूहमिव । पुनः कथंभूतम् । दन्तिदुर्गमं दन्तिभिः पर्वतैर्दुर्गमम् । किमिव । कलिङ्गवनमिव यथा कलिङ्गवनं दन्तिभिर्दुर्गमं भवति । पुनः कथंभूतम् । कृताष्टापदावतारं कृतः अष्टापदैः शरभैरवतारः प्रवेशो यत्र वने तत् । किमिव । स्वर्धुनीप्रवाहमिव यथा स्वर्धुनीप्रवाहः अष्टापदैः कैलासपर्वतैरवतरति । पुनः कथंभूतम् । सचित्रकं सह चित्रकैर्व्याघ्रविशेषैर्वर्तते इति सचित्रकम् । कमिव । नाटेरमिव यथा नाटेरो नटः सचित्रकः आश्चर्यजनको भवति । पुनः कथंभूतम् । घनमेघरावं घनमेघरावैर्घनैर्बहुलैर्मेघरावैर्मयूरैर्वर्तत इति घनमेघरावम् । कमिव । वर्षारात्रमिव यथा वर्षारात्रो वर्षाकालो घनमेघरावः प्रचुरमेघशब्दो भवति । पुनः कथंभूतम् । मागधीप्रभवं मागधीनां पिप्पलीनां प्रभवो यत्र तत्तथोक्तम् । कमिव । रघुवंशमिव यथा रघुवंशः मागध्या दिलीपभार्यायाः सुदक्षिणानाम्न्याः प्रभवो वर्णनं अस्तित्वं यत्र स तथा तम् । पुनः कथंभूतम् । अमृतास्पदं अमृताया गुरूच्या आस्पदं स्थानम् । कमिव । चन्द्रमिव यथा चन्द्रोऽमृतस्य सुधाया आस्पदं वर्णयन्ति । पुनः कथंभूतम् । विजयाविस्तृतं विजयाभिर्हरीतकीभिर्विस्तृतम् । किमिव । गिरिसुताचरितमिव यथा गिरिसुताचरितं विजयया गौरीसख्या विस्तृतं भवति । पुनः कथंभूतम् । जम्बुकाध्युषितं शृगालैः सेवितम् । किमिव । जलनिधिमिव यथा जलनिधिः समुद्रः जम्बुकेन वरुणदिक्पालेन अध्युषितो भवति । पुनः कथंभूतम् । सुदर्शनाधारं सुदर्शनानामौषधिविशेषाणामाधारं स्थानम् । कमिव । रथचरणपाणिमिव यथा नारायणः सुदर्शननाम्नश्चक्रस्य आधारो भवति । 'चक्रं सुदर्शने' इति वचनात् । पुनः कथंभूतम् । मरुद्भवार्जुननकुलसहदेवानुगं मरुद्भवो वातोत्पत्तिः, अर्जुनः केकी अर्जुनो वृक्षविशेषः, नकुलः सर्पवैरी, सहदेवा बला, मरुद्भवार्जुननकुलसहदेवास्ताननुगच्छतीति मरुद्भवार्जुननकुलसहदेवानुगम् । कमिव । युधिष्ठिरमिव यथा युधिष्ठिरो मरुद्भवेन भीमसेनेन अर्जुनेन पार्थेन अनुगच्छति अनुगमनं करोति । अथवा मरुद्भवार्जुननकुलसहदेवा

---

१. पाणिनीयतन्त्रानुसारेण 'वर्षारात्रिमिव' इति भवितव्यम्, समासान्तविधायकसूत्रानुपलम्भात्.



वानुगम्, सुभटानीकमिवाभीरुप्रतिष्ठितम्, दुग्धोदधिमथनमिव लक्ष्मीसनाथम्, छन्दःशास्त्रमिव जातबृहतीकम्, समर्थस्थानमिव तपस्विनीप्रचुरम्, धूर्जटिजटाजूटमिव चन्द्रलेखाध्यासितम्, युगत्रयावसानमिव कलिपरिगृहीतम्, दिवसमिव सार्कमण्डलम्, अनम्बरिषमप्यरिमेदःस्फारम्, अमाहेश्वरमपि जातशिवप्रियम्, अवेदवचनमपि गायत्रीसारम्,

---

अनुगाः यस्य स तथा तम् । पुनः कथंभूतम् । अभीरुप्रतिष्ठितं अभीरुरिन्दीवरी तया प्रतिष्ठितं सहितम् । उक्तं च—'वातमूली बहुसुता अभीरुरिन्दीवरी स्थिरपत्रा' इति यावत् । किमिव । सुभटानीकमिव यथा सुभटानीकं सुभटसैन्यं अभीरुप्रतिष्ठितमकातरप्रतिष्ठितं भवति । पुनः कथंभूतम् । लक्ष्मीसनाथं लक्ष्म्या मरडश्रृङ्गीसहितं भवति । किमिव । दुग्धोदधिमथनमिव यथा क्षीरसागरमथनं लक्ष्मीसनाथं भवति । पुनः कथंभूतम् । जातबृहतीकं जाता उत्पन्ना बृहत्यः क्षुद्रवार्ताक्यो यत्र तत्तथोक्तम् । किमिव । छन्दःशास्त्रमिव यथा छन्दःशास्त्रं जातबृहतीकं व्यक्षरच्छन्दोजातिसहितं भवति । पुनः कथंभूतम् । तपस्विनीप्रचुरं तपस्विनीभिः मुण्डीकह्लाराभिः प्रचुरम् । किमिव । समर्थस्थानमिव आश्रमस्थानमिव यथा समर्थस्थानं तपस्विनीभिः प्रव्रजिताभिर्बहुलं भवति । पुनः कथंभूतम् । चन्द्रलेखाध्यासितं चन्द्रलेखाभिर्वाकुचीभिरध्यासितमाश्रितम् । कमिव । धूर्जटिजटाजूटमिव श्रीमहादेवजटाबन्धमिव यथा धूर्जटिजटाजूटं चन्द्रलेखाध्यासितं शशिकलासहितं भवति । पुनः कथंभूतम् । कलिपरिगृहीतं विभीतकतरुसहितम् । किमिव । युगत्रयावसानमिव युगानां कृतयुगत्रेताद्वापराणां त्रयं तस्यावसानमिव पर्यन्तमिव यथा युगत्रयावसानं कलिपरिगृहीतं भवति दुःखमकालसहितं भवति । पुनः कथंभूतम् । सार्कमण्डलं सह अर्कमण्डलेन विकीरणवनेन वर्तत इति सार्कमण्डलम् । उक्तं च—'अर्काह्ववसुकास्फोटगणरूपविकारणाः । मन्दारश्चार्कपर्णानि शुक्लेऽलर्कप्रतापसौ ॥' किमिव । दिवसमिव यथा दिवसं दिनः सार्कमण्डलं श्रीसूर्यमण्डलसहितं भवति । पुनः कथंभूतम् । अनम्बरिषमप्यरिमेदःस्फारं ननु यत् अनम्बरिषं अयुद्धं तत्कथं अरिमेदःस्फारं अरीणां मेदसा चतुर्थधातुना स्फारं प्रचुरं कथं भवति । विरुद्धमेतत् । परिह्रियते—अनम्बरिषं नृपरहितं अपि निश्चयेन अरिमेदो विट्खदिरस्तेन स्फारं प्रचुरम् । पुनः कथंभूतम् । अमाहेश्वरमपि जातशिवप्रियम् । ननु यत् अमाहेश्वरं रुद्ररहितं भवति तत् जातशिवप्रियं जाता उत्पन्ना शिवा पार्वती प्रिया यस्य तज्जातशिवप्रियं कथं भवति । विरुद्धमेतत् । परिह्रियते—मा च लक्ष्मीर्हि निश्चयेन ईश्वरः स्वामी ताभ्यां रहितं अमाहेश्वरं अपि निश्चयेन जातशिवप्रियं जातमुत्पन्नं शिवप्रियं तरुविशेषस्तत्तथोक्तम् । उक्तं च—'शिवमल्ली पाशुपत एकाष्ठीलो वुको वसुः ।' शिवप्रियमिति । अथवा महेश्वरो देवता यस्य तत् माहेश्वरम्, न माहेश्वरं अमाहेश्वरम् । ननु यत् अमाहेश्वरं तत् जातशिवप्रियं कथं भवति तस्य शिवः प्रियो न भवति ।

अकविलोकगणनमपि सकालिदासम्, अप्रथमाश्रममपि ब्रह्मचारिबहुलम्,
अस्याद्वादसमयमपि सवर्धमानम्, अदिग्गजकुलमपि सवामनम्, अ-
राकाननमपि ससोमम्, अराक्षसक्षेत्रमपि सपूतनम्, अमहानवमीदिनमपि

---

विरुद्धमेतत्। परिह्रियते—न विद्यते मा लक्ष्मीर्हि निश्चयेन ईश्वरश्च यत्र अरण्यस्य । निः-
स्वामित्वात् प्रायेणेति भावः । अपि निश्चयेन जातशिवप्रियं जाता शिवप्रिया धत्तूरवृक्षा
यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अवेदवचनमपि गायत्रीसारम् । ननु यत् वेदवचनं न
भवति तत् गायत्रीभिः षष्ठीभिश्छन्दोजातिभिः सारं कथं भवति । विरुद्धमेतत् । परिह्रियते—
अवेदानां स्त्रीपुंनपुंसकवेदरहितानां मुनीनां वचनानि यत्र अरण्यवासित्वात् अवेदवचनं
निश्चयेन गायत्रीभिः खदिरवृक्षैः सारं मनोहरं कठिनं वा इति । पुनः कथंभूतम् । अक-
विलोकगणनमपि सकालिदासम् । ननु यत् कविलोकगणनारहितं तत् सकालिदासं कालि-
दासकविसहितं कथं भवति । विरुद्धमेतत् । परिह्रियते—अकं कष्टं तस्य विलोकनस्य दर्श-
नस्य गणना यत्र तत्तथोक्तं अपि निश्चयेन सकालिदासं आम्रतरुसहितं भवति । पुनः
कथंभूतम् । अप्रथमाश्रममपि ब्रह्मचारिबहुलम् । ननु यत् प्रथमाश्रमरहितं भवति ब्रह्मचा-
र्याश्रमरहितं भवति तत् ब्रह्मचारिबहुलं कथम् । विरुद्धमेतत् । परिह्रियते—अप्रथमानं आस-
मन्तात् श्रमः कष्टं यत्र तत् अप्रथमाश्रमं ब्रह्मचारिबहुलं पलाशतरुप्रचुरं इति सुस्थम् ।
पुनः कथंभूतम् । अस्याद्वादसमयमपि सवर्धमानम् । ननु यत् स्याद्वादसमयं न भवति
एकान्तसमयं भवति तत् सवर्धमानं चरमतीर्थंकरसहितं कथं भवति । विरुद्धमेतत् ।
परिह्रियते—अस्याद्वादसमयं शून्यारण्यत्वात् शब्दावसररहितं सवर्धमानं एरण्डतरुस-
हितम् । पुनः कथंभूतम् । अदिग्गजकुलमपि सवामनम् । ननु यत् अदिग्गजकुलं दि-
ग्गजेन्द्रकुलरहितं भवति तत् सवामनं यमदिग्गजसहितं कथं भवति । विरुद्धमेतत् ।
परिह्रियते—अविद्यमानदिग्गजकुलं शब्दसमूहो यत्र अपि निश्चयेन सवामनं भुक्तं
सत् वमनं कारयति वामनो मदनवृक्षस्तत्सहितम् । उक्तं च—'ऐरावणः पुण्डरीको वा-
मनः कुमुदोऽञ्जनः । पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥' 'ऐरावणः पुण्डरीकः
पुष्पदन्तोऽथ वामनः । सुप्रतीकाञ्जनौ सार्वभौमः कुमुद इत्यपि ॥' इति पञ्जिकाकारः ।
'अभ्रमुश्चैव कपिला ताम्रकर्णी च वामना । अनुपाञ्जनवत्यौ च शुभ्रदन्ती च पिङ्गला: ॥'
इति दिग्गजानां भार्याश्चैताः । पुनः कथंभूतम् । अराकाननमपि ससोमम् । ननु यत्
राकाया पूर्णिमाया आननं न भवति तत् ससोमं चन्द्रसहितं कथं भवति इत्यपि
विरुद्धम् । नैवम् । अविद्यमाना राकानना दृष्टरजःकन्या यत्र तत् अराकाननं अपि
निश्चयेन ससोमं हरीतकीवृक्षसहितम् । पुनः कथंभूतम् । अराक्षसक्षेत्रमपि सपूतनम् ।
..................................................................................

..................................................................................

.................................... । पुन कथंभूतम् । अमहानवमीदिनमपि स-



समातृनन्दनम्, असौधतलमपि सनिःश्रेणीकम्, अराजसदनमपि सलेख-
पत्रम्, अत्र्यम्बकमपि सत्रिनेत्रम्, असंभलीपाटकमपि सलम्बस्तनीकम्,
असमनीकरसिकमपि सकवचम्, अक्षयकालदिनमपि नष्टदिग्दिनाधि-
पेन्दुदर्शनम् ।

---

मातृनन्दनम् । ननु यत् महानवमीदिनं न भवति नवदुर्गादिवसानां मध्ये प्रान्त्यदिवसं
महानवमीदिनं हिंसादिनत्वान्महानवमीत्युच्यते, यत् महानवमीदिनं न भवति तत्
समातृनन्दनं समातृणामानन्दकरं कथं भवति इत्यपि विरुद्धम् । नैवम् । अमेन रो-
गेण हाहाकारशब्देन उपलक्षितं नवमीदिनं अष्टाङ्गानां नवमो रोगः समातृनन्दनं कर-
ञ्जवृक्षसहितं इति सुस्थम् । पुनः कथंभूतम् । असौधतलमपि सनिःश्रेणीकम् ।
ननु यत् असौधतलं राजसदनोपरिभागं न भवति तत्सनिःश्रेणीकं अधिरोहिणी-
सहितं कथं भवति इत्यपि विरुद्धम् । परिह्रियते—सुधायाः समूहः सौधं न सौधं
असौधतलं भूमितलं यस्य तत् असौधतलं प्रायेण निर्जलप्रदेशं सनिःश्रेणीकं खर्जू-
रीवृक्षसहितम् । पुनः कथंभूतम् । अराजसदनमपि सलेखपत्रम् । ननु यत् राजसदनं न
भवति सलेखपत्रं दूतादीनां लेखपत्रसहितं कथं भवति इदमपि विरुद्धम् । परिह्रियते—
न विद्यते राज्ञां सदनं समीचीनजीवितं यत्र तदराजसदनं अपि निश्चयेन सलेख-
पत्रं ताडतरुसहितमिति सुस्थम् । पुनः कथंभूतम् । अत्र्यम्बकमपि सत्रिनेत्रम् । ननु
यत् अत्र्यम्बकं रुद्ररहितं भवति तत् सत्रिनेत्रं त्रिलोचनसहितं कथं भवति । विरुद्ध-
मेतत् । नैवम् । अत्रिऋष्यादेस्त्रैयम्बकं गमनशीलमाहकं न भवति व्युत्पत्तिस्तु यथा कथं-
चन सत्रिनेत्रं नालिकेरतरुसहितम् । पुनः कथंभूतम् । असंभलीपाटकमपि सलम्ब-
स्तनीकम् । ननु यत् संभलीपाटकं न भवति तत् लम्बस्तनीसहितं वृक्षनारीसहितं कथं
भवति । इदमपि विरुद्धम् । परिह्रियते—न संभलीं समीचीनफलकां पाटयति निरा-
करोति असंभलीपाटकं अपि निश्चयेन सलम्बस्तनीकं चिञ्चावृक्षसहितम् । पुनः कथंभूतम् ।
असमनीकरसिकमपि सकवचम् । ननु यत् असमनीकरसिकं संग्रामानुरागं न भवति तत्
सकवचं कर्पाससहितं कथम् । इदमपि विरुद्धम् । नैवम् । असमा अकृतत्वात् वक्रा नीकाः
क्षुद्रनद्यो निर्झरोत्पन्ना नद्यस्तासां रसिकं जलं यत्र तत् असमनीकरसिकं अपि निश्चयेन सकवचं
पर्पटसहितं इति सुस्थम् । पुनः कथंभूतम् । अक्षयकालदिनमपि नष्टदिग्दिनाधिपतेन्दुद-
र्शनम् । ननु यत् क्षयकालदिनं न भवति तत् नष्टदिग्दिनाधिपेन्दुदर्शनं कथं भवति
दिनाधिपः सूर्य इन्दुश्च दिनाधिपेन्द्वोर्दर्शनं दिनाधिपेन्दुदर्शनं दिशश्च दिनाधिपेन्दुदर्शनं च
दिग्दिनाधिपेन्दुदर्शनानि नष्टानि न दृष्टानि दिग्दिनाधिपेन्दुदर्शनानि यत्र तत् तथोक्तम् ।
इदमपि विरुद्धम् । नैवम् । न ईषत् क्वचित्क्षयकराणां सिंहव्याघ्रादीनां दिनमवसरो यत्र
तत्तथोक्तम् । अपि निश्चयेन दिशो न लभन्ते पूर्वादयो दिशो न ज्ञायन्ते सघनत्वात्
चन्द्रसूर्यादयोऽपि न दृश्यन्ते इति सुस्थम् ॥

अपि च ।क्वचिद्रक्ततुण्डकुटुम्बिनीलपनचापलच्युतोच्चिलिङ्गावचयवञ्चन-
संरब्धव्याधयुद्धमध्यागतसहचरीप्रणीतफूत्कारकोलाहलकुत्कीलकुञ्जकुहरम्,
क्वचिदुपलम्बाप्रलम्बस्तम्बविलम्बमानजानकोशात्रासितहरिणप्रयाणभरभीत-
भल्लूकनिकरम्, क्वचिदनेकनाकुनिर्गतनिर्मोकालोकनकुपितकलापिनीपोतख-
रनखरमुखावलिख्यमानमेदिनीवदनम्, क्वचिदनवरतमृगमार्गमार्गणश्रमश्रा-
न्तविलातवेल्लिकोच्चुलुञ्चितचुरीवारिवीक्षणातुरतरक्षुचक्षुर्दुर्लक्ष्यनगनिम्नगापु-
लिनम्, क्वचिड्डामरिकनिकायसायकविद्धवृद्धवराहविरसविरसितस्रवत्कुरङ्गा-

---

अपि च तथा च । क्वचित् कस्मिंश्चित् स्थाने । कथंभूतं वनम् । रक्ततुण्डकुटम्बिनीलप-
नचापलच्युतोच्चिलिङ्गावचयवञ्चनसंरब्धव्याधयुद्धमध्यागतसहचरीप्रणीतफूत्कारकोलाहलकु-
त्कीलकुञ्जकुहरम् रक्ततुण्डानां शुकानां कुटुम्बिन्यः प्राणवल्लभास्तासां लपनानि मुखानि
तेषां चापलेन च्युतानि अधःपतितानि उच्चिलिङ्गानि दाडिमफलानि तेषां अवचयो
रक्षणं तस्य वञ्चने ग्रहणे संरब्धं प्रारब्धं यत् व्याधयुद्धं तस्य मध्ये आगता युद्धनिवारणार्थं
प्रविष्टा याः सहचर्यस्ताभिः प्रणीतः कृतो योऽसौ फूत्कारस्तेन कोलाहलमव्यक्तशब्दं कुत्की-
लस्य पर्वतस्य कुञ्जकुहरं लतादिपिहितोदरगह्वरमध्यं तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित्
कस्मिंश्चित् स्थाने उपलम्बाप्रलम्बस्तम्बविलम्बमानजानकोशात्रासितहरिणप्रयाणभरभीत-
भल्लूकनिकरम् उपलम्बा लतास्तासां प्रलम्बः प्रतानस्तस्य स्तम्बा गुल्मानि तेषु विल-
म्बमाना ये जानका अरण्यवृषभा वानरा वा तैरुत्रासिता भयं प्रापिता ये हरिणास्तेषां
प्रयाणं पलायनं तस्य भरेण अतिशयेन भीतो भयं प्राप्तो भल्लूकानां शृगालानां निकरः
समूहो यत्र वने तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने अनेकना-
कुनिर्गतनिर्मोकालोकनकुपितकलापिनीपोतखरनखरमुखावलिख्यमानमेदिनीवदनम् अनेके
बहवो ये नाकवो वल्मीकानि तेभ्यो निर्गता निःसृता ये निर्मोकाः सर्पकञ्चुलिकास्तेषामा-
लोकनेन कुपिता ये कलापिनीपोता मयूरीबालकास्तेषां खराणि व्रणितानि नखरमुखानि
चेत्यन्तविग्रहास्तैरवलिख्यमानं विदार्यमाणं मेदिनीवदनं भूमिमुखं यत्र तत्तथोक्तम् । भ्रान्ति-
मानलंकारः । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने अनवरतमृगमार्गमार्गणश्रमश्रा-
न्तविलातवेल्लिकोच्चुलुञ्चितचुरीवारिवीक्षणातुरतरक्षुचक्षुदुर्लक्ष्यनगनिम्नगापुलिनम् अनवरतं
मृगाणां मार्गमार्गणेन पथान्वेषणेन यः श्रमः कष्टं तेन श्रान्ता कष्टं प्राप्ता ये विलातवेल्लिका
भिल्लानां बालकास्तैरुच्चुलुञ्चिताश्चुण्टिताश्चुर्यो वालुकावापिकास्तासां वारिवीक्षणेन आतुरा
व्याकुला ये तरक्षवोऽरण्यशुनकास्तैर्दुर्लक्ष्यमिव लोकयितुमशक्यं दुष्प्रवेशं नगनिम्नगानां
पुलिनं वालुकाद्वीपं 'तोयोत्थितं तत्पुलिनम्' इति वचनात् तत्तथोक्तम् । पुनः कथंभूतम् ।
क्वचित् कस्मिंश्चित् स्थाने डामरिकनिकायसायकविद्धवृद्धवराहविरसविरसितस्रवत्कुरङ्गा-
ङ्गनागर्भनिर्भरम् डामरिकनिकायस्य चौरसमूहस्य सायका बाणास्तैर्विद्धास्ताडिता ये वृद्ध-



ङ्गनागर्भनिर्भरम्, क्वचिदुन्मदमहिषमण्डलारब्धरणविषाणसंघट्टोच्छलत्स्फु-
लिङ्गसङ्गशीर्यमाणागमाग्रपल्लवभरम्, क्वचिद्द्विपसंपन्नपादपाटितेभकुम्भस्थ-
लोत्प्रवाहवहल्लोहितविधीयमानवियच्छत्रारुणमणिदण्डडम्बरम्, क्वचिदवि-
च्छिन्नविहारवानरनिकरविकीर्यमाणनीडक्रोडोड्डीनाण्डजच्छदच्छन्नाम्बरम्,
क्वचिदभ्रंकषानोकहप्रकाण्डमण्डलीक्रीडोड्डमरडाकिनीकरालितोत्सर्गम्, क्व-
चिद्धनघूकघोरघूत्कारघूर्ण्यमाणपुराणविटपिकोटरप्रसूतवायसीवर्गम्, क्वचि-
द्बलवद्बलालोन्मूलितद्रुमलाकुलकलभप्रचारम्, क्वचिच्छिलोच्चयनिकुञ्ज-

---

वराहा जरच्छूकरास्तेषां विरसविरसितैः कर्कशशब्दितैः स्रवन्तः पतन्तः कुरङ्गाङ्गनानां
गर्भा उदरसत्त्वास्तैर्निर्भरं व्याप्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने उन्म-
दमहिषमण्डलारब्धरणविषाणसंघट्टोच्छलत्स्फुलिङ्गसङ्गशीर्यमाणागमाग्रपल्लवभरम् उन्मदा
मदोन्मत्ता ये महिषा वाहद्विषस्तेषां मण्डलं समूहस्तेन आरब्धः कृतो योऽसौ
रणः संग्रामः । 'अस्त्रियां समरानीकरणम्' इति वचनात् रणशब्दस्य पुंनपुंसकत्वम् ।
तस्मिन् विषाणसंघट्टेन शृङ्गप्रहारेण उच्छलन्तो ये स्फुलिङ्गास्तेषां सङ्गेन शीर्यमाणो
विध्वंस्यमानोऽगमानां वृक्षाणां अग्रपल्लवभरः उपरितनप्रवालसमूहो यत्र तत्तथो-
क्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने द्विपसंपन्नपादपाटितेभकुम्भस्थ-
लोत्प्रवाहवहल्लोहितविधीयमानवियच्छत्रारुणमणिदण्डडम्बरम् द्विपसंपन्नपादैः सिंहचरणैः
पाटितं विदारितं यत् इभकुम्भस्थलं तस्मात् उत्प्रवाहं ऊर्ध्वप्रवाहं सत् वहत् उच्छलत्
यत् लोहितं रुधिरं तेन विधीयमानः विपच्छत्रस्य अरुणमणिदण्डडम्बरो रक्तरत्नदण्डाटोपो
यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने अविच्छिन्नविहारवानरनि-
करविकीर्यमाणनीडक्रोडोड्डीनाण्डजच्छदच्छन्नाम्बरम् अविच्छिन्नविहारा निरन्तरपर्यटना ये
वानरास्तेषां निकरेण समूहेन विकीर्यमाणा निष्कास्यमाना उड्डीयमाना नीडक्रोडेभ्यो
मालकोपरिष्टात् उड्डीना विहायसि गता ये अण्डजाः पक्षिणस्तेषां छदाः पत्राणि तै-
श्छन्नमम्बरमाकाशं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने अभ्रं-
कषानोकहप्रकाण्डमण्डलीक्रीडोड्डमरडाकिनीकरालितोत्सर्गम् अभ्रंकषा अत्युन्नता ये अनो-
कहा वृक्षास्तेषां प्रकाण्डाः समूहास्तेषां मण्डली श्रेणिस्तस्यां क्रीडोड्डमराक्रीडानयाचिकंषी(?)
डाकिन्यः शाकिन्यस्ताभिः करालितो रौद्रीकृत उत्सर्गः सृष्टिर्यत्र तत्तथोक्तम् । पुनः
कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने घनघूकघोरघूत्कारघूर्ण्यमानपुराणविटपिकोटरप्रसूत-
वायसीवर्गम् घना ये घूकास्तेषां घूत्काराः शब्दविशेषास्तैर्घूर्ण्यमाणा(ना) ये पुराणविटपिनो
जीर्णवृक्षास्तेषां कोटरेषु विवरेषु प्रसूताः प्रसूतिं प्राप्ता वायसीनां काकीनां वर्गः समूहो
यत्र तत्तथोक्तम् । क्वचित् कस्मिंश्चित् स्थाने बलवद्बलालोन्मूलितद्रुमलाकुलकलभप्रचारम्
बलवान् प्रचण्डो योऽसौ बलालो वायुस्तेनोन्मूलिता ये द्रुमला द्रुमसमूहास्तैराकुला विह्व-

कुञ्जरभज्यमानकुञ्जराजिकूजितजरत्खञ्जनमनस्कारम्, क्वचिच्चित्रककुलाघ्रातपृषतखरखण्ड्यमानकदलीप्रवालान्तरङ्गम्, क्वचिदनन्यसामान्योदन्यानुद्रुतद्रवद्रङ्कुजिह्वावलिह्यमानमृगतृष्णिकातरङ्गम्, क्वचित्प्रचण्डगण्डकवदनविदार्यमाणरुरुरुधिरदुरीक्षवृक्षानीकम्, क्वचिन्निःशल्यशल्लकशलाकाजालकील्यमानरल्लकलोकलोकम्, एवमपरैरपि सत्त्वैरनायकावकाशदेशमिव बाध्यमानपरस्परजीवितम् ।

यत्र च वल्ल्योऽपि मृगादनीप्रायाः, वीरुधोऽपि व्याघ्रीसमदर्शनाः,

---

लीभूता ये कलभा गजबालकास्तेषां प्रचारः पर्यटनं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने शिलोच्चयनिकुञ्जकुञ्जरभज्यमानकुञ्जराजिकूजितजरत्खञ्जनमनस्कारम् शिलोच्चयानां ये निकुञ्जाः लतादिपिहितोदरास्तत्र कुञ्जरैर्भज्यमाना तोयमाना या कुञ्जराजिः वृक्षश्रेणिस्तत्र कूजितेन शब्दितेन उपलक्षितो जरत्खञ्जनानां जराजीर्णखञ्जरीटानां मनस्कारश्चित्ताभोगो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने चित्रककुलाघ्रातपृषतखरखण्ड्यमानकदलीप्रवालान्तरङ्गम् चित्रककुलैर्व्याघ्रविशेषसमूहैराघ्राता दन्तैर्धृता ये पृषता मृगास्तेषां खरैः खण्ड्यमानं कदलीनां मृगविशेषाणां प्रकृष्टा बाला शिशवस्तेषां अन्तरङ्गं मनोहरं यत्र । अथवा कदलीनां बालद्रुमाणां प्रवालाः पल्लवास्तेषां अन्तरङ्गं मध्यो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंश्चित् स्थाने अनन्यसामान्योदन्यानुद्रुतद्रवद्रङ्कुजिह्वावलिह्यमानमृगतृष्णिकातरङ्गम् अनन्यसामान्या अतिशयवती या उदन्या तृषा तया अनुद्रुताः पीडिता द्रवन्तो धावन्तो ये रङ्कवो मृगास्तेषां जिह्वाभी रसनाभिरवलिह्यमाना मृगतृष्णिकानामतरङ्गाः कल्लोला यत्र तत्तथोक्तम् । क्वचित् कस्मिंश्चित्स्थाने प्रचण्डगण्डकवदनविदार्यमाणरुरुरुधिरदुरीक्षवृक्षानीकम् प्रचण्डा बलवत्तरा ये गण्डका वार्ध्रीणसः खड्गिनो जीवायकराङ्गा इति यावत्तेषां वदनैर्विदार्यमाणाश्छिद्यमाना ये रुरवो मृगास्तेषां रुधिरैर्दुरीक्षं दुष्प्रेक्ष्यं वृक्षानीकं वृक्षसमूहो यत्र तत्तथोक्तम् । पुनः कथंभूतम् । क्वचित् कस्मिंचित्स्थाने निःशल्यशल्लकशलाकाजालकील्यमानरल्लकलोकलोकम् निःशल्या निर्भया ये शल्लकाः शललिनो जन्तुविशेषाः सर्वाङ्गशलकाः कण्टकाः सिद्धा इति देशात् सेधा इति अनन्तनाथलाञ्छनविशेषजन्तवस्तेषां शलाका लोहतन्तुसदृशास्तासां जालानि समूहास्तैः कील्यमाना विध्यमाना रल्लकाः मृगविशेषास्तेषां लोकलोका विश्वलोका यत्र तत्तथोक्तम् । एवमपरैरपि सत्त्वैः बाध्यमानपरस्परजीवितं बाध्यमानं मार्यमाणं परस्पराणां जीवितं यस्य तत्तथोक्तम् । पुनः कथंभूतम् । अनायकावकाशदेशमिव नृपरहितदेशमिव ॥

यत्र च वने वल्ल्योऽपि वल्ल्योऽपि मृगादनीप्राया मृगादनी लताविशेषः, पक्षे मृगानदन्ति भक्षयन्ति मृगादन्यो लुब्धकभार्याः प्रायेण । यत्र च वीरुधोऽपि मिल्लु-



तरवोऽपि निस्त्रिंशपत्त्रसमालोकाः, तृणान्यपि विषाणीव घ्राणादेव मनोमोहनकराणि । किं च ।

> यदग्रिमोद्गमस्थूलस्तबकाभोगसंगमम् ।
> सिंहशावकुलाकीर्णं महानीलनगोपमम् ॥
> धत्ते यद्विकिराकीर्णकुड्मलाविलभूचयम् ।
> करिवैरिप्रभिन्नेभकुम्भमुक्ताफलश्रियम् ॥

अपि च ।

> ब्रह्मजिह्मितमण्डला हरिकुलव्यालोलशैलस्थली
> स्थाणुस्थानविसंस्थुलापि समभूच्चित्रं तथापीदृशी ।

---

न्योऽपि वल्ल्योऽपि व्याघ्रीसमदर्शना व्याघ्री बृहती करण्डकारिका तत्समं दर्शनं यत्र वीरुत्सु, पक्षे व्याघ्री द्वीपिनी तत्समं दर्शनं यासु ताः । यत्र च तरवोऽपि निस्त्रिंशपत्त्रसमालोकाः निस्त्रिंशपत्राणां सेहुण्डवृक्षाणां समालोको दर्शनं यत्र तरुषु, पक्षे निस्त्रिंशपत्राणां निर्दयवाहनजीवानां समालोको यत्र । यत्र च तृणान्यपि खटा अपि विषाणीव विषसदृशानि घ्राणादेव गन्धोपादानादेव मनोमोहनकराणि चित्तस्य अचेतनजनकानि । मारकाणीत्यर्थः ॥

किंच । विशेषव्यावर्णनं करोति—**यदित्यादि** । तद्वनं कथंभूतं वर्तते । अग्रिमोद्गमस्थूलस्तबकाभोगसंगमम् अग्रिमाः प्रथमा ये उद्गमानां पुष्पाणां स्थूलस्तबका बृहद्गुच्छकास्तेषामाभोगः परिपूर्णता तस्य संगमो यत्र वने । पुनः कथंभूतम् । सिंहशावकुलाकीर्णं सिंहबालकसमूहव्याप्तम् । पुनः कथंभूतम् । महानीलनगोपमं .................... भवति । उपमा ॥

**धत्ते इत्यादि** । यद्वनं विकिराकीर्णकुड्मलाविलभूचयं धत्ते विकिरैः पक्षिभिराकीर्णानि पतितानि यानि कुड्मलानि कोरकाणि कलिकास्तैराविलो व्याप्तो भूचयो भूमिभागस्तथा तं धरति । कथंभूतं धत्ते । करिवैरिप्रभिन्नेभकुम्भमुक्ताफलश्रियम् करिवैरिणः सिंहास्तैः प्रभिन्ना विदारिता ये इभकुम्भा गजकुम्भस्थलानि तेषां मुक्ताफलश्रीर्मौक्तिकशोभा यस्मिन् ॥

अपि च । **ब्रह्मेत्यादि** । या अटवी ब्रह्मजिह्मितमण्डला ब्रह्मणा पलाशवृक्षेण आ समन्तात् जिह्मितं विषमीकृतं मण्डलं भूमिभागो यत्र सा तथोक्ता । ननु या अटवी ब्रह्मजिह्मितमण्डला ब्रह्मणा अवक्रप्रदेशा सा सव्याधा कथं भवति । विरुद्धमेतत् । परिह्रियते—ब्रह्मभिः पलाशवृक्षैरा समन्ताज्जिह्मितमण्डला विषमप्रदेशा । पुनः कथंभूता । हरिकुलव्यालोलशैलस्थली हरिकुलेन यादववंशेन व्यालोला मनोहरा शैलस्थली रैवतपर्वतस्थली सा समभूत्सवा मधुदैत्योत्सवसहिता कथं भवति । इत्यपि विरुद्धम् । नैवम् । हरिकुलैः सिंहसमूहैः व्यालोलशैल-

सव्याधा समधूत्सवा समदनोत्सर्गा च सर्वाटवी
को नामैवमिहाखलः सह खलैर्वासो यदेषामपि ॥

तत्र चिल्लचिकिताणकैकलोचनायां बाढमवगाढमध्यमावस्थानायामेणान्वेषणधिषणनिषादपरिषत्संबाधप्रधावत्स्खलनखरखेदखञ्जाखिलखुरायामनेकमृगशृङ्गसंघट्टोन्मृष्टलोमतया निस्त्रिंशनिशातशाणाकारायामिव परुषतरुतनुपृ-

---

स्थली लोकानां(?)तयोत्पादकत्वात् चपलपर्वतस्थला अत एव समधूत्सवा सह मधुभिः क्षौद्रैरुत्सवो यस्यां सा समधूत्सवा । मधुर्वसन्तोऽपि तत्र वर्तत एव इति सुस्थम् । पुनः कथंभूता । स्थाणुस्थानविसंस्थुला स्थाणुस्थानेन श्रीमहादेवस्थानेन विसंस्थुला शिथिला भवति सा समदनोत्सर्गा कंदर्पसृष्टिसहिता कथं भवति । कंदर्पस्तु स्थाणुना भस्मीकृतः तस्योत्कृष्टः सर्गस्तस्य कथं इति विरुद्धम् । नैवम् । स्थाणूनां छिन्नाग्रभागानां तरूणां स्थानेन विशेषसंस्थुला व्याप्ता अपि निश्चयेन समदनोत्सर्गा मदनोत्सर्गैराटवृक्षसृष्टिसहिता इति सुस्थम् । उक्तं च—'चित्तस्थमप्यनवलभ्य हरेण जाड्या त्क्रुद्धा बहिः किमपि दग्धमनङ्गबुद्ध्या । घोरामवापसहितेन कृतामवस्थां क्रोधोदयाद्भवति कस्य न कार्यहानिः ॥' तथापि ईदृशी अभूत् । ईदृशी कीदृशी । सव्याधा समधूत्सवा समदनोत्सर्गा सर्वाटवी अभूत् । [[1]अमुमेवार्थं अर्थान्तरन्यासेन द्रढयति—**को नामेत्यादि** । इह अस्मिन् संसारेऽखलः खललोकरहितः एवं कः पुमान् । न कश्चिदित्यर्थः । नामेति संभावनायाम् । यद्यस्मात् कारणात् एषामपि ब्रह्मविष्णुमहेश्वराणामपि खलैर्दुर्जनैः सह सार्धं वासो वसतिर्वर्तते । यथासंख्यार्थान्तरन्यासालंकारः ॥]

हे राजन्, तत्र वने परुषतरुतनुपृषत्यां सेहुल्यां तथाविधेनैव परुषतरुतनुना पृषतेनैव सेहुलेन गर्भावासविषयतां नीतः । कथंभूतायां पृषत्याम् । चिल्लचिकिताणकैकलोचनायां चिल्लं दूषिकोपहृतं चिकितं अणकं कुत्सितं एकं एकमेव लोचनं नेत्रं यस्याः सा तथोक्ता तस्याम् । पुनः कथंभूतायां पृषत्याम् । बाढमतिशयेन अवगाढमध्यमावस्थानायां अवगाढं प्राप्तं मध्यमावस्थानं संकीर्णोदरस्थानं यया सा तस्याम् । पुनः कथंभूतायाम् । एणान्वेषणधिषणनिषादपरिषत्संबाधप्रधावत्स्खलनखरखेदखञ्जाखिलखुरायाम् एणानां मृगाणां अन्वेषणधिषणया अवलोकनबुद्ध्या निषादानां व्याधानां परिषदः समूहस्य योऽसौ संबाधप्रधावो निकटप्रधावनं तत्स्खलनं गमनभङ्गस्तस्मात् खरोऽतिशयवान् योऽसौ खेदः कष्टं तेन खञ्जाः खोडा अखिलाश्चत्वारोऽपि खुराः शफा यस्याः सा तथोक्ता तस्याम् । पुनः कथंभूतायाम् । अनेकमृगशृङ्गसंघट्टोन्मृष्टलोमतया निस्त्रिंशनिशातशाणाकारायामिव अनेके बहवो ये मृगास्तेषां शृङ्गाणि निशातशाणानि तेषां संघट्टेन भटभेटकेन उन्मृष्टानि घृष्टानि यानि लोमानि शरीरकण्ठकास्तेषां भावस्तत्ता तया तत्कारणेन निस्त्रिंशानां निशातैस्तीक्ष्णकरणेन

---

[1]. एतत्कोष्ठान्तर्गतपाठः केनचित्प्रक्षिप्तः.



षत्यां तथाविधेनैव पृषतेन गर्भावासविषयतां नीतः, पुनरकाण्डचण्डतडिद्दण्डसंघट्टभयप्रभावादपरिपूर्णविषय एव प्रसवसमये लब्धात्मलाभमात्रः, सवित्र्याः शून्यस्तन्यस्तनतयानुपशान्ताशनाशयः, शष्पाङ्कुरेषु च तृप्तिमलभमानः, पवनाशनाशनाश्रयाशयतया शक्रशिरःप्रदेशान्विषाणमण्डलेनोच्चिखनिषुः,

अन्यत्र कुरुते जन्तुर्यत्सुखं दुःखमेव वा ।
तदुप्तबीजवत्क्षेत्रे भूयः फलवदात्मनि ॥

इति न्यायाद्यथाहं पुरा जन्मनि शिखावलपर्यायस्तेनाग्निजन्मना स्व-

---

यच्छाणं शस्त्रोत्तेजनयन्त्रं तस्या आकारो मूर्तिर्यस्याः सा तथोक्ता तस्याम् । कर्कशशरीरायामित्यर्थः । तथाविधेनैव कारणेन खोडेन धृष्टरोम्लापृषतेन सेहुलेन गर्भावासविषयतां नीत इति संबन्धः । हे राजन्, पुनः पुनरपि मयूरमरणादनन्तरं अहं पृषतः परासुरभवं मृतो बभूव । कथंभूतोऽहम् । प्रसवसमये लब्धात्मलाभमात्रो दिवसमात्र एवाहं मृतः । कथंभूते प्रसवसमये । अपरिपूर्णविषये एव अल्पमासैरेव जनित इत्यर्थः । कस्मादपरिपूर्णविषये जनितः । अकाण्डचण्डतडिद्दण्डसंघट्टभयप्रभावात् अकाण्डे अप्रस्तावे वर्षाकालं विनापि चण्डो बलवत्तरो योऽसौ तडिद्दण्डाप्तसंघट्टेन परं विद्युता सह भटभेटकेन यदुत्पन्नं भयं तस्य प्रभावात् । न्यूनमासैरित्यर्थः । पुनः कथंभूतोऽहं परासुरभवम् । सवित्र्याः सेहुल्याः शून्यस्तन्यस्तनतया क्षीररहितस्तनत्वेन अनुपशान्ताशनाशयः अविनष्टभुक्ताशः । बुभुक्षित इत्यर्थः । पुनः कथंभूतोऽहम् । शष्पाङ्कुरेषु तृप्तिमलभमानः बालतृणेषु भक्षितेषु तृप्तिमनाप्नुवन् । पुनः कथंभूतोऽहम् । विषाणमण्डलेन दन्तसमूहेन शक्रशिरःप्रदेशान् वल्मीकशिखरप्रदेशान् उच्चिखनिषुरुत्खातुमिच्छुः पवनाशनाशनाश्रयाशयतया पवनाशनानां सर्पाणां अशनं भक्षणं तस्याश्रयस्तत्संबन्धी आशयश्चित्तं यस्य स पवनाशनाशनाश्रयाशयस्तस्य भावोऽभिप्रायः पवनाशनाशनाश्रयाशयता तया तथोक्तया । पुनः कथंभूतोऽहम् । इति न्यायात् यथा येन प्रकारेण पुरा जन्मनि मयूरभवान्तरे अहं शिखावलपर्यायः मयूरपर्यायस्तेन चन्द्रमतिवरेण अग्निजन्मना शुना स्वकीयदंष्ट्राक्रकचकदर्थ्यमानतां नीतस्तथा तेनैव प्रकारेण एनमपि चन्द्रमतिचरसर्पमपि स्वकीयदंष्ट्राक्रकचकदर्थ्यमानतां नीतवान् । 'अर्थवशाद्विभक्तिपरिणामः' इति न्यायात् नीञो धातोः कर्तरि परिणामः । इति न्यायादिति किमित्याह—

**अन्यत्रेत्यादि** । जन्तुर्जीवोऽन्यत्रान्यस्मिन् प्राणिनि यत् किमपि सुखं दुःखमेव वा कुरुते तत् सुखं दुःखं च आत्मनि निजजीवे भूयः पुनः फलवद्भवति प्रचुरफलदायकं भवति । किंवत् । क्षेत्रे उप्तबीजवत् यथा क्षेत्रे सस्याधिकरणे उप्तमारोपितं बीजं प्रचुरफलदायकं भवति ॥

कीयदंष्ट्राक्रकचकदर्थ्यमानतां नीतस्तथैनमपि कृष्णत्वं शनेरिव, कुटिलतां स्त्रीभ्यः, क्रौर्यं कृतान्तात्, वृषविध्वंसबुद्धिमसुरेभ्यः, विषाश्रयत्वं जलधेः, पिशितप्रियत्वं यातुधानेभ्यः, परोपद्रवं च दुर्जनेभ्यः समादायासादितसरीसृपाकारं वामलूरविवरप्रविष्टार्धशरीरं बलादाकृष्य पुरीतत्प्रतानमिव मेदिनीकुरङ्गिकायाः, लाङ्गूलमिव महीसिंहिकायाः, मूलमिवानन्तालतायाः, मृणालमिव भूमिकमलिन्याः, वेणिदण्डमिव क्षमाराक्षस्याः, पौनःपुन्यप्रवृत्तोत्फणप्रहारजर्जरितवदनमुत्कृत्यमानमिवासृग्वरायाम्, उच्छलन्तमिव क्षतजेषु, स्फुरन्तमिव तरसेषु, त्रुट्यन्तमिव सिरासु, स्फुटन्तमिवास्थिषु,

---

कथंभूतं एनम्। आसादितसरीसृपाकारं प्राप्तसर्पाकारम् । किं कृत्वा पूर्वम् । शनेः रविपुत्रात् कृष्णत्वं कालत्वं समादाय । पुनश्च किं कृत्वा । स्त्रीभ्यो नारीजनेभ्यः कुटिलतां वक्रत्वं समादाय। पुनश्च किं कृत्वा। कृतान्तात् यमात् क्रौर्यं क्रूरत्वं समादाय। पुनश्च किं कृत्वा । असुरेभ्यः वृषविध्वंसबुद्धिं मूषिकविनाशमतिं समादाय । यथा असुरा वेदोत्पादकत्वेन वृषस्य धर्मस्य विध्वंसबुद्धिं समाददति । पुनश्च किं कृत्वा । जलधेः समुद्रात् विषाश्रयत्वं हालाहलरक्षणमुखत्वं समादाय । यथा जलधिः समुद्रो विषस्य ब्रह्मपुत्रस्य वासमाश्रयो भवति । पुनश्च किं कृत्वा । यातुधानेभ्यो राक्षसेभ्यः पिशितप्रियत्वं समादाय । यथा यातुधानाः पिशितप्रिया भवन्ति । पुनश्च किं कृत्वा । दुर्जनेभ्यः परोपद्रवं परेषां दुःखजननं समादाय कदर्थ्यमानतां अहं नीतवान् । बलादाकृष्य हठादुत्पाद्य । पुनः कथंभूतं एनम्। वामलूरविवरप्रविष्टार्धशरीरं वामलूरस्य वल्मीकस्य विवरे प्रविष्टं मध्ये गतं अर्धशरीरं यस्य स तथोक्तस्तम् । पुनः कथंभूतम् । मेदिनीकुरङ्गिकायाः भूमिमृग्याः पुरीतत्प्रतानमिव अन्त्रोच्चयमिव । पुनः कथंभूतम् । महीसिंहिकायाः लोकभक्षिकत्वात् लाङ्गूलमिव पुच्छमिव । पुनः कथंभूतम्। अनन्तालतायाः अनन्ता पृथ्वी सा एव लता वल्ली ब्रह्माकाशव्यापिकत्वात् तस्या मूलमिव जटामिव । पुनः कथंभूतम् । भूमिकमलिन्या भूमिरेव कमलिनी लक्ष्मीनिवासस्थानत्वात् तस्या मृणालमिव पद्मिनीकन्दमिव । पुनः कथंभूतम् । क्षमाराक्षस्याः क्षमा पृथ्वी सा राक्षसी सर्वजनभक्षिकत्वात् तस्या वेणिदण्डमिव ग्रन्थितकेशयष्टिमिव बलादाकृष्य कदर्थ्यमानतां अहं नीतवान् । पुनः कथंभूतं एनम् । पौनःपुन्यप्रवृत्तोत्फणप्रहारजर्जरितवदनम् पुनः पुनर्भवः पौनःपुन्यम् । 'अव्ययानां स्वरादिलोपः' इति वचनात् अलोपः । पौनःपुन्येन प्रवृत्ताः संजाता ये उत्फणप्रहारा उन्नतफणाघातास्तैर्जर्जरितं क्षीणं वदनं यस्य सरीसृपस्य स तथोक्तस्तम् । किं कुर्वन्तमेनम् । उत्कृत्यमानमिवासृग्वरायां असृग्वरायां त्वचि विषये उत्पाद्यमानमिव । पुनः किं कुर्वन्तम् । क्षतजेषु रुधिरेषु उच्छलन्तमिवोर्ध्वं गच्छन्तमिव । पुनः किं कुर्वन्तम् । तरसेषु मासेषु स्फुरन्तमिव चमत्कुर्व-



विवर्तमानमिवान्त्रेषु, समीपतरकदम्बस्तम्बशायिना प्रबलजाङ्गलकवलाविलगलगुहाघोरघुरुघुरारवप्रतिबोधितेन गतमेव श्लोकं तत्रैव जन्मनि सफलयता तरक्षुणा भक्ष्यमाणस्तेन पृषदाकुना समकालमेवाहं परासुरभवम् ।

पुनरहो कविलोकपङ्कजविकासभास्कर, सौजन्यरत्नाकर, अस्ति खलु तेष्वेव त्रिदिवनिवासोचितकिंवदन्तीषु अवन्तीषु इन्दुमणिमेखलेव पद्मावतीविलासिन्याः, जलकेलिदीर्घिकेव मालवावनीपालविलासिनीनाम्, नित्योत्सवपताकेव भुजङ्गमलोकस्य, वरणमालेव मार्गमहीधराणाम्, मुक्ताव-

---

न्तमिव । पुनः किं कुर्वन्तम् । सिरासु ख(?)सासु त्रुट्यन्तमिव बुध्यन्तमिव । पुनः किं कुर्वन्तम् । अस्थिषु स्फुटन्तमिव कटकटायमानमिव । पुनः किं कुर्वन्तम् । अन्त्रेषु पुरीतत्सु विवर्तमानमिव अन्तः शरीरं बहिः कुर्वन्तमिव । कथंभूतोऽहम् । तरक्षुणा अरण्यशुना भक्ष्यमाणः । किं कुर्वता तरक्षुणा । गतमेव श्लोकं पूर्वोक्तमेवानुष्टुपं तत्रैव जन्मनि तद्भवे एव सफलयता सत्यार्थतां नयता । कोऽसौ गतश्लोक इत्याह । अहं कथं परासुरभवम्। तेन पूर्वोक्तेन चन्द्रमतिचरेण पृषदाकुना दीर्घपृष्ठेन सह समकालमेव युगपदेव । आवां द्वावपि मृतावित्यर्थः । सर्पो मया भक्षितोऽहं तरक्षुणा भक्षित इत्यर्थः । कथंभूतेन तरक्षुणा । समीपतरकदम्बस्तम्बशायिना वल्मीकस्य समीपतरो योऽसौ कदम्बो धूलीकदम्बो धाराकदम्बो वा तस्य स्तम्बः प्रकाण्डस्तत्र शेते तिष्ठतीत्येवंशीलस्तथा तेन । पुनः कथंभूतेन । प्रबलजाङ्गलकवलाविलगलगुहाघोरघुरुघुरारवप्रतिबोधितेन प्रबलं वरिष्ठं यज्जाङ्गलं सर्पमांसं तस्य कवलो ग्रासस्तेन आविला भृता गलगुहा स्यहुलस्य(?) कण्टकन्दरा तस्या घोरो भयानको योऽसौ घुरुघुरारवोऽव्यक्तशब्दस्तेन प्रतिबोधितो जागरितस्तेन ॥

पुनः पुनरपि पृषतसर्पभववर्णनादनन्तरम् । अहो कविलोकपङ्कजविकासभास्कर कविनां लोकाः समूहास्त एव पङ्कजानि कमलानि वैदुष्यसौगन्धगुणयुक्तत्वात् तेषां विकासे आनन्दोत्पादने भास्करः श्रीसूर्यः स तथा तस्य संबोधनं हे तथोक्त । हे सौजन्यरत्नाकर सौजन्यं परोपकारस्तदेव रत्नमनर्घ्यमाणिक्यं तस्य आकरः तस्य संबोधनं हे तथोक्त । हे श्रीमारदत्तमहाराज, तेष्वेवावन्तीषु विषये । खलु वाक्यालंकारे । सिप्रा नाम नदी अस्ति वर्तते इति क्रियाकारकसंबन्धः । कथंभूतेषु अवन्तीषु । तेष्वेव पूर्वोक्तेष्वेव । पुनः कथंभूतेषु। त्रिदिवनिवासोचितकिंवदन्तीषु त्रिदिवनिवासानां देवानां उचिता योग्या किंवदन्ती वार्ता येषामवन्तीनां ते तथोक्तास्तेषु तथोक्तेषु । कथंभूता सिप्रा नाम नदी । पद्मावतीविलासिन्याः उज्जयिनीपुरीकमनीयकामिन्याः इन्द्रमणिमेखलेव चन्द्रकान्तरत्नमेखलेव । पुनः कथंभूता । मालवावनीपालविलासिनीनां मालवस्य ये अवनिपालास्तेषां विलासिनीनां जलकेलिदीर्घिकेव जलक्रीडावापिकेव । पुनः कथंभूता । भुजङ्गमलोकस्य पाताललोकस्य नित्योत्सवपताकेव नित्यमहोत्सववैजयन्तीव । पुनः कथंभूता । मार्गमहीधराणां मार्गपर्व-

लीव मेदिनीदेवतायाः, कीर्तिवैजयन्तीव प्रभवभूधरस्य, सेकसारणिरिव सिन्धुरत्नाङ्कुराणाम्, शरसृष्टिरिव च जगत्प्रसाधनमतीनां प्रजापतीनाम्, भोगवतीव पद्माधिष्ठिता भुजङ्गलोकोचिता च, राज्यलक्ष्मीरिव कुवलयोपगता द्विजभोगभूता च, काननश्रीरिव संवरप्रचुरा मुनिजनगोचरा च, सीतेव लक्ष्मणानुगता रामानन्दिता च, भारतकथेव धृतराष्ट्रावसाना जातव्यासाधिष्ठाना च, आस्फूर्जितमूर्तिरिव कान्तावलोकना प्रसाधितबलिसं-

---

तानां वरणमालेव । पुनः कथंभूता । मेदिनीदेवताया मुक्तावलीव मुक्ताफलमालेव । पुनः कथंभूता । प्रभवभूधरस्य एतदुत्पत्तिपर्वतस्य कीर्तिवैजयन्तीव कीर्तिपताकेव । पुनः कथंभूता । सिन्धुरत्नाङ्कुराणां समुद्ररत्नाङ्कुराणां सेकसारणिरिव सेचनकृत्रिमनदीव । पुनः कथंभूता । प्रजापतीनां नरेन्द्राणां शरसृष्टिरिव बाणसृष्टिरिव । कथंभूतानां प्रजापतीनाम् । जगत्प्रसाधनमतीनां पृथ्वीमण्डलबुद्धीनाम् । पुनः कथंभूता सिप्रा । पद्माधिष्ठिता कमलमण्डिता भुजङ्गलोकोचिता च कामुकलोकयोग्या च । केव । भोगवतीव अहिपुरीव । यथा भोगवती पद्माधिष्ठिता पद्मनामनागदेवतासहिता, भुजङ्गलोकोचिता सर्पसमूहयोग्या च भवति । पुनः कथंभूता । कुवलयोपगता उत्पलैरुपमण्डिता द्विजभोगभूता च । केव । राज्यलक्ष्मीरिव । यथा राज्यलक्ष्मीः कुवलयोपगता पृथ्वीमण्डलमण्डिता, द्विजानां ब्राह्मणानां भोगभूता च भवति । पुनः कथंभूता । संवरप्रचुरा जलबहुला मुनिजनगोचरा च तापसपक्षिसहिता च । केव । काननश्रीरिव वनलक्ष्मीरिव । यथा काननश्रीः संवरप्रचुरा शृङ्गतरुसहितचतुष्पदजीवबहुला आश्रवनिरोधसहिता, मुनिजनानां दिगम्बराणां गोचरा च भवति । पुनः कथंभूता । लक्ष्मणानुगता सारसपङ्क्तिसहिता रामानन्दिता च रामाणां स्त्रीणां आनन्दकारिणी च । केव । सीतेव जनकतनयेव । यथा सीता लक्ष्मणेन सौमित्रिणा अनुगता, रामानन्दिता रामेण दशरथनन्दनेन आह्लादिता च भवति । पुनः कथंभूता । धृतराष्ट्रावसाना धृतराष्ट्रा हंसा अवसानयोरुभयतटयोर्यस्याः सा जातव्यासाधिष्ठाना च जातमुत्पन्नं व्यासस्य विस्तारस्य अधिष्ठानं मूलं यस्याः सा तथा च । केव । भारतकथेव भरतो नाम कौरवपाण्डवानां पूर्वजः कश्चित् तस्यापत्यानि भारताः कौरवपाण्डवास्तेषां कथेव पुराणसदृशी । यथा भारतकथा धृतराष्ट्रावसाना धृतराष्ट्रो नाम दुर्योधनपिता तस्य अवसानं मरणं यस्यां कथायां सा धृतराष्ट्रावसाना जातमुत्पन्नं व्यासेन सत्यवतीपुत्रेण अधिष्ठानं पीठबन्धो यस्याः सा जातव्यासाधिष्ठाना च भवति । पुनः कथंभूता । कान्तावलोकना कान्तं मनोहरं अवलोकनं यस्याः सा प्रसाधितबलिसंताना च प्रसाधितो बलिसंतानः पूजासमूहो यस्यां सा तथा च । केव । आस्फूर्जितमूर्तिरिव इन्दुमूर्तिरिव । यथा आस्फूर्जितमूर्तिः कान्तानां सुन्दरीणां अवलोकनसहिता, प्रसाधितबलिसंताना च प्रसाधितो वशीकृतो बलेर्दानवविशेषस्य संतानो यया सा तथा च भवति ।



ताना च, सुधासृष्टिरिव कुमुदावहा विहितदेवमहा च, विपणिवीथिरिव सौगन्धिकावसथा ग्राहकमठपत्रिसनाथा च, सकमलकल्लोलकलशाभिषेकतोषितोपान्ताश्रमाश्रयविप्रा **सिप्रा** नाम नदी ।

यत्र मदोन्मुखमरालकुलकामिनीचरणचारचलद्विकचकञ्जकिञ्जल्कपुञ्जपिञ्जरतरङ्गम्, अखर्वगर्वदार्वाघाटपेटकपर्यटनलुण्ठ्यमानपुटकिनीपुटपटलान्त-

---

पुनः कथंभूता । कुमदावहा कुमुदानि श्वेतोत्पलानि आवहति धत्ते सा विहितदेवमहा च विभ्यः पक्षिभ्यो हिता विहिता, देवानां नृपाणां मह उत्सवोयस्यां सा देवमहा, विहिता चासौ देवमहा च विहितदेवमहा च । 'कर्मधारे च संज्ञे तु पुंवद्भावो विधीयते' इति विहिताशब्दस्य पुंवद्भावः । केव । सुधासृष्टिरिव । यथा सुधासृष्टिरमृतसृष्टिः कुमुदावहा कौ पृथिव्यां मुदमावहति मुदं करोति तथा, विहितदेवमहा च विहित उत्पादितो देवानां महः पूजा यस्यां सा तथा च भवति । देवपूजायामादौ जलं विलोक्यते तद्धेतुत्वात् । पुनः कथंभूता । सौगन्धिकावसथा सौगन्धिकानां रक्तकमलानां कह्लाराणां च आवसथः निवासो यस्यां सा तथा ग्राहकमठपत्रिसनाथा च ग्राहा मकरादयः कमठाः कच्छपाः पत्रिणः पक्षिणस्तैः सनाथा सहिता च । केव । विपणिवीथिरिव हट्टावलीव । यथा विपणिवीथिः सौगन्धिकानां सुगन्धिवस्तुपण्यानां आवसथः स्थानं यस्यां विपणिवीथौ सा तथा, ग्राहका सुगन्धतैलादिक्रयका मठपतयो गृहस्थाः तैः सनाथा सहिता च भवति । पुनः कथंभूता । सकमलकल्लोलकलशाभिषेकतोषितोपान्ताश्रमाश्रयविप्रा सकमलकल्लोला पुष्पसंयुततरङ्गास्त एव कलशा घटास्तेषामभिषेकेण सेचनेन तोषिता हर्षं प्रापिता उपान्ताश्रमाश्रयाः नदीसमीपगृहे आश्रिता विप्रा ब्राह्मणा यया सा तथोक्ता सिप्रा नाम नदी ॥

यत्र यस्यां सिप्रायां नगराङ्गनानिवहैर्नगरस्त्रीसमूहैः जलक्रीडावसरेषु पयः पानीयं उत्कलिकाविलोदयं उत्कलिकाभिस्तरङ्गैः कृत्वा आविलोदयं अनच्छोदयं क्रियते विधीयते । कथंभूतं पयः । मुक्ताफलद्युतिचयः मौक्तिकचूर्णसदृशमिव आविलोदयं अनच्छं क्रियते । किमिव । विरहिणीहृदयमिव विप्रलब्धपुरंध्रीचित्तमिव । यथा विरहिणीहृदयमुत्कलिकाभिरुत्कण्ठाभिराविलोदयमनच्छं भवति । पुनः कथंभूतम् । मदोन्मुखमरालकुलकामिनीचरणचारचलद्विकचकञ्जकिञ्जल्कपुञ्जपिञ्जरतरङ्गम् मदोन्मुखा मदमागता या मरालकुलकामिन्यो हंसभार्यास्तासां चरणचारैः पादचेष्टितैः चलन्ति प्रचलन्ति यानि विकचानि विकसितानि कञ्जानि कमलानि तेषां किञ्जल्कपुञ्जः केसरसमूहस्तेन पिञ्जराः पीतरक्तास्तरङ्गाः कल्लोला यस्य पयसस्तत्तथोक्तम् । पुनः कथंभूतम् । अखर्वगर्वदार्वाघाटपेटकपर्यटनलुण्ठ्यमानपुटकिनीपुटपटलान्तरङ्गम् अखर्वो दीर्घतरो गर्वो येषां ते अखर्वगर्वास्ते च ते दार्वाघाटाः सारसास्तेषां पेटकः समूहस्तस्य पर्यटनेन संचरणेन लुण्ठ्यमानानां पुटकिनीनां कमलिनीनां पुटपटलानां पुटसमूहानामन्तरङ्गं मध्यो यत्र

रङ्गम्, उत्तरलतरतरत्कारण्डोच्चण्डतुण्डकाण्डखण्ड्यमानखरदण्डदलोल्लसत्कल्लोलम्, अनेकमल्लिकाक्षकुटुम्बिनीकदम्बचुम्ब्यमानजम्बालजालजटिलजलदेवतादोलम्, अनवरतरतिकलहमोदमेदुरमिथुनचरपतङ्गपक्षचापलोच्छलच्छीकरासारसिच्यमानतीरतरुनिकरम्, अन्योन्यापघनघनाघट्टकुपितकुम्भीरभयभ्राम्यत्ककुभकुहूत्कारमुखरम्, आवाचाटबकोटचेष्टितचकितकमलमूलनिलीयमानपोताधानम्, अम्बुरुहकुहरविहरदवहारविघ्नितवैखानसकुसुमोञ्छनविधानम्, उदीर्णदर्पदीवितुमुलकलिकोलाहलावलोकमूकमू-

---

तत्तथोक्तम् । पुनः कथंभूतम् । उत्तरलतरतरत्कारण्डोच्चण्डतुण्डकाण्डखण्ड्यमानखरदण्डदलोल्लसत्कल्लोलम् उत्तरलतराश्चपलतरा तरन्त उन्मृजन्तो ये कारण्डाः चक्रवाकास्तेषामुचण्डानि मुखानि तान्येव काण्डा बाणास्तैः खण्ड्यमानानि कर्तमानानि यानि खरदण्डदलानि कमलपत्राणि तैः सह उल्लसन्त उच्छलन्तः कल्लोला यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अनेकमल्लिकाक्षकुटुम्बिनीकदम्बचुम्ब्यमानजम्बालजालजटिलजलदेवतादोलम् अनेके बहवो ये मल्लिकाक्षाः हंसविशेषास्तेषां कुटुम्बिन्यो हंसीविशेषास्तासां कदम्बानि समूहास्तैश्चुम्ब्यमानानि मुखैः स्पृश्यमानानि यानि जम्बालजालानि सैवलसमूहाः तैर्जटिलाः कर्बुरा जलदेवतानां दोलाः प्रेङ्खा यत्र तत्तथोक्तम् । उक्तं च—'रक्तैर्वक्रैः सचरणै राजहंसा विभावयेत् । श्यामलैर्मल्लिकाक्षास्तु धार्तराष्ट्राः सितेतरैः ॥' पुनः कथंभूतम् । अनवरतरतिकलहमोदमेदुरमिथुनचरपतङ्गपक्षचापलोच्छलच्छीकरासारसिच्यमानतीरतरुनिकरम् अनवरतं निरन्तरं योऽसौ रतिकलहः रतियुद्धं तेन मोदो हर्षस्तेन मेदुराः सस्नेहा ये मिथुनचरपतङ्गाः चक्रवाकपक्षिणस्तेषां पक्षचापलेन पत्रचपलत्वेनोच्छलन्त उत्पतन्तो ये शीकराः जलकणसमूहास्तैः सिच्यमाना आर्द्रीक्रियमाणास्तीरतरुनिकरास्तटवृक्षसमूहा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अन्योन्यापघनघनाघट्टकुपितकुम्भीरभयभ्राम्यत्ककुभकुहूत्कारमुखरम् अन्योन्यानां परस्पराणां ये अपघनाः शरीराणि तेषां घनाघट्टो निबिडभटभेटकस्तेन कुपिता ये कुम्भीरा नक्रास्तेषां भयात् भ्राम्यन्त उड्डीयमाना ये ककुभा बालकुर्कुटास्तेषां कुहूत्कारैरव्यक्तशब्दैर्मुखरं वाचालम् । पुनः कथंभूतम् । अवाचाटबकोटचेष्टितचकितकमलमूलनिलीयमानपोताधानम् अवाचाटा मौनिनः ये बकोटा बकास्तेषां चेष्टितैः व्यापारैः चकितानि भीतानि कमलमूले निलीयमानानि पद्ममूलेषु प्रविशन्ति पीताधानानि क्षुद्रमत्स्यसमूहा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अम्बुरुहकुहरविहरदवहारविघ्नितवैखानसकुसुमोञ्छनविधानम् अम्बुरुहाणां कुहरेषु विहरन्तः पर्यटन्तो ये अवहारा जलव्यालाः । ग्राहा इत्यर्थः । तैर्विघ्नितमन्तरायं प्राप्तं वैखानसानां तापसानां कुसुमोञ्छनविधानं कमलादिचुण्टनविधानं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । उदीर्णदर्पदीवितुमुलकलिकोलाहलावलोकमूकमूककलोकम् उदीर्णदर्पा उत्कटमदा ये दीवयः जलसर्पास्तेषां तुमुलो रौद्रो



ककलोकम्, उन्मत्तमकरकरास्फालनोत्ताललहरिकोत्तालितारविन्दकन्दरद्रवन्मकरन्दबिन्दुचन्द्रकावचयचटुलचञ्चरीकमेचकवीचिकानीकम्, उद्दामोदकद्विपदशनदश्यमानमृणालिनीसकलसारप्रसरम्, अतुच्छकच्छपाच्छोटमूर्छत्पाठीनपृष्ठपीठीलुठदुद्दण्डडिण्डीरपिण्डशिखण्डिततटिनीनिकटकर्करम्, उपान्तसैकतोल्लोलवालीविहारवाचालवारलम्, अदूरजकुजकुञ्जकुलायक्रीडत्कुररकूजितबहलम्, अमृतस्रोत इव सुखस्पर्शावदातम्, आमलकशिलातलमिव स्वच्छकलम्, इन्दुमणिनिःस्यन्दनमिव सुभगावलोकनम्,

---

योऽसौ कलिर्युद्धं तस्य कोलाहलस्य कलकलशब्दस्य अवलोकेन दर्शनेन मूकादाग्रहिता मूककलोका मण्डूकसमूहा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । उन्मत्तमकरकरास्फालनोत्ताललहरिकोत्तालितारविन्दकन्दरद्रवन्मकरन्दबिन्दुचन्द्रकावचयचटुलचञ्चरीकमेचकवीचिकानीकम् उन्मत्ता उत्कर्षेण मदं प्राप्ता ये मकरा जलहस्तिनस्तेषां कराणां शुण्डादण्डानां आस्फालनेन उत्ताला उत्सुका वेगवत्यो या लहरिका वीचयस्ताभिरुत्तालितानि कम्पितानि यानि अरविन्दानि तेषां कन्दरेभ्यः कोशेभ्यो द्रवन्तो निर्गलन्तो ये मकरन्दबिन्दवस्तेषां चन्द्रकानि..................................................

लहरीसमूहा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । उद्दामोदकद्विपदशनदश्यमानमृणालिनीसकलसारप्रसरम् उद्दामा उल्बणा ये उदकद्विपा जलहस्तिनस्तेषां दशनैर्दश्यमानाश्चर्व्यमाणा मृणालिनीनां पद्मिनीनां सकला समग्रा अभ्यग्रा सारप्रसराः कन्दविस्तारा यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अतुच्छकच्छपाच्छोटमूर्छत्पाठीनपृष्ठपीठीलुठदुद्दण्डडिण्डीरपिण्डशिखण्डिततटिनीनिकटकर्करम् अतुच्छा बृहतो महान्तो गण्डशैलसदृशा ये कच्छपास्तेषां आच्छोटेन आस्फालनेन मूर्छन्तः संदीप्यमानाः क्रुध्यन्तो ये पाठीनाः सहस्रदंष्ट्रा मत्स्यास्तेषां प्रशस्तं पृष्ठं पृष्ठपीठी तत्र लुठन्तो ये उद्दण्डाः प्रचण्डा डिण्डीरपिण्डाः फेनराशयस्तैः शिखण्डिता मुकुटवन्तः कृता तटिनीनां नदीनां निकटेषु उभयकूलसमीपेषु कर्कराः पर्वतदन्ता येन पयसा तत्तथोक्तम् । पुनः कथंभूतम् । उपान्तसैकतोल्लोलवालीविहारवाचालवारलम् उपान्तेषु समीपेषु यानि सैकतानि सिकतामयानि द्वीपानि पुलिनानि तेषु उल्लोला लोला वाल्यो लहर्यस्तासु विहारेण पर्यटनेन वाचालाः शब्दवत्यो वारला हंसभार्या यत्र तत्तथोक्तम् । पुनः कथंभूतम् । अदूरजकुजकुञ्जकुलायक्रीडत्कुररकूजितबहलम् अदूरे जाता अदूरजा निकटवर्तिनो ये कुजा वृक्षास्तेषां कुञ्जेषु ये कुलायाः पक्षिगृहा मालकास्तेषु क्रीडन्तो ये कुररा उत्क्रोशपक्षिणस्तेषां कूजितैरव्यक्तशब्दितैर्बहलं प्रचुरम् । पुनः कथंभूतम् । सुखस्पर्शावदातम् सुखस्पर्शेन सौख्योत्पादकस्पर्शेन अवदातमुज्ज्वलम् । किमिव । अमृतस्रोत इव पीयूषप्रवाह इव । पुनः कथंभूतम् । स्वच्छकलम् स्वच्छा कला कायो यस्य तत्तथोक्तम् । किमिव । आमलकशिलातलमिव ।

अव्ययं ज्योतिरिव जनितजगत्प्रणयम्, अलकवल्लरीतरङ्गभङ्गिभिर्वदनारविन्दामोददुर्दिनैर्भुजलतावानीरसंततिभिः कुचकोकमिथुनमनोहरैर्वलिवञ्जुलवल्लीविलासिभिर्नाभिमण्डलावर्तोदात्तैर्नितम्बपुलिनस्थलश्लाघिभिरूरुकरिमकरकराभोगहृदयंगमैः पादनखमयूखफेनस्फीतैः प्रतिनदीप्रवाहैरिव नगराङ्गनानिवहैर्जलक्रीडावसरेषु विरहिणीहृदयमिवोत्कलिकाविलोदयं क्रियते मुक्ताफलद्युतिचयः पयः । अपि च ।

करिमकरमुखोद्गीर्णं यस्यामर्णः पुनः पतद्भाति ।
सुरमिथुनकलहविगलितमुक्ताफलभूषणभ्रान्ति ॥

---

पुनः कथंभूतम् । सुभगावलोकनम् सुभगं प्रीतिजनकं अवलोकनं यस्य पयसस्तत्तथोक्तम् । किमिव । इन्दुमणिनिःस्यन्दनमिव चन्द्रकान्तमणिद्रव इव । पुनः कथंभूतम् । जनितजगत्प्रणयम् उत्पादितसकललोकप्रीतिकम् । किमिव । अव्ययं ज्योतिरिव केवलज्ञानमिव । कथंभूतैर्नगराङ्गनानिवहैः । प्रतिनदीप्रवाहैरिव अपरनदीपूरैरिव । पुनः कथंभूतैः । नदीधर्मविशिष्टानि विशेषणान्याह—अलकवल्लरीतरङ्गभङ्गिभिः अलकवल्लर्यस्तरङ्गभङ्गः कल्लोलरचना येषु नगराङ्गनानिवहेषु ते तथा तैः । पुनः कथंभूतैः । वदनारविन्दामोददुर्दिनैः वदनान्येवारविन्दानि तेषामामोदेन परिमलेन दुर्दिनाश्छन्नास्ते तथा तैः । पुनः कथंभूतैः । भुजलतावानीरसंततिभिः भुजलता बाहुवल्लयस्ता एव वानीरसंततयो वेतससमूहा येषु ते तथा तैः । पुनः कथंभूतैः । कुचकोकमिथुनमनोहरैः कुचा एव कोकमिथुनानि चक्रवाकयुगलानि तैर्मनोहरा मनोरञ्जनचतुरास्ते तथा तैः । पुनः कथंभूतैः । वलिवञ्जुलवल्लीविलासिभिः वलयः उदररेखास्ता एव वञ्जुलवल्लयो लताविशेषास्ताभिर्विलसन्त्युल्लसन्तीत्येवंशीला वलिवञ्जुलवल्लीविलासिनस्तैः । पुनः कथंभूतैः । नाभिमण्डलावर्तोदात्तैः नाभिमण्डलान्येव आवर्ता भूपास्तैरुदात्ता मनोहरास्ते तथा तैः । पुनः कथंभूतैः । नितम्बपुलिनस्थलश्लाघिभिः नितम्बाः स्त्रीकटीपश्चाद्भागास्त एव पुलिनस्थलानि जले क्रमेणोत्थितं द्वीपं पुलिनं प्रशस्तानि पुलिनानि पुलिनस्थलानि तेषां श्लाघा प्रशंसा विद्यते येषां ते तथा तैः । पुनः कथंभूतैः । ऊरुकरिमकरकराभोगहृदयंगमैः ऊरवः सक्थीनि त एव करिमकरकराभोगा जलहस्तिजलग्राहशुण्डादण्डविस्तारास्तैर्हृदयंगमा मनोहरास्ते तथा तैः । पुनः कथंभूतैः । पादनखमयूखफेनस्फीतैः पादनखमयूखा एव फेना डिण्डीरपिण्डास्तैः स्फीता प्रचुरास्ते तथा तैः ॥

अपि च तथा च । **करीत्यादि** । यस्यां सिप्रायां नद्यामर्णो जलं करिमकरमुखोद्गीर्णं जलहस्तिनक्रमुखैरुद्गीर्णं उद्गापितम् । पुनः पुनरपि आकाशात् अधः पतत् भाति शोभते । कीदृशं भाति । सुरमिथुनकलहविगलितमुक्ताफलभूषणभ्रान्ति सुराणां मिथुनानि



जलदेवीकरयन्त्रैरुपरिष्टाद्यत्र वारि विक्षिप्तम् ।
दुर्वर्णदण्डदीप्तिं दधाति विपदातपत्रस्य ॥
षट्चरणचलितजलरुहमकरन्दस्यन्दबिन्दुकन्दलितम् ।
यस्याः पाथः श्लथयति घुसृणमतिं पौरलोकस्य ॥
चपलकलहंसबालकपरिप्लुतः षट्पदोऽम्बुजे भाति ।
यस्यां धर्मभयादिव पलायमानोऽघसंघातः ॥
मध्यमधुलुब्धमधुकरकुलभाण्डं पुण्डरीकमुद्दण्डम् ।
हरति हरिन्मणिकलशां सितातपत्रश्रियं यत्र ॥
उद्गतमकरन्दरजः सिताम्बुजं यत्र मोदमन्थरितम् ।
उपरिचलधूलिधूसरधवलच्छत्रच्छविं छुपति ॥

---

स्त्रीपुरुषयुग्मानि तेषां कलहो मैथुन(?)कटस्तेन विगलितान्यधःपतितानि यानि मुक्ताफलभूषणानि तेषां भ्रान्तिः सादृश्यं यत्र तत्तथोक्तम् । उपमालंकारः ॥

**जलदेवीत्यादि** । यत्र यस्यां जलदेवीकरयन्त्रैः कृत्वा उपरिष्टात् आकाशे विक्षिप्तं विकीर्णं वारि जलं विपदातपत्रस्य दुर्वर्णदण्डदीप्तिं दधाति रूप्यमयदण्डशोभां धरति । रूपकोपमालंकारः ॥

**षट्चरणेत्यादि** । यस्याः सिप्रायाः पाथो जलं पौरलोकस्य घुसृणमतिं कुङ्कुमद्रवस्वीकाराभिलाषं श्लथयति शिथिलयति । तत्कारणगर्भितं विशेषणमाह—कथंभूतं पाथः । षट्चरणचलितजलरुहमकरन्दस्यन्दबिन्दुकन्दलितं षट्चरणा भ्रमराः तैः चलितानि कम्पितानि यानि जलरुहानि कमलानि तेषां मकरन्दस्यन्दबिन्दवः पुष्परसक्षरणविषस्तैः कन्दलितं निश्चितम् । हेत्वलंकारः ॥

**चपलेत्यादि** । यस्यां सिप्रायां अम्बुजे कमले षट्पदो भ्रमरो भाति शोभते । कथंभूतो भाति । अघसंघात इव पापसमूह इव । किं कुर्वाणः अघसंघात इव भाति । धर्मभयात् पलायमानो नश्यत् । षट्पदः कथंभूतः । चपलकलहंसबालकपरिप्लुतः चपलो योऽसौ कलहंसबालकः कलहंसशिशुस्तस्य मुखेन परिप्लुत उपद्रुतः । प्रतिवस्तूपमालंकारः ॥

**मध्येत्यादि** । यत्र यस्यां पुण्डरीकं श्वेतकमलं कर्तृभूतं सितातपत्रश्रियं हरति तिरस्करोति । कथंभूतां सितातपत्रश्रियम् । हरिन्मणिकलशां हरिन्मणेरश्मगर्भरत्नस्य कलशः कुम्भो यस्यां सा तथा ताम् । कृष्णरत्नकलशामित्यर्थः । कथंभूतं पुण्डरीकम् । मध्यमधुलुब्धमधुकरकुलभाण्डं मध्यमधुलुब्धो मकरन्दलम्पटो योऽसौ मधुकरो भ्रमरस्तस्य कुलं जातिस्तस्य भाण्डमाधारः । पुनः कथंभूतम् । उद्दण्डं जलान्निर्गतम् ॥

**उद्गतेत्यादि** । यत्र यस्यां सिप्रायां नद्यां सिताम्बुजं श्वेतकमलं उपरिचलधूलिधूसर-

संपन्नपुरच्छायं तलदेशे यत्र राजते वारि ।
उन्मीलितभुजगजगत्सुरलोकालोकदर्पणद्युति च ॥
ईशानशीर्षोचितविभ्रमाणि वैखानसावासनिरन्तराणि ।
नीराणि यस्याः सुरशेखराणि सरिद्वरावारिमनोहराणि ॥
देवार्चनासङ्गविधौ जनानां यस्यां प्रसूनाञ्जलिगन्धलुब्धः ।
विनिर्गलत्पूर्वभवाघसङ्घः समन्ततो भाति मधुव्रतौघः ॥
यस्याः प्रवाहः सरितः प्रकामं बलिप्रसूनप्रकराभिरामः ।
रत्नोत्करापूरितसत्रवृत्तेर्महाध्वजस्येव तनोति कान्तिम् ॥

---

धवलच्छत्रच्छविं छुपति उपरितनभागे चला चपला या धूली रजः तया धूसरं ईषत्पाण्डुरं धवलमुज्ज्वलं यच्छत्रं तस्य छविः शोभा तां छुपति स्पृशति । 'छुपतिस्पृशसंस्यः शत्तुदादौ वर्तते ।' कथंभूतं सिताम्बुजम् । उद्गतमकरन्दरजः उद्गतमुज्ज्वलितमुपरिगतं वा मकरन्देन पुष्परसेनोपलक्षितं रजः परागो यत्र सिताम्बुजे तत्तथोक्तम् । पुनः कथंभूतम् । मोदमन्थरितं मोदेन परिमलभारेण मन्थरितं नम्रीभूतम् । हेतूपमालंकारः ॥

**संपन्नेत्यादि** । यत्र यस्यां तलदेशे अधःप्रदेशे नगरस्याधोभागे वारि राजते । कथंभूतं वारि । संपन्नपुरच्छायं प्रतिबिम्बितोज्जयिनीनगरप्रतिबिम्बम् । पुनः कथंभूतम् । उन्मीलितभुजगजगत् उन्मीलन्नागलोको यत्र वारिणि तत्तथोक्तम् । पुनः कथंभूतम् । सुरलोकालोकदर्पणद्युति सुरलोकस्य स्वर्गलोकस्य मध्यगता आलोकभूतास्य आलोकाय विलोकनाय दर्पणस्य आदर्शस्य द्युतिः शोभा यस्य वारिणस्तत्तथोक्तम् । स्वर्गनगरदर्शनदर्पणसदृशमित्यर्थः । हेतूपमालंकारः ॥

**ईशानेत्यादि** । यस्याः सिप्राया नीराणि । कथंभूतानि । सरिद्वरावारिमनोहराणि गङ्गानदीजलसदृशानि । पुनः कथंभूतानि । ईशानशीर्षोचितविभ्रमाणि ईशानो महादेवस्तस्य शीर्षस्तस्मिन् उचितविभ्रमाणि योग्यशोभानि । पुनः कथंभूतानि । वैखानसावासनिरन्तराणि वैखानसानां तापसानामावासैर्गृहैः निरन्तराणि अविच्छिन्नानि । पुनः कथंभूतानि । सुरशेखराणि सुराणां शेखराणि मुकुटानि । मस्तकेषु धारणीयानीत्यर्थः ॥

**देवार्चनेत्यादि** । यस्यां नद्यां मधुव्रतौघो भाति । कथम् । समन्ततः सर्वत्र । कथंभूतो मधुव्रतौघः । देवार्चनासङ्गविधौ देवपूजावसरविधाने जनानां प्रसूनाञ्जलिगन्धलुब्धः पुष्पाञ्जलिगन्धलम्पटः । पुनः कथंभूतः । विनिर्गलत्पूर्वभवाघसङ्घः विनिर्गलन् विनिर्गच्छन् पूर्वभवानां जन्मान्तराणां अघसङ्घः पापसमूह इव । उपमालंकारः ॥

**यस्या इत्यादि** । यस्याः सरितः प्रवाहः प्रकामं महाध्वजस्य इन्द्रध्वजस्य यज्ञविशे-



चिलीचिमनिरीक्षणा सितसरोजहासोल्बणा
कलक्कणितवारलाविलसदावलीमेखला ।
उपान्तपुलिनाननोच्छलितवीचिनादानुगा
मनः पुरजनस्य या हरति कामिनीवापगा ॥

तस्याः प्रमादमालवीजलकेलिसरस्याः सरितो जलक्रीडोत्तालजलदेवता-

---

षस्य कान्तिं शोभां तनोति । कथंभूतः प्रवाहः । बलिप्रसूनप्रकराभिरामः बल्यर्थं पूजार्थं यानि प्रसूनानि तेषां प्रकरैः अभिरामो मनोहरः । कथंभूतस्य महाध्वजस्य । रत्नोत्करापूरितसत्रवृत्तेः रत्नोत्करैरापूरिता सत्रस्य गृहस्य वृत्तिर्येन स तथा, तस्य । उक्तं च— 'जिनपूजाया भेदाः पञ्च भवन्ति । तत्र नित्यमहः, चतुर्मुखम्, कल्पवृक्षः, आष्टाह्निकम्, ऐन्द्रध्वज इति । तत्र नित्यमहः निजगृहात् गन्धपुष्पाक्षतादीनि जिनगृहाय निवेदनं चैत्यचैत्यालयं च कृत्वा ग्रामक्षेत्रादीनां शासनदानं मुनिजनपूजनं च नित्यमहः, मुकुटबद्धैः क्रियमाणा पूजा महामहः । सर्वतोभद्रश्चतुर्मुखमिति कथ्यते । कल्पवृक्षः अर्थिनः प्रार्थितानर्थैः संतर्प्य चक्रवर्तिभिः क्रियमाणो महः कल्पवृक्ष उच्यते । आष्टाह्निकं आषाढकार्तिकफाल्गुनमासेषु शुक्लपक्षेषु अष्टम्या पूर्णिमापर्यन्तं स्नपनपूजादिकं क्रियमाणं आष्टाह्निकमुच्यते । ऐन्द्रध्वजः इन्द्रादिभिः क्रियमाणो महः समवसरणादौ ऐन्द्रध्वज उच्यते ।' दृष्टान्तालंकारः ॥

**चिलीचिमेत्यादि** । या आपगा सिप्रा नदी पुरजनस्य मनो हरति चोरयति । केव । कामिनीव वश्येव । कथंभूता आपगा । चिलीचिमनिरीक्षणा································ ······। पुनः कथंभूता । सितसरोजहासोल्बणा································ ··············। पुनः कथंभूता । कलक्कणितवारलाविलसदावलीमेखला कलं मधुरं क्वणितं शब्दितं यासां ताः कलक्कणितास्ताश्च ता वारला हंसभार्यास्तासां विलसन्ती उल्लसन्ती या आवली श्रेणिः सैव मेखला कटिमेखला यस्याः सा तथोक्ता । वेश्यापि कटिमेखलासहिता भवति । पुनः कथंभूता । उपान्तपुलिनाननोच्छलितवीचिनादानुगा उपान्तेषु समीपेषु यत्पुलिनं तोयमध्ये वालुकाद्वीपं तदेवाननं तत्रोच्छलिता उत्पतिता या वीचयो लहर्यस्तासां नादेन शब्देन अनुगच्छति चलति या सा तथोक्ता । वेश्यापि उल्लसन्ती गीतादिकं करोति । स्रग्विणीछन्दः । उपमालंकारः ॥

अहो मारदत्त महाराज, तस्याः सरितः सिप्रायाः नद्याः संबन्धिनि महाह्रदे अगाधजलाशये पुनरहं यशोधरः पृथुरोमा मत्स्यः समभूवं संजातोऽस्मि । कथंभूतायास्तस्याः । प्रमादमालवीजलकेलिसरस्याः प्रमादेन अलसतया मालवीनां मालवदेशोद्भवस्त्रीणां जलकेल्यर्थं जलक्रीडार्थं सरसी महासरोवरं तस्याः । कथंभूते महाह्रदे । जलक्रीडोत्तालजलदेवता-

हस्तोदस्तसलिलासारधारासहस्रसंपादितानेकगगनतलशतह्रदे महाह्रदे व्यतिक्रम्य तं पृषतपर्यायोदन्तमसरालशयालुप्रमाणदेहः पुनरहमहो महाराज, **रोक्षिताक्ष**नामा पृथुरोमा समभूवम् । यस्मिञ्जलक्रीडारते

कूलंकषा मग्नतनौ मयि स्यादुन्मग्नकाये प्रतनुप्रवाहा ।
स्थिते तिरश्चीनतया च सिन्धुः सा सेतुबन्धश्रियमादधाति ॥

सापि मदीयाम्बा कृतकृष्णपन्नगतनुत्यागात्तत्रैव शिशुमारतया जन्मासादयामास ।

एकदा नु तस्यामेव सीकरासारतारकितसकलहरिति सरिति निदाघदाहदारुणरसेषु शुचिसमाशाखादिवसेषु

---

हस्तोदस्तसलिलासारधारासहस्रसंपादितानेकगगनतलशतह्रदे जलक्रीडायामुत्ताला या जलदेवतास्तासां हस्तोदस्त ऊर्ध्वं क्षिप्तो योऽसौ सलिलासारो जलसमूहस्तस्य धाराभिः संपादिता उत्पादिता अनेका च गगनतले शतह्रदा विद्युतो यस्मिन् महाह्रदे स तथा तस्मिन् । किं कृत्वा अहं पृथुरोमा समभूवम् । तं पूर्वोक्तं पृषतपर्यायोदन्तं सहेलकपर्यायवार्तां व्यतिक्रम्य । अहं सहेलको मृत्वा पृथुरोमा संजात इत्यर्थः । कथंभूतः पृथुरोमा । असरालशयालुप्रमाणदेहः असरालो महान् योऽसौ शयालुरजगरस्तेन प्रमाणस्तत्सदृशो देहो यस्य स तथोक्तः । पुनः कथंभूतः पृथुरोमा । रोहिताक्षनामा रोहिताक्ष इति नाम यस्य स तथा । मुचुकुन्दपुष्पसदृशरक्तश्वेतशरीर इत्यर्थः । यस्मिन् रोहिताक्षे जलक्रीडारते सति ।

**कूलंकषेत्यादि** । सा सिन्धुः सिप्रा नदी मयि रोहिताक्षे पृथुरोम्णि मग्नतनौ सति कूलंकषा तटमुद्रुजा स्याद्भवेत् । मयि उन्मग्नकाये सति बहिरुच्छलिते सति प्रतनुप्रवाहा अल्पपूरा स्यात् । मयि तिरश्चीनतया तिर्यक्त्वेन स्थिते सति सेतुबन्धश्रियं सेतुबन्धशोभां आदधात्याचरति । दीपकालंकारः, अतिशयश्च ॥

सापि पूर्वोक्ता मदीयाम्बा चन्द्रमतिः कृतकृष्णपन्नगतनुत्यागात् कालसपर्यायं परिहृत्य तत्रैव सिप्रायां महारुद्रे शिशुमारतया शिशुमारत्वेन रौद्रजलचरजन्मा जन्म भवान्तरं आसादयामास प्राप्तवती ।

एकदा एकस्मिन्नवसरे नु पुनः शुचिसमाशाखादिवसेषु ज्येष्ठमासदिनेषु तस्यामेव सरिति सिप्रायां नद्यां पुराङ्गना नगरस्त्रियः क्रीडन्ति स्म क्रीडां चक्रुः । कथंभूतायां तस्यां सरिति । सीकरासारतारकितसकलहरिति सीकरासारैरुच्छलितजलकणसमूहैस्तारकिताः संजाततारकाः सकला अपि हरितो दिशो यया सा तथा तस्याः । कथंभूतेषु शुचिमासदिवसेषु । निदाघदाहदारुणरसेषु निदाघदाहेन घर्मसंतापेन दारुणो रसः सप्तमो रसो येषु



भ्रश्यत्कर्णवतंसकाः सरलितप्रान्तप्रलम्बालकाः
शीर्यत्कज्जललोचनाः परिगलद्गण्डस्थलीचन्दनाः ।
उत्कम्पस्तनमण्डलाः प्रविलसल्लीलाब्जबाहाकुलाः
क्रीडन्ति स्म पुराङ्गनाः प्रियतमैरासेव्यमाना इव ॥

तत्रैवावसरेऽषडक्षीणाक्षोभक्षामनिद्रोद्रेकेणातुच्छपुच्छाच्छोटनोच्छलदविच्छिन्नच्छटस्वच्छसलिलकल्लोलकल्पितजलदेवतानिकेतकेतुमालेन निजनिरवधिप्रधावप्रारम्भैर्मथ्यमानपयस्यां कलशीमिव फेनाविलावर्तमण्डलां

---

ते तथोक्तास्तेषु । 'ज्येष्ठे शुक्रशुचिस्त्वयम् । आषाढे' इत्यमरकोषे वर्तते । पञ्जिकाकारेण जिनदेवनाम्नाचार्येण शुचिशब्देन ज्येष्ठ एव व्याख्यातः । तदभिप्रायेण अस्माभिरपि शुचिशब्देन ज्येष्ठ एवोक्तः । एवंविधं निदाघरौद्रत्वं ज्येष्ठ एव वर्तते, न त्वाषाढे । वृषसंक्रान्तिमासत्वात् । उक्तं च ब्राह्मणशास्त्रे—'गोमासे गोगवाक्रान्ते गोरसे गगनं गते । गोपदं गोरसं दत्वा गोसहस्रफलं भजेत् ॥' इति ।

कथंभूताः पुराङ्गनाः । **भ्रश्यदिति** । भ्रश्यत्कर्णवतंसकाः भ्रश्यन्ति जलवेगेन अधः पतन्ति कर्णानां अवतंसकानि कर्णपूरा यासां तास्तथोक्ताः । पुनः कथंभूताः । सरलितप्रान्तप्रलम्बालकाः सरलिता अवक्रीभूताः प्रान्तेषु प्रलम्बा दीर्घा अलकाः केशा यासां तास्तथोक्ताः । पुनः कथंभूताः । शीर्यत्कज्जललोचनाः शीर्यत् गलत् कज्जलमस्यञ्जनं येषां तानि शीर्यत्कज्जलानि तत्सदृशानि लोचनानि यासां तास्तथोक्ताः । पुनः कथंभूताः । परिगलद्गण्डस्थलीचन्दनाः परि समन्तात् गलन्ति गण्डस्थलीनां प्रशस्तकपोलानां चन्दनानि विलेपनरचना यासां तास्तथोक्ताः । पुनः कथंभूताः । उत्कम्पस्तनमण्डलाः उत्कम्पानि उल्लसितानि सोल्लासानि स्तनमण्डलानि कुचभरा यासां तास्तथोक्ताः । पुनः कथंभूताः । प्रविलसल्लीलाब्जबाहाकुलाः प्रविलसन्ती शोभमाना लीला यासां ताः प्रविलसल्लीला अब्जबाहा कमलवत् भुजास्ताभिराकुला अनवस्थिताः । पुनः कथंभूताः । प्रियतमैर्निजवल्लभैरासेव्यमाना इव सुखक्रीडायां भुज्यमाना इव । यथा प्रियतमैरासेव्यमाना अङ्गना भ्रश्यदवतंसा सरलकेशा विसरत्कज्जललोचनाः चन्दनपत्रवल्लीरहिता चपलस्तनमण्डना नृत्यद्बाहवश्च भवन्ति । उपमालंकारः ॥

तत्रैवावसरे पुराङ्गनानां क्रीडासमये तेन चुलुकीसूनुना शिंशुमारीसुतेन तासु नगराङ्गनासु मध्ये यशोमतिमहाराजमहादेव्याः कुसुमावत्याः संबन्धित्वेन कुब्जलिका दासी मदनमञ्जरिका नामा अग्राहि जगृहे । गृहीता इत्यर्थः । कथंभूतेन चुलुकीसूनुना । अषडक्षीणाक्षोभक्षामनिद्रोद्रेकेण अषडक्षीणानां मत्स्यानां क्षोभेन भेषजचलनेन क्षाम क्षीणः । उड्डीन इत्यर्थः । निद्रायाः प्रमीलायाः स्वप्नस्य उद्रेक आधिक्यं यस्य स तथा तेन । पुनः कथंभूतेन । अतुच्छपुच्छाच्छोटनोच्छलदविच्छिन्नच्छटस्वच्छसलिलकल्लोलकल्पितजलदेवतानिकेतकेतु-

कूलवन्तीं कुर्वता प्रतिक्षणसंधुक्ष्यमाणक्षुदाशुशुक्षणिक्षपितकुक्षिकक्षेण नीरेचरत्यक्षपक्षभक्षणाक्षिप्तक्षणेनेव **शूलाक्षपतिना** तेन **चुलुकीसूनुना** मां ग्रहीतुं प्रत्यावृत्तेन तासु जलकेलीसक्तस्वान्तासु मध्ये **यशोमति**महाराजमहादेव्याः कुब्जलिका **मदनमञ्जरिका** नामाग्राहि ।

ततस्तद्वृत्तान्ताकर्णनकुपितमतिः स महीपतिराहूयादिदेश सकलजलव्यालविलोपनाय वैवस्वतसैन्यसंनिभं सत्वरं संचरद्धीवरनिकरम् । ते च कैवर्तास्तदादेशादुत्तरलतरोत्तानकराचरितक्ष्वेलिताः सत्वरं लगुडगलजाल-

---

मालेन अतुच्छं प्रचुरं यत् पुच्छाच्छोटनं पुच्छस्य आस्फालनं तेनोच्छलत् ऊर्ध्वं गच्छत् अविच्छिन्नच्छटं अखण्डधारं स्वच्छं निर्मलं यत् सलिलं जलं तस्य कल्लोलैः कल्पिता रचिता जलदेवतानां जलाधिष्ठातॄणां देवतानां निकेते गृहे केतुमाला सेतूज्ज्वला पङ्क्तिर्येन चुलुकीसूनुना स तथोक्तस्तेन । चुलुकीसूनुना किं कुर्वता सता कुब्जलिका अग्राहि । कूलवन्तीं नदीं फेनाविलावर्तमण्डलां फेनैः डिण्डीरपिण्डैराविलं व्याप्तं आवर्तमण्डलं भ्रमणसमूहं यस्याः कूलिन्याः सा तथा तां कुर्वता विदधता । कूलवन्तीं कामिव । कलशीमिव दधिसन्थिनीव । कथंभूतां कलशीम् । निजनिरवधिप्रधावप्रारम्भैः निजो योऽसौ निरवधिप्रधाव आमर्यादभूतवेगवद्गतिस्तस्य प्रारम्भैः राभस्यैः मथ्यमानपयस्यां मथ्यमानं विलोड्यमानं पयस्यं दधि यस्याः सा मथ्यमानपयस्या ताम् । पुनः कथंभूतेन चुलुकीसूनुना । प्रतिक्षणसंधुक्ष्यमाणक्षुदाशुशुक्षणिक्षपितकुक्षिकक्षेण क्षणं क्षणं प्रति प्रतिक्षणं संधुक्ष्यमाणः संदीप्यमानो योऽसौ क्षुदाशुशुक्षणिर्बुभुक्षाग्निस्तेन क्षपितं पीडितं कुक्षिकक्षं उदरवनं यस्य स तथा तेन । पुनः कथंभूतेन । नीरेचरत्यक्षपक्षभक्षणाक्षिप्तक्षणेन नीरेचरा मत्स्यास्तेषां(?)त्यक्षः समस्तोऽपि योऽसौ पक्षः पितृमातृपुत्रादिपरिग्रहस्तस्य भक्षणे आक्षिप्तः प्रारब्धः क्षणोऽवसरो येन स तथा तेन । केनेव । शूलाक्षपतिनेव यमेनेव । कथंभूतेन । मां रोहिताक्षं मत्स्यं यशोधरं चरं ग्रहीतुं गृहीत्वा भक्षितुं प्रत्यावृत्तेन व्याघुटितेन । कथंभूतासु तासु पुराङ्गनासु । जलकेलीसक्तस्वान्तासु································विचितानि यासां तास्तथोक्तास्तासु ॥

ततस्तदनन्तरं तद्वृत्तान्ताकर्णनकुपितमतिः मदनमञ्जरिकाग्रहणश्रवणक्रुद्धबुद्धिः स महीपतिः यशोमतिमहाराजः सत्वरं संचरद्धीवरनिकरं संमुखमागच्छन्मत्स्यवेधिसमूहं आहूय आकार्य सकलजलव्यालविलोपनाय सर्वजलदुष्टग्रहविनाशाय आदिदेश आदेशं दत्तवान् आदिष्टवान् । कथंभूतं संचरद्धीवरनिकरम् । वैवस्वतसैन्यसंनिभं यमकटकसदृशम् । ते च कैवर्ताः संचरद्धीवरा तदादेशात् यशोमतिमहाराजस्यादेशात् तां प्रसिद्धां तरङ्गिणीं सिप्रानदीं सत्वरं अवतेरुः अवतरन्ति स्म । कथंभूताः कैवर्ताः । उत्तरलतरोत्तानकराचरितक्ष्वेलिताः उत्तरलतरा वेगवत्तरा उत्ताना अनधोमुखा ये करा हस्ततलास्तैराचरि-



व्यग्रपाणयस्तरीतर्पतुवरतरङ्गतरण्डवेडिकोडुपसंपन्नपरिकरास्तां तरङ्गिणीमवतेरुः ।

उड्डीनाण्डजडिम्भमाकुलभवन्नालीकिनीकाननं
कूलोत्तालबिलान्तरालचलनग्लानालगर्दार्भकम् ।
प्रायःपङ्किलगर्तगर्वरमिलद्दौलेयबालं मुहु-
स्तत्स्रोतः कलुषीबभूव विवशग्राहं विगाहत्ततः ॥

पुनरहमहमिकया तत्सरित्स्रोतसि तेषु विहितसकलजलचरग्रहणोपायेषु तस्य चौलूकेयस्य यमदंष्ट्राकोटिकुटिलः पपात गलनाले गलः । तत्संगमान्मम

---

तानि कृतानि क्ष्वेलितानि आस्फोटितानि वर्करिका यैस्ते तथोक्ताः । पुनः कथंभूताः । लगुडगलजालव्यग्रपाणयः लगुडं लकुटदण्डः, गलश्च मत्स्यवेधनलोहकण्टकः, जालं च आनायः लगुडगलजालानि तेषु व्यग्रा व्यापृताः पाणयो येषां ते तथोक्ताः । पुनः कथंभूताः । तरीतर्पतुवरतरङ्गतरण्डवेडिकोडुपसंपन्नपरिकराः तरीश्च नौका, तर्पश्च तृणमयघोटकः, तुवरतरङ्गश्च दौधिकफलतरणोपायः, तरण्डश्च फलकम्, वेडिका च क्षुद्रनौका, उडुपश्च परिहारनौका चर्मावनघातैः संपन्नः परिपूर्णः परिकरः परिवारो येषां ते तथोक्ताः ॥

**उड्डीनाण्डजेत्यादि** । ततस्तदनन्तरं स्रोतः सिप्रानदीजलपूरः कलुषीबभूव अनच्छं संजातम् । कथंभूतं स्रोतः । उड्डीनाण्डजडिम्भम् उड्डीय गगने स्थिता अण्डजानां पक्षीणां डिम्भाः बालका यस्मिन् तत्तथोक्तम् । पुनः कथंभूतम् । आकुलभवन्नालीकिनीकाननम् आकुलं भवत् कम्पमानं भवत् नालीकिनीनां पद्मिनीनां काननं यत्र तत्तथोक्तम् । पुनः कथंभूतम् । कूलोत्तालबिलान्तरालचलनग्लानालगर्दार्भकं कूलयोरुभयोस्तटयोरुत्ताला उत्सुका बिलान्तरालेषु बिलमध्येषु चलनेन ग्लाना निर्भग्नोद्यमा अलगर्दानां जलसर्पाणां अर्भका बालका यत्र तत्तथोक्तम् । पुनः कथंभूतम् । प्रायःपङ्किलगर्तगर्वरमिलद्दौलेयबालं प्रायो बाहुल्येन पङ्किलाः सकर्दमा ये गर्तास्तेषां मध्ये ये गवेरा महिषास्तैः मिलन्तः एकत्रीभवन्तो दौलेयबालाः कच्छपशिशवो यत्र तत्तथोक्तम् । कथं कलुषीबभूव । मुहुर्वारंवारम् । पुनः कथंभूतं स्रोतः । विवशग्राहं विवशाः परवशाः ग्राहा मकरादयो यत्र तत्तथोक्तम् । स्रोतः किं कुर्वत् । विगाहत् विलोडत् । अतिशयालंकारः ॥

पुनः पुनरपि नदीप्रवाहे अवगाहनानन्तरं अहमहमिकया परस्पराहंकारेण तत्सरित्स्रोतसि तन्नदीप्रवाहे तेषु कैवर्तेषु विहितो रचितः सकलानां जलचराणां मकरादीनां ग्रहणस्य उपायो यैस्ते तथोक्तास्तेषु सत्सु तस्य चौलूकेयस्य चुलूकीपुत्रस्य शिशुमारस्य गलनाले गलः लोहकण्टकः पपात पतितः । कथंभूतो गलः । यमदंष्ट्राकोटिकुटिलः यमस्य दंष्ट्रा दाढा तस्याः कोटिरग्रं तद्वत् कुटिलो वक्रः । तत्संगमात् शिशुमार-

चोपरि भ्रमदकालचक्रकरालं जालम् । पुनरसद्ग्रहणानन्दितमनोभिस्तैर्मत्स्यवेधिभिरानीतं मां तं च स महीपतिरवलोक्य पितृसंतर्पणार्थं द्विजसमाजसत्त्ररसवतीकाराय समर्पयामास । तत्र च तदुपयोगमात्रतया प्रत्यहमुत्कृत्यमानकायैकदेशः

अहं पिता पूर्वभवेऽस्य राज्ञः पितामही चाम्बुचरोऽयमासीत् ।
इयं व्यवस्था ननु नाविदानीमस्मत्सुखार्थं च विधिः किलैषः ॥

इति विचिन्तयन्स चाहं च कथंकथमपि जीवितमत्यजाव ।

पुनरहो धर्मधनंजय, तामेव समस्ताद्भुतजननी**मुज्जयिनीं** निकषा तमताजिनजेणाजीवनोटजाकुले बम्बूलबदरीकरीरप्रायक्षुपाक्षिप्तपर्यन्तस्थले **कङ्काहि**नामके ग्रामधामके स जलव्यालो महत्युरभ्रसंदर्भे छगली बभूव । अहं

---

संगमात् ममोपरि च जालं पपातेत्येवम् । कथंभूतं जालम् । भ्रमदकालचक्रकरालं भ्रमत् भ्रमणं कुर्वत् यत् अकालचक्रं अप्रस्तावे यमचक्रं तद्वत् करालं रौद्रम् । पुनः पुनरपि असद्ग्रहणानन्दितमनोभिरस्माकं स्वीकरणेन हृष्टचित्तैस्तैः प्रसिद्धैर्मत्स्यवेधिभिः कैवर्तैरानीतं मां यशोधरवरं रोहिताक्षं मत्स्यं च तं चन्द्रमतिचरं शिशुमारं अवलोक्य सः यशोमतिमहाराजनामा महीपतिः पितृसंतर्पणार्थं द्विजसमाजसत्त्ररसवतीकाराय समर्पयामास दापितवान् । द्विजसमाज इति ब्राह्मणसमूहस्य सत्त्ररसवतीकाराय । ब्राह्मणरूपकारायेत्यर्थः(?)। समर्पयामास ॥

हे राजन् मारदत्त महाराज, स च शिशुमारोऽहं च रोहिताक्षमत्स्यः कथंकथमपि महता कष्टेन जीवितं अत्यजाव त्यक्तवन्तौ । अहं च किं कुर्वन् । इतीदृशं विचिन्तयन् पर्यालोचयन् । कथंभूतोऽहम् । तत्र ब्राह्मणसत्त्रशालायां तदुपयोगमात्रतया ब्राह्मणभोजनमात्रतया प्रत्यहं दिनं दिनं प्रति उत्कृत्यमानः उत्पाट्यमानश्छेद्यमानः कायैकदेशः सन् । नित्यं प्रतिछेद्यमानः कायैकदेशः मृतेति संबन्धः इति केचित् ॥

**अहमित्यादि** । अस्य राज्ञः यशोमतिमहाराजस्य पूर्वभवे अहं पिता वर्ते । अयमम्बुचरः शिशुमारश्च पितामही पितृमाता आसीत् । इदानीं ननु निश्चयेन इयं ईदृशी व्यवस्था नौ आवयोरिदानीं वर्तते । किलेत्यरुचौ । एष विधिः कर्तव्यता ब्राह्मणभोजनेन अस्मत्सुखार्थमस्मत्प्रीणनार्थं च वर्तते । जात्यलंकारः ॥

पुनः पुनरपि अहो धर्मधनंजय धर्मेण धनुषा धनंजय अर्जुन । महाराजपक्षे धर्म एव धनं धर्मधनं तेन जयति तज्जयति वा स्वीकरोतीति धर्मधनंजयस्तस्य संबोधनं क्रियते— हे धर्मधनंजय धर्मधनोपार्जक, तां पूर्वोक्तामेव उज्जयिनीं निकषा । उज्जयिनीनगर्याः समीप इत्यर्थः । कङ्काहिनामके कङ्काहिरिति नाम यस्य एवंविधे ग्रामधामके ग्रामस्थाने स पूर्वोक्तो जलव्यालश्चन्द्रमतिचरः शिशुमारः महती बृहती छगली अजा बभूव । कथंभूतां उज्जयिनीम् । समस्ताद्भुतजननीं अनेकाश्चर्योत्पत्तिस्थानम् । कथंभूते कङ्काहिनामके । तमताजिनजेणाजी-



च तत्रैव छगलः । पुनरावयोर्व्यतिक्रान्ते वर्करभाववृत्तान्ते जातस्मरस्मयस्तामेवाहमजामतिक्रामन्नखिलोरणक्षोभक्षुभितचित्तेनाविकटाधिपतिनातीव - तीक्ष्णविषाणविनिर्मितमर्मप्रहारः सौम्यधातुपातानन्तरमेव प्रेतभावमनुसरन्स्वयंभूरिवात्मनात्मानमुत्पादयामास । अभूवं चातिक्रान्तेषु कतिचिद्द्विपक्षेषु प्राप्तप्रसवावसरः ।

अत्रान्तरे स **यशोम**तिकुमारः पापर्द्धिप्रवृद्धमनस्कारस्तत्फलमिहैव जन्मनि दर्शयन्निव विदूरितनिखिलराजलक्ष्मीचिह्नः कूटशाल्मलितरू-

---

वनोटजाकुले तमतं ऊर्णामयमास्तरणम्, अजिनजेणं चर्मपल्याणम्, तद्द्वयमाजीवनं उदरपूरणव्यवसायो येषां ते तमताजिनजेणाजीवनास्तेषां उटजानि गृहाणि तैराकुलं व्याप्तं तमताजिनजेणाजीवनोटजाकुलं तस्मिन् । पुनः कथंभूते कङ्काहिनामके । बम्बूलबदरीकरीरप्रायक्षुपाक्षिप्तपर्यन्तस्थले बम्बूलाश्च किङ्किनीतरवः, बदर्यश्च गोटावृक्षाः, करीरा गूढपत्रवृक्षाः । उक्तं च—'करीरं वज्रपत्रं च शाकपुष्पं मृदूफलम् । ग्रन्थिली तीक्ष्णसारं तु चक्रकं क्षीणकण्टकम् ॥' ते प्रायेण क्षुपाश्च लघुवृक्षाणामग्राणि तैराक्षिप्तं वेष्टितं पर्यन्तस्थलं यस्य तत्तथोक्तं तस्मिन् । छगली कस्मिन् बभूव । उरभ्रसंदर्भे मेषसमूहे । अहं च यशोधरः रोहिताक्षमत्स्यस्तत्रैव कङ्काहिनामके उरभ्रसंदर्भे छगलोऽभूवम् । अर्थवशाद्विभक्तिपरिणाम उत्तमैकवचनं प्रथमोत्तमसमानक्रियापदत्वात् । पुनः पुनरपि आवयोश्छगलीछगलपर्याययोः वर्करभाववृत्तान्ते शिशुमारच्छगलं प्रपद्य वृके व्यतिक्रान्ते सति जातस्मरस्मयोऽहं उत्पन्नकन्दर्पदर्पस्तरुणः सन् तामेव चन्द्रमतिचरीमजां छगलीं अहं अतिक्रामन् अभिगच्छन् उड्डीयमानः सन् अखिलोरणक्षोभक्षुभितचित्तेन अखिलाश्च ते उरणाश्च मेषास्तेषां क्षोभेण चलनेन क्षुभितं क्रोधं प्राप्तं चित्तं यस्य स तथा तेन ईदृग्विधेन अविकटाधिपतिना अविनां मेषाणां कटः कटकः समूहस्तस्य अधिपतिः स्वामी तेन मेषसमूहस्वामिना कर्तृभूतेन अतीवतीक्ष्णविषाणविनिर्मितमर्मप्रहारः अतीव अतिशयेन तीक्ष्णे सूक्ष्माग्रे विषाणे शृङ्गे ताभ्यां विनिर्मितः मर्मप्रहारो जीवस्थाननिष्ठुरघात एवंगुणविशिष्टोऽहं सौम्यधातुपातानन्तरमेव शुक्रक्षरणादनन्तरमेव प्रेतभावं मरणं अनुसरन् प्राप्नुवन् स्वयंभूरिव ब्रह्मेव आत्मना आत्मानमुत्पादयामास । तस्यामेव अहं यशोधरच्छागः पुनरपि द्वितीयं वारं छागो भूत्वा गर्भे स्थित इत्यर्थः । न केवलं गर्भे स्थितः कतिचिद्द्विपक्षेषु कतिचिन्मासेसु अतिक्रान्तेषु सत्सु प्राप्तप्रसवावसरः लब्धजन्मसमयश्च अहं अभूवं अभवम् ॥

अत्रान्तरे अस्मिन्नवसरे मम जन्मप्राप्तिसमये स यशोमतिकुमारः कुसुमावलीमहादेवीकान्तः मृगयार्थं आखेटकार्थं निश्चक्राम निर्गतः । कथंभूतो यशोमतिकुमारः । पापर्द्धिप्रवृद्धमनस्कारः पापर्द्धौ आखेटकक्रियायां प्रवृद्धो मनस्कारश्चित्ताभोगो यस्य स

लुम्बनबन्धनैरिव लताप्रतानैर्गाढोद्ग्रन्थितमौलिर्नरकान्धकारकालकार्दमिकांशुकाधिकृतकायकपरिकरः श्वभ्राटवीप्रवेशदण्डकसकाण्डकोदण्डोच्चण्डदोर्दण्डमण्डलः कीनाशपाशाकारवागुरोत्तंसितांसः प्रादुर्भवद्दुरन्तपातकपातपिशुनैरिव श्वगणिभिः समाचरितपुरःप्रचारः कृतान्तानीकभीकरैरनणुकोणोत्कूणितपाणिभिः किरातैः परिवृतः पतिरिव सकलसत्त्वसंबाधसाधितमतिः

---

तथोक्तः । पुनः कथंभूतः । विदूरितनिखिलराजलक्ष्मीचिह्नः विदूरितानि निखिलानि राजलक्ष्मीचिह्नानि छत्रचामरध्वजादीनि येन स तथोक्तः । यशोमतिकुमारः किं कुर्वन् । इहैव जन्मनि अस्मिन्नेव भवे तत्फलं आखेटफलं दर्शयन्निव लोकानां निशामयन्निव । आखेटकक्रियाकारकः पुमान् भविष्यद्भवे राजलक्ष्मीचिह्नच्युतो भवतीति अस्मिन्नेव भवे दर्शयन्निव । पुनः कथंभूतः । लताप्रतानैः वल्लीसमूहैर्गाढमतिशयेनोद्ग्रन्थितः ऊर्ध्वं बद्धो मौलिर्मस्तकं येन स तथोक्तः । कथंभूतैर्लताप्रतानैः । कूटशाल्मलितरूल्लम्बनबन्धनैरिव । पुनः कथंभूतः । नरकान्धकारकालकार्दमिकांशुकाधिकृतकायकपरिकरः नरकान्धकारवत् कालं कार्दमिकं कर्दमेण रक्तम् । कृष्णवर्णमित्यर्थः । अंशुकं वस्त्रं तेन अधिकृतो नियुक्तः कायकपरिकरः शरीरवेषो यस्य स तथोक्तः । पुनः कथंभूतः । श्वभ्राटवीप्रवेशदण्डकसकाण्डकोदण्डोच्चण्डदोर्दण्डमण्डलः श्वभ्रो नरकः सः अटवी वेडम्बरं तस्य प्रवेशाय तत्संवरणाय दण्डकः क्षुद्रमार्गस्तत्सदृशं सकाण्डं बाणसहितं कोदण्डं धनुस्तत्रोच्चण्डं प्रकर्षेण प्रचण्डं दोर्दण्डमण्डलं यस्य स तथोक्तः । पुनः कथंभूत । कीनाशपाशाकारवागुरोत्तंसितांसः कीनाशस्य यमस्य पाशो बन्धनं तस्याकारस्तदुपमा यस्याः सा कीनाशपाशाकारा सा चासौ वागुरा मृगबन्धनी तया उत्तंसितौ मुकुटितौ अंसौ भुजशिखरे यस्य स तथोक्तः । पुनः कथंभूतः । श्वगणिभिः कुर्कुराणां स्वामिभिः समाचरितः सम्यगनुष्ठितः पुरःप्रचारो अग्रेसरत्वं येन स समाचरितपुरःप्रचारः । कथंभूतैः श्वगणिभिः । प्रादुर्भव ुरन्तपातकपातपिशुनैः प्रादुर्भवत् प्रकटीभवत् यत् दुरन्तं दुष्टस्वभावं पातकं तस्य पात आगमनं तस्य पिशुनैरिव । पुनः कथंभूतः । किरातैः परिवृतः । कथंभूतैः । कृतान्तानीकभीकरैः कृतान्तानीकवत् यमसैन्यवद्भयानकैः । पुनः कथंभूतैः । अनणुकोणोत्कूणितपाणिभिः अनणुर्महती कोणा दण्डं तेन उत्कूणिताः संकुचिताः पाणयो येषां ते तथा तैः । पुनः कथंभूतः । सकलसत्त्वसंबाधसाधितमतिः सकलसत्त्वानां सर्वजीवानां संबाधे सम्यग्लोटने साधिता स्वीकृता मतिर्येन स तथोक्तः । क इव । पतिरिव भृतक इव । किं कृत्वा पूर्वं मृगयार्थं निश्चक्राम । इतीदृशं नीतिं नीतिशास्त्रमधीतामपि अवमत्य अनादृत्य । इतीति किम् ।



'स्तेनद्विषद्विषव्यालश्वापदप्रभवं भयम् ।
शर्मधर्मविरामश्च मृगयायां महीपतेः ॥'

इति नीतिमधीतामप्यवमत्य मृगयार्थं निश्चक्राम । प्रविवेश च वनदेवताविनिवेदिततदागमनमिव प्रशान्तसमस्तसत्त्वसंचारं कान्तारम् । स्थलबिलजलान्तरालविहारिणां प्राणिनामद्यापि **चित्रगुप्ते**नापरिमृष्टमानत्वादनासादितहिंसः कोपारुणान्तरैरपाङ्गप्रसरैः स्वामर्षदेवतायाः शोणितोपहारमिव विकिरंस्तस्य छगलाविकैलकसनाथस्य यूथस्य मध्येन प्रत्यावर्तमानस्तिर्यग्गति-

---

**स्तेनेति** । महीपतेर्नरेन्द्रस्य मृगयायां भयमुत्पद्यते । कथंभूतं भयम् । स्तेनद्विषद्विषव्यालश्वापदप्रभवं स्तेनाश्चौराः, द्विषन्तश्च शत्रवः विषं च हालाहलम्, व्यालाश्च सर्पाः, श्वापदाश्च सिंहव्याघ्रादयः, तेभ्यः प्रभवमुत्पन्नम् । न केवलं महीपतेर्मृगयायां भयं भवति, किं तु शर्मधर्मविरामश्च भवति। शर्म च सुखम्, धर्मश्च पूजादानोपवासादिलक्षणः, शर्मधर्मौ तयोर्विरामो विनाशः शर्मधर्मविरामः । चकार उक्तसमुच्चयार्थः । तेन शीलभङ्गः प्रजाविलोपादिकं च लभ्यते ॥

न केवलं मृगयार्थं निश्चक्राम, किं तु कान्तारं दुर्गमं वर्त्म प्रविवेश च प्रविष्टवांश्च । कथंभूतं कान्तारम् । प्रशान्तसमस्तसत्त्वसंचारं प्रशान्त उपशान्तः समस्तसत्त्वानां मृगादिजीवानां संचारं प्रवेशो यत्र कान्तारे तत्तथोक्तम् । तदागमे सति सर्वे मृगादयो जीवाः पलायांचक्रिरे इत्यर्थः । पुनः कथंभूतम् । उत्प्रेक्ष्यते—वनदेवताविनिवेदिततदागमनमिव वनदेवताभिर्विनिवेदितं कथितं तदागमनं यत्र कान्तारे तद्वनदेवताविनिवेदिततदागमनम्। कान्तारप्रवेशानन्तरं किं कृतवानित्याह—तां मदीयां मातरं मन्मातृचरीमजामारूढं वस्त्रनाथं (?) निर्बिभेद विदारितवान्। केवलं मदीयां मातरं च छगलीं च निर्बिभेद । कथंभूतः सन् निर्बिभेद । अनासादितहिंसः अप्राप्तहिंसाकर्मकः। अलब्धमृगादिक इत्यर्थः । कस्मादनासादितहिंसः । स्थलबिलजलान्तरालविहारिणां स्थलविहारिणः, बिलविहारिणः, जलविहारिणो मत्स्यादयः, अन्तरालविहारिणः पारापतलावचटकादयः, स्थलबिलजलान्तरालविहारिणस्तेषां तथोक्तानां प्राणिनां जीवानां अद्यापि वर्तमानकालेऽपि चित्रगुप्तेन यमकायस्थेन अ रिमृष्टमानत्वात् गतायुष्कतारहितत्वात् । अलब्धहिंस इत्यर्थः । चित्रगुप्तादयोऽमी यमस्य आक्षपटलिकाः । यशोमतिकुमारः किं कुर्वन् । कोपारुणान्तरैः क्रोधेन रक्तमध्यैः अपाङ्गप्रसरैर्लोचनप्रान्तविस्तरैः कटाक्षरक्ततेजोभिः स्वामर्षदेवतायाः निजक्रोधदेवतायाः शोणितोपहारं रुधिरपूजां विकिरन्निव विक्षिपन्निव । किं कुर्वाणः । तस्य पूर्वोक्तस्य यूथस्य छगलसमूहस्य मध्येन कृत्वा अन्तरेण विधाय प्रत्यावर्तमानः पश्चाद्व्याघुटन् । कथंभूतस्य यूथस्य । छगलाविकैलकसनाथस्य छगल्यश्च छगलाः, अविनां मेषाणां समूह आविकम्, ऐलकानां गारडकानां बृहच्छागानां समूहमैलकं छगलाविकैलकानि तैः

मार्गोल्लेखेन कपोलस्थलीचुम्बनोन्मुखपुङ्खेनायोमुखेन शरव्यीकृतबस्तवृन्दारकस्तां मदीयां मातरं च निर्बिभेद । तावता चापर्याप्तपरितोषः स्वयमेव तदुदरमवदारयत् । ददर्श च मामनलावलग्नशकलिनमिव विवर्तमानवपुषम् । आयुषः शेषत्वादविहितप्रमीतभावमवाप्तसमस्तसूपशास्त्राधिगमपाटवाय पौरोगवाय पोषणार्थमर्पयत् । तदन्वहं गेह एव पोष्यमाणतनूनां छागलधेनूनां शून्यस्तनावलेहलालोपदिग्धदेहस्तस्मिन्नेव रसवतीगृहे सकलरसप्रसाधनविधिव्यतिकराधिकविवेकेषु पाचकलोकेषु पिशितपाकोपदेशदानदुर्ललितहृदयामात्मदुष्कर्मो-

---

सनाथः सहितस्तस्य तथोक्तस्य । पुनः कथंभूतः । अयोमुखेन शरव्यीकृतबस्तवृन्दारकः ·· ·································· । कथंभूतेन अयोमुखेन । तिर्यग्गतिमार्गोल्लेखेन ··································स तथा तेन । पुनः कथंभूतेन । कपोलस्थलीचुम्बनोन्मुखपुङ्खेन प्रशस्ता कपोलस्थली तस्याश्चुम्बनं मुखस्पर्शनं तस्मिन् उन्मुखः संमुखीभूतः पुङ्खः पत्राग्रं यस्य स तथा तेन । स यशोमतिस्तावता छगलछगलीद्विखण्डीकरणेन निर्भेदनेन अपर्याप्तपरितोषः परिपूर्णसंतोषकरणार्थं स्वयमेव तदुदरं अजाकुक्षिं अवदारयत् विदारयामास । न केवलमवदारयत्, विवर्तमानवपुषं कम्पमानशरीरं मां यशोधरमजं ददर्श च दृष्टवांश्च । कथंभूतं माम् । अनलावलग्नशकलिनमिव अङ्गारपुञ्जोपरिधृतमांसमिव । न केवलं मां ददर्श, पौरोगवाय अजपालाय पोषणार्थं प्रतिपालनार्थं अर्पयच्च दत्तवांश्च । उक्ता च पौरोगवस्य व्युत्पत्तिः—पुरोऽग्रे गोमांसं जलं वा यस्याः सा पुरागुस्तस्या अयं पौरोगवः । सूपकार इत्यर्थः । कथंभूताय पौरोगवाय । अवाप्तसमस्तसूपशास्त्राधिगमपाटवाय अवाप्तं प्राप्तं समस्तसूपशास्त्रस्य सर्वपाकसिद्धान्तस्य अधिगमपाटवं परिज्ञानपटुत्वं येन स तथोक्तस्तस्मै । कथंभूतं माम् । अविहितप्रमीतभावं अविरचितमृत्युम् । मां न मारितवानित्यर्थः । कस्मान्न मारितवान् । आयुषः शेषत्वात् कियत् कालं आयुरद्यापि वर्तते यस्मात् । तदनु तत्पश्चात् पौरोगवसमर्पणादनन्तरमहं यशोधरच्छागो गेह एव राजमन्दिरे एव तस्मिन्नेव रसवतीगृहे महानसमन्दिरे कतिचित्त्रिंशद्रात्रान् कतिचिन्मासान् अतिवाहयामास निर्गमितवान् । कथंभूतोऽहम् । पोष्यमाणतनूनां वर्धमानशरीरिकाणां छागलधेनूनां छगलीनां शून्यस्तनावलेहलालोपदिग्धदेहः शून्यस्तनावलेहेन दुग्धरहितस्तनास्वादनेन लालया सृणिकया सिंहिन्या उपदिग्धो लिप्तो देहो येन स तथोक्तः । किं कुर्वन् कतिचिन्मासान् अतिक्रान्तवान् । इति ईदृशं विचिन्तयन् । किं कृत्वा पूर्वं विचिन्तयन् । अमृतमतिमहादेवीं कथमपि केनचित्प्रकारेणापि विदित्वा ज्ञात्वा । कथंभूताममृतमतिम् । पाचकलोकेषु रसायनपाचकसमूहेषु मध्ये पिशितपाकोपदेशदानदुर्ललितहृदयां पिशितस्य मांसस्य पाकस्तस्योपदेशदाने शिक्षादाने दुर्ललितमासक्तं हृदयं यस्याः सा तथोक्ता ताम् । कथंभूतेषु



दयात्तत्रैव भवे संपन्नसितश्वित्रगात्रीमनवरतदरद्देहद्रवास्वादासीदन्मन्दमक्षिकाक्षेपक्षोभपात्रीमतिपूतिपूयपिहितनासिकसविधसंचरत्परिवारां स्वकीयेन दारिकाजनेन 'इयं खलु हले, पापकर्मा सकलदुराचारागारा **अमृतमतिमहादेवी** तं निखिलभुवनमाननीयमनङ्गावतारं **यशोधरमहाराजं** गरलप्रयोगाद्दृष्टान्तकीर्तिं विधाय तत्फलेन संप्रति संजाता सकलकुष्ठाधिष्ठानम्' इति द्वन्द्वमितस्ततो मन्त्रयमाणेन राजपरिजनलञ्जिकासमाजेन च कृतधिक्कारपरम्परां कथमपि विदित्वा, कथं नाम

अलिकुलमिदं लूतातन्तुप्रतानविधूसरं
मनसिजधनुर्जातं जीर्यत्तनुस्थिति पिञ्जनम् ।

---

पाचकलोकेषु । सकलरसप्रसाधनविधिव्यतिकराधिकविवेकेषु सकलाश्च ते रसा मधुराम्लकटुतिक्तकषायलवणलक्षणा आस्वादास्तेषां प्रसाधनविधिस्तस्य व्यतिकरे प्रघट्टके अधिकोऽतिरिक्तो विवेकश्चातुर्यं येषां पाचकलोकानां ते तथोक्तास्तेषु । पुनः कथंभूताममृतमतिम् । आत्मदुष्कर्मोदयात्तत्रैव भवे संपन्नसितश्वित्रगात्रीं आत्मनः पापकर्मोदयात्तत्रैव भवे संपन्नं सितं श्वेतं श्वित्रं कुष्ठं गात्रे शरीरे यस्याः सा तथा ताम् । पुनः कथंभूताम् । अनवरतदरद्देहद्रवास्वादासीदन्मन्दमक्षिकाक्षेपक्षोभपात्रीम् अनवरतं दरन् विदार्यमाणो योऽसौ देहस्तस्य द्रवः पूयादिकं तस्य आस्वादाय आसीदन्त्य आगच्छन्त्यो मन्दाः प्रचुरा या मक्षिकास्तासां क्षेपे क्षोदे योऽसौ क्षोभः गात्रमोटनं तस्य पात्री भाजनं तां तथोक्ताम् । पुनः कथंभूताम् । अतिपूतिपूयपिहितनासिकसविधसंचरत्परिवारां अतिशयेन पूतिर्दुर्गन्धं यत् पूयं नष्टरुधिरं तेन पिहिता नासिका येन सोऽतिपूतिपिहितनासिक ईदृग्विधः सविधे समीपे संचरन् प्रविशन् परिवारो यस्याः सा ताम् । पुनः कथंभूताम् । राजपरिजनलञ्जिकासमाजेन नृपपरिवारदासीसमूहेन च चकारात् अन्येन च लोकेन इत्यमुना प्रकारेण कृतधिक्कारपरम्परां विहिततिरस्कारश्रेणिम् । कथंभूतेन राजपरिजनलञ्जिकासमाजेन । इतस्ततो यत्र तत्र द्वन्द्वं स्त्रीपुरुषयुग्मं मन्त्रयमाणेन आहूयता । इतीति किम् । हले सखि । खल्विति वाक्यालंकारे । इयमेषा अमृतमतिमहादेवी संप्रति सकलकुष्ठाधिष्ठानं अष्टादशकुष्ठकोष्ठागारं संजाता संबभूव । केन । तत्फलेन पापफलेन । कथंभूतेयम् । पापकर्मा पापिष्ठा । पुनः कथंभूता । सकलदुराचारागारा सर्वदुर्विलसितमन्दिरप्राया । किं कृत्वा पूर्वं कुष्ठाधिष्ठानं जाता । तं यशोधरमहाराजं गरलप्रयोगात् दृष्टान्तकीर्तिं विधाय मृतं कृत्वा । कथंभूतं तम् । निखिलभुवनमाननीयं सर्वजगद्वन्दनीयम् । पुनः कथभूतम् । अनङ्गावतारं कामस्वरूपम् । न केवलं राजपरिजनलञ्जिकासमूहेन कृतधिक्कारपरम्परां च । अन्यत् स्वकीयेन दारिकाजनेन च अमृतमतिमहादेवीदासीसमूहेन च । इति विचिन्तयन् कतिचित्त्रिंशद्रात्रानतिवाहयामास इत्यत्र इतीति किम् । कथं केन प्रकारेण । नामेति संभावनायाम् ।

**अलिकुलमिति** । इदमेतत् अलिकुलं केशकलापः लूतातन्तुप्रतानविधूसरम् । कथम-

कुवलयवनं धत्ते दैन्यं दवाग्निसमाश्रयं
घुणदरभरभ्रस्यत्स्तम्भप्रभावमभूद्वपुः ॥

अथवा न चैतदाश्चर्यम्। यतः।

स्वामिद्रोहः, स्त्रीवधो, बालहिंसा, विश्वस्तानां घातनं, लिङ्गभेदः, ।
प्रायेणैतत्पञ्चकं पातकानां कुर्यात्सद्यः प्राणिनः प्राप्तदुःखान् ॥

इति विचिन्तयन्कतिचित्त्रिंशद्रात्रानतिवाहयामास।

इतश्च कलिङ्गविषयेषु महति महिषीसमुदये अहो स्वकीययशःकुसुमसौरभोन्मादितबुधमधुपसमाज महाराज,

रक्तप्रान्तविलोललोचनयुगः प्रोथप्रतिष्ठाननः
प्रोत्कूणाग्रविषाणभीषणवपुर्नीलाञ्जनाद्रिप्रभः ।

---

भूदिति संबन्धः। लूतानां ऊर्णलतानां मर्कटीनां ये तन्तवो लालासूत्राणि तेषां प्रतानः समूहस्तद्वद्विधूसरं विरूपकमीषत्पाण्डुरम्। कथं जातमित्यर्थः। मनसिजधनुर्भ्रूयुगलं पिञ्जनं कर्पासविकारविखण्डनं कथं जातमभूत्। कथंभूतं पिञ्जनम्। जीर्यत्तनुस्थिति जीर्यन्ती शतखण्डीभवन्ती तनोः कायस्य स्थितिः स्वरूपं यस्य तत्तथोक्तम्। इदं कुवलयवनं नेत्रयुगलं दैन्यं दीनत्वं शोभारहितत्वं धत्ते धरति। कथंभूतं दैन्यम्। दवाग्निसमाश्रयं दावानलदग्धमिव। दृश्यत इत्यर्थः। इदमेतद्वपुः शरीरं कथमभूत्। घुणदरभरभ्रस्यत्स्तम्भप्रभावं घुणाः कीटकास्तेषां दराश्छिद्राणि तेषां भरः समूहस्तेन भ्रस्यन् अधः पतन् योऽसौ स्तम्भः स्थूणास्तस्येव प्रभावः शोभा यस्य वपुषस्तथोक्तम्।

अथवा युक्तोऽयमर्थः। एतदाश्चर्यं न भवति। कुतः कारणात्। यतः।

**स्वामीति**। एतदिदं पातकानां पञ्चकं प्राणिनो जीवान् सद्यस्तत्कालं तस्मिन्नेव भवे प्राप्तदुःखान् लब्धानेतान् कुर्यात् विदध्यात्। एतत् किम्। यतः स्वामिद्रोहो राजहत्या, स्त्रीवधः, बालहिंसा, विश्वस्तानां घातनं दत्ताभयदानानां हननम्, लिङ्गभेदः शेफश्छेदनम्। कथम्। प्रायेण बहुलतया इति क्रियाकारकसंबन्धः॥

अहो स्वकीययशःकुसुमसौरभोन्मादितबुधमधुपसमाज अहो मारदत्त महाराज, स्वकीययशांस्येव कुसुमानि तेषां सौरभेण सौगन्ध्येन उन्मादित उन्मत्तीकृतो हर्षं प्रापितो बुधमधुपानां विद्वज्जनभ्रमराणां समाजः समूहो येन स तथोक्तस्तस्य संबोधनं क्रियते हे तथोक्त हे महाराजाधिराज। इतश्च एतस्मिन् प्रस्तावे कलिङ्गविषयेषु दन्तपुरोपलक्षितकोटिशिलादेशेषु केचिदाहुः। महति महिषीसमुदये गर्वरीणां यूथमध्ये।

**रक्तेति**। सा छागी चन्द्रमतिचरी अजा क्षुरप्रवाणेन खण्डिता सती मृत्वा पुनः पुनरपि कासरो महिषः अभूद्बभूव। कथंभूतः कासरः। रक्तप्रान्तविलोललोचनयुगः रक्तप्रान्तं लोहितपर्यन्तं विलोलं चपलं लोचनयुगं यस्य स तथोक्तः। पुनः कथंभूतः।



उत्कर्णः पृथुकन्धरो गुरुखुरः स्थूलत्रिकोरःस्थलः
सा मृत्वा कमनीयवालधिरभूच्छागी पुनः कासरः ॥

पुनरसावशेषमहिषपरिषदतिशायशरीरसंनिवेशः सार्थपार्थिवस्वीकारवशात्

सुखदुःखानुभवार्थं निजकर्मगलग्रहात्सुदूरोऽपि ।
जालावलग्नतिमिवज्जन्तुर्यमसमयमायाति ॥
यत्र सुखं वा दुःखं लिखितं निटिले यथास्य दैवेन ।
तत्रायाति प्राणी पाशाकृष्टः पतत्रीव ॥

---

प्रोथप्रतिष्ठाननः प्रोथप्रतिष्ठं नासिकासमीपं आननं यस्य स तथा। पुनः कथंभूतः। प्रोत्कूणाग्रविषाणभीषणवपुः प्रोत्कूणाग्रे विषाणे शृङ्गे ताभ्यां भीषणं भयानकं वपुः शरीरं यस्य स तथा। पुनः कथंभूतः। नीलाञ्जनाद्रिप्रभः नीलाद्रिर्नीलपर्वतः, अञ्जनाद्रिरस्ताचलः, तद्वत् प्रभा कान्तिर्यस्य स तथोक्तः। कृष्णवर्ण इत्यर्थः। पुनः कथंभूतः। उत्कर्ण ऊर्ध्वश्रवाः। पुनः कथंभूतः। पृथुकन्धरो विस्तीर्णग्रीवः। पुनः कथंभूतः। गुरुखुरः अलघुशफः। पुनः कथंभूतः। स्थूलत्रिकोरःस्थलः त्रिकं च पृष्ठवंशाधरप्रवेशः, उरःस्थलं च अग्रतोभागः, स्थूले मांसले त्रिकोरःस्थले यस्य स तथा। पुनः कथंभूतः। कमनीयवालधिः कमनीयो वालधिः पुच्छो यस्य स तथा। जात्युपमालंकारः॥

पुनः पुनरपि असौ कासरः पूर्वोक्तचन्द्रमतिचरीमहिषः सार्थपार्थिवस्वीकारवशात् सार्थपार्थिवः सार्थाधीशो नायकस्तस्य स्वीकारवशात् क्रयणाधीनत्वात्। केनचिद्विक्रीतः सार्थपार्थिवेन क्रीत इत्यर्थः। तद्वशात्। तां एकानसीमुज्जयिनीं पुरीं अनुप्राप्य गत्वा तस्यामेव यस्यां नद्यां शिशुमारः पूर्वमभूत्तस्यामेवापगायां कथाशेषतामवाप.................. कथंभूतः कासरः। अशेषमहिषपरिषदतिशायशरीरसंनिवेशः........................ ......। इति ईदृशं सुभाषितद्वयं सत्यतां नयन्निव सत्यार्थतां प्रापयन्निव। इतीति किम्।

**सुखदुःखेत्यादि**। जन्तुर्जीवो यमसमयं मृत्युशासनं आयाति आगच्छति। किमर्थम्। सुखदुःखानुभवार्थं सुखं वा दुःखं वा तयोरनुभवार्थं भोगार्थम्। कथंभूतो जन्तुः। सुदूरोऽपि अतिविप्रकृष्टोऽपि। कस्माद्यमशासनमायाति। निजकर्मगलग्रहात् निजकर्मणा गले स्वीकारात्। जन्तुः किंवत्। यथा जालावलग्नः आनाये पतितः तिमिर्मत्स्यो यमसमयं आयाति। उपमैव॥

**यत्रेत्यादि**। प्राणी जीवस्तत्र तस्मिन् स्थाने आयात्यागच्छति। तत्र कुत्र। यत्र यस्मिन् स्थाने सुखं वा दुःखं वा अस्य प्राणिनो निटिले ललाटे दैवेन विधात्रा यथा येन प्रकारेण लिखितं लिपिविषयीकृतम्। प्राणी क इव। पाशाकृष्टः पाशेनातानितः पतत्रीव पक्षीव। उपमालंकारः॥

इति सत्यतां नयन्निव तां विलासिनीविलासहंसावतारसरसी**मेकानसी**-
मनुप्राप्य तस्यामेवोभयतीरावतीर्णतमालतरुपतितप्रसूनपरागपरवशवेगाया-
मापगायां प्रतिपन्नपयोवगाहविहरणः, अहिनकुलवज्जातिजनितामर्षोत्कर्षा-
न्धान्तःकरणः, **यशोमति**महाराजवाजिसंजनितदौर्जन्यप्रकरणः, तन्नृपति-
निर्दिष्टनैकटिकानीककरकीलितचतुश्चरणः, प्रस्फोटनस्फारमारुतस्फुरत्ख-
दिराङ्गारनिकरपूरितकरणः, समन्तादभीक्ष्णाशुशुक्षणिक्षतक्षिप्यमाणक्षारवा-
रिवर्षणः, कर्णकटुघोराररवरसनशल्यितपुरदेवताधिषणः, त्र्यूषणकषायोल्बणा-

---

कथंभूतामेकानसीम् । विलासिनीविलासहंसावतारसरसीं विलासिनीनां विलासहंसा भोग-
हंसास्तेषामवताराय अवतरणाय सरसीं महासरोवरसदृशीम् । कथंभूतायां आपगायाम् ।
उभयतीरावतीर्णतमालतरुपतितप्रसूनपरागपरवशवेगायां उभयतीरयोरर्वाक्तटे च अवती-
र्णा उत्तीर्णाः । स्थिता इत्यर्थः । ये तमालतरवः कालस्कन्धवृक्षास्तेभ्यः पतितः क्षरितो यः
प्रसूनपरागः पुष्परजस्तस्य परवशः पराधीनो वेगो रयो यस्याः सा तथोक्ता तस्यां तथो-
क्तायाम् । कथंभूतः कासारः । प्रतिपन्नपयोवगाहस्य जलविलोडनस्य विहरणं पर्यटनं येन
स तथोक्तः । पुनः कथंभूतः । अहिनकुलवत् सर्पबभ्रुवत् जातिजनितामर्षोत्कर्षा-
न्धान्तःकरणः जातिस्वभावेन जनित उत्पादितो योऽसावमर्षोत्कर्षः क्रोधोत्कृष्टता तेन
अन्धं अपश्यत् अन्तःकरणं मनो यस्य स तथोक्तः । पुनः कथंभूतः । यशोमतिमहाराज-
वाजिसंजनितदौर्जन्यप्रकरणः यशोमतिमहाराजस्य वाजिनः पट्टवाहस्य संजनितं सम्यगु-
त्पादितं दौर्जन्यप्रकरणं मृत्युप्रस्तावो येन स तथोक्तः । पुनः कथंभूतः । तन्नृपतिनिर्दिष्टनै-
कटिकानीककरकीलितचतुश्चरणः तन्नृपतिना यशोमतिमहाराजेन निर्दिष्ट आदिष्टो यो-
ऽसौ नैकटिकानीकः किंकरसमूहस्तस्य करैः कीलिताः कीलकशृङ्खलादिना निश्चलीकृता-
श्चतुश्चरणाः पादा यस्य स तथोक्तः । पुनः कथंभूतः । प्रस्फोटनस्फारमारुतस्फुरत्खदिरा-
ङ्गारनिकरपूरितकरणः प्रस्फोटनानां सूर्याणां ये स्फारमारुताः प्रचुरवायवस्तैः स्फुरन्तो
जाज्वल्यमाना ये खदिराङ्गारा वालपत्रकाष्ठाग्निखण्डानि तेषां निकरैः पूरितानि आच्छा-
दितानि करणानि शरीरावयवा यस्य स तथोक्तः । पुनः कथंभूतः । समन्तादभीक्ष्णाशुशु-
क्षणिक्षतक्षिप्यमाणक्षारवारिवर्षणः समन्तात् सर्वतः अभीक्ष्णं निरन्तरं आशुशुक्षणेरग्नेः
क्षतेषु स्फुटितप्रहारेषु क्षिप्यमाणं प्रेर्यमाणं क्षारवारिवर्षणं लवणजलवर्षणं यस्मिन् स
तथोक्तः । पुनः कथंभूतः । कर्णकटुघोरारवरसनशल्यितपुरदेवताधिषणः कर्णानां कटवः
स्फोटका घोरा रौद्रा ये आरवाः शब्दास्तेषां रसनेन आरटनेन शल्यिता दुःखीकृता
पुरदेवतानां धिषणा बुद्धिर्येन स तथोक्तः । पुनः कथंभूतः । त्र्यूषणकषायोल्ब-
णालन्दकोदकादानविनिरूढनिखिलगोर्वरगणः त्र्यूषणस्य शुण्ठीमरिचपिप्पलचूर्णस्य कषायः
क्वथितजलं तेनोल्बणमुत्कटं यत् अलन्दकोदकं अलन्दकः मृत्तिकाकुण्डं तत्र धृतं



लन्दकोदकादानविनिरूढनिखिलगोर्वरगणः, नरकदुःखवेदनादप्यसह्यव्यथा-
वेगमातङ्कसङ्गमनुभवन्निरंमददाहदूषितविटपः पादप इव कथाशेषतामवाप,
तथाहमपि तया जाङ्गलभक्षणाक्षिप्तचित्त**यामृतमति**महादेव्याः प्रत्यहधगद्ध-
गितीद्धोद्धानमध्यभटित्रीकृतैकचरणश्चरमाधिकरणां दशामशिश्रियम् ।

पुनरहो धर्मधौरेय, अस्ति खल्विहैव रत्नाकरमेखलिन्यमरलोकोत्तम्भनस्त-
म्भेनेव मेरुणालंकृतनाभिमण्डले **जम्बू**लक्ष्मणि द्वीपे **विजयार्धो** नाम
पर्वतः । यः

---

यदुदकं जलं तस्यादानं तृषाक्रान्तत्वात् गृहणं तेन विनिरूढो निर्गतः पश्चिमद्वारेण
निष्क्रान्तो निखिलो गोर्वरगणो गोमयराशिर्यस्य कासारस्य स तथोक्तः । कासारः
किं कुर्वन् । आतङ्कसङ्गं दुःखसंगतिमनुभवन्भुञ्जानः । कथंभूतमातङ्कसङ्गम् । नरकदुःखवे-
दनादपि निरयासातपीडनादपि असह्यव्यथावेगं असह्योऽसहनीयो व्यथावेगो दुःखवेगो
यस्य आतङ्कसङ्गस्य स तथा तं अनुभवन् । कासरः क इव आतङ्कसङ्गमनुभवन् ।
पादप इव वृक्ष इव । कथंभूतः पादपः । इरंमददाहदूषितविटपः इरंमदो मेघ-
स्तस्य दाहो ज्योतिः । वज्राग्निरित्यर्थः । तस्य दाहेन भस्मीकरणेन दूषितो भस्मीकृतो विटपः
कटप्रुः शाखाटोपो यस्य स तथोक्तः । हे राजन्, तथा तेनैव प्रकारेण अहमपि
यशोधरः चरायोनिसंभवः छागोऽपि चरमाधिकरणां दशां मरणावस्थां अशिश्रियं आ-
श्रितवानहम् । कथंभूतोऽहम् । तया अमृतमतिमहादेव्या प्रत्यहधगद्धगितीद्धोद्धानम-
ध्यभटित्रीकृतैकचरणः प्रत्यहं निरन्तरं धगद्धगिति जाज्वल्यमानं इद्धं दीप्तं यदुद्धानं
अस्मत्तं अधिश्रयणी चुल्ली । अन्तिका इति यावत् । तन्मध्ये भटित्रीकृतः पाचित एकच-
रणः पश्चिमपादः श········सहितोऽङ्घ्रिः यस्य स तथोक्तः । कथंभूतया अमृतमति-
महादेव्या । जाङ्गलभक्षणाक्षिप्तचित्तया जाङ्गलस्य मासस्य भक्षणे आक्षिप्तं आसक्तं चित्तं
मनो यस्याः सा तथा ।

पुनः पुनरपि महिषच्छागभववर्णनादनन्तरं अहो धर्मधौरेय धर्ममहाप्रवर्तक, इहैव
अस्मिन्नेव जम्बूलक्ष्मणि द्वीपे जम्बूवृक्षोपलक्षिते द्वीपे विजयार्धो नाम । खलु वाक्यालंकारे ।
पर्वतोऽस्ति । कथंभूते जम्बूद्वीपे । रत्नाकरमेखलिनि रत्नाकरो लवणसमुद्रो मेखला कटि-
मेखला विद्यते यस्य स तथा तस्मिन् । पुनः कथंभूते जम्बूद्वीपे । मेरुणा सुराचलेन
अलंकृतनाभिमण्डले अलंकृतं शोभितं नाभिमण्डलं पृथुप्रदेशो यस्य स तथा तस्मिन् ।
कथंभूतेन मेरुणा । अमरलोकोत्तम्भनस्तम्भेनेव अमरलोकस्य स्वर्गस्योत्तम्भनं अवष्टम्भं तेन
स्तम्भेनेव । यो विजयार्धावनीध्रः यो विजयार्धपर्वतश्चकास्ति शोभते । कथंभूतो विजयार्धा-
वनीध्रः । नट इव नर्तको यथा चकास्ति । तत्कारणगर्भितानि विशेषणानि आह—

गन्धर्वाखर्वपर्वानकनिनदनदत्कंदराभोगरम्यः
स्वर्गस्त्रीगीतकान्ताटनिरमरतरुश्लाघ्यशाखाक्षिपस्तिः।
गङ्गातुङ्गोत्तरङ्गोच्छलदनणुकणासारहाराभिरामः
प्रोत्तालानर्तनीतिर्नट इव विजयार्धावनीध्रश्चकास्ति ॥

किं च।

पादान्तलक्ष्मीरपरः पयोधिः पूर्वोऽम्बुधिर्यस्य शिरस्यदश्रीः।
शय्यावकाशा च वसुंधरेयं जातामरस्त्रीजनसेवितस्य ॥
उल्लोलकल्लोलकरप्रचारात्पूर्वापरौ स्वप्तुमिव स्थितस्य।
सीमन्तसंवाहनयोरिवाब्धी जातोद्यमौ यस्य गिरेश्चकास्तः ॥

---

**गन्धर्वेति**। गन्धर्वाखर्वपर्वानकनिनदनदत्कंदराभोगरम्यः गन्धर्वाणां देवगायकानां अखर्वा अह्रस्वा ये पर्वानकाः उत्सवपटहास्तेषां निनदा ध्वनयस्तैर्नदन्तः प्रतिशब्दं कुर्वन्तो ये कंदराभोगा गुहानां परिपूर्णविस्तारास्तै रम्यो मनोहरः। यत्र नटो नृत्यति तत्रानकाः शब्दं कुर्वन्ति। पुनः कथंभूतः। स्वर्गस्त्रीगीतकान्ताटनिः स्वर्गस्त्रीणां गीतैः कान्ता मनोहरा अटनिः कटिनीतटं यस्य स तथोक्तः। यत्र नटो नृत्यति तत्र स्त्रियो गायनानि गायन्ति। पुनः कथंभूतः। अमरुतरुश्लाघ्यशाखाक्षिपस्तिः अमरतरुणा श्लाघ्याः प्रशंसनीयाः शाखा लतास्ता एव क्षिपस्तयो भुजा यस्य स तथोक्तः। नटोऽपि भुजाभ्यां नृत्यति। पुनः कथंभूतः। गङ्गातुङ्गोत्तरङ्गोच्छलदनणुकणासारहाराभिरामः गङ्गायाः स्वर्गनद्यास्तुङ्गा उन्नता उत्तरङ्गा उत्कृष्टकल्लोलास्तेभ्य उच्छलन्त आकाशे उत्पतन्तो ये अनणुकणाः स्थूलजलबिन्दवस्तेषामासारः समूहः स एव हारो मुक्ताफलमाला तेनाभिरामो मनोहरः। नटोऽपि हारशोभितो भवति। पुनः कथंभूतः। प्रोत्तालानर्तनीतिः प्रोत्ताला उत्सुका आनर्तस्य भ्रामर्या नीतिर्नयो यस्य स तथोक्तः। नटोऽप्युत्तालनर्तनो भवति। युग्मं श्लेषोपमा ॥

किं च विशेषोऽस्ति।

**पादान्तेत्यादि**। यस्य विजयार्धावनीध्रस्य अपरः पयोधिः पश्चिमसमुद्रः पादान्तलक्ष्मीः पादपङ्क्तिशोभा वर्तते पदिकाविशेषो वर्तते। यस्य च पूर्वोऽम्बुधिः शिरस्यदश्रीः मस्तकोच्छीर्षं वर्तते। यस्य च इयं वसुंधरा शय्यावकाशा शयनीयं जाता। तनुपल्यङ्कस्योपरि स्त्रीजनो विलोकते सोऽस्य को वर्तते इति। तत्कारणगर्भितं विशेषणमाह—कथंभूतस्य यस्य। अमरस्त्रीजनसेवितस्य अमरस्त्रीजनेन सेवितो भुक्तस्तस्य। रूपकहेत्वलंकारः ॥

**उल्लोलेत्यादि**। यस्य विजयार्धस्य गिरेः पर्वतस्य पूर्वापरौ अब्धी समुद्रौ सीमन्तसंवाहनयोः मस्तकसंमार्जने पादमर्दने च जातोद्यमाविव चकास्तः शोभेते। कस्मात्। उल्लोलकल्लोलकरप्रचारात् उल्लोलाश्चपलाः कल्लोला महान्तस्तरङ्गास्त एव करास्तेषां प्रचारः



यत्राम्बुधिः पुष्करवत्स्थिताङ्गे तरङ्गहस्ताहतकंदरास्यः।
शक्रप्रचेतःपुरकामिनीनां नृत्ताय वृत्तः कुतपीव भाति ॥

तत्र विद्याधरसुन्दरीविलासमणिदर्पणदृषदि वारणाङ्कितमेखले सततस्यन्ददुर्दिनदरीसरत्समीरसीकरासारिणि सुरतश्रमखिन्नखचरसहचरीसेव्यमानसंतानकच्छाये सुरानोकहकुहरविहरमाणमधुकरीकुलकलहगलत्प्रसू-

---

व्यापारणं तस्मात्। यस्य कथंभूतस्य। स्वप्तुं स्थितस्येव निद्राकर्तृव्यापृतस्येव। यथासंख्योत्प्रेक्षालंकारः ॥

**यत्रेत्यादि**। यत्र यस्मिन् विजयार्धावनीध्रे अम्बुधिः कुतपीव मार्दङ्गिक इव भाति। यत्र गिरौ कथंभूते। पुष्करवत् मृदङ्गमुखवत् स्थिताङ्गे व्यापृतकाये। अम्बुधिः कथंभूतः। तरङ्गहस्ताहतकंदरास्यः तरङ्गावेव हस्तौ ताभ्यामाहते ताडिते कंदरास्ये गुहामुखे येनाम्बुधिना स तथोक्तः। ननु वादनं नर्तननिमित्तं भवति, तत्किं नर्तनमित्याह। तत्कारणगर्भितमम्बुधेर्विशेषणमाह—अम्बुधिः कथंभूतः। शक्रप्रचेतःपुरकामिनीनां नृत्ताय वृत्तः शक्रश्च पूर्वदिक्पाल इन्द्रः, प्रचेताश्च पश्चिमदिक्पालो वरुणः, तयोः पुरे द्वे नगरे तयोः कामिन्यः तासां तथोक्तानां नृत्ताय नर्तनाय वृत्तो व्यावृत्तः। रूपकोपमालंकारः ॥

तत्र तस्मिन् विजयार्धावनीध्रे मन्मथमथनाभिधानावसरश्चारणमहर्षिः मन्मथमथन इति अभिधानस्य नाम्नः अवसरो योग्यता यस्य स तथा चारणमहर्षिराकाशगामी मुनिः सूर्यप्रतिमागतो बभूव कायोत्सर्गेण स्थितः। किं कृत्वा पूर्वम्। निर्दरैकदेशं निर्भयप्रदेशं अध्यास्य आश्रित्य स्थितः। कथंभूते विजयार्धावनीध्रे। विद्याधरसुन्दरीविलासमणिदर्पणदृषदि विद्याधराणां गगनचराणां याः सुन्दर्यः कमनीयकामिन्यस्तासां विलासो नेत्रविभ्रमस्तस्यावलोकनाय मणिदर्पणसदृशा दृषदः पाषाणशिलातला यस्मिन्स तथोक्तस्तस्मिन्। पुनः कथंभूते। वारणाङ्कितमेखले.................................... । पुनः कथंभूते। सततस्यन्ददुर्दिनदरीसरत्समीरसीकरासारिणि सततस्यन्देन जलस्रवणेन दुर्दिना मेघच्छिन्ना या दर्यो गुहास्तासु सरत्समीरेण प्रवर्तमानवायुना ये सीकरासारा जलकणसमूहास्ते विद्यन्ते यत्र स तथा तस्मिन्। पुनः कथंभूते। सुरतश्रमखिन्नखचरसहचरीसेव्यमानसंतानकच्छाये सुरतश्रमेण मैथुनखेदेन खिन्नाः श्रान्ता ये खचरसहचर्यो विद्याधराणां स्त्रियस्ताभिः सेव्यमाना आश्रियमाणा संतानकच्छाया देववृक्षच्छाया यत्र स तथा तस्मिन्। पुनः कथंभूते। सुरानोकहकुहरविहरमाणमधुकरीकुलकलहगलत्प्रसूनमकरन्दामोदिनि सुरानोकहानां कल्पवृक्षाणां कुहरेषु विहरमाणानि मधुकरीकुलानि तेषां कलहेन युद्धेन गलत्प्रसूनानां पतत्पुष्पाणां यो मकरन्दः पुष्परसस्तस्यामोदः परिमलो विद्यते यत्र स

नमकरन्दामोदिन्यभ्रंलिहशिखरोत्सङ्गसंगतगगनगणिकोपवीणनमनोहरे मयुमिथुनसंगीतकानन्दिनि निर्दरैकदेशमध्यास्य किल चरमदेहधारी भगवान्सरस्वतीसरिज्जलकेलिकुञ्जरो **मन्मथमथना**भिधानावसरश्चारणमहर्षिः

मन्दस्पन्दीभवति हृदये बाह्यचिन्ताविदूर-
व्यापारेऽस्मिन्करणनगरे योगमग्ने च पुंसि ।
यत्रावृत्तिं भजति कुलिशं वज्रिणापि प्रयुक्तं
पुष्पास्त्राणां कुसुमधनुषस्तत्र का नाम वृत्तिः ॥

इति विचिन्त्य निष्पन्नयोगिलोकोदाहरणतपश्चर्यः सूर्यप्रतिमागतो बभूव ।

---

तथा तस्मिन् । पुनः कथंभूते । अभ्रंलिहशिखरोत्सङ्गसंगतगगनगणिकोपवीणनमनोहरे अभ्रंलिहानि उन्नतानि यानि शिखराणि तेषामुत्सङ्गेषु उपरितनभागेषु अङ्केषु संगता मिलिता या गगनगणिकाः गगनाङ्गना विद्याधराणां संबन्धित्वेन या गणिका वेश्यास्तासामुपवीणनेन वीणावादनेन मनोहरो मनोज्ञः स तथा तस्मिन् । पुनः कथंभूते । मयुमिथुनसंगीतकानन्दिनि मयुमिथुनानां किंनरयुगलानां यत्संगीतकं नृत्यवादित्रत्रयं तेन आनन्दो हर्षो विद्यते यत्र स तथा तस्मिन् । कथंभूतो मन्मथमथनचारणर्षिः । किल निश्चयेन चरमदेहधारी इव मुक्तिगामी भगवान् इन्द्रादीनामाराध्यः । पुनः कथंभूतः । सरस्वतीसरिज्जलकेलिकुञ्जरः सरस्वती द्वादशाङ्गशास्त्रं सैव सरित् पापमलप्रक्षालनत्वात् तस्या जलं शब्दलक्षणं वारि तस्य या केलिरनुभवनक्रीडा तस्याः कुञ्जरो गजेन्द्रः स तथोक्तः । किं कृत्वा पूर्वम् । इतीदृशं विचिन्त्य पर्यालोच्य । इतीति किम् ।

**मन्दस्पदीत्यादि** ।यत्र यस्मिन् सूर्यप्रतिमागमने वज्रिणापीन्द्रेणापि प्रयुक्तं प्रेरितं कुलिशं वज्रं आवृत्तिं अभिवृत्तिं न भजति न प्रवर्तते तत्र तस्मिन् प्रतिमागमने कुसुमधनुषः कंदर्पपुष्पास्त्राणाम् । नामेति संभावनायाम्। का वृत्तिः का प्रवृत्तिर्भवति । अपि तु न कापीत्यर्थः । कंदर्पबाणा न प्रवर्तन्त इत्यर्थः । कस्मिन् सति । हृदये मनसि मन्दस्पन्दीभवति सति न किंचिदपि चलति सति । स्थिरीभूते सतीत्यर्थः । पुनश्च कस्मिन् सति कामबाणा न प्रवर्तन्ते । अस्मिन् करणनगरे इन्द्रियलक्षणपत्तने बाह्यचिन्ताविदूरव्यापारे सति बाह्यस्पर्शरहिते सति गन्धवर्णलक्षणाः पञ्च विषयास्तेषां चिन्ताया अभिलाषस्य विदूरो विप्रकृष्टो व्यापारः प्रवृत्तिर्यस्य करणनगरस्य तत्तथा तस्मिन् । पुनश्च कस्मिन् सति । पुंसि आत्मनि च योगमग्ने धर्मशुक्लध्यानद्वये एकलोलीभावं संजाते सति । आक्षेपालंकारोऽतिशयालंकारश्च । मन्दाक्रान्ता छन्दः ॥

कथंभूतो मन्मथमथनः । निष्पन्नयोगिलोकोदाहरणतपश्चर्यः निष्पन्ना समभ्यस्तध्यानद्वया योगिलोका ध्यानिनां समूहास्तेषामुदाहरणं दृष्टान्तवचनं तपश्चर्या तपश्चरणं यस्य स तथोक्तः ॥



तस्यैवं स्थितस्य महर्षेरलोकाकाशवत्स्वभावादेव सकलैरपि जन्तुभिरनुल्लङ्घनीयमाहात्म्यस्य हिमवन्महीधरस्य स्कन्धाधानानि काननानि विलोकितुमुच्चलितः **कन्दलविलासो** नाम विद्याधरः **कंदर्पदर्पणायाः** प्रियतमायाः समक्षं **मदनविनोदं** नाम विमानं स्खलितगमनमवेक्ष्य जातवैलक्ष्यस्तत्साधुसमाधिविध्वंसनधिया बहुरूपिणीं विद्यामनुध्याय विधाय च तडिद्दण्डसंघट्टस्फुटद्ब्रह्माण्डखण्डैरिव घोरघोषप्रचण्डैः, प्रलयकालप्रसूतिदिवसैरिव जनितसमस्तसत्त्वसाध्वसैः, क्षयक्षपान्धकारैरिव भीषणाकारैः, उत्क्षिप्तकृतान्तदृष्टिपातैरिवोल्काजालकरालद्योतैः, यमायुधविद्धैरिव मुशल-

---

तस्य महर्षेर्मन्मथमथनस्य एवममुना प्रकारेण सूर्यप्रतिमागमने प्रतिमागतप्रकारेण स्थितस्य कन्दलविलासो नाम विद्याधरः । कन्दलं युद्धं विलासो विस्तारो यस्य स कन्दलविलास इति व्युत्पत्तिः । महति मानयुक्तो विद्याधरो वियच्चरः चण्डकर्म आचरन् उपसर्गं कुर्वन् रत्नशिखण्डिनाम्ना विद्याधरचक्रवर्तिना व्यलोकि दृष्टः । कथंभूतस्य मन्मथमथनस्य महर्षेः । स्वभावादेव सकलैरपि जन्तुभिः अनुल्लङ्घनीयमाहात्म्यस्य अनुल्लङ्घ्यः महिमा यस्य तस्य । किंवत् । अलोकाकाशवत् यथा अलोकाकाशस्य माहात्म्यं सकलैरपि जन्तुभिरनुल्लङ्घनीयं भवति । कन्दलविलासो नाम विद्याधरः कथंभूतः । हिमवन्महीधरस्य क्षुद्रहिमवत्पर्वतस्य षट्कुलपर्वतानां मध्ये प्रथमकुलपर्वतस्य स्कन्धाधानानि उपरिस्थितानि काननानि विलोकितुं उच्चलितो विमानोत्पतितः । कथं चण्डकर्म आचरन् कथमुपसर्गं कुर्वन् । कंदर्पदर्पणानाम्न्याः प्रियतमायाः समक्षं प्रत्यक्षं यथा भवत्येवं चण्डकर्माचरन् । किं कृत्वा पूर्वम् । मदनविनोदं नाम विमानं व्योमयानं स्खलितगमनं अवेक्ष्य दृष्ट्वा । कथंभूतः कन्दलविलासः । जातवैलक्ष्यः समुत्पन्ननिष्प्रतिपत्तिकः । किं कृत्वा पूर्वम् । तत्साधुसमाधिविध्वंसनधिया मन्मथमथनमुनिध्यानविघ्नकरणबुद्ध्या बहुरूपिणीं विद्यां अनुध्याय चिन्तयित्वा । पुनश्च किं कृत्वा पूर्वम् । घनाघनैर्मेघैरावृतमाच्छादितं गगनं विधाय च कृत्वा । कथंभूतैर्घनाघनैः । घोरघोषप्रचण्डैः भयानकशब्दबलवत्तरैः । कैरिव । तडिद्दण्डसंघट्टस्फुटद्ब्रह्माण्डखण्डैरिव तडिद्दण्डानां संघट्टेन भटभेटकेन स्फुटन्ति शतखण्डीभवन्ति ब्रह्माण्डखण्डानि त्रैलोक्यशकलानि येषु घोरघोषप्रचण्डेषु ते तथोक्तैः । पुनः कथंभूतैः । जनितसमस्तसत्त्वसाध्वसैः उत्पादितसर्वजीवभीतिभिः । कैरिव । प्रलयकालप्रसूतिदिवसैरिव संहारसमयोत्पत्तिदिनैरिव । पुनः कथंभूतैः । भीषणाकारैः भयानकमूर्तिभिः । कैरिव । क्षयक्षपान्धकारैरिव । पुनः कथंभूतैः । उल्काजालकरालद्योतैः उल्काजालानां तारापतनसमूहानां करालोऽतिरौद्रो द्योतो येषां ते तथा तैः । कैरिव । उत्क्षिप्तकृतान्तदृष्टिपातैरिव उत्क्षिप्ता उत्पतिताः कृतान्तस्य दृष्टिपाताश्चक्षुरवलोकितानि ते तथा तैरिव । पुनः कथंभूतैः । मुशलप्रमाणवारिधारावर्षिभिः मुशलप्रमाणा

प्रमाणवारिधारावर्षिभिः, स्फुटितामरलोकशैलशिखरैरिवापतत्पृथीयपाषाणैः, असितशिलाधिष्ठानबन्धैरिव ज्योतिर्वसतीनाम्, असमयतमिस्रासमागमैरिव भुवनवलयस्य, अकाण्डकपाटघटनैरिव दक्षकन्यानाम्, अनवसरसंहारवासरैरिव नेत्रवृत्तानाम्, अकालकालायसचूर्णोपहारैरिव क्षितेः, घनाघनैरावृतं गगनमाभरणभुजंगमाभीलैर्वेतालैराकम्पिताखिलभूगोलैर्बलालैश्च दुर्दशा दिशः प्रसाध्य स्वयं च समाचरितमातङ्गवेषश्चण्डकर्माचरन्नेनं योगिनमुपासितुमागतेन रत्नशिखण्डिनाम्ना विद्याधरचक्रवर्तिना व्यलोकि चुकुपे च।

पुनः 'अरे कदाचाराचार पराकदुरात्मन् खलपुरोभागिन् विद्याधराधम

---

अतिस्थूला वारिधारा जलच्छटाः वर्षन्तीत्येवंशीलास्ते तथा तैः। कैरिव। उत्प्रेक्ष्यते—यमायुधविद्धैरिव यमदण्डेन कृतच्छिद्रैरिव। पुनः कथंभूतैः। आपतत्पृथीयपाषाणैः आपतन्तः आगच्छन्तः पृथीयसो विस्तीर्णाः पाषाणा येभ्यस्ते तथा तैः। कैरिव। उत्प्रेक्ष्यते—स्फुटितामरलोकशैलशिखरैरिव स्फुटिता भेदं प्राप्ता ये अमरलोकशैलाः स्वर्गपर्वतास्तेषां शिखरैरिव कूटैरिव। पुनः कथंभूतैः। ज्योतिर्वसतीनां चन्द्रसूर्यग्रहनक्षत्रताराग्रहाणां असितशिलाधिष्ठानबन्धैरिव असिता कृष्णवर्णा याः शिलास्तासामधिष्ठानबन्धैरिव गर्भापूरसमूहैरिव। पुनः कथंभूतैः। भुवनवलयस्य पृथ्वीमण्डलस्य असमयतमिस्रासमागमैरिव अकालकालरात्रिसमागमैरिव। पुनः कथंभूतैः। दक्षकन्यानां तारकानां अकाण्डकपाटघटनैरिव अकालकवाटरचनैरिव। पुनः कथंभूतैः। नेत्रवृत्तानां लोचनव्यापाराणां अनवसरसंहारवासरैरिव अकाण्डप्रलयकालदिवसैरिव। पुनः कथंभूतैः। क्षितेः पृथिव्याः अकालकालायसचूर्णोपहारैरिव अकालेऽप्रस्तावे कालायसस्य लोहस्य चूर्णोपहारैरिव क्षोदप्रकारैरिव। पुनश्च किं कृत्वा चण्डकर्म समाचरन्। दिशो हरितो दुर्दशा दुरवस्थाः प्रसाध्य कृत्वा। कैः कृत्वा दिशो दुर्दशाः प्रसाध्य। वेतालैः कृत्वा। कथंभूतैर्वेतालैः। आभरणभुजंगमाभीलैः आभरणस्य संबन्धिनो ये भुजंगमाः सर्पास्तैराभीलैर्भीषणैः। पुनश्च किं कृत्वा दिशो दुर्दशाः प्रसाध्य। बलालैः प्रचण्डवातैः। कथंभूतैर्बलालैः। आकम्पिताखिलभूगोलैः आकम्पितश्चालितोऽखिलः समग्रो भूगोलो पृथ्विमण्डलं यैस्ते तथा तैः। पुनः कथंभूतः कन्दलविलासो विद्याधरः। स्वयं चात्मना समाचरितमातङ्गवेषः सम्यगाचरितो गृहीतः मातङ्गस्य चाण्डालस्य वेष आकल्पो येन स तथोक्तः। कथंभूतेन विद्याधरचक्रवर्तिना रत्नशिखण्डिनाम्ना। एनं मन्मथमथननामानं योगिनं ध्यानिनं उपासितुमागतेन सेवितुमुपढौकितेन। न केवलं कन्दलविलासो विद्याधरश्चण्डकर्म समाचरन् व्यलोकि दृष्टः। किं तु चुकुपे च तस्योपरि कोपश्चक्रे च।

नभश्चरचक्रवर्ती इति वदन् तस्य कन्दलविलासस्य समस्ता अपि समग्रा अपि विद्या-



खेचरखेट विहायोगमयाप्य वियच्चरखेल हेठ नरकनिवास पापाचार बहुकुमतिभृतचित्त गुणमटह निहीन गन्धर्वलोकापसद मातरिपुरुष सकलसत्त्वानन्दनीयतपसि त्रिभुवनमान्ययशसि भगवति परंब्रह्मासनमुपगतवति किमेवमाचरितुमुचितम्। न चेह महामुनिसंनिधाने शास्त्राणामिवास्त्राणां व्यापारस्यावसरः। तदन्यथापि ते व्यपनयामि समुन्नद्धभावम्' इति वदन्दुर्जनाविनयसमवर्ती स नभश्चरचक्रवर्ती तस्य समस्ता अपि विद्याधरलोकलक्ष्मीलाञ्छनाश्चिच्छेद विद्याः। शशाप च 'भविष्यस्यनेन दुश्चेष्टितेनावन्तिषु

---

श्चिच्छेद छेदितवान्। इतीति किं वदन्। पुनः पुनरपि इति वदन्। इतीति किम्। अरे कदाचाराचार अरे कुत्सिताचार। अरे पराकदुरात्मन् पराकेन वधेन दुरात्मा तस्य संबोधनं क्रियते अरे पराकदुरात्मन्। उक्तं च—'परं पराकं शशनं पोषणं तत्र यो वधः।' अरे खलपुरोभागिन् खलानां दुर्जनानां पुरोभागी अग्रेसरः खलपुरोभागी तस्य संबोधनं क्रियते अरे खलपुरोभागिन्। अरे विद्याधराधम विद्याधराणां मध्ये अधमो निकृष्टः विद्याधराधमस्तस्य तिरस्कारः क्रियते अरे विद्याधराधम। अरे खेचरखेट खेचराणां मध्ये खेटः कुत्सितः खेचरखेटस्तस्य संबोधनं निर्घाटनं हे तथोक्त। उक्तं च—'कुपूज्यकुत्सितोऽवद्यखेटगर्हणकाः समाः।' अथवा 'खिट उत्रासने' इति धातोः प्रयोगात् खेट उत्रासक इत्यर्थः। अरे विहायोगमयाप्य विहायोगमानां विद्याधराणां याप्यो निन्द्यः विहायोगमयाप्यस्तस्य संबोधनं हे तथोक्त। अरे वियच्चरखेल वियच्चराणां मध्ये खेलो नद्यस्तस्य संबोधनं हे तथोक्त। अरे हेठ अरे बाधाकर। अरे नरकनिवास नरके निवासो यस्य स तथा तस्य संबोधनम्। अथवा नरकस्य गूथस्य निवासस्तस्य संबोधनम्। अशुलित(?) इत्यर्थः। अरे पापाचार पापमेवाचारो यस्य स तथा तस्य संबोधनं हे तथोक्त। अरे बहुकुमतिभृतचित्त बह्वी कुमतिर्माया तया भृतं परिपूर्णं चित्तं यस्य स तथा। अरे गुणमटह गुणैर्मटहो लघुस्तस्य संबोधनम्। अरे निहीन अरे नीच। अरे गन्धर्वलोकापसद गन्धर्वलोके विद्याधरलोके अपसद। अपाङ्क्तेयपतित इत्यर्थः। अरे मातरिपुरुष मातृमैथुन। भगवति गुणैः इन्द्रादीनामाराधनीये एवमाचरितुमुपसर्गं कर्तुं किं उचितं युक्तमेतत्। अपि तु नोचितम्। कथंभूते भगवति। सकलसत्त्वानन्दनीयतपसि सर्वजीवाह्लादकचरित्रे। पुनः कथंभूते। त्रिभुवनमान्ययशसि त्रैलोक्यपूज्यपुण्यगुणकीर्तने। पुनः कथंभूते। परं ब्रह्मासनं ध्यानं उपगतवति प्राप्ते। इह अस्मिन् महामुनिसंनिधाने समीपे शास्त्राणामिव अस्त्राणां शस्त्राणां व्यापारस्य प्रवृत्तेः अवसरो न च नैव वर्तते। तत्तस्मात् कारणात् अन्यथापि शस्त्रैर्विनापि ते तव समुन्नद्धभावं दृप्तत्वं व्यपनयामि इति वदन्। कथंभूतः नभश्चरश्चक्रवर्ती। दुर्जनाविनयसमवर्ती दुर्जनानामविनयस्य समवर्ती कृतान्तः स तथा। कथंभूता विद्याः। विद्याधरलोकलक्ष्मीलाञ्छनाः विद्याधरलोकसंपच्चिह्नानि। न केवलं

राजधान्यां मातङ्गसमवृत्तिश्चण्डकर्मनामको दण्डपाशिकः' । स खेचरः स्वयंकृतानर्थवशात्तच्छापेन भूगोचरतां प्रतिपद्यमानस्तं भगवद्विघ्नकर्तिनं चक्रवर्तिनमुपसृत्यावनतमुखाब्जः सन्नेवमवादीत्—'नाथ, भवतु नामैवम्। कथमन्यथैतन्मदीयं दुष्कर्म विफलोदयं स्यात् । स एष निसर्गजन्माभावः सरसामिव स्वामिनाम्, यः खलु युक्तायुक्तकारिषु सेवकेषु स्वच्छकलुषभावो नाम। तत्क्षम्यतामिदमेकं स्खलितमपुण्यभाजोऽस्य जनस्य। अनुगृह्यतां च शापावसानमनीषया पुनर्विद्याधरलोकावासिकरणवरेण' इत्यभिधाय तत्पादयोरुपरि निपपात। स महामुनिगणवर्णनोदीर्णकीर्तिनर्ती विद्याधरचक्रवर्ती

---

विद्याश्चिच्छेद। शशाप च शापं ददौ। किं शशाप। अनेन दुश्चेष्टितेन दुरनुष्ठितेन अवन्तिषु राजधान्यां उज्जयिन्यां नगर्यां दण्डपाशिकः कोट्टपालो भविष्यसि। कथंभूतो दण्डपाशिकः। मातङ्गसमवृत्तिः चाण्डालसमानजीविकः। पुनः कथंभूतः। चण्डकर्मनामकः चण्डकर्मेति कुत्सितं नाम यस्येति चण्डकर्मनामकः। स खेचरः कन्दलविलासिनामा स्वयंकृतानर्थवशात् स्वयमेव विहितार्थविघ्नात् तच्छापेन रत्नशिखण्डशापेन भूगोचरतां भूमिगोचरत्वं प्रतिपद्यमानोऽङ्गीकुर्वाणः तं रत्नशिखण्डचक्रवर्तिनं उपसृत्य पादयोः पतित्वा अवनतमुखाब्जः नम्रीभूतमुखकमलः सन् एवं अवादीत् एवं जगाद। कथंभूतं चक्रवर्तिनम्। भगवद्विघ्नकर्तिनं गुरूपसर्गविच्छेदकम्। एवं कथमिति चेत्, हे नाथ। नामेति संभावनायाम्। एवं भवतु। कोट्टपालो भविष्यामि। अन्यथा यदि भूगोचरो न भविष्यामि तर्हि एतन्मदीयं दुष्कर्म पापकर्म विफलोदयं कथं स्यात्। अपि तु न कथमपि स्यादित्यर्थः। हे नाथ, स जगत्प्रसिद्धः एष प्रत्यक्षीभूतः स्वामिनां प्रभूणां निसर्गजन्माभावः स्वाभाविकपरिणामो वर्तते। केषामिव। सरसामिव सरोवराणां यथा। स कः। यः खलु भावः सेवकेषु युक्तायुक्तकारिषु स्वच्छकलुषभावो नाम स्वच्छत्वं कलुषत्वं च भवति। यथा सरोवराणां सेवकाः स्नानादिकर्तारः युक्ते जलभोगे स्वच्छतैव भवति। यदा तु अयुक्तं बहुतरं स्नानादिकं कुर्वन्ति तदा सरोवराणां कलुषत्वं भवति। तथा स्वामिनां सेवकाः यथा युक्ते कर्मणि वर्तन्ते तदा स्वामिनां स्वच्छभावो भवति। यदा तु सेवकाः अधिकतया प्रवर्तन्ते तदा स्वामिनां कलुषभावो भवत्येव। तत्तस्मात् कारणात् इदमेतदेकं स्खलितमेकोऽपराधः अपुण्यभाजः पापिष्ठस्य अस्य मल्लक्षणस्य जनस्य सेवकस्य क्षम्यतां त्वया सह्यताम्। न केवलं क्षम्यताम्, शापावसानमनीषया शापस्यान्तबुद्ध्या पुनरपि विद्याधरलोकावासिकरणवरेण अनुगृह्यतां च अनुग्रहः क्रियतां च। इतीदृशं विज्ञापनं अभिधाय उक्त्वा तत्पादयोरुपरि रत्नशिखण्डचरणयोरुपरि निपपात कन्दलविलासः पतितवान्। स जगत्प्रसिद्धो विद्याधरचक्रवर्ती इतीदृशं परामृश्य सम्यक् चित्ते विचार्य उपजातानुक्रोशः संजातकारुण्यः सन् उवाच। कथंभूतो विद्याधरचक्रवर्ती। महामुनिगुणवर्णनोदीर्णकीर्तिनर्ती महामुनीनां परमदिगम्बराणां



दण्ड एव हि नीचानां विनयाय न सत्क्रिया।
ऋजुत्वे जिह्मकाष्ठस्य नाग्नेरस्ति परो विधिः॥
यः कोपः सापराधेषु यः प्रसादोऽनुवर्तिषु।
स्वामिनस्तेन लोकोऽयं गुणकार्यपरायणः॥

इति परामृश्य, उपयुज्य च तस्य भगवतः पर्युपासनविशेषाल्लब्धमवधिमुपजातानुक्रोशः 'खचर, मा ताम्य। उत्तिष्ठ। न खलु प्रभूणां देवानामिव तोषरोषयोः सेवकेषु शुभमशुभं वा फलमसंपाद्य तदैव प्रत्यावर्तते शासनम्। तदाकर्णयान्यदेव तव तल्लोकावाप्तेः कारणम्। तथा हि—अस्ति खलु सकलसांसारिकसुखोपकरणरत्नाकरावनिसङ्गेषु **कलिङ्गेषु** द्विरदमदामोदमन्दकन्दरोदरपरिसरत्पवनपानपरमधुकरालीनीलमणिमेखलाङ्कितनितम्बवसुंधरस्य

---

गुणवर्णनेन उदीर्णा उत्पन्ना उत्कटा चासौ कीर्तिस्तया कृत्वा नृत्यति हर्षभरनिर्भरो नर्तनं करोतीत्येवंशीलः स तथा। इतीति किं परामृश्य।

**दण्डेत्यादि**। नीचानां विनयाय शिक्षापणाय दण्डः प्रवर्तते। कथम्। हि निश्चयेन। न तु सत्क्रिया सत्कारो विनयायोपवर्तते। अमुमेवार्थं दृष्टान्तेन द्रढयति—जिह्मकाष्ठस्य वक्रदारुणस्य ऋजुत्वे सरलकरणे अग्नेर्वैश्वानरात् परो द्वितीयो विधिः कर्तव्यं नास्ति॥

**य इत्यादि**। स्वामिनो नरेन्द्रस्य सापराधेषु सदोषेषु यः कोपो भवति। अनुवर्तिषु सानुकूलेषु यः प्रसादो दानादि वा संमानो वर्तते। तेन कोपेन प्रसादेन च अयं लोकः गुणकार्यपरायणो भवति गुणकर्तव्यतत्परो भवति॥

पुनश्च किं कृत्वा पूर्वम्। अवधिमुपयुज्य च अवधिज्ञानेन ज्ञात्वा च। कथंभूतं अवधिम्। तस्य भगवतो मन्मथमथनस्य मुनेः पर्युपासनविशेषाल्लब्धं शत्वाद् विशेषेण प्राप्तम्। किं च हे खचर, मा ताम्य मा खेदं कुरु। उत्तिष्ठ उत्थो भव। यतः प्रभूणां नरेन्द्राणां खलु निश्चयेन शासनमादेशस्तदैव तस्मिन्नेव शापावसरे न प्रत्यावर्तते न व्याघुट्टति। केषामिव। देवानामिव। किं कृत्वा पूर्वम्। तोषरोषयोः सेवकेषु तोषे सति शुभं रोषे सति अशुभं वा फलं असंपाद्य। तत्तस्मात् कारणात् आकर्णय शृणु त्वम् अन्यदेव अपरमेव तव भवतस्तल्लोकावाप्तेः विद्याधरलोकप्राप्तेः कारणं अहं कथयामि। तथा हि—तदेव निरूपयति। खल्विति वाक्यालंकारे। कलिङ्गेषु कलिङ्गदेशेषु सुदत्तो नाम राजास्ति। कथंभूतेषु कलिङ्गेषु। सकलसांसारिकसुखोपकरणरत्नाकरावनिसङ्गेषु सकलानि च तानि सांसारिकसुखानि इष्टस्रग्वनिताचन्दनादीनि तेषां उपकरणं आधारभूता या रत्नाकराणां रत्नखनीनां अवनिः भूमिस्तस्याः सङ्गो मेलापको येषु ते तथा तेषु। कथंभूतः सुदत्तो नाम राजा। महेन्द्रमहीधरस्य महेन्द्रपर्वतस्य अधिपतिः। कथंभूतस्य महेन्द्रमहीधरस्य। द्विरदमदामोदमन्दकन्दरोदरपरिसरत्पवनपानपरम-

महेन्द्रमहीधरस्याधिपतिः संजातमेदिनीरतचित्तोऽपि द्विजातिस्तूयमानवृत्तः अकारणरोषप्रमत्तोऽपि निःशेषशिष्टाचारप्रवृत्तः **सुदत्तो** नाम राजा ।

यस्य विभवाभिवृद्धिस्तर्कुकलोकसंतर्पणाय, विद्यावैशारद्यं विद्वज्जनोपचरणाय, शौर्यपर्यायः शरणागतरक्षणाय, राज्यावर्जनपरिग्रहः प्रजापरित्राणाय, प्रभुत्वावलम्बनं समाश्रितभरणाय, क्षात्रचरित्रवृत्तिः परार्थकरणाय, देवताप्रसादनं सत्पुरुषवरवितरणाय, साहसोत्साहानुष्ठानं महामुनिप्रत्यूहनिबर्हणाय, वीरविक्रमः साधकसाध्वसापहरणाय, सात्त्विकत्वमादिक्षत्रियधृतधर्मनिर्वहणाय ।

---

धुकरालीनीलमणिमेखलाङ्कितनितम्बवसुंधरस्य द्विरदानां योऽसौ मदो दानं तस्यामोदस्तेन मन्दाः स्यन्दा या कन्दरास्तासामुदरेषु मध्येषु परिसरन् समन्तात् पर्यटन् योऽसौ पवनस्तस्य पानपरा आस्वादनलम्पटा या मधुकराली सैव नीलमणिमेखला कटिनी तया अङ्किता नितम्बवसुंधरा तदभूमिर्यस्य स तथा तस्य । पुनः कथंभूतः सुदत्तो नाम राजा । संजातमेदिनीरतचित्तः म्लेच्छस्त्रीसंभोगमना अपि द्विजातिस्तूयमानवृत्तः । ननु यो म्लेच्छभार्यारतचित्तः स द्विजातिस्तूयमानवृत्तः ब्राह्मणस्तूयमानाचारः कथं भवति । विरुद्धमेतत् । परिह्रियते—मेदिनी आसमुद्रान्तपृथ्वी तस्यां रतचित्तः पालनमना अपि निश्चयेन द्विजातिभिः श्रवणब्राह्मणैः श्लाघ्यमानः सद्वृत्त इति शुद्धम् । पुनः कथंभूतः । अकारणरोषप्रमत्तोऽपि अकारणरोषि अपि निःशेषशिष्टाचारप्रवृत्तः निर्हेतुककोपेन प्रवृत्तः कथमिति विरुद्धम् । नैवम् । अको अकुत्सितः आसमन्तात् योऽसौ रणरोषः संग्रामकोपस्तेन प्रकर्षेण मत्तो हर्षं प्राप्तः अत एव निःशेषेषु शिष्टाचारेषु प्रवृत्त इति स्वस्थम् ।

यस्य सुदत्तस्य विभवाभिवृद्धिः धनवृद्धिः तर्कुकलोकसंतर्पणाय याचकजनसम्यक्प्रीणनाय वर्तते । यस्य विद्यावैशारद्यं शास्त्रचतुरता विद्वज्जनोपचरणाय विद्वज्जनानां पण्डितानां उपचरणाय पूजनाय वर्तते । यस्य शौर्यपर्यायः सुभटत्वानुक्रमः शरणागतरक्षणाय शरणागतानां प्रतिपालनाय वर्तते । यस्य राज्यावर्जनपरिग्रहः राज्योपार्जनस्वीकारः प्रजापरित्राणाय प्रजालोकरक्षणार्थं वर्तते । यस्य प्रभुत्वावलम्बनं सामर्थ्याश्रयणं समाश्रितभरणाय सेवकलोकपोषणाय वर्तते । यस्य क्षात्रचरित्रवृत्तिः क्षत्रियाणामिदं क्षात्रं क्षतत्राणलक्षणं तच्च तच्चरित्रं च आचारस्तस्य वृत्तिः प्रवृत्तिः परार्थकरणाय परप्रयोजनपोषणार्थं वर्तते । यस्य देवताप्रसादनं देवानां प्रसन्नीकरणं सत्पुरुषवरवितरणाय सत्पुरुषाणां वरदानार्थं वर्तते । यस्य साहसोत्साहानुष्ठानं साहसस्याद्भुतकर्मणः उत्साहानुष्ठानमुद्यतमनिधानं महामुनिप्रत्यूहनिबर्हणाय मुनीनां उपसर्गनिवारणार्थं वर्तते । यस्य वीरविक्रमः जयकुमारवत्पराक्रमः साधकसाध्वसापहरणाय साधकानां विद्यादेवतावशकराणां साध्वसस्य भयस्य अपहरणाय निर्नाशार्थम् । यस्य सात्त्विकत्वं प्रसादलक्षणत्वं आदिक्षत्रियधृतधर्मनिर्वहणाय निर्वाहनिमित्तम् ।



यस्य च जनन्यः परकलत्राण्येव, बन्धुवर्गः समाश्रितलोक एव, कुटुम्बकं सप्तसमुद्रावधि वसुधैव, जीवितं सत्यप्रतिपालनमेव, महाव्यसनं परोपकारनिघ्नतैव, व्रताचरणं क्षितिरक्षणमेव, योग्योद्योगः प्रजाकार्यानुशासनमेव, दक्षिणादक्षत्वं जगद्व्यवहारव्यवस्थापनमेव, अवभृथस्नानं परत्रेह च हितवृत्तिप्रवृत्तिषु स्वातन्त्र्यमेव, वीरत्वमरिषड्वर्गविजय एव, असिधाराव्रतमन्यायखण्डनमेव, ऐश्वर्यमाज्ञानुल्लङ्घनमेव ।

यस्य वासंतोषः श्रुतेषु, तर्षः सत्पुरुषसंग्रहेषु, मूकभावः स्वकीयगुणस्तवनेषु, बधिरत्वं दुर्जनोपदेशेषु, दर्शनपरावृत्तिरनर्थसंगमेषु, कामः पुण्यार्जनेषु, अक्षमा परोपतापेषु, विद्वेषो व्यसनेषु, असंतृप्तिः सुभाषितश्रवणेषु, आसक्तिः पुनः सद्गोष्ठीषु ।

यस्य च परिमितत्वं वाचि, कालहरणं कलासु, आशादर्शनं दिग्विज-

---

यस्य च जनन्यो मातरः परकलत्राण्येव परदारा एव । यस्य बन्धुवर्गः सर्गसमूहो भ्रातृवर्गः समाश्रितलोक एव । यस्य कुटुम्बकं परिवारवर्गः सप्तसमुद्रावधि वसुधैव आसमुद्रान्ता भूमिरेव भूमिस्थितलोक एव । यस्य जीवितं ········सत्यप्रतिपालनमेव······ ·····················। यस्य महाव्यसनं··························परोपकारनिघ्नतैव ······················। यस्य व्रताचरणं················क्षितिरक्षणमेव········ ·······························। यस्य योग्योद्योग उचितोद्यमः प्रजाकार्यानुशासनमेव प्रजानां कार्यं कर्तव्यं तस्य अनुशासनं शिक्षापणमेव । यस्य दक्षिणादक्षत्वं दानचातुर्यं जगद्व्यवहारव्यवस्थापनमेव पृथ्वीमण्डलस्थितलोकत्रयविक्रियादिनिश्चलीकरणमेव । यस्य अवभृथस्नानं यज्ञान्तस्नानं परत्रेह च परलोके इहलोके च हितवृत्तिप्रवृत्तिषु पुण्यप्रवर्तनेषु स्वातन्त्र्यमेव स्वाधीनतैव । यस्य वीरत्वं सुभटत्वं अरिषड्वर्गविजय एव कामक्रोधलोभमानमदहर्षनिषेध एव । यस्य असिधाराव्रतं तीक्ष्णत्वनियमः अन्यायखण्डनमेव । यस्यैश्वर्यं प्रभुत्वं आज्ञानुल्लङ्घनमेव आदेशप्रतिपालनमेव ।

यस्य सुदत्तस्य । वा अनुक्तसमुच्चये । असंतोषस्तृष्णालुता श्रुतेषु वर्तते । तर्षो लोभः सत्पुरुषसंग्रहेषु महापुरुषस्वीकारेषु । मूकभावो मौनित्वं स्वकीयगुणस्तवनेषु निजगुणश्लाघासु । बधिरत्वं दुर्जनोपदेशेषु सूचकवचनाकर्णनेषु । दर्शनपरावृत्तिर्लोचनाचरणं अनर्थसंगमेषु अलाभसंगतिषु । कामोऽभिलाषः पुण्यार्जनेषु । अक्षमा क्रोधः परोपतापेषु । परैः परेषां यदा संतापः क्रियते तदा क्षमां न करोतीत्यर्थः । विद्वेषो अक्षीगतत्वं अप्रीतिर्वा व्यसनेषु द्यूतादिसप्तव्यसनेषु । असंतृप्तिरघ्राणत्वं सुभाषितश्रवणेषु । आसक्तिः अनुबन्धः पुनः संतत्यावृत्तिः सद्गोष्ठीषु विद्वदुपन्यासेषु ।

यस्य सुदत्तस्य परिमितत्वं अल्पदायित्वं वाचि वचने वर्तते । न तु दाने । कालहरणं

यथात्रायाम्, श्रवणगतत्वं पूर्वपुरुषचरितेषु, अवधीरणमात्मसुखानाम्, अन-
वसरः कलिकालविजृम्भितस्य, महासात्त्विकं सकलजगदभ्युद्धरणेषु, ऐश्वर्यं
विश्वंभरतायाम्, न पुनरमीषां द्वन्द्वानि तस्य वदान्यतायां प्रत्युपकृतिषु
मान्यजनसंभावनायां स्वच्छन्दवृत्तिषु च विषयभावमाजग्मुः।

यस्य चात्मसंधानविनीतवृत्तयः परविग्रहप्रशमनकुशलाः स्वभावगुणप्रण-

---

दिनगमनं कलासु लिखितपठितादिषु वर्तते। न तु रिरकालेन(?)दानम्। आशादर्शनं
दिशामवलोकनं दिग्विजययात्रायां याने वर्तते। न त्वाकाङ्क्षायापनं तत्कालेन दानं इत्यर्थः।
श्रवणगतत्वं श्रुतिदानं पूर्वपुरुषचरितेषु पुराणपुरुषकथाकर्णनेषु। न तु विज्ञप्तिकाया अनाक-
र्णनम्। अवधीरणमनादरः आत्मसुखानाम्। आननं अर्थिजनानां अवधीकरणम्। अनवसरो-
ऽप्रस्तावः कलिकालविजृम्भितस्य दुष्टकालप्रसरस्य। न तु अर्थिजनानां अवसरो वर्तते दानस्य
सदा अवसरोऽस्तीत्यर्थः। महासात्त्विकं प्रसन्नतायुक्तत्वं सकलजगदभ्युद्धरणेषु सकललो-
कोपजीवनेषु वर्तते। ऐश्वर्यं भूमिपत्वं विश्वंभरतायां सर्वलोकपोषणतायाम्। न पुनरमीषां
द्वन्द्वानि युगलानि तस्य सुदत्तस्य वदान्यतायां प्रीयपूर्वकन्यागतायाम्। अमीषां केषाम्। परि-
मितत्वं कालहरणं प्रथमं द्वन्द्वं स्वल्पनं ददाति तत्कालं ददाति च। आशादर्शनं अवगतत्वं
च द्वितीयं द्वन्द्वं तत्कालं ददाति। प्रथमं शृणोतीत्यर्थः। अवधारणमनवरतश्च तृतीयं द्वन्द्वं
दानमेव अनादरो नास्ति। अस्माकं बन्धुवर्गो मृतोऽस्ति। इदानीं दानस्यावसरो नास्ति।
इत्यनवसरकथनं तद्द्वयं नास्ति। महासात्त्विकं ऐश्वर्यं चतुर्थं द्वंद्वं सहधर्मित्वे पुमान् दाने
सावद्यं मन्यते तेन दानं न ददाति ऐश्वर्यं प्रभुत्वे अर्थिजनं चेतसि नानयति मदामनं(?)-
ददाति तद्द्वयमत्र नास्ति। उक्तं च—'प्रियो वा दानशीलश्च वदान्यः परिकीर्तितः।'
एतदुक्तं भवति—परिमितत्वं कालहरणं च दानतायां नास्ति महासात्त्विकत्वे ऐश्वर्यं च
स्वच्छन्दवृत्तिषु स्वेच्छाचारेषु नास्तीति एतानि चत्वारि द्वन्द्वानि। तदेषु चतुर्मुखस्थानेषु
विषयभावं गोचरत्वं यस्य नाजग्मुरित्यर्थः। यथासंख्यालंकारः॥

यस्य च सुदत्तमहाराजस्य बाणा एव शरा एव सचिवा मन्त्रिणो वर्तन्ते। परे
तु सचिवाः केवलं सभाशोभार्थं संसद्विराजनार्थम् अस्थावराणि जङ्गमानि अलंकर-
णानि आभरणानि वर्तन्ते। ननु सचिवाः संधिविग्रहादिकार्यं कुर्वन्ति किं वर्तते किं
एव तत्कार्यगर्भितानि विशेषणान्याह—कथंभूता बाणाः। आत्मसंधानविनीतवृत्तयः आ-
त्मनः स्वस्य संधाने योजने विनीता प्रश्रिता वृत्तिर्येषां बाणानां ते तथोक्ताः। पुनः कथं-
भूताः। परविग्रहप्रशमनकुशलाः परेषां शत्रूणां विग्रहस्य संग्रामस्य प्रशमने कुशला
दक्षाः। सचिवा अपि विग्रहं प्रशमयन्ति। पुनः कथंभूताः। स्वभावगुणप्रणयिनः
स्वभावेन प्रकृत्या गुणप्रणयिनः स्वप्रत्यञ्चास्थायिनो भवन्ति। सचिवा अपि षड्गुणस्नेहिनो
भवन्ति। पुनः कथंभूताः। परिप्राप्तश्रवणाः परिप्राप्तं श्रवणं कर्णं येषां कर्षणवेलायां



यिनः परिप्राप्तश्रवणा बाणा एवासाध्यसाधनोत्सवाः सचिवाः, परे तु केवलं
सभाशोभार्थमस्थावराण्यलंकरणानि। स्वपरप्रजानां संपत्त्यापत्तिकरमसहायं
साहसमेव पुरोहितः, परस्तु सर्वदिवसेषु वसुवितरणस्थानम्। अशेषशात्र-
वलयस्खलनहेतुरव्याजवर्यं शौर्यमेव सेनापतिः, परस्तु भृत्यभरणीयसमय-
सूचनं चेतनम्। उपकरणमखिलसमुद्रावधिवसुधातले दुर्वारप्रसरपर्यमैश्वर्यमेव
द्विषद्दण्डधरः प्रतीहारः, परस्तु सेवकानामुपासनावसरनिवेदनस्तीर्थपुरुषः।
समराङ्गणेषु परहृदयंगमप्रवणानि शस्त्रसंप्रेषणान्येव दूतप्रणिधयः, परे तु राज-
नीतिप्रपञ्चाः। त्रिदशैरप्यप्रतिहता दोषाप्रपाता एव दुर्गभूमयः, परास्तु विभव-

---

ते तथोक्ताः। सचिवा अपि कर्णे शयित्वा······चिद्वहन्ति। पुनः कथंभूताः। असाध्यसा-
धनोत्सवाः असाध्यस्य शत्रोः साधने पञ्चत्वप्रापणे उत्सवो उद्यमो येषां ते तथोक्ताः।
सचिवा अपि असाध्यं साधयन्ति। यस्य सुदत्तमहाराजस्य साहसमेव अद्भुतं कर्मैव पुरो-
हितो राजगुरुर्वर्तते। परस्त्वपरः पुरोहितः सर्वदिवसेषु अमावास्यादिषु दिनेषु वसुवित-
रणस्थानं धनप्रदानपदं वर्तते। कथंभूतं साहसम्। स्वपरप्रजानां संपत्त्यापत्तिकरं स्वपरप्र-
जानामापत्तिकरमापद्विधायकम्। पुरोहितः मन्त्रादिना स्वप्रजानां संपत्तिं करोति। परप्रजानां
विपदं विदधाति। पुनः कथंभूतम्। असहायं अमणं(?)। पुरोहितोऽपि एक एव भवति। यस्य च
सुदत्तमहाराजस्य शौर्यमेव सुभटत्वमेव सेनापतिश्चमूनायको वर्तते। परस्तु सेनापतिः
भृत्यभरणीयसमयसूचनं किंकरपोषणकालकथकः चेतनं सजीवमरणं वर्तते। साधनं
प्रियमस्ति। कथंभूतं शौर्यम्। अशेषशात्रवलयस्खलनहेतुः अशेषाणां विश्वेषां शात्रवाणां वै-
रीणां लयस्खलनस्य सेवावष्टम्भनस्य हेतुः कारणम्। पुनः कथंभूतम्। अव्याजवर्यं निस-
र्गेण मुख्यम्। यस्य च सुदत्तमहाराजस्य ऐश्वर्यमेव प्रभुत्वमेव प्रतीहारो वर्तते। परस्तु
प्रतीहारः सेवकानामुपासनावसरनिवेदनः सेवावसरकथकस्तीर्थपुरुषो यात्राभूतो पुरुषो
वर्तते। कथंभूतः प्रतीहारः। द्विषद्दण्डधरः द्विषत्सु शत्रुषु दण्डो दण्डनिपातनं दण्डकारणं
धरति करोतीति द्विषद्दण्डधरः। कथंभूतमैश्वर्यम्। अखिलसमुद्रावधिवसुधातले चतुः-
समुद्रमर्यादभूमण्डले दुर्वारप्रसरपर्यं दुर्वारो दुर्निवारः प्रसरपर्यः प्रवृत्तिः पर्यायो यस्य
दुर्वारप्रसरपर्यम्। यस्य च सुदत्तमहाराजस्य शस्त्रसंप्रेषणान्येव खड्गादिमोचनान्येव दूत-
प्रणिधयः दूताश्च संदेशशासनहराः। संधिविग्रहासंधिविग्रहिणः प्रणिधयश्च हैरिका दूत-
प्रणिधयो वर्तन्ते। परे उद्धूतप्रणिधयो राजनीतिप्रपञ्चा अर्थशास्त्रविस्ताराः। कथंभूतानि
शस्त्रसंप्रेषणानि। समराङ्गणेषु परहृदयंगमप्रवणानि शत्रुहृदयविदारणचतुराणि। दूतप्र-
णिधयोऽपि परचित्तोपलक्षका भवन्ति। यस्य सुदत्तमहाराजस्य दोषाप्रपाता एव दोषाणा-
मप्रपात एव अनागता एव दुर्गभूमयो जलदुर्गवनदुर्गगिरिदुर्गलक्षणा वर्तन्ते। परास्तु

विनियोगद्वाराणि । वेधसाप्यतुलितं बाहुबलविजृम्भितमेव वप्रः, परस्तु विनोदरदनिनामपाश्रयभूमिः । वनमृगैरप्यनुलङ्घनीयप्रभावाज्ञैव प्राकारः, परस्तु पुरस्य पांशुस्पर्शविनिवारणपरिच्छेदः । सकलसपत्नव्याप्तिकदर्थनसमर्थनावतारः सव्येतरः कर एव परिघा, परे तु दौवारिकाणां विश्रामविष्टराणि । दुर्वृत्तारातिकुलनिमज्जनजलाधारा खड्गधारैव परिखा, परा तु नगराङ्गनानां जलक्रीडाधिकरणानि । समस्तक्षितिरक्षणक्षमः पराक्रम एव परिवारः, परस्तु श्रीविलासाडम्बरः । निजकीर्तिसुधाधवलितापघनं त्रिभुवनमेव विहारहर्म्याणि, पराणि तु राज्यलक्ष्मीचिह्नानि । चतुरुदधिमेखलावनमनोहरा वसुंधरैव प्रियकलत्राणि, पराणि तु वंशाभिवृद्धिनिबन्धनानि धर्मक्षेत्राणि ।

---

दुर्गभूमयो विभवविनियोगद्वाराणि विभवानां लक्ष्मीणां विशेषेण नियोगद्वाराणि अधिकारद्वाराणि वर्तन्ते । कथंभूता दोषाप्रपाताः । त्रिदशैरपि अप्रतिहता अविध्वस्ताः । यस्य च सुदत्तमहाराजस्य बाहुबलविजृम्भितमेव भुजसामर्थ्यप्रसर एव वप्रो वर्तते । वप्रो दुर्गाधारोच्चयः । परस्तु वप्रो विनोदरदनिनां क्रीडागजानां अपाश्रयभूमिराश्रयस्थानम् । कथंभूतं बाहुबलविजृम्भितम् । वेधसापि अतुलितमकलितम् । यस्य आज्ञैव शिष्टिरेव प्राकारो दुर्गो वर्तते । परस्तु प्राकारः पुरस्य पांशुस्पर्शविनिवारणपरिच्छेदः पांशूनां रजसां स्पर्शस्य छुपनस्य विनिवारणाय परिच्छेदो निषेधोपकरणं वर्तते । कथंभूता आज्ञा । वनमृगैरपि अनुलङ्घनीयप्रभावा अनुलङ्घनीयो अलोपनीयः प्रभावो माहात्म्यं यस्याः सा तथा । यस्य च सुदत्तमहाराजस्य सव्येतरो दक्षिणः कर एव हस्तश्च परिघा अर्गला वर्तते । परे तु परिघा दौवारिकाणां विश्रामविष्टराणि खेदापनोदासनानि । कथंभूतः करः । सकलसपत्नव्याप्तिकदर्थनसमर्थनावतारः सकलसपत्नानां शत्रूणां व्याप्तेः प्रसरस्य कदर्थने भञ्जने समर्थनः अवसरः अवतारो यस्य करस्य स तथोक्तः । यस्य च सुदत्तमहाराजस्य खड्गधारैव परिखा वर्तते । परा तु परिखा नगराङ्गनानां जलक्रीडाधिकरणानि स्थानानि वर्तते । कथंभूता खड्गधारा । दुर्वृत्तारातिकुलनिमज्जनजलाधारा दुर्वृत्तानां दुराचाराणामरातीनां कुलानामन्वयानां निमज्जने ब्रुडने जलाधारा दुर्वृत्तजलस्याधिष्ठानम् । यस्य च सुदत्तमहाराजस्य पराक्रम एव बलमेव परिवारः परिच्छेदो वर्तते । परस्तु परिवारः श्रीविलासाडम्बरो लक्ष्मीविभ्रमाटोपः । कथंभूतः पराक्रमः । समस्तक्षितिरक्षणक्षमः सर्वपृथ्वीपरिपालनसमर्थः । यस्य च सुदत्तमहाराजस्य त्रिभुवनमेव विहारहर्म्याणि क्रीडागृहाणि वर्तन्ते । पराणि तु विहारगृहाणि राज्यलक्ष्मीचिह्नानि राज्यलक्ष्म्याश्चिह्नानि वर्तन्ते । कथंभूतं त्रिभुवनम् । निजकीर्तिसुधाधवलितापघनं निजकीर्तिरेव सुधा श्वेतद्रव्यद्रवस्तया धवलितानि उज्ज्वलीकृतानि अपघनानि शरीराणि यस्य तत्तथोक्तम् । यस्य च सुदत्तमहाराजस्य वसुंधरैव प्रियकलत्राणि



यस्य चाहवाङ्गणरङ्गेष्वनवरतमुक्तशरासारवर्षविकर्तरितमुखमण्डलानामहितकबन्धानां नर्तनक्रियासु परमेकान्तरसिकता, न पुनरितरास्वर्थदूषणपरासु । असमसमरावसरेष्वाश्चर्यशौर्यपरितोषितानाममरवृन्दारकाणामानन्दातोद्यवादनेषु प्रकर्षतृष्णालुता, न पुनरितरेषु शरीरायासकरेषु । त्रिविष्टपकुटीकोटरविहारिणा नरनिलिम्पाम्बरचरलोकेन निजविजयनामाङ्कसुभगस्य गीतस्य गायने नितरां स्पृहयालुता, न पुनरितरस्य हृदयहरिणहरस्य । कदनमेदिनीषु दुर्वारवैरिशिरोविदारणेषु महती मृगयाव्यसन-

---

वर्तन्ते । पराणि तु प्रियकलत्राणि धर्मक्षेत्राणि दानादिकर्मस्थानानि । कथंभूतानि धर्मक्षेत्राणि । वंशाभिवृद्धिनिबन्धनानि वंशस्य अन्वयस्य या अभिवृद्धिः समन्तात् वर्धनं तस्य निबन्धनानि कारणानि । क्षेत्रे हि वंशानां त्वचिसारवृक्षाणां अभिवृद्धिर्भवति । कथंभूता वसुंधरा । चतुरुदधिमेखलावनमनोहरा चत्वार उदधयः तेषां मेखलावनानि तैर्मनोहरा ।

यस्य च सुदत्तमहाराजस्य अहितकबन्धानां अहितानां शत्रूणां कबन्धानि शिरोरहितकायास्तेषां नर्तनक्रियासु नृत्यचेष्टासु परं केवलं एकान्तरसिकता एकान्तेन अतिशयेन रसिकता रागहृदयता वर्तते । न पुनरितरासु कामिनीनां नर्तनक्रियासु रसिकता वर्तते । कथंभूतासु इतरासु । अर्थदूषणपरासु धनदोषतत्परासु । कथंभूतानामहितकबन्धानाम् । आहवाङ्गणरङ्गेषु संग्रामाङ्गणनृत्यभूमिषु अनवरतमुक्ताः प्रहिता ये शरा बाणास्तेषां आसारास्तेषु वर्षो वेगवद्वर्षणं तेन विकर्तरितानि विशेषेण खण्डितानि मुखमण्डलानि तेषां तथोक्तानाम् । यस्य च सुदत्तमहाराजस्य असमसमरावसरेषु विषमसंग्रामकालेषु अमरवृन्दारकाणां देवेषु प्रधानदेवानां संबन्धिषु आनन्दातोद्यवादनेषु वादित्रशब्दितेषु प्रकर्षतृष्णालुता प्रकर्षेणातिशयेन तृष्णालुता तृष्णत्वं वर्तते । न पुनरितरेषु ततविततघनसुषिरेष्वातोद्यवादनेषु तृष्णालुता वर्तते । कथंभूतेषु इतरेषु । शरीरायासकरेषु कायकष्टकारेषु । कथंभूतानाममरवृन्दारकाणाम् । आश्चर्यशौर्यपरितोषितानां आश्चर्यं आश्चर्योत्पादकं यत् शौर्यं सौभट्यं तेन परितोषिता आनन्दं प्रापिता ये अमरवृन्दारकास्तेतथोक्तास्तेषाम् । यस्य च सुदत्तमहाराजस्य नरनिलिम्पाम्बरचरलोकेन नराश्च भूमिगोचराः, निलिम्पाश्च देवाः, अम्बरचराश्च विद्याधरास्तेषां लोकः समूहस्तेन निजविजयनामाङ्कसुभगस्य स्वकीयविजयजितनृपानामाङ्कणं तेन सुभगस्य प्रीतिजनस्य गीतस्य गायने गानकरणे नितरामतिशयेन स्पृहयालुता आकाङ्क्षिता वर्तते । न पुनरितरस्य गीतस्य शृङ्गारादेः स्पृहयालुता वर्तते । कथंभूतस्य इतरस्य । हृदयहरिणहरस्य मनोमृगमोहकस्य । कथंभूतेन नरनिलिम्पाम्बरचरलोकेन । त्रिविष्टपकुटीकोटरविहारिणा त्रिविष्टपं त्रैलोक्यम् । त्रयाणां विष्टपानां समाहारः त्रिविष्टपमिति वचनात् । तदेव कुटीकोटरं गृहमध्यं तत्र विहरति इत्येवंशीलः त्रिविष्टपकुटीकोटरविहारी तेन तथोक्तेन । यस्य च सुदत्तमहाराजस्य कदनमेदिनीषु दुर्वारवैरि-

परवशता, न पुनरितरेषु निरपराधेषु वनमृगेषु । नृपयज्ञाजिराष्टापदभूमिकायां चरगमगतिबन्धैररातिचतुरङ्गेषु प्रकामं द्यूतदुर्ललितता, न पुनरितरेषु नरपालकुलकलङ्कधरेषु । सकलरत्नाकरमणिमेखलायां वसुमतीयोषायां नितान्तं सक्तता, न पुनरितरेषु वपुर्धर्मधनविध्वंसनेषु विलासिनीजनेषु । अनन्यसामान्यजन्योपार्जितजयानिलविजृम्भितेन सुभटकुटजाटवीविलुण्ठनपटुनावलेपानलेन दुर्धर्षाणां विद्विषामशेषयशःपानेष्वतीवशौण्डता, न

---

शिरोविदारणेषु निवारशत्रुकुम्भस्थलच्छेदनेषु महती गुर्वी मृगयाव्यसनपरवशता आखेटकनिर्बन्धनपराधीनता वर्तते। न पुनरितरेषु निरपराधेषु वनमृगेषु मृगयाव्यसनपरवशता वर्तते । यस्य च सुदत्तमहाराजस्य नृपयज्ञाजिराष्टापदभूमिकायां नृपयज्ञस्याजिरं संग्रामाङ्गणं तदेव अष्टापदभूमिका तुरङ्गफलभूमिका तस्यां चरगमगतिबन्धैः चरगमो हैरिकप्रेषणम्, गतिबन्धाः शत्रुसैन्यप्रदेशस्य अप्रदामानि, चरगमगतिबन्धास्तैः कृत्वा अरातिचतुरङ्गेषु अरातीनां हस्त्यश्वरथपदातिषु प्रकाममतिशयेन द्यूतदुर्ललितता विजिगीषया अविचारिता वर्तते । न पुनरितरेषु चतुरङ्गेषु सारिपासक्रीडासु द्यूतदुर्ललितता दुरोदरस्य क्रीडाया अनिवारिता वर्तते । कैः। चरगमगतिबन्धैः चरः परगृहे सारिप्रवेशः । परसारिहननमित्यर्थः। गमः परगृहग्रहणम् । परगृहे यानमित्यर्थः । गतिबन्धो परसाराबन्धनं चरगमगतिबन्धास्तैः । कथंभूतेषु इतरेषु । नरपालकुलकलङ्कधरेषु नरपालानां नृपतीनां कुले अन्वये कलङ्कधरेषु लाञ्छनकरेषु । यस्य च सुदत्तमहाराजस्य वसुमतीयोषायां पृथ्वीवनितायां नितान्तं सक्तता निर्बन्धता प्रवर्तते । न पुनरितरेषु विलासिनीजनेषु सक्तता वर्तते । कथंभूतायां वसुमतीयोषायाम् । सकलरत्नाकरमणिमेखलायां..................................
...रत्नकटिमेखला यस्या रत्नवतीयोषायाः सा तथा तस्याम् । कथंभूतेष्वितरेषु । वपुर्धर्मधनविध्वंसनेषु वपुर्विध्वंसनं राजयक्ष्मादिरोगोत्पत्तिः, धर्मविध्वंसनं मैथुनक्रिया ग्रामसंख्याजीवहिंसनम्, धनविध्वंसनं राज्यदूषितापत्तिवत् तेषु । यस्य च सुदत्तमहाराजस्य विद्विषां शत्रूणां अशेषयशःपानेषु सर्वपुण्यगुणकीर्तनास्वादनेषु अतीवशौण्डता मद्यपता वर्तते । न पुनरितरेषु आसवेषु मद्यपानेषु शौण्डता वर्तते । कथंभूतेषु आसवेषु । ऐहिकामुत्रिकफलविलोपनोद्भवेषु इहलोकपरलोकसुखफलविलोपने गर्विष्ठेषु । कथंभूतानां विद्विषाम् । अवलेपानलेन दुर्धर्षाणां अवलेपो गर्वः स एवानलस्तेन दुर्धर्षाणां अनाकलनीयानाम् । कथंभूतेन अवलेपानलेन । अनन्यसामान्यजन्योपार्जितजयानिलविजृम्भितेन अनन्यसामान्यं अनुपमं जन्यं संग्रामस्तस्मिन् उपार्जितः स्वीकृतो योऽसौ जयः शत्रुपक्षपराभवः स एवानिलो वातस्तेन विजृम्भितं स तथा तेन । पुनः कथंभूतेन अवलेपानलेन । सुभटकुटजाटवीविलुण्ठनपटुना सुभटा एव कुटजाः शक्रतरवस्तेषामटवी वनं



पुनरितरेष्वैहिकामुत्रिकफलविलोपनोद्भवेष्वासवेषु । अकाण्डजगदुपद्रवदानवेषु मानवेषु दण्डपारुष्ये बाढं मनोमनीषितानि, न पुनर्भ्रूलतोल्लासवशवर्तनेषु परिजनेषु । रणकेलिकुड्मलानामरीणामायोधनवसुधायामभिमुखीभावकरणेषु वचःकर्कशव्यवहारे परमं नैपुण्यम्, न पुनरवलोकनमात्रविनयपरिष्वजासु प्रजासु । अखण्डब्रह्माण्डडिम्बडमरकरालैः प्रतिपक्षव्यालैः संचितस्य कीर्तिकुलधनस्यापहारे गाढं गृध्नुता, न पुनरात्माभ्युदयप्रणयिभिरुपार्जितस्य द्रविणोर्जितस्य संपरायधरावारिषु शत्रुशल्लकीनगभङ्गप्रलोभनेन गजग्रहणेषु महान्ति कुतूहलानि, न पुनरितरेण चौरचारपाशादिनोपायव्यतिकरेण । आसंसारमवनैश्वर्यसुरभिषु यशश्चन्दनवन्दनेषु साभिलाषं मनः, न पुनरितरेषु क्षणमात्रपरिमलमनोहरानुबन्धेषु गन्धेषु । अपरजनासाधारणेषु गुणमणिविभूषणेषु महानाग्रहः, न पुनरितरेषु देहखेदावहेषूपलशकलनिवहेषु । नि-

---

तस्या विलुण्ठनं भस्मीकरणं तत्र पटुना दक्षेण । यस्य च सुदत्तमहाराजस्य अकाण्डजगदुपद्रवदानवेषु अकाण्डे जगत उपद्रवकरणे दानवेषु दैत्यप्रायेषु मानवेषु दण्डपारुष्ये कर्कशदण्डे बाढं मनोमनीषितानि चित्तमनोरथा वर्तन्ते । न पुनः परिजनेषु दण्डपारुष्ये मनोमनीषितानि वर्तन्ते । कथंभूतेषु परिजनेषु । भ्रूलतोल्लासवशवर्तनेषु भ्रूक्षेपमात्रेण स्वाधीनेषु । दण्डपारुष्यं न वर्तत इत्यर्थः । यस्य च सुदत्तमहाराजस्य रणकेलिकुड्मलानां संग्रामक्रीडाबद्धोत्कण्ठानामरीणां आयोधनवसुधायां संग्रामभूमौ अभिमुखीभावकरणेषु संग्रामार्थमायतेषु वचःकर्कशव्यवहारे अतिकठिनभाषणे परमं नैपुण्यं वर्तते । न पुनः प्रजासु वाक्पारुष्यं वर्तते । कथंभूतासु प्रजासु । अवलोकनमात्रविनयपरिष्वजासु संमुखावलोकनमात्रेण विनयवतीषु । यस्य च सुदत्तमहाराजस्य अखण्डब्रह्माण्डडिम्बडमरकरालैः अखण्डं परिपूर्णं ब्रह्माण्डं पृथ्वीमण्डलं तस्य डिम्बो विप्लवो विनाशस्तस्मात् डमरो भयं तेन करालास्ते तथा तैः । एवंविधैः प्रतिपक्षव्यालैः शत्रुकालसर्पैः कर्तृभूतैः संचितस्य रक्षितस्य कीर्तिकुलधनस्य कीर्तिरेव कुलधनं तस्य अपहारे उद्दालने गाढं गृध्नुता लोभिष्ठता वर्तते । न पुनरात्माभ्युदयप्रणयिभिः आत्मनः स्वकीये अभ्युदये उन्नत्यां प्रणयिनस्तैरुपार्जितस्य द्रविणोर्जितस्य प्रशस्तधनस्यापहारे गृध्नुता न पुनर्वर्तते । यस्य च सुदत्तमहाराजस्य संपरायधरावारिषु संगरभूमिगजधरणभूमिगजधरणखातासु शत्रुशल्लकीनगभङ्गप्रलोभेन शत्रव एव शल्लकीनगा वृक्षास्तेषां भङ्गस्य प्रलोभनेन लोभदर्शनेन कृत्वा गजग्रहणेषु हस्तिनां स्वीकरणेषु महान्ति गुरूणि कुतूहलानि विनोदा वर्तन्ते, न पुनरितरेण चौरचारपाशादिना उपायव्यतिकरेण चौराश्च भिल्लादयः, चाराश्च हैरिकाः, पाशाश्च

खिलजगन्मङ्गलविधानामन्त्रेषु सच्चरित्रेष्वभीक्ष्णं रक्षणप्रयत्नः, न पुनः सर्वजनसाधारणाधिकरणेषु प्राणेषु।

यस्य च सप्तसमुद्रमेखलावनिविलोकनजातकौतुकस्याभूदभिमुखीभावः शत्रूणां प्राभृतेषु, न शस्त्राणाम्। विग्रहः प्रणतिषु, नापकारमनीषायाम्। द्विधाभावः सेवाकर्षकेषु, नोपचारकार्याणाम्। पतनं भृत्यभावेषु, न चामराणाम्। प्रसारणं सर्वस्वार्थणेषु, नातपत्राणाम्। प्रबन्धः कण्ठकुठारेषु, न मदविजृम्भितानाम्। प्रतापावलम्बनमसहायसाहसादेशविधिषु, नैश्वर्यसंभावनायाम्। आरोपणं शिरसि प्रणामाञ्जलिषु, न धनुषि मौर्वीणाम्।

यस्य च निजप्रतापसंपादितोत्सवभरायां विश्वंभरायामनन्यसामान्यमात्मैश्वर्यमवलोकमानस्य रथचमूचक्रचर्याचूर्णितनिःशेषशैलचूलेषु हयानीकोद्रेकखरखुरोद्धूतधूलीपटलपूरितसकलपातालमूलेषु करटिघटाकराटोपविलुण्ठितसमस्तमहाटवीगहनेषु सुभटसैन्यदोर्दण्डदलितनिखिलसालवलनेषु द्विषद्विषयेषु परं कात्यायनीप्रतिमास्वेव दुग्रत्वमवतस्थे।

एवं तस्य **कलिङ्गाधिपतेः** सप्तधापयोराशिरत्नालंकारपात्रं कुलकलत्रमिवावनिवलयं निहालयतः स्वभावादेव दयार्द्रहृदयस्य धर्मामृतरसास्वाददोहदविदूरितसंसारसुखोदयस्य ‘शमलकलश इवायं कायो बहिष्कृतयत्ननिर्ने(र्णे)जनोऽपि न जहाति निजां प्रकृतिम्, अत्याधानकाष्ठमिव देहिनां भवदुःखपरशुपाताय विषयोपसेवनमाधुर्यमिति विदन्तोऽपि कथमनया बहिःप्रदर्शितापातसुन्दराडम्बरयावसानविरसया पांसुलयेव श्रिया प्रतार्यन्ते मुग्धबुद्धयः क्षोणीश्वराः’ इति परामर्शश्लथसाम्राज्यसहाभिनिवेशस्य पूतिपुष्पमिव केवलं त्वचि मनोहरं वर्णिनीजनं वितर्कयतः ‘को नु खलु विश्वंभरेश्वरेषु विशांपतिर्यो

---

पाशमण्डनानि ते आदिर्यस्य उपायव्यतिकरस्य तथा तेन ईदृग्विधेन उपायव्यतिकरेण उपायप्रघट्टकेन गजग्रहणेषु महान्ति कुतूहलानि वर्तन्ते[1]।

---

१. अनेकदेशीयेषु बहुषु पुस्तकेषु दृष्टेष्वपीतः परं टीकापाठो नोपलभ्यते. न जाने टीकाकर्त्रास्थान एव पूर्तिर्विहिता, उत टीकासमाप्तितः पूर्वमेव नामशेषतामङ्गीचकारेति महान्संदेहः. इत उत्तरं टिप्पण्याद्यलंकृतो मूलग्रन्थो मुद्रणीयो भविष्यति.



न विवेश कीनाशनगरम्, यं चेयं निसर्गचपला न तत्याज लक्ष्मीः, येन समं जगामेयं भूमिः, यस्मै न दुद्रोह प्रयत्नपरिपालितोऽपि स्त्रीलोकः, यस्मादवरुहे जन्मजरामरणवर्गेण, यस्य न बभूवुराधिराक्षस्यः, यस्मिन्न लेभिरे गोचरतां संसारारणिसमुत्थानोल्लोलाः प्रायेण दुःखानलज्वालाः’ इत्यनादीनवोपदेशविशीर्यमाणमोहपाशस्य विततमप्यात्मनो विभवं परलोकावलोकनप्रतिसरमिवाकलयतः ‘हंहो सरसापराधगोचरखचर, एकदा प्रणामोन्मुखलेखवैखानसीमुखमण्डनघनघुसृणरसलोहितकरे विकचनिचुलमञ्जरीजालशेखरितशैलशिरोदृषदि सिन्दूरपरागपिञ्जरितसुरवारणकुम्भस्थले हरिरोहिणारुणितगगनगमनाङ्गनाकपोलशालिनि प्रवालाङ्कुरोत्करनिकीर्णदिक्चक्रवाले रविकान्तशिलासंचारितदहनवर्तिनि तमिस्त्ररजस्वलतया पुरस्तादपसरन्तीषु नक्षत्रपङ्क्तिषु रक्ताम्बरशोभामिव बिभ्राणे अनवरतखचरसहचरीकरविकीर्यमाणरक्तचन्दनद्रवद्विगुणशोणिम्नि सवितृबिम्बे, नृपजनोदाहरणकथास्विव विशालतां गतासु दिक्षु, निर्मुक्तनीलनिचोलेष्विव प्रकटाकृतिषु प्रासादशिखरेषु, क्षितीश्वरेष्विव राजहंसोपसेव्यमानकोशेषु पौष्करेयकाननेषु, प्रफुल्लकमलकाननमधुपानमत्त इव मन्दमन्दसंचारिणि प्रवाति वैभातिके मरुति, प्रत्यावृत्तेषु च दत्तदक्षिणेषु द्विजेष्विव राजकुलानां सेवावसरेषु कृतास्थानस्य प्रविश्य तलवरः परिमुषितनगरनापितप्राणद्रविणसर्वस्वमेकमैकागारिकमानीया·······दर्शय वस·······। राजा तमवलोक्य धर्मस्थीयानां मुख्यानि विलोकिष्ठ धर्मस्थीया देवानेन मलिनात्मना मलिम्लुचेन द्वितयसाहसमनुष्ठितमेकां तावद्रात्रिर्मुखितान्यच्च सुषुप्तमनुष्यहिंसा कृता। तदस्य पाटच्चरस्य चक्रीवदारोहणोच्छिष्टशालाजिरराजबन्धविडम्बनपूर्वकश्चित्रो बन्धः कर्तव्यो यथायं नक्षत्रवाणिजो दशभिर्द्वादशभिर्वा दिवसैरसून्विसृजति’।

राजा स्वगतम् ‘अहो कष्टं खलु प्राणिनां क्षत्रगोत्रेष्वयमाविर्भावः, यतो यदि न्यायनिष्ठुरतया क्षोणीश्वराः क्षितिरक्षासु दक्षन्ते तदावश्यं पापोपनिपातः परलोकक्षतिसंपातश्च। तदुक्तम्—‘नरकान्तं राज्यं बन्धनान्तो

नियोगः' इति। अथ न दक्षन्ते वर्णाश्रमव्यवस्थाविलोपः कापुरुषतोल्लापश्च। तथा हि ।

क्षीयेतायं क्षणाल्लोकः क्षतरक्षः क्षितीश्वरैः ।
लक्ष्मीक्षयः क्षये तस्य किं राजत्वं च जायते ॥

तदसाध्यव्याधिपरिग्रहीतदेहवदस्य राज्यस्य परित्याग एव स्वास्थ्यं नान्यथा' इत्यवधार्य ।

एषोऽहं मम कर्मशर्म हरते तद्बन्धनान्यास्त वै
ते क्रोधादिवशाः प्रमादजनिताः क्रोधादयस्त्वव्रतात् ।
मिथ्यात्वोपचितस्ततोऽस्मि सततं सम्यक्त्ववान्संयमी
दक्षः क्षीणकषाययोगतपसां कर्तेति मुक्तो यतिः ॥

इति च सुभाषितमास्वनिते निधाय, तेषु कतिपयेषु गणरात्रेष्वनुजस्य राज्यश्रियं समर्प्य, प्रतिपन्नजिनरूपोचिताचरणश्चतुर्थमाश्रममशिश्रियत् ।

अस्तीदानीं तस्यामे**वैकानस्या**ममरमिथुनमान्यमानमणिमयूरकूटं **सहस्रकूटं** नाम निजमहिमावधीरितामरावतीर्वसतिः या नयनीतिरिव नवभूमिका, योगास्थितिरिव विहितवृषभेश्वरावतारा, सांख्यजनतेव कपिलतालयशालिनी, अमरगुरुभारतीव निवारितपरलोकदर्शना, मीमांसेव निरूप्यमाणनियोगभावनादिप्रपञ्चा, पिटकत्रयपद्धतिरिव योगाचारगोचरा, महापुरुषमैत्रीव स्थिराधिष्ठाना, सत्सचिवप्रयुक्तिरिव सुघटितसंधिः, अभिनवविलासिनीव सुकुतूहलविलोकना, कुचभारविद्येव बहुविस्मयावहा, विजयसेनेव बाहुबलविदिता, रूपगुणनिकेव सुपार्श्वागता, कुबेरपुरीव यक्षमिथुनसनाथा, नन्दनवनलक्ष्मीरिवाशोकरोहिणीपेशला, शंभुसमाधिविध्वंसवेलेव प्रकटरा.........रतिजीवितेशा, सुकविकृतिरिव चित्रबहुला, मुनिमतगतिरिव चरणकरणानन्दिनी, भरतपदवीव विधिलयनाट्याडम्बरा, पुरंदरपुरीव संनिहितैरावता, हरपरिषदिवासीनसौरभेया, शिशिरगिरिदरीव निलीनोपकण्ठकण्ठीरवा, मन्थानाचलतटीव रमोपशोभिता, स्रक्पण्यसंस्थेव प्रलम्बितकुसुमशरा, सुरशैलाटनिरिव सविधवि-



धुब्रध्नमण्डला, पाण्ड्यमुद्रेव शकुलियुगलाङ्किता, सच्छकुनसंपत्तिरिव पूर्णकुम्भाभिरामा, कैटभाराततनुरिव कमलाकरसेविता, समवसरणसभेव प्रसाधितसिंहासना, अजडाशयानुगतापि जडनिधिमती, उन्मीलिताहिलोकापि सकलजनोपभोग्या, अहोमशालापि प्रत्यक्षहुताशना, निस्पृहोपभोग्यापि समणिनिचया, विहितमर्त्यावतारापि प्रदर्शितदेवालया ।

यत्र चाभिषेकसलिलेषु कलुषता, मलयजेषु जडघर्षणम्, अक्षतेषु मुशलाभिघातः, स्रक्पुष्पे गुणविमुखता, चरुषु रससंकरः, प्रदीपेषु मलिनोद्गारः, धूपधूमेष्ववसानवैरस्यम्, फलस्तबकेषु पलाशोपरोधः, कुसुमाञ्जलिषु विनिपातः, स्तुतिषु परलोकप्रार्थनम्, जपेषु गूढमन्त्रप्रयोगः, प्रसंख्यानेषु देहसन्नता, अगुरुदहनशालाजिरेषु मलीमसमुखत्वम्, मुनिषु धर्मगुणविजृम्भणम्, प्रसूनोपहारेषु शिलीमुखसंपातः, पटहेषु कराहतिः, नमसितेषु पदबन्धः, रङ्गवलिषु परभागकल्पनम्, यतिचरित्रेषु विग्रहदण्डश्रुतिः, सोपानेषु विषमता, देहिनीषु लङ्घनापराधः, सृपाटीषु करग्रहणम्, अररेषु द्विधाभावः, शास्त्रेषु परदूषणश्रवणम्, उपन्यासयोग्यासु विगृह्यवादः, पर्वक्रियासु वर्णसंकीर्णता, विनेयविनयेषु भ्रुकुटिकरणम्, वातायनेषु बहुमार्गता, केतुकाण्डेषु स्वभावस्तब्धत्वम्, वैजयन्तीषु परप्रणेयता, मणिवितानेषु गुणनिगूहनम्, रजनिमुखेषु गलग्रहोपदेशः, शकुनावासेषु विलयविलसितम्, लिपिकरेषु चाञ्जनोपार्जनम् ।

यस्याश्च प्रतिदिवसं दिविजसभाजनैः पौरजनैरुपहितानि भगवतः स्वकीयपादमुद्रितकुगत्रयपतेर्जिनपतेर्मज्जनमङ्गलानि विदं(?)मानायाः सक्रत्प्रकान्ताभिषेकमहोत्सवलज्जित इव जातखर्वतरभावः पुरो निवसति मन्दरः । अपि च ।

यामेवं प्रादुष्यदनल्पसंकल्पनो विनेयजनः ।
.........विदूरभावादुत्प्रेक्षापक्षतां नयति ॥

श्रीरेषा स्वर्गसिन्धोः किमु पवनबलोल्लोलकल्लोलवारः
स्वर्णच्छायाप्रतानस्तदनु विसरति व्योम्नि कोऽयं प्रकारः ।

दुग्धद्योतावदाता दिशि दिशि च ततः कान्तयो भान्ति मन्ये
स्थानेऽस्मिञ्जैनसौधावलिरुपरि लसत्केतुसौवर्णकुम्भाः ॥

किं च ।

मेरुस्पर्धविवृध्द्यवन्ध्यशिखरोल्लेखस्खलज्ज्योतिषो
यस्या व्यस्यदुपान्तभित्तिविलसद्रत्नासरालत्विषः ।
तुङ्गोत्सङ्गतमङ्गसङ्गविवशव्यापारसारादराः
स्वर्गावासनिवास······सरसाः संजज्ञिरे नामराः ॥

या च

किं पुण्यपुञ्जनिकरस्त्रिजगज्जनानां
लोकेष्वमात्किमु यशः प्रथितं जिनानाम् ।
इत्थं वितर्कवसति······विभाति
विश्वंभराम्बरदिशां प्रविभक्तभावा ॥

ततो महामुनिजनाराधनविनीतवनदेवताविकीर्णप्रसूनोपहारपरिसरत्परिमलोद्याने यदा तेन त्रिजगतीः स्तूयमानवृत्तेन भगवता **सुदत्तेन** सह तव वादाविरोधस्य धर्मावबोधो भविष्यति, तदा भवतो भविष्यन्ति प्रेषणानवद्याः पुनरपीमा विद्याः, भविष्यन्ति च भवान्नभश्चरप्रभुप्रभावः' इत्युक्त्वा तदनुचानचरणार्चनोपचितागण्यपुण्यतया समस्तमहाभागभुवनचक्रवर्ती स **विद्याधरचक्रवर्ती** जगामाभिलषितं विषयम् । अम्बरचरोऽप्याजगा**मोज्जयिनीम्** ।

इतश्च तस्यामेवोरगपुरीस्पर्धिन्या**मुज्जयिन्या**मदूरदेशवर्तिनि भाविभवदुरितकन्दैरिवास्थिवृन्दैरुत्पाण्डुरितवाहिरिके, मूर्तिमद्भिः कर्मभिरिव चर्मभिः कर्मीरगोपानसीपर्यन्ते, पुरोजन्मदुःखानलज्वालाभिरिव वल्लूरमालाभिः पाटलोटजच्छदिषि, तमस्काण्डखण्डापसदैरिव कङ्कच्छदैर्धूसराङ्गणे, कृष्णलेश्यापटलैरिव करटकुलैरुत्कलुषितगेहाग्रभागभुवि, निरयनिवासिभिरिव कुणपकलेवरेषु युद्धोद्धबान्ध(?)दूद्भिः मृगव्यद्भि(?)रुद्वेजनीयनिवेशे, जनंगमावासोद्देशे, तस्माद**मृतमति**महादेवीकृतापराया प्रयोगा**द्यशोमति**-



महाराजवाजिविनाशोद्योगाच्च व्यतीत्य तं वस्तकातराक्षभावमहं सा च मदीयाम्बिका चरणायुधान्वये सहैव जन्म प्रत्यपद्यावहि । तदनन्तरमेव च वृषदंशदंष्ट्राक्रकचगोचरतयावयोर्लोकान्तरगिरि मातरि पुनः काकतालीयन्यायेन कृतकोणिकोत्कलिकामालवालिकातीव जरत्कुटीरनिकटे कुरटकुलायकोटरे चिरादवहिता सती कर्णाभ्यर्णवर्णनिर्णयेनावां निगृह्य परिगृह्य च तनूद्वहनिर्विशेषं पोषयामास ।

व्यतीतस्वभावे च कदाचिदसावासन्नविद्याधरीजनकेलिनर्मा **चण्डकर्मा** समाचरितस्वैरविहारस्तत्र स्वपचपाटकोपकण्ठभूमिकायामावामेकस्यां तावसायिसुतस्य हस्तगतौ समालोक्यासद्रूपसंपदालोकविस्मितमनस्कारस्तुष्टिप्रदानोत्पादितदिवाकीर्तिनन्दनानन्दः समादायानीय च **यशोमति**महाराजायादीदृशत् । राजाप्यावामवेक्ष्य जाताश्चर्यः 'अहो, अपर एव कोऽप्यनयोः शकुनयोः सकलताम्रचूडकुलातिशायी शरीरसंनिवेशः' इति विमृश्य '**चण्डकर्मन्**, तिष्ठतु तावदेतत्तवैव हस्ते पत्त्ररथमिथुनम् । अहमिदानीमेवेमं पुष्परथं सनाथीकृत्यैतत्कर्णीरथारूढविलासिनीजनपरिवृतः सहान्तःपुरेण पीठमर्दविटविदूषकनायकसामाजिकलोकानुगतः सहस्रकूटचैत्यालयोपवने मकरध्वजपूजार्थं व्रजिष्यामि । तत्र पुनर्युद्धविनोदायेदं प्रदर्शयितव्यम्' । **चण्डकर्मा** 'यथाज्ञापयति देवः' इत्यभिधाय निश्चक्राम । आजगाम च गैरिकरसारुणितपटकुटीप्रभाजालविराजमानकुजराजीकमनेकोपकार्यापर्यायपरिगतपर्यन्तावनीकं तदुद्यानम् । तत्र च शकुनसर्वज्ञेनाखुरिणा भागवतेन नक्षत्रपाठकेन **धूमध्वजेन** द्विजातिना खन्यवादविदा **हरप्रबोधेन** जटिना खरपटौषधबुधेन **सुगतकीर्तिना** शाक्येन सह मुधा संबन्धसार्धुकस्कन्धावलम्बितपतगपञ्जरः स **चण्डकर्मा**

मदनशरचित्रकान्तैर्वनदेवीपाणिपेशलप्रान्तैः ।
अधरदलरागपटलश्लाघ्यैरिव काननश्रीणाम् ॥
तरुणीचरणास्फालनसंक्रान्तालक्तकद्रवोद्रेकम् ।
विकिरद्भिरिव पलाशैरशोकमालोकयत कान्तम् ॥

तन्मूलनिवासवन्तं सुदत्तभगवन्तं च । स्वगतम्—'अहो कथमनेन भगवता परलोकलाञ्छनकरावकाशः कथनीयतां नीतः शरीरसंभवाभिनिवेशः क्लेशः । यतः ।

काश्यं क्षुत्प्रभवं कदन्नमशनं शीतोष्णयोः पात्रता
पारुष्यं च शिरोरुहेषु शयनं मह्यास्तले केवले ।
एतान्येव गृहे वहन्त्यवनतिं यान्त्युन्नतिं कानने
दोषा एव गुणीभवन्ति मुनिभिर्योग्ये पदे योजिताः ॥

तदलमत्र विकल्पपरम्परया । संभाषामहे तावदेनं संयमिनम् । न खलु रत्नाकरकल्लोला इव प्रायेण भवन्ति मुनयः शून्यशीलाः ।' ततः समुपसद्य निषद्य च तत्र च विवादाध्येषणोत्कर्षकलुषधिषणः किलैवमाह सूरिः—

'अहो विवेकशून्यानामात्मानर्थाश्रयाः क्रियाः ।
न ह्यङ्गोद्वेगतो मुक्तिर्नृणां मरुकुरङ्गवत् ॥

यस्मादेष खलु

अकर्ता निर्गुणः शुद्धो नित्यः सर्वगतक्रियः ।
अमूर्तश्चेतनो भोक्ता पुमान्कपिलशासने ॥

स यदा दुःखत्रयोपतप्तचेतास्तद्विघातकहेतुजिज्ञासोत्सेकितविवेकश्रोताः स्फाटिकाश्मानमिवानन्दात्मानमप्यात्मानं सुखदुःखमोहावपरिवर्तैर्महदहंकारादिविवर्तैः कलुषयन्त्याः सत्त्वरजस्तमःसाम्यावस्थापरनामवत्याः सनातनव्यापिगुणाधिकृतेः प्रकृतेः स्वरूपमवगच्छति, तदायोमयगोलकानलतुल्यवर्गस्य बोधवद्बहुधानकसंसर्गस्य सति विसर्गे सकलज्ञानज्ञेयसंबन्धवैकल्यं कैवल्यमवलम्बते तदा द्रष्टुः स्वरूपेऽवस्थानमिति वचनात् । ततश्च

अनुभवत पिबत खादत विलसत मानयत कामितं लोकाः ।
आत्मव्यक्तिविवेकान्मुक्तिर्ननु किं वृथा तपत ॥'

**धूमध्वजः**—

'घृष्यमाणो यथाङ्गारः शुक्लतां नैति जातुचित् ।
विशुध्यति कुतश्चित्तं निसर्गमलिनं तथा ॥



न चापरमिषस्ताविः समर्थोऽस्ति यदर्थोऽयं तपःप्रायशः सफलायासः स्यात् । यतः ।

द्वादशवर्षा योषा षोडशवर्षोचितस्थितिः पुरुषः ।
प्रीतिः परा परस्परमनयोः स्वर्गः स्मृतः सद्भिः ॥

ततश्च—

विहाय देशस्य सुखानि येषां दुःखेन सौख्येषु मनीषितानि ।
ते कोरकैः कर्षणकारशीलाः शालीन्पुनर्नूनमुपाहरन्ति ॥'

**हरप्रबोधः**—

'अन्यथा लोकपाण्डित्यं वेदपाण्डित्यमन्यथा ।
अन्यथा तत्पदं शान्तं लोकः क्लिश्नाति चान्यथा ॥

भगवतो हि गर्भस्य सकलजगदनुग्रहसर्गौ दक्षिणो वामश्च । तत्र लोकसंचारणार्थं दक्षिणो मार्गः । तदाह—

प्रपञ्चरहितं शास्त्रं प्रपञ्चरहितो गुरुः ।
प्रपञ्चरहितं ज्ञानं प्रपञ्चरहितः शिवः ॥
शिवं शक्तिविनाशेन ये वाञ्छन्ति नराधमाः ।
ते भूमिरहिताद्बीजात्सन्तु नूनं फलोत्तमाः ॥

भुक्तिमुक्तिप्रदस्तु वाममार्गः परमार्थतः । तदाह—

अग्निवत्सर्वभक्षोऽपि भवभक्तिपरायणः ।
भुक्तिं जीवन्नवाप्नोति मुक्तिं तु लभते मृतः ॥

इममेव च मार्गमाश्रित्याभाषि भासेन महाकविना—

पेया सुरा प्रियतमामुखमीक्षणीयं
ग्राह्यः स्वभावललितोऽविकृतश्च वेषः ।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान्स पिनाकपाणिः ॥'

**सुगतकीर्तिः**—'आत्मग्रह एव प्राणिनां तावन्महामोहावन्ध्यान्ध्यम् । यतः ।

संपश्यत्यात्मानं तस्यात्मनि शाश्वतः स्नेहः ।
स्नेहात्सुखेषु तृष्यति तृष्णा दोषांस्तिरस्कुरुते ॥
आत्मनि सति परसंज्ञा स्वपरविभागात्परिग्रहद्वेषौ ।
अनयोः संप्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥

विगलिताग्रहे चात्मग्रहे निराश्रवचितोत्पत्तिलक्षणो निरोधापरनामपक्षो मोक्षः स्वलक्षणेऽक्षिणामक्षूणः । तदाह—

यथा स्नेहक्षयाद्दीपः प्रशाम्यति निरन्वयः ।
तथा क्लेशक्षयाज्जन्तुः प्रशाम्यति निरन्वयः ॥

एवं च सति केशोल्लुञ्चनतप्तशिलारोहणकेशदर्शनाशब्रह्मचर्यादयः केवलमात्मोपघातायैव । तदुक्तम्—

वेदप्रामाण्यं कस्यचित्कर्तृवादः स्नाने धर्मेच्छा जातिवादावलेपः ।
संतापारम्भः क्लेशनाशाय चेति ध्वस्तप्रज्ञानां पञ्चलिङ्गानि जाड्ये ॥

इदमेव च तत्त्वमुपलभ्यालापि **नीलपटेन**—

पयोधरभरालसाः स्मरविघूर्णितार्धेक्षणाः
क्वचित्सलयपञ्चमोच्चरितगीतडङ्कारिणः ।
विहाय रमणीरमूरपरमोक्षसौख्यार्थिना-
महो जडिमडिण्डिमो विफलभण्डिपाखण्डिनाम् ॥

स्त्रीमुद्रां झषकेतनस्य महतीं सर्वार्थसंपत्करीं
ये मोहादवधीरयन्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं मुण्डीकृता लुञ्चिताः
केचित्पञ्चशिखीकृताश्च जटिनः कापालिकाश्चापरे ॥'

**चण्डकर्मा**—साध्वाह खलु **सुगतकीर्तिः** । यतः ।

पश्यन्ति ये जन्म मृतस्य जन्तोः पश्यन्ति ये धर्ममदृष्टसाध्यम् ।
पश्यन्ति येऽन्यं पुरुषं शरीरात्पश्यन्ति ते नीलकपीतकानि ॥

ततश्च प्राणापानसमानोदानव्यानव्यतिकीर्णेभ्यः कायाकारपरिणतिसंकीर्णेभ्यो वनपवनावनिपवनसख्येभ्यः पिष्टोदकगुडधातकीप्रमुखेभ्य इव मदशक्तिः पर्णचूर्णक्रमुकेभ्य इव रागसंपत्तिस्तदात्मकार्यगुणस्वभावतया चैतन्यमुपजायते । तच्च गर्भादिमरणपर्यन्तपर्यायमतीतं सत्पादपात्पतितं पत्रमिव न पुनः प्ररोहति । तथा च परलोकभावे जलबुद्बुदस्वभावेषु जीवेषु मदशक्तिप्रतिज्ञाने किमर्थोऽयं लोकस्यात्मसपत्नः प्रयत्नः । तदपहायामीषां जीवन्मृतमनीषाणां मनीषितमेतत्कुलाश्रयैराश्रेयम् ।



यावज्जीवेत्सुखं जीवेन्नास्ति मृत्योरगोचरः ।
भस्मीभूतस्य शान्तस्य पुनरागमनं कुतः ॥

भगवन्,

रिक्तस्य जन्तोर्जातस्य गुणदोषावपश्यतः ।
विलब्धा बत केनामी सिद्धान्तविषयग्रहाः ॥

किं च ।

असमाधिकरो वादस्तत्त्वाख्यानं विरुद्धबोधानाम् ।
भवति हि कोपाय परं शिक्षा व्यालेष्विव गजेषु ॥

अपि च ।

व्याक्रोशी व्यापहासी वा विपर्यस्तैः सदोदिते ।
स्वस्य मौर्ख्यमुपेक्षायामहो कष्टाविशिष्टता ॥
स्तौतु निन्दतु वा लोको विचित्ररुचिनायकः ।
तथापि सज्जनैर्भाव्यं यथा तत्त्वोपदेशनैः ॥

इत्यनुध्याय

दशनोस्रैर्दिशः कुर्वन्सपुण्याङ्कुरिता इव ।
सूरिः सूनृतवागेवं बभाषे स्वरितस्वरः ॥
बन्धमोक्षौ सुखं दुःखं प्रवर्तननिवर्तने ।
यद्येष प्रकृतेर्धर्मः किं स्यात्पुंसः प्रकल्पनम् ॥
अकर्तापि पुमान्भोक्ता क्रियाशून्योऽप्युदासिता ।
नित्योऽपि जातसंसर्गः सवर्गोऽपि वियोगभाक् ॥
शुद्धोऽपि देहसंबद्धो निर्गुणोऽपि शमुच्यते ।
इत्यन्योन्यविरुद्धोक्तं न युक्तं कापिलं वचः ॥

किं च।

विष्वग्व्यापी भवेदात्मा यदि व्योमवदञ्जसा।
सुखदुःखादिसद्भावः प्रीतयेताङ्गवद्बहिः॥
नित्ये मूर्ते सदा पुंसि कर्मभिः स्वफलेरिभिः।
कुतो घटेत संबन्धो यथाकाशस्य रज्जुभिः॥

घृष्यमाणाङ्गारवदन्तरङ्गस्य विशुद्ध्यभावे कथमिदमुदहारि **कुमारिलेन**—

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे॥

कथं चेदं वचनमजर्यम्—

समस्तेषु वस्तुष्वनुस्यूतमेकं समस्तानि वस्तूनि यन्न स्पृशन्ति।
वियद्वत्सदा शुद्धिमद्यत्स्वरूपं ससिद्धौपलब्धिः स नित्योऽहमात्मा॥

कथं चेयं श्रुतिः समगंस्त—

न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति।
अशरीरं वा वसन्तं प्रिया प्रिये न स्पृशतः॥

इति। ततश्च।

मलकलुषतायातं रत्नं विशुद्ध्यति यत्नतो
भवति कनकं तत्पाषाणो यथा च कृतक्रियः।
कुशलमतिभिः कैश्चिद्धन्यैस्तथाप्तनयाश्रितै-
रयमपि गलत्क्लेशाभोगः क्रियेत परः पुमान्॥
रागाद्युपहतः शंभुरशरीरः सदाशिवः।
अप्रामाण्यादनुत्पत्तेः कथं तत्रागमोत्सवः॥

तदुक्तम्—

वक्ता नैव सदाशिवो विकरणस्तस्मात्परो रागवा-
न्द्वैविध्यादपरं तृतीयमिति चेत्तत्कस्य हेतोरभूत्।
शक्त्या चेत्परकीयया कथमसौ तद्दानसंबन्धतः
संबन्धोऽपि न जाघटीति भवतां शास्त्रं निरालम्बनम्॥



एवं च सतीदं न संगच्छते—

अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात्।
नादरूपं समुत्पन्नं शास्त्रं परमदुर्लभम्॥

रागादिभिरुपद्रुतस्यापि रुद्रस्याप्ततायां क्लेशकर्मविपाककषायैरपरामृष्टः पुरुषविशेष ईश्वर इति

ऐश्वर्यमप्रतिहतं सहजो विराग-
स्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु।
आत्यन्तिकं सुखमनावरणा च शक्ति-
र्ज्ञानं च सर्वविषयं भगवंस्तवैव॥

इति च विरुध्यते। अन्यथाभूतस्याप्ततायाम्

आस्तां तवान्यदपि तावदतुल्यकक्ष-
मैश्वर्यमीश्वरपदस्य निमित्तभूतम्।
त्वच्छेफसोऽपि भगवन्न गतोऽवसानं
विष्णुः पितामहयुतः किमुतापरस्य॥ इति,

रथक्षोणीयन्ता शतधृतिरगेन्द्रो धनुरथो
रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति।
दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधि-
र्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः॥

इति च ग्रहिलभाषितम्। तथेदमपि न प्राग्रहरम्।

अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा॥ इति,

भोग्यामाहुः प्रकृतिमृषयश्चेतनां शक्तिशून्यां
भोक्ता नैनां परिणमयितुं बन्धवर्ती समर्थः।
भोगेऽप्यस्मिन्भवति मिथुने पुष्कलस्तत्र हेतु-
र्नीलग्रीव त्वमसि भुवनस्थापनासूत्रधारः॥ इति च,

आकाशकल्पस्य सदाशिवस्य परं प्रतिप्रेरकता न युक्ता।
स्वयं पराप्रेषित एव शंभुर्भवेत्परप्रेरयितेति चिन्त्यम्॥

जगत्कर्तृवादश्च पूर्वमेव चिन्ततः। तथा हि—

कर्ता न तावदिह कोऽपि धियेच्छया वा
दृष्टोऽन्यथा कटकतावपि संप्रसङ्गः।
कार्यं किमत्र सदनादिषु तक्षकाद्यै-
राहत्य चेत्त्रिभुवनं पुरुषः करोति ॥

कर्मपर्यायत्वे चेश्वरस्य सिद्धसाध्यता। तदाह—

विधिर्विधाता नियतिः स्वभावः कालो ग्रहश्चेश्वरदैवकर्म।
पुण्यानि भाग्यानि तथा कृतान्तः पर्यायनामानि पुराकृतस्य ॥

कथमचेतनं कर्म परोपभोगार्थं प्रवर्तत इति चेत्तन्न।

रत्नायस्कान्तवातादेरचितोऽपि परं प्रति।
यथा क्रियानिमित्तत्वं कर्मणोऽपि तथा भवेत् ॥

तदुक्तं **रत्नपरीक्षा**याम्—

न केवलं तच्छुभकृन्नृपस्य मन्ये प्रजानामपि तद्विभूत्यै।
यद्योजनानां परतः शताद्धि सर्वाननर्थान्विमुखीकरोति ॥

विष्टि कर्मकरादीनां चेतनानां सचेतनान्।
द्रष्टा चेष्टा विधेयेषु जगत्स्रष्टरि सास्तु वः ॥

तस्मादिदं सुभाषितद्वयमत्रावसरवत्।

स्वयं कर्म करोत्यात्मा स्वयं तत्फलमश्नुते।
स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्निन्द्यः सोऽपि प्रतिनियतकर्मान्तफलदः।
फलं कर्मायत्तं यदि किमपरैः किं च विधिना
नमः सत्कर्मभ्यः प्रभवति न येभ्यो विधिरपि ॥

सोऽहं तदेव पात्रं तान्येतानि च गृहाणि दातृणाम्।
इति नित्यं विदुषोऽपि च दुराग्रहः कोऽस्य नैरात्म्ये ॥

संतानो न निरन्वये विसदृशे सादृश्यमेतन्न हि
प्रत्यासत्तिहिते कुतः समुदयः का वासना वास्थिरे।



तत्त्वे वाचि समस्तमानरहिते ताथागते सांप्रतं
धर्माधर्मनिबन्धनो विधिरयं कौतस्कुतो वर्तताम् ॥

दृष्टात्ययात्तत्त्वमदृष्टमेष प्रसाधयेच्चेद्वचनासरालः।
तदा खरोऽक्ष्णोः श्रुतितो विषाणे विधन्निषेधंश्च जयी कुलालः(?) ॥

किं च।

नाहं नैव परो न कर्मभिरिह प्रायेण बन्धः क्वचि-
द्धोक्ता प्रेत्य न तत्फलस्य च वदेदित्थं स बौद्धो यदि।
कस्मादेष तपःसमुद्यतमनाश्चैत्यादिकं वन्दते
किं वा तत्र तपोऽस्ति केवलमयं धूर्तैर्जडो वञ्चितः ॥

तदहर्जस्तने हेतो रक्षो दृष्टेर्भवस्मृतेः।
भूतानन्वयनाज्जीवः प्रकृतिज्ञः सनातनः ॥

पृथिव्यादिवदात्मायमनाद्यनिधनात्मकः।
मध्ये सत्त्वात्कुतस्तत्त्वमन्यथा तव सिध्यति ॥

कायाकारेषु भूतेषु चित्तं व्यक्तिमवाप्नुवत्।
तदात्मगुणकार्यत्वैः प्रकल्पेत यदि त्वया ॥

जलान्मुक्तानलः कष्टाच्चन्द्रकान्तात्पयःप्लवः।
भवन्व्यजनतो वायुस्तत्त्वसंख्यां विहापयेत् ॥

जलादिषु तिरोभूता दुर्वरादेस्तदुद्भवे।
धरादिषु तिरोभूता चित्ताचित्तमपीष्यताम् ॥

पुंसि तिष्ठति तिष्ठन्ति शरीरेन्द्रियधातवः।
यान्ति यातेऽन्यथैतासां सत्त्वे सत्त्वं प्रसज्यताम् ॥

विरुद्धगुणसंसर्गादात्मा भूतात्मको न हि।
भूजलानलवातानामन्यथा न व्यवस्थितिः ॥

विज्ञानसुखदुःखादिगुणलिङ्गः पुमानयम्।
धारणे रणदाहादिधर्माधाराधरादयः ॥

अथ मतम्—

पित्तप्रकृतिर्धीमान्मेधावी क्रोधनोऽल्पकामश्च।

प्रस्वेद्यकालपलितो भवति नरो नात्र संदेहः ॥

तन्न प्रवर्हम् ।

वृद्धिहानी यथाग्नेस्तामेधौत्कर्षापकर्षतः ।
पित्ताधिको न भावाभ्यां बुद्धेः संप्राप्नुतस्तथा ॥
गुरूपासनमभ्यासो विशेषः शास्त्रनिश्चये ।
इति दृष्टस्य हानिः स्यात्तथा च तव दर्शने ॥
कुतश्चित्पित्तनाशेऽपि बुद्धेरतिशये क्षणात् ।
कुतः प्रभवभावोऽत्र स्याद्बीजाङ्कुरयोरिव ॥
बुद्धिं प्रति यदीष्येत पित्तस्य सहकारिता ।
का नो हानिर्भवत्वेवं नालवृद्धौ यथाम्भसः ॥

एवं च सतीदं न किंचित् ।

देहात्मिका देहकार्या देहस्य च गुणो मतिः ।
मतत्रयं समाश्रित्य नास्त्यभ्यासस्य संभवः ॥

तत्त्वज्ञानं च जलादिज्ञानमिवाविहितानुष्ठानं न भवति संसारतृष्णोपशान्तिकरणम् । असंजाततदर्थक्रियारम्भः समधिगतेतिकर्तव्योऽपि कृषीवल इव न संयुज्यते फलैः । अनायास्यकायं सेवक इवात्मवानपि न लभते परां पदवीम् । ततश्च

तत्त्वं गुरोः समधिगम्य यथार्थरूपं
तद्भावभावनमनोरथनिर्वृतात्मा ।
आयास्य कायमनवद्यतया तपोभि-
र्जन्तुः परं पदमुपैति यथा क्षितीशः ॥'

सविधविद्याधरविनोदकर्मा **चण्डकर्मा**—'भगवन्, विदूरदूरागमवासनामानसां को नु खलूपायः सुमेधसामभ्युदयनिःश्रेयसाधिगमाय ।' 'धर्मः ।' 'को नामायं धर्मः ।' 'अहिंसापूर्वकाग्रहस्तत्त्वपरिग्रह एव ।' 'ननु हिंसास्माकं कुलधर्मः । सा कथं त्यजनीया ।' 'अहो महापुरुष, एवमेवैतत्कुक्कुटमिथुनं पुरा जन्मनि हिंसां कुलधर्ममनुमन्यमानं महतीं दुःखपरम्परामनुबभूव ।' **चण्डकर्मा** (सविस्मयः)—'भगवन्, किं पुनः पुरा जन्मनीदं



किंचिद्दुष्कृतमकार्षीत् । कथं वा तदन्वभूत् ।' 'भगवन्, समाकर्णय । अस्यामेवो**ज्जयिन्या**मस्यैव **यशोमति** महाराजस्य वंशे

आसी**च्चन्द्रमति**र्**यशोधर**नृपस्तस्यास्तनूजोऽभव-
त्तौ चण्ड्याः कृतपिष्टकुक्कुटबलीक्ष्वेडप्रयोगान्मृतौ ।
श्वा केकी पवनाशनश्च पृषतो ग्राहस्तिमिश्छागिका
भर्तास्यास्तनयश्च गर्वरपतिर्जातौ पुनः कुक्कुटौ ॥

ततः प्रशान्ताशयाशेषमलजालास्ते पञ्चापि लोकपाला इव तं **सुदत्त**भगवन्तं प्रणम्य जगृहुः पाण्डुतनया इव सद्दर्शनपूर्वकाणि त्रिदशैरपि दुरापाणि श्रावकव्रतानि । प्रयुक्तलोकायतमतधर्मा अचिरसमाजं नभश्चरपदावाप्तिशर्मा **चण्डकर्मा**पि धर्मावबोधात्परिपूर्णशापावधिः पूर्वविद्यासंदोहासादसंपादिताम्बरविहारः समाचरितसहचराश्चर्यव्यवहारः प्रविचचार खेचरनिवेशं देशम् ।

तदनु चावामप्यहो **मारदत्त**महाराज, **सुदत्त**भगवद्भाषितपुरावृत्तवृत्तान्तश्रवणेनातीवजातनिर्वेदौ तद्व्रतपरिग्रहाच्चेदानीं खल्वावयोरभिस्पृष्टबीजवन्नाविर्भावः कर्मणामित्यानन्दनादोदीर्णनिगरणावदूष्यवपुषावपि दूष्याभ्यन्तरस्थितः स **यशोमति**महाराजः शय्योत्सङ्गमागतायाः कुसुमावलीमहादेव्याः शब्दवेधित्वकौशलं दर्शयितुं शयनासन्नशरकुरलीमध्यादकर्माणकायमेकं सायकमादाय विव्याध । ततश्च विधातुः कल्मषशेषमनुविभावयिषोर्वशात्परित्यक्तकुक्कुटपर्याययोरशुचौ लालाहारे कृमिजालसमाकुले बभूव । तद्व्यारपर इव निरयनिलये गर्भे पुनरावयोर्जन्म । आवाभ्यामवाप्ताधाना च सा किल **यशोमति**महीपालप्रणयपादपप्रथमकन्दली कुसुमावली महादेवी रहसि

नेत्रे विलासविरले शरपाकपाण्डु
गण्डद्वयं हरितरत्नरुची कुचाग्रे ।
मध्यो वलित्रयखिलस्तनुजावलीय-
मुत्तम्भितेव विकटा वनिता सुगर्भे ॥

जातस्वागताय तस्मै महीशाय निजदोहदान्येवमाशशंस—'देव, विधीयतां विष्वग्घुष्टेन सर्वेषामपि सत्त्वानामभयप्रदानम् । देव, निवार्यतां कल्पपालापणेषु

मैरेयव्यवहारः । देव, प्रतिषिध्यतां महानसेषु क्रव्यागमः । देव, प्रस्तूयन्तामेवमपरा अपि तास्ताः क्रिया यत्र नोपयोगो मकारादित्रयस्य । देव, श्रवणकुतूहलानि महान्ति मे जीवदयागमेषु । देव, खरमवलोकनाभिलाषः संयतोपास्तिषु । देव, परं मनोरथाः संयमपरायणीनां तापसीनां चरणाराधनेषु ।' राजा 'नूनमेवंविधप्रसादाद्देवीदोहदादस्मिन्गर्भेऽवतीर्णस्य कस्यचित्सुकृतिनो भविष्यति महती खल्वार्हती वासना । भवतु नामैवम् । तथाप्येतदभिलाषः पूरयितव्य एव । अन्यथा

गर्भिणीनां मनः खेदात्स्यादपत्येष्वकल्पता ।
लतानां फलसंपत्तिः कुतो मूलव्यथागमे ॥'

इति वितर्क्य, आहूय च यथायथाप्रसिद्धिप्रवृत्ताख्यान्नरान्मुखात्तथैवान्वतिष्ठत् । सापि देवी व्यतिक्रम्य किल चिक्कसाकीर्णोरुपयोधरव्यवस्थामवस्थामवाप्य चावीसमयमसूतावाममृतमथनवेलेव लक्ष्मीचन्द्रमसौ पुनरावयोः कृते **यशस्तिलक** इति **मदनमति**रिति च वंशोचिते मातृदोहदाश्रिते **चाभयरुचिरित्यभयमति**रिति च नामनि । व्यतिक्रान्तवति च शैशवे, जातवति च सकलकलाकमलिनीकुलावतारसरसि कुमारवयसि, तव सपत्नाननेष्विव समधिकमधिरूढवति कुन्तलेषु कृष्णत्वे, तव गुणेष्विव विशीलतां प्रतिपन्नेषु लोचनेषु, तव यशसीव परिपूर्णवति वदनमण्डले, तव वैरिवर्ग इव क्षामतामाश्रितवति मध्यभागे, तव पराक्रमेष्विव प्रकटतां गतेषु समस्तेष्वपि निम्नोन्नतदेशेषु प्रदेशेषु, अस्य खल्व**भयरुचि**कुमारस्य राजा करिष्यति भविष्यन्त्या पक्षतौ युवराजकण्ठिकाबन्धमिमाश्चा**भयमतिं** भर्तृदारिकां दास्यत्यहिच्छत्राधिपतये क्षत्रियायेत्यमात्यपरिवारवनितास्वाविर्भवन्तीषु जनश्रुतिषु, स **यशोमति**महीपालः स्वयं करार्पितदंशैरशृङ्खलामालः सह श्वगणिभिर्जोषधिषणपुरुषालापोल्लास्यमतिरेकदा पापर्द्धिबुध्या विधीतविषयमनुसरँस्तत्सहस्रकूटोद्यानप्रसूनपरिमलाघ्राणवलितलोचनालियुगलस्तं **सुदत्त**भगवन्तमवलुलोके । नर्मसचिवकुमारोऽ**जमारः** 'क्षितिपते, दुष्करमस्य मुनेरमस्य मुनेरवलोकनादद्य भविष्यति पापर्द्धिः सफलर्द्धिः । राजा मनागाविग्नमनाश्चुक्षोभ । अत्रावसरे **सुदत्त**भगवद्वन्दनार्थमा-



गतेन प्रणयप्रश्रयाश्रयेण **कल्याणमित्र**नाम्ना **वैदेहकेश्वरेण** स विशांपतिरेवमूचे—'राजन्, किमकाण्डे मन्युमलिनमाननम् ।' **अजमारः**—'राजश्रेष्ठिन्, एतस्यामङ्गलीभूतस्य नग्नस्यावलोकनात् ।' **कल्याणमित्रः**—'राजन्, मैवमभिनिवेशं कृथाः । एष खलु भगवान्पुरा **कलिङ्गा**धिपतिस्तव पितुरन्वयसंबन्धादेव नितरां माननीयः सकलदिक्चक्रविक्रमाक्रान्तविनतसामन्तमुखमुकुरुन्दीकृतचरणनखमण्डलोऽभिसारिकामिव स्वयमागतां श्रियं चपलाङ्गनामिवावमत्य निखिललोकमहनीये तपसि वर्तमानः परमेष्ठी कथं नामावैशिकलोकलोचनानन्देन त्वया मनसाप्यवमन्तव्यः । किं च ।

सुखानुभवने नग्नो नग्नो जन्मसमागमे ।
बाल्ये नग्नः शिवो नग्नो नग्नश्छिन्नशिखो यतिः ॥
नग्नत्वं सहजं लोके विकारो वस्त्रवेष्टनम् ।
नग्ना चेयं कथं वन्द्या सौरभेयी दिने दिने ॥
पापिष्टं पापहेतुर्वा यश्चानिष्टविचेष्टिनम् ।
अमङ्गलकरं वस्तु प्रार्थितार्थविघाति च ॥
ज्ञानध्यानतपःपूताः सर्वसत्त्वहिते रताः ।
किमन्यन्मङ्गलं लोके मुनयो यद्यमङ्गलम् ॥
भावः क्वापि भवेद्राज्ञां सर्वातिथ्यक्रमः समः ।
किं व्योमापाश्रयः पूषा पक्षपातात्प्रकाशते ॥
लोलेन्द्रिया दुराम्नायाः परेच्छावशवृत्तयः ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रचक्रिरे ॥
धर्मकर्मोद्यतोऽप्येष मुनिलोकस्त्वया यदा ।
नीयेत वमतिं देव तदा कास्य तपःक्रिया ॥
वने वा नगरे वापि वपुःशेषा मुनीश्वराः ।
निर्विघ्नं यत्तपस्यन्ति तन्माहात्म्यं तव प्रभोः ॥
अलं दुराग्रहैर्नाथ मान्यमेतन्मुनिं प्रति ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥

तत्पर्याप्तमनया दुर्वासनया । गच्छ । वन्दामहे तपःप्रभावप्रणतनिखिलदि-

कपालमौलिमणिवेदिकाधिदेवतायमानचरणमेनं परमेष्ठिनम् । अतस्तौ द्वावपि मेरुमिव सूर्याचन्द्रमसौ तं भगवन्तं प्रदक्षिणीकृत्य कृतप्रणामौ च पुरः प्रत्यक्षोदयौ नयविनयाविवोपविविशतुः । भगवान्नरेश्वरमुररीकृत्योद्धृत्य च भविष्यल्लक्ष्मीलतोल्लासप्रथमपल्लवोल्लेखमिव पञ्चशाखम्

कामधेनुरखिलोत्सवसङ्गे श्रीसमागमनसूचनदूती ।
देवमानवमनोरथसिद्धिर्धर्मवृद्धिरियमस्तु सदा वः ॥

अपि च ।

त्वं वीरवैरिवनितानयनेन्दुकान्त
निष्पन्दसंपदि मतोऽसि नरेश राजा ।
आदित्य एव च भवान्नहिताङ्गनाङ्ग-
निस्तोकशोकतपनोपलदीपनेषु ॥'

**राजा** 'क्वास्माकमेवंविधानि मनोदुर्विलसितानि । क्व चेयं भगवतामस्तुङ्का-रकल्याणपरम्पराशंसनपरायणता । तदत्रास्य दुश्चरितस्य निजशिरःकमलेन भगवच्चरणार्चनमेव प्रायश्चेतनं नान्यत् ।' इति परमपराक्रमतया निःसीमसा-हसतया च कृताभिनिवेशो मुनीशेन महीशः किलैवमादिदिशे—'विशांपते, मैवं मंस्थाः । चित्तानि हि देहिनां स्वभावचञ्चलतयाकूपारकल्लोलजलानी-वोच्चावचविषयवृत्तान्तानि भवन्ति । तदलं दुरभिनिवेशेन ।' **यशोमति**महा-राजः सशिरःकम्पम्—'अहो, भगवतामतीन्द्रियेष्वपि पदार्थहृदयेषु साति-शया शेमुषी' इति क्षणमात्रं विस्मृत्य भगवन्तमापपृच्छे—'भगवन्, किं नाम मे मनो दुरभिनिवेशमध्यशेत । भगवान्क्वेत्याद्याश्रयं तदाशयमुपादिशत् । **कल्याणमित्रः**—'काश्यपीपते, नैतदाश्चर्यम् । अयं हि भगवान्महर्द्धिसंप-न्नतयाष्टाङ्गमहानिमित्तनिलयः सर्वावधिसमक्षसाक्षात्कृतसकलवस्तुविषयः करतलामलकमिव कालत्रयत्रिलोकोदरविवरवर्तिसमर्थमपि पदार्थसार्थं कलय-ति । तदन्यदेव किंचिदेतत्सभासभाजनकरं नष्टमुष्टिचिन्तालाभालाभसुखदुःख-जीवितमरणजन्मान्तरगोचरमापृष्टव्यः । क्षितिपतिः (सानुनयम्)—भगवन्, मम पितामहो **यशोर्घ**महाराजस्तादृशं लोकोत्तरं चरित्रमाचर्यैदानीं किं नु



खलु लोकमध्यास्ते पितामही **चन्द्रमतिः** पिता **यशोधर**महाराजोऽमृत-**मतिश्च** माता ।' भगवान्—'समाकर्णय ।

राजन्**यशोर्घ**नृपतिः पलितं विलोक्य
निर्विद्य संसृतिसुखेषु मुनिर्बभूव ।
राज्ये **यशोधर**नृपं तनयं निवेश्य
तत्याज निस्पृहतया तृणवद्विभूतिम् ॥
जैनागमोचितमुपास्य तपश्चिराय
प्रायोपवेशनविधानविमुक्तकायः ।
ब्रह्मोत्तरं त्रिदशवेशमवाप्य जात-
स्तत्कल्पलेखयतिरद्भुतमासमेतः ॥
ब्रह्मपुत्रविधिना सह मात्रा तं **यशोधर**नृपं विनिपात्य ।
जातकुब्जरतिरङ्गविरामात्पञ्चमं निरयमाप तवाम्बा ॥

या च **चन्द्रमति**स्तव पितामही यश्च **यशोधर**महाराजस्तव पिता तौ द्वावपि द्विजातिभिराश्राविसकलसत्त्वोपहारफलस्य पिष्टताम्रचूलस्यालम्भ-नवल्लनाभ्या**ममृतमति**प्रयुक्तसौल्किकेयवशात्प्रेत्य निरवधीनि दुःखानि बहुषु भवान्तरेष्वनुभूय सांप्रतं तवैव यमलतयापत्यमाजग्मतुः ।' **राजा** (स्वग-तम्)—पिष्टकुक्कुटपापोपयागाभ्यामपि पितामही चैतावतीमवस्थामवापत् । नाकलेयमधुना ममाजन्म स्वयंनिहितजलस्थलाकाशचरप्राणिपिशितरसपुष्ट-वपुः सरसः पुरुदंशस इव सदैव हिंसाध्यवसायसक्तचेतसः के भविष्यन्ति लोकाः । तत्पर्याप्तं मम सांसारिकसुखाभिलाषेण । (प्रकाशम्)भगवन्, अयं जन्तुरमोघमघसंघातघनतया पातालतलमुपनिपतन्नुद्ध्रियतां दीक्षाप्रदानह-स्तावलम्बनेन' इत्यभिधाय पपात भगवत्पादयोरुपरि । कृतपादपतनः पराममर्श चैवम् ।

महदपि पापं विलयति पुण्याप्तिमनोरथः सुतुच्छोऽपि ।
किं नाल्पो रविरेष त्रिभुवनमात्रं तमो हन्ति ॥
अत ऊर्ध्वं वा प्राणी स्वयं कृतैरेष कर्मभिर्याति ।
कूपस्य यथा खनिता यथा च कर्ता निकेतस्य ॥

ऊर्ध्वाधोगतिहेतुर्लघुगुरुकर्मप्रयोगतः स्वस्य ।
स्वयमेव भवति जन्तुस्तुलां तु तव किं विषादेन ॥'

भट्टारकः—अहो धर्मधौरेय, प्रधानगुणगन्धननिधान, उत्तिष्ठ । श्रूयतां तावदिदमुभयलोकव्यवहारसर्वस्वम् । इयं हि बहिःप्रदर्शितमनोरमागमारमासृग्धारेव विमुच्यमाना भवति जीवितव्यसंदेहाय देहिनाम् । चिरपरिचितालोकः प्रणयिलोकः काय इव परित्यज्यमानः करोति दूरे शरीरिणां प्राणान् । समभ्यस्तधर्मणि कर्मणि विनियुज्यमानः पुमान्वारीगतः करीवातीवान्तर्मनायते सत्क्रियासु । तादात्विकापवापस्तनुभृतां स्वैरालाप इव सुलभः खल्वभिनिवेशो न निर्वाहेषु । दिव्यचक्षुःस्खलितावाकर्षकमिव सहसा कृते कर्मणि शपन्ति लोकाः । पुरश्चारकं प्रतिश्रुत्य व्रताद्रणादिवापद्रवत्सु भवति च लोकद्वयविघातिनी कौलीनता । अपि च ।

चित्तं स्वभावमृदु कोमलमेतदङ्ग-
माजन्मभोगसुभगानि तवेन्द्रियाणि ।
एतत्तु चित्तवपुरिन्द्रियवृत्तिरोधा-
दुःखं तपस्तदलमत्र नृपाग्रहेण ॥

**कल्याणमित्रः**—क्षितिपते, साध्वाह भगवान् ।

**राजा—कल्याणमित्र**, सत्यमेवैतत् । किं तु ।

मार्दवाधिकतरं कलधौतं तापताडनसहं च निसर्गात् ।
एवमेव वपुरुत्तमपुंसां संपदां च विपदां च सहिष्णुः ॥

ततस्तपश्चरणकरणपरिणतान्तःकरणः पुनरहो **मारदत्त**, समाहूय सपरिवारावावां पूर्वभववृत्तान्तमकथयत् । तदाकर्णनाच्च संजातजातिस्मरणौ बन्धुबाष्पाम्बुभिः सह मूर्छावशाद्भुवि निपतितकरणावनवरतजलजडांशुकव्यजनसीकरासारशीतलानलोपलालनशीलिभिः, मन्दचन्दनस्पन्दोपदेहसदयहृदयैः, आर्द्रार्द्रकमलदलमृणालनिचयसंचारणपरपाणिभिः, अविरलजम्बालमञ्जरीजालपरिचर्यापादनपेशलाशयैः, सरसरम्भागर्भपरिरम्भसंभावनप्रणयिभिः, अपरिमितोसीरपरिषत्परिमलनकारणपरायणैः, घनघनसारपारीस्फारपानीयसेचनचतुरचेतोभिः । एवमन्यासु च तासु तासु प्रत्युज्जीवनकरप्र-



क्रियासु क्रियासु महादरोदारैः परिवारैः कृतादाश्वासनादानन्दमङ्गलैः सर्द्धिमनतिचिरादेव कालादुत्थितावनवधिवेलं पुनश्चिरजीवनजनोचिताशीर्वादैर्विहितसंबोधनैः 'तात, तावदत्र भवतामसत्कृतकर्मणो जन्मान्तरातङ्कमर्मणश्च समाकर्णनादिदं मुहुर्लक्ष्मीपराङ्मुखं मनोऽभूत् । आवां पुनरद्यापि तदातङ्कपावकचुम्बितचित्ताविव भवन्तौ कथं नामास्यामासंजावः' इति विहिताग्रहावपि सकलकुलवृद्धसमक्षतया संताने विनिवेश्योचितमाचरत् ।

मायारामसमा रमा सुखमिदं दुःखावलेखोन्मुखं
स्वप्नालोकनयः सुहृत्परिचयः कान्ता कृतान्ते हिता ।
उत्साहोऽपि च देहगेहविषयो यः सोऽप्यनित्योदय-
स्तत्त्वालोकविलुप्तचित्ततमसां पुंसां भवेदुत्सवः ॥

इति चिन्तयतोर्गतेषु कतिपयेषु च दिवसेषु पुनर्नावयोर्मुनिजनमान्यप्रवृत्तेरन्यत्रासनाद्यभिनिवेश इति विहितसमग्रावभिषिच्य राज्ये यशोधनाभिधानरत्नं सापत्नमनुजन्मानमङ्गस्य चाष्टवर्षदेशीयतयार्हद्रूपायोग्यत्वादिमां देशयतिश्लाघनीयाशां दशामाश्रित्य तेन भगवता सह विहरमाणावत्रागतौ भवद्भटानयनभरादेतत्सभान्तराम् । धर्मावधानयत्नरत्नदीपदीप्तिविदूरितमतिमिथ्यात्वमहान्धकारवृत्तो मारदत्तः प्रतिक्षणं शुभाशयामृतप्रवाहप्रविगलन्निखिलाञ्जनः सपौरपुरदेवतापरिजनः पुरा स्वयं दुर्वासनया च कृतेषु निरवधिषु दुश्चरित्रेष्वतीवबीभत्सयान्तःशाल्यित इव कृतशरीरविधूननस्तन्मुनिकुमारमिथुनकथाकर्णनादिमं समस्तमपि संसारसुखसंगमं स्वप्नेन्द्रजालसमं समाकर्णयन्करकमलमुकुलावचूलमौलिः सबहुमानमनःकेलिस्तं मुनिकुमारमेवमभाषत—'अहो विदग्धनाथ, निःसामान्यसुकृतसुलभदर्शनसनाथ, दुरन्तपातालपतज्जन्तुहस्तावलम्ब, निखिलभुवनमानसोल्लासनशर्मधर्मामृतवर्ष, प्रतिबिम्बहिताहितविवेकदिग्धमूढविधुरबान्धवलोकप्रीणनाचाराश्रय, श्रीमाधवखलीकृतसकलजगज्जायाशरमारमुनिकुमार, निःशेषलोकाभ्युद्धरणजन्मना परमाप्तसमवर्त्मना दैवादवाप्तालोकनेन तत्रभवतानुग्रहणीयः खल्वयं जनः स्वकीयाचारणसमानभाजनतया मुनिकुमारः । निसर्गतुङ्गिमानन्दमन्दर, करुणारसस्पन्दकन्दर, समाकर्णय । स्वभावसव्यस्य विदितवेदितव्यस्य हि

भगवतः सर्वमुपपन्नमेतत् । किं त्वहमेवंविधे कर्मण्यद्यापि गुरुणाभ्यनुज्ञातसमावर्तनो न भवामि । तदेहि । गच्छावः शरणागतजनमनोरथानुकूलं तत्पादमूलम् ।

**राजा**—(स्वगतम् ।) अहो आश्चर्यम् । यतः ।

अहं प्रजानां मम देवतेयमेतत्त्रयस्यैष तथास्य चान्यः ।
गुरुस्तदर्थान्तरगा महत्ता वेश्येव दूरं समुपागतेयम् ॥

(प्रकाशम् ।) मुनिकुमार, अलं विलम्बितेन । एतर्हि प्रतिष्ठावहे तं भगवन्तं भदन्तमुपासितुम् ।

यः स्याद्वाद्यपि सर्वयौक्तिकनयक्षोदक्षमैतिह्यधी-
नैष्किंचन्यभराशयोऽपि जगतः सर्वार्थसिद्ध्याश्रयः ।
दृष्टादृष्टफलप्रसूतिचरितोऽप्याप्तश्च मध्यस्थता-
मात्मस्थोऽपि समस्तगः स भवतः श्रेयस्कृते स्ताज्जिनः ॥

अरालकालव्यालेन ये लीढाः सांप्रतं तु ते ।
शब्दाः श्री**सोमदेवेन** प्रोत्थाप्यन्ते किमद्भुतम् ॥

उद्धृत्य शास्त्रजलधेर्नितले निमग्नैः
पर्यागतैरिव चिरादभिधानरत्नैः ।
या **सोमदेव**विदुषा विहिता विभूषा
वाग्देवता वहतु संप्रति तामनर्घाम् ॥

इयता ग्रन्थेन मया प्रोक्तं चरितं यशोधरनृपस्य ।
इत उत्तरं तु वक्ष्ये श्रुतपठितमुपासकाध्ययनम् ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये भवभ्रमणवर्णनो नाम पञ्चम आश्वासः ।

---



षष्ठ आश्वासः ।

श्रीमानत्रान्तरे सूरिः **सुदत्तो**ऽवधिबोधतः ।
बुद्ध्वा [1]तदागमं तत्र ययौ संयमधीः स्वयम् ॥
तत्रागमान्मुनैर्मान्यान्सभा चुक्षोभ भूभुजः ।
रत्नाकरस्य वेलेव पार्वणेन्दुसमागमात् ॥
विधाय विधिवत्सूरेः सपर्यां तत्र भूपतौ ।
आसीने सत्युवाचेदमसौ मुनिकुमारकः ॥

भगवन्, अस्ति खलु [2]केन्दरान्तरालखेलल्लेलिहानेशान[3]कपर्दचन्दनद्रुमालवालायमानमन्दाकिनीजलकेलिकलहंसेन सुरसुन्दरीलोचनचकोरकुल[4]संतर्पणार्पितामृतासारसृष्टिना [5]सरस्वतीस्रवणतीर्थोपासनतापसेन [6]मनोजविजयार्जनावर्जितजन्मना रजनिवल्लरीकुसुमस्तबकसुन्दरेण [7]त्रिदिवदीर्घिकार्जुनाम्बुजकुञ्जविजयमूर्तिना [9]कौस्तुभैरावतपारिजातामृतेन्दिरासोदरेण मृगमदकर्दमालिखितललामलिपिविलोपिना विदलच्छदातुच्छतापिच्छगुलुञ्छाविच्छिन्नच्छायाछुपा लाञ्छनेनालंकृतिमतक्षीरोदनन्दनेन [10]चन्द्रमसा मुद्रितः प्रतिपर्वसंपन्नफलपरम्परोऽप्युदितोदितविभूतिरहितकीर्तिस्तम्भनिर्भेदभिदूनां यदूनां वंशः । तत्राभवन्निखिललोकचिन्तामणीयमानचरणो रणोत्सवतारसिकसपत्नाङ्गनालोचनचन्द्रकान्तमणिप्रणालजलप्रवाहिनीहारकिरणोदयो दयोचिताचरणानन्दितविनीतावनीपालदारको दारकोग्रतरकरवालविनिभिन्नारीभकुम्भस्थलोच्छलन्मुक्ताफलनिकरतारकितगगनतलो नतलोकपालचूडामणिमरीचिवलयालवालविलसत्क्रमाशोकपल्लवश्रीः श्रीविरामसीमाश्रितश-

१. तेषां मारदत्तादीनामागमने प्राणिवधो माभूदिति धीः. २. मुण्डमालामध्ये क्रीडत्सर्पः ईदृश ईशानरुद्रः. ३. जटाजूट एव चन्दनवृक्षस्तस्य आलवालायमानं यन्मन्दाकिनीजलं तत्र या क्रीडा तत्र राजहंसेन चन्द्रेण मुद्रितो लक्षितो यदुवंशः. ४. संतर्पणार्थम्. ५. नद्याः स्रवणं क्षरणमेव तीर्थं तत्र प्रतिबिम्बितत्वाच्चन्द्र एव तापसस्तेन. ६. दिग्विजयनिमित्तं सज्जितं जन्म येन स तेन. ७. गङ्गानदीश्वेताब्जवन. ८. विकसत्यत्र बहुलतमालपत्रकस्तूरिकायास्तिलक सरस्वतीललाटे घटते. ९. कौस्तुभादीनां भ्राता. १०. यदूनां वंशश्चन्द्रमसा मुद्रित आचन्द्रमुपलक्षित उच्चैस्तरत्वात् वंशश्चन्द्रे लग्न इव दृश्यते.

त्रुसंतानतरूत्पाटनपटुदोर्दण्डमण्डलप्रचण्डश्चण्ड**महासेनो** नाम नरपतिः । तस्यायं समस्तसाम्राज्यधुरोद्धारधौरेयः प्रजोपद्रवद्रुतक्षुद्रकार्दवेयवैनतेयः साक्षात्कुसुमधनुःसूनुरावयोश्च सविव्याः सकलजगद्व्यवहारप्रवृत्तिदत्तस्कन्धात्संसारसंबन्धादनुजपर्यः सोदर्यः। स एष संप्रति स्वभावतो मृदुमानसरसप्रसरोऽपि दुरुपदेशावसरस्ताम्रपर्णीपयःप्रवाह इव संजातशुक्तिसंपुटकोटरावगाहः कठिनतानीतमतिरस्तसमागतिशलाकासादितसूत्रसूत्रप्रवेशमार्गो निकामं संपद्यमानधर्मसंसर्गो भवितुमिच्छतीति ।

तदनु **राजा** सबहुमानं धर्मद्रुमप्रथमोत्पन्नपल्लवायमानेन सकलसंसारव्यसनदावानलप्रभापटलकान्तिना नखमयूखप्रसरोत्सर्पितश्रवणसमीपसरस्वतीप्रवाहेण सीमन्तप्रान्तसरःसंजातजलेजकुड्मलविडम्बिना करयुगलेनोत्तंसितशिखण्डः प्रणम्यानाकुलमनाः प्रत्याक्षिप्तव्यापैनाः परलोकोपायपरामर्शपवित्रप्रकृतिः शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशपेशलमतिः **सुदत्त**भगवन्त**मभयरुचि**विरचितावसरोदन्तमेवं किलाभाषत—'भगवन्,

धर्मात्किलैष जन्तुर्भवति सुखी जगति स च पुनर्धर्मः ।
किंरूपः किंभेदः किमुपायः किंफलश्च जायेत ॥'

भगवानाह—'राजन्, समाकर्णय ।

यस्मादभ्युदयः पुंसां निःश्रेयसफलाश्रयः ।
वदन्ति विदिताम्नायास्तं धर्मं धर्मसूरयः ॥
स प्रवृत्तिनिवृत्त्यात्मा गृहस्थेतरगोचरः ।
प्रवृत्तिर्मुक्तिहेतौ स्यान्निवृत्तिर्भवकारणात् ॥

राजाह—'किं पुनर्भगवन्मुक्तेः कारणम्, किं च संसारस्य, को वा गृहाश्रमिणां धर्मः, कश्च संयमिलोकस्य ।'

**भगवान्**—

'सम्यक्त्वज्ञानचारित्रत्रयं मोक्षस्य कारणम् ।
संसारस्य च मीमांस्यं मिथ्यात्वादिचतुष्टयम् ॥



सम्यक्त्वभावनामाहुर्युक्तियुक्तेषु वस्तुषु ।
मोहसंदेहविभ्रान्तिवर्जितं ज्ञानमुच्यते ॥
कर्मादाननिमित्तायाः क्रियायाः परमं शमम् ।
चारित्रोचितचातुर्याश्चारुचारित्रमूचिरे ॥
सम्यक्त्वज्ञानचारित्रविपर्ययपरं मनः ।
मिथ्यात्वं नृषु भाषन्ते सूरयः सर्वदेहिनः ॥

अत्र दुरागमवासनाविलानीवासितचेतसां प्रवर्तितप्राकृतलोकानोकहोन्मूलनसमयस्रोतसां सदाचाराचरणचातुरीविदूरवर्तिनां परवादिनां मुक्तेरुपाये काये च बहुवृत्तयः खलु प्रवृत्तयः । तथा हि—'सकलनिष्कलाप्तप्राप्तमन्त्रतन्त्रापेक्षदीक्षालक्षणाच्छ्रद्धामात्रानुसरणान्मोक्षः' इति **सैद्धान्तवैशेषिकाः**, 'द्रव्यगुणकर्मसामान्यसमवायान्त्यविशेषाभावाभिधानानां पदार्थानां साधर्म्यवैधर्म्यावबोधतन्त्राज्ज्ञानमात्रात्' इति **तार्किकवैशेषिकाः**, 'त्रिकालभस्मोद्धूलनेज्यागड्डुकप्रदानाप्रदक्षिणीकारणात्मविडम्बनादिक्रियाकाण्डमात्राधिष्ठानादनुष्ठानात्' इति **पाशुपताः**, 'सर्वेषु पेयापेयभक्ष्याभक्ष्यादिषु निःशङ्कचित्ताद्वृत्तात्' इति **कुलाचार्यकाः** । तथा च त्रिकमतोक्तिः—'मदिरामोदमेदुरवदनस्तरसरसप्रसन्नहृदयः सव्यपार्श्वविनिवेशितशक्तिः शक्तिमुद्रासनधरः स्वयमुमामहेश्वरायमाणः कृष्णया सर्वाणीश्वरमाराधयेदिति प्रकृतिपुरुषो विवेकमतेः ख्यातेः' इति **सांख्याः**, 'नैरात्म्यादिनिवेदितसंभावनातो भावनातः' इति **दशबलशिष्याः**, 'अङ्गाराञ्जनादिवत्स्वभावादेव कालुष्योत्कर्षप्रवृत्तस्य चित्तस्य न कुतश्चिद्विशुद्धचित्तवृत्तिः' इति **जैमिनीयाः**, 'सति धर्मिणि धर्माश्चिन्त्यन्ते ततः परलोकिनो भावात्परलोकाभावे कस्यासौ मोक्षः' इति समवाप्तसमस्तनास्तिकाधिपत्या **बार्हस्पत्याः**, 'परमब्रह्मदर्शनवशादशेषभेदसंवेदनाविद्याविनाशात्' इति **वेदान्तवादिनः**,

'नैवान्तस्तत्त्वमस्तीह न बहिस्तत्त्वमञ्जसा ।
विचारगोचरातीतेः शून्यता श्रेयसी ततः ॥'

इति पश्यतोहराः प्रकाशितशून्यतैकान्ततिमिराः **शाक्यविशेषाः**,

तथा 'ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नव संख्यावसराणामात्मगुणानामत्यन्तोन्मुक्तिर्मुक्तिः' इति **काणादाः** । तदुक्तम्—

बहिः शरीराद्यद्रूपमात्मनः संप्रतीयते ।
उक्तं तदेव मुक्तस्य मुनिना कणभोजिना ॥

'निराश्रयचित्तोत्पत्तिलक्षणो मोक्षः' इति मोक्षावसरास्**ताथागताः** । तदुक्तम्—

दिशं न कांचिद्विदिशं न कांचिन्नैवावनिं गच्छति नान्तरिक्षम् ।
दीपो यथा निर्वृतिमभ्युपेतः स्नेहक्षयात्केवलमेति शान्तिम् ॥
दिशं न कांचिद्विदिशं न कांचिन्नैवावनिं गच्छति नान्तरिक्षम् ।
जीवस्तथा निर्वृतिमभ्युपेतः क्लेशक्षयात्केवलमेति शान्तिम् ॥

'बुद्धिमनोऽहंकारविरहादखिलेन्द्रियोपशमावहात्तदा द्रष्टुः स्वरूपेऽवस्थानं मुक्तिः' इति **कापिलाः**, 'यथा घटविघटने घटाकाशमाकाशीभवति तथा देहोच्छेदात्सर्वः प्राणी परे ब्रह्मणि लीयते' इति **ब्रह्माद्वैतवादिनः** ।

अज्ञातपरमार्थानामेवमन्येऽपि दुर्णयाः ।
मिथ्यादृशां न गण्यन्ते जात्यन्धानामिव द्विपैः ॥

(स्वगतम् ।)

प्रायः संप्रति कोपाय सन्मार्गस्योपदेशनम् ।
निर्लूननासिकस्येव विशुद्धादर्शदर्शनम् ॥
दृष्टान्ताः सन्त्यसंख्येया मतिस्तद्वशवर्तिनी ।
किं न कुर्युर्महीं धूर्ता विवेकरहितामिमाम् ॥
दुराग्रहग्रहग्रस्ते विद्वान्पुंसि करोतु किम् ।
कृष्णपाषाणखण्डेषु मार्दवाय न तोयदः ॥
ईर्ते युक्तिं यदेवात्र तदेव परमार्थसत् ।
यद्भानुदीप्तिवत्तस्याः पक्षपातोऽस्ति न क्वचित् ॥

(प्रकाशम् ।)

श्रद्धां श्रेयोर्थिनां श्रेयः संश्रयाय न केवला ।
बुभुक्षितवशात्पाको जायेत किमुदम्बरे ॥



पात्रावेशादिवन्मन्त्रादात्मदोषपरिक्षयः ।
दृश्येत यदि को नाम कृती क्लिश्येत संयमैः ॥
दीक्षाक्षणान्तरात्पूर्वं ये दोषा भवसंभवाः ।
ते पश्चादपि दृश्यन्ते तन्न सा मुक्तिकारणम् ॥
ज्ञानादवगमोऽर्थानां न तत्कार्यसमागमः ।
तर्षापकर्षयोगि स्याद्दृष्टमेवान्यथा पयः ॥
ज्ञानहीने क्रिया पुंसि परं नारभते फलम् ।
तरोश्छायेव किं लभ्या फलश्रीर्नष्टदृष्टिभिः ॥
ज्ञानं पङ्गौ क्रिया चान्धे निःश्रद्धे नार्थकृद्द्वयम् ।
ततो ज्ञानक्रियाश्रद्धा त्रयं तत्पदकारणम् ॥

उक्तं च—

हतं ज्ञानं क्रियाशून्यं हता चाज्ञानिनः क्रिया ।
धावन्नप्यन्धको नष्टः पश्यन्नपि च पङ्गुकः ॥
निःशङ्कात्मप्रवृत्तेः स्याद्यदि मोक्षसमीक्षणम् ।
टङ्कसूनाकृतां पूर्वं पश्चात्कौलेष्वसौ भवेत् ॥
अव्यक्तनरयोर्नित्यं नित्यव्यापिस्वभावयोः ।
विवेकेन कथं ख्यातिं सांख्यमुख्याः प्रचक्षते ॥
सर्वं चेतसि भाषेत वस्तु भावनया स्फुटम् ।
तावन्मात्रेण मुक्तत्वे मुक्तिः स्याद्विप्रलम्भिनाम् ॥

तदुक्तम्—

पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये ।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥

स्वभावान्तरसंभूतिर्यत्र तत्र मलक्षयः ।
कर्तुं शक्यः स्वहेतुभ्यो मणिमुक्ताफलेष्विव ॥
तदहर्जस्तनेहातो रक्षोदृष्टेर्भवस्मृतेः ।
भूतानन्वयनाज्जीवः प्रकृतिज्ञः सनातनः ॥

भेदोऽयं यद्यविद्या स्याद्वैचित्र्यं जगतः कुतः ।
जन्ममृत्युसुखप्रायौ विवर्तैर्मानवर्तिभिः ॥
शून्यं तत्त्वमहं वादी साधयामि प्रमाणतः ।
इत्यास्थायां विरुध्येत सर्वशून्यत्ववादिता ॥
वाधो वा यदि वानन्दो नास्ति मुक्तौ भवोद्भवः ।
सिद्धसाध्यं तयास्माकं न काचित्क्षितिरीक्ष्यते ॥
न्यक्षवीक्षाविनिर्मोक्षे मोक्षे किं मोक्षिलक्षणम् ।
न ह्यज्ञावन्यदुष्णत्वाल्लक्ष्मलक्ष्यं विचक्षणैः ॥

किं च 'सदाशिवेश्वरादयः संसारिणो मुक्ता वा संसारित्वे कथमाप्तता मुक्तत्वे क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्तत्र निरतिशयं सर्वज्ञबीजम्' इति **पतञ्जलिजल्पितम्** ।

ऐश्वर्यमप्रतिहतं सहजो विराग-
स्तृप्तिर्निसर्गजनिता वशितेन्द्रियेषु ।
आत्यन्तिकं सुखमनावरणा च शक्ति-
र्ज्ञानं च सर्वविषयं भगवंस्तथैव ॥

**इत्यवधूताभिधानं** च घटेत ।

अनेकजन्मसंततेर्यावद्द्याक्षयः पुमान् ।
यद्यसौ मुक्त्यवस्थायां कुतः क्षीयेत हेतुतः ॥
बाह्ये ग्राह्ये मलापापात्सत्यस्वप्न इवात्मनः ।
तदा द्रष्टुः स्वरूपेऽस्मिन्नवस्थानममानकम् ॥

न चायं सत्यस्वप्नोऽप्रसिद्धः स्वप्नाध्यायेऽतीव सुप्रसिद्धत्वात् । तथा हि—

यस्तु पश्यति रात्र्यन्ते राजानं कुञ्जरं हयम् ।
सुवर्णं वृषभं गां च कुटुम्बं तस्य वर्धते ॥
यत्र नेत्रादिकं नास्ति न तत्र मतिरात्मनि ।
तत्र युक्तमिदं यस्मात्स्वप्नमन्धोऽपि वीक्षते ॥
जिमिन्यादेर्नरत्वेऽपि प्रकृष्येत मतिर्यदि ।
पराकाष्ठाप्यतस्तस्याः क्वचित्खे परिमाणवत् ॥



तुच्छो भावो न कस्यापि हानिर्दीपस्तमोऽन्वयी ।
धरादिषु धियो हानौ विश्लेषे सिद्धसाध्यता ॥
तदा वृत्तिहतौ तस्य तपनस्येव दीधितिः ।
कथं न शेमुषी सर्वं प्रकाशयति वस्तु यत् ॥
ब्रह्मैकं यदि सिद्धं स्यान्निस्तरङ्गं कुतश्च न ।
घटाकाशमिवाकाशे तत्रेदं लीयतां जगत् ॥

अथ मतम्—

एक एव हि भूतात्मा देहे देहे व्यवस्थितः ।
एकधानेकधा चापि दृश्यते जलचन्द्रवत् ॥

तदयुक्तम् ।

एकः खेऽनेकधान्यत्र यथेन्दुर्वेद्यते जनैः ।
न तथा वेद्यते ब्रह्म भेदेभ्योऽन्यदभेदभाक् ॥

अलमतिविस्तरेण ।

आनन्दो ज्ञानमैश्वर्यं वीर्यं परमसूक्ष्मता ।
एतदात्यन्तिकं यत्र स मोक्षः परिकीर्तितः ॥
ज्वालोरवुक(?)बीजादेः स्वभावादूर्ध्वगामिता ।
नियता च यथा दृष्टा मुक्तस्यापि तथात्मनः ॥
तथाप्यत्र तदावासे पुण्यपापात्मनामपि ।
स्वर्गश्वभ्रागमो न स्यादलं लोकान्तरेण ते ॥

इत्युपासकाध्ययने समस्तसमयसिद्धान्तावबोधनो नाम प्रथमः कल्पः ।

अहो धर्माराधनैकमते वसुमतीपते, सम्यक्त्वं हि नाम नराणां महती खलु पुरुषदेवता । यत्सकृदेकमेव यथोक्तगुणप्रगुणतया संजातमशेषकल्मषकलुषधिषणतया नरकादिषु गतिषु, पुष्यदायुषामपि मनुष्याणां षट्सु तलपातालेषु, अष्टविधेषु व्यन्तरेषु, दशविधेषु भवनवासिषु, पञ्चविधेषु ज्योतिष्केषु, त्रिविधासु स्त्रीषु, विकलकरणेषु पृथ्वीपयःपावकपवनकायिकेषु वनस्पतिषु च न भवति संभूतिहेतुः । सावधिं विदधाति जवम्, जवीभावं नियमेन

संपादयति कंचित्कालम्, उपलभ्यात्मनश्चार्वी चारित्रे साधुसंपादनसारः संस्कार इव जीवेषु जन्मान्तरेऽपि न जहात्यात्मनोऽनुवृत्तिम्, सिद्धाश्चिन्तामणिरिव च फलत्यसीमं कामितानि व्रतानि पुनरौषधय इव फलपाकावसानानि पाथेयवन्नियतवृत्तीनि च । न च सिद्धरसवेधसंबाधादुषबुधसंनिधानमात्रजन्मनि जाम्बुनद इवात्र पदार्थयाथात्म्यसमवगमान्मनोमनन्मात्रतन्त्रे निःशेषश्रुतश्रवणपरिश्रमः समाश्रयणीयः, न शरीरमायासयितव्यम्, न देशान्तरमनुसरणीयम्, नापि कालक्षेपकुक्षिरपेक्षितव्यः । तस्मादधिष्ठानमिव प्रासादस्य, सौभाग्यमिव रूपसंपदः, प्राणितमिव भोगायतनोपचारस्य, मूलबलमिव विजयप्राप्तेः, विनीतत्वमिवाभिजात्यस्य, नयानुष्ठानमिव राज्यस्थितेरखिलस्यापि परलोकोदाहरणस्य सम्यक्त्वमेव ननु प्रथमं कारणं गृणन्ति गरीयांसः । तस्य चेदं लक्षणम्—

आप्तागमपदार्थानां श्रद्धानं कारणद्वयात् ।
मूढाद्यपोढमष्टाङ्गं सम्यक्त्वं प्रशमादिभाक् ॥
सर्वज्ञं सर्वलोकेशं सर्वदोषविवर्जितम् ।
सर्वसत्त्वहितं प्राहुराप्तमाप्तमतोचिता ॥
ज्ञानवन्मृग्यते कश्चित्तदुक्तं प्रतिपद्यते ।
अज्ञोपदेशकरणे विप्रलम्भनशङ्किभिः ॥
यस्तत्त्वदेशनाद्दुःखवार्धेरुद्धरते जगत् ।
कथं न सर्वलोकेशः प्रह्वीभूतजगत्त्रयः ॥
क्षुत्पिपासाभयं द्वेषश्चिन्तनं मूढतागमः ।
रागो जरा रुजा मृत्युः क्रोधः खेदो मदो रतिः ॥
विस्मयो जननं निद्रा विषादोऽष्टादश ध्रुवाः ।
त्रिजगत्सर्वभूतानां दोषाः साधारणा इमे ॥
एभिर्दोषैर्विनिर्मुक्तः सोऽयमाप्तो निरञ्जनः ।
स एव हेतुः सूक्तीनां केवलज्ञानलोचनः ॥
रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम् ।
यस्य तु नैते दोषास्तस्यानृतकारणं नास्ति ॥



उच्चावचप्रसूक्तीनां सत्त्वानां सदृशाकृतिः ।
य आदर्श इवाभाति स एव जगतां पतिः ॥
यस्यात्मनि श्रुते तत्त्वे चरित्रे मुक्तिकारणे ।
एकवाक्यतया वृत्तिराप्तः सोऽनुमतः सताम् ॥
अत्यक्षेप्यागमात्पुंसि विशिष्टत्वं प्रतीयते ।
उद्यानमध्यवृत्तीनां ध्वनेरिव नगौकसाम् ॥
स्वगुणैः श्लाघ्यतां याति स्वदोषैर्दूष्यतां जने ।
रोषतोषौ वृथा तत्र कलधौतायसोरिव ॥
द्रुहिणाधोक्षजेशानशाक्यसूरपुरःसराः ।
यदि रागाद्यधिष्ठानं कथं तत्राप्तता भवेत् ॥
रागादिदोषसंभूतिर्ज्ञेयामीषु तदागमात् ।
असतः परदोषस्य गृहीतौ पातकं महत् ॥
अजस्तिलोत्तमाचित्तः श्रीरतः श्रीपतिः स्मृतः ।
अर्धनारीश्वरः शंभुस्तथाप्येषां किलाप्तता ॥
वसुदेवः पिता यस्य सवित्री देवकी हरेः ।
स्वयं च राजधर्मस्थश्चित्रं देवस्तथापि सः ॥
त्रैलोक्यं जठरे यस्य यश्च सर्वत्र विद्यते ।
किमुत्पत्तिविपत्ती तां क्वचित्तस्येति चिन्त्यताम् ॥
कपर्दी दोषवानेष निःशरीरः सदाशिवः ।
अप्रामाण्यादशक्तेश्च कथं तत्रागमागमः ॥
परस्परविरुद्धार्थमीश्वरः पञ्चभिर्मुखैः ।
शास्त्रं शास्ति भवेत्तत्र कतमार्थविनिश्चयः ॥
सदाशिवकला रुद्रे यद्यायाति युगे युगे ।
कथं स्वरूपभेदः स्यात्काञ्चनस्य कलास्विव ॥
भैक्षनर्तननग्नत्वं पुरत्रयविलोपनम् ।
ब्रह्महत्याकपालित्वमेताः क्रीडाः किलेश्वरे ॥

सिद्धान्तेऽन्यत्प्रमाणेऽन्यदन्यत्काव्येऽन्यदीहिते ।
तत्त्वमाप्तस्वरूपं च विचित्रं शैवदर्शनम् ॥
एकान्तः शपथश्चैव वृथा तत्त्वपरिग्रहे ।
सन्तस्तत्त्वं न हीच्छन्ति परप्रत्ययमात्रतः ॥
दाहच्छेदकषाशुद्धे हेम्नि का शपथक्रिया ।
दाहच्छेदकषाऽशुद्धे हेम्नि का शपथक्रिया ॥
यद्दृष्टमनुमानं च प्रतीतिं लौकिकीं भजेत् ।
तदाहुः सुविदस्तत्त्वं रहः कुहकवर्जितम् ॥
निर्बीजतेव तन्त्रेण यदि स्यान्मुक्तताङ्गिनि ।
बीजवत्पावकस्पर्शः प्रणेयो मोक्षकाङ्क्षिणि ॥
विषसामर्थ्यवन्मन्त्रात्क्षयश्चेदिह कर्मणः ।
तर्हि तन्मन्त्रमान्यस्य न स्युर्दोषा भवोद्भवाः ॥
ग्रहगोत्रगतोऽप्येष पूषा पूज्यो न चन्द्रमाः ।
अविचारिततत्त्वस्य जन्तोर्वृत्तिर्निरङ्कुशा ॥
द्वैताद्वैताश्रयः शाक्यः शंकरानुकृतागमः ।
कथं मनीषिभिर्मान्यस्तरसासवशक्तधीः ॥

अथैवं प्रत्यवतिष्ठासवो भवतां समये किल मनुजः सन्नाप्तो भवति तस्य चाप्ततातीव दुर्घटा । संप्रति संजातजववद्भवतु वा, तथापि मनुष्यस्याभिलषितत्वावबोधो न स्वतस्तथादर्शनाभावात् । परश्चेत्कोऽसौ परः । तीर्थकरोऽन्यो वा । तीर्थकरश्चेत्तत्राप्येवं पर्यनुयोगे प्रकृतमनुबन्धे । तस्मादनवस्था तद्भावमाप्तसद्भावं च वाञ्छद्भिः सदाशिवः शिवापतिर्वा तस्य तत्त्वोपदेशकः प्रतिश्रोतव्यः । तदाह **पतञ्जलिः**—'स पूर्वेषामपि गुरुः कालेनानवच्छेदात् ।' तथा हि ।

अदृष्टविग्रहाच्छान्ताच्छिवात्परमकारणात् ।
नादरूपं समुत्पन्नं शास्त्रं परमदुर्लभम् ॥

तथाप्तेनैकेन भवितव्यम् । न ह्याप्तानामितरप्राणिवद्गणः समस्ति संभवे वा



चतुर्विंशतिरिति नियमः कौतस्कुत इति वन्ध्यास्तनंधयधैर्यव्यावर्णनमुदीर्णमोहार्णवविलयनं च परेषाम् । यतः ।

वक्ता नैव सदाशिवो विकरणस्तस्मात्परो रागवा-
न्द्वैविध्यादपरं तृतीयमिति चेत्तत्कस्य हेतोरभूत् ।
शक्त्या चेत्परकीयया कथमसौ तद्वा न संबन्धतः
संबन्धोऽपि न जाघटीति भवतां शास्त्रं निरालम्बनम् ॥

'संबन्धो हि सदाशिवस्य शक्त्या सह न भिन्नस्य संयोगः शक्तेरद्रव्यत्वाद्द्रव्ययोरेव संयोगः' इति **योग**सिद्धान्तः । 'समवायलक्षणोऽपि न संबन्धः शक्तेः पृथक्सिद्धत्वादयुतसिद्धानां गुणगण्यादीनां समवायसंबन्धः' इति **वैशेषिक**मैतिह्यम् ।

तत्त्वभावनयोद्भूतं जन्मान्तरसमुत्थया ।
हिताहितविवेकाय यस्य ज्ञानत्रयं परम् ॥
दृष्टादृष्टमवैत्यर्थं रूपवन्तमथावधेः ।
श्रुतेः श्रुतिसमाश्रेयं क्वासौ परमपेक्षता ॥

न चैतदसार्वत्रिकम् । कथमन्यथा । स्वत एव संजितषट्पदार्थावसायप्रसरे कणचरे वाराणस्यां महेश्वरस्योलूकसायुज्यसरस्येदं वचः संगच्छेत्—'ब्रह्मातुला नामेदं दिवौकसां दिव्यमद्भुतं ज्ञानं प्रादुर्भूतमिह त्वयि तद्वद्धिधत्स्व विप्रेभ्यः ।

उपाये सत्युपेयस्य प्राप्तेः का प्रतिबन्धिता ।
पातालस्थं जलं यन्त्रात्करस्थं क्रियते यतः ॥
अश्मा हेम जलं मुक्ता द्रुमो वह्निः क्षितिर्मणिः ।
तत्तद्धेतुतया भावा भवन्त्यद्भुतसंपदः ॥
सर्गावस्थितिसंहारग्रीष्मवर्षातुषारवत् ।
अनाद्यनन्तभावोऽयमाप्तश्रुतसमाश्रयः ॥
नियतं न बहुत्वं चेत्कथमेते तथाविधाः ।
तिथिताराग्रहाम्भोधिभूभृत्प्रभृतयो मताः ॥

अनयैव दिशा चिन्त्यं सांख्यशाक्यादिशासनम् ।
तत्त्वागमाप्तरूपाणां नानात्वस्याविशेषतः ॥
जैनमेकं मतं मुक्त्वा द्वैताद्वैतसमाश्रयौ ।
मार्गौ समाश्रिताः सर्वे सर्वाभ्युपगमागमाः ॥
वामदक्षिणमार्गस्थो मन्त्रीतरसमाश्रयः ।
कर्मज्ञानगतो ज्ञेयः शंभुशाक्यद्विजागमः ॥

यच्चैतत्—

श्रुतिं वेदमिह प्राहुर्धर्मशास्त्रं स्मृतिर्मता ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥
ते तु यस्त्ववमन्येत हेतुशास्त्राश्रयाद्विजः ।
स साधुभिर्बहिः कार्यो नास्तिको वेदनिन्दकः ॥

तदपि न साधुः । यतः ।

समस्तयुक्तिनिर्मुक्तः केवलागमलोचनः ।
तत्त्वमिच्छन्न कस्येह भवेद्वादी जयावहः ॥
सन्तो गुणेषु तुष्यन्ति नाविचारेषु वस्तुषु ।
पादेन क्षिप्यते ग्रावा रत्नं मौलौ निधीयते ॥
श्रेष्ठो गुणैर्गृहस्थः स्यात्ततः श्रेष्ठतरो यतिः ।
यतेः श्रेष्ठतरो देवो न देवादधिकं परम् ॥
गेहिना समवृत्तस्य यतेरप्यधरस्थितेः ।
यदि देवस्य देवत्वं न देवो दुर्लभो भवेत् ॥

इत्युपासकाध्ययने आप्तस्वरूपमीमांसनो नाम द्वितीयः कल्पः ।

देवमादौ परीक्षेत पश्चात्तद्वचनक्रमम् ।
ततश्च तदनुष्ठानं कुर्यात्तत्र मतिं ततः ॥
येऽविचार्य पुनर्देवं रुचिं तद्वाचि कुर्वते ।
तेऽन्धास्तत्स्कन्धविन्यस्तहस्ता वाञ्छन्ति सद्गतिम् ॥
पित्रोः शुद्धौ यथापत्ये विशुद्धिरिह दृश्यते ।
तथाप्तस्य विशुद्धत्वे भवेदागमशुद्धता ॥



वाग्विशुद्धापि दुष्टा स्याद्वृष्टिवत्पात्रदोषतः ।
वन्द्यं वचस्तदेवोच्चैस्तोयवत्तीर्थसंश्रयम् ॥
दृष्टेऽर्थे वचसोऽध्यक्षादनुमेयोऽनुमानतः ।
पूर्वापराविरोधेन परोक्षे च प्रमाणतः ॥
पूर्वापरविरोधेन यस्तु युक्त्या च बाध्यते ।
मत्तोन्मत्तवचःप्रख्यः सप्रमाणं किमागमः ॥
हेयोपादेयरूपेण चतुर्वर्गसमाश्रयात् ।
कालत्रयगतानर्थान्गमयन्नागमः स्मृतः ॥
आत्मानात्मस्थितिर्लोको बन्धमोक्षौ सहेतुकौ ।
आगमस्य निगद्यन्ते पदार्थास्तत्त्ववेदिभिः ॥
उत्पत्तिस्थितिसंहारसाराः सर्वे स्वभावतः ।
नयद्वयाश्रयादेते तरङ्गा इव तोयधेः ॥
क्षयाक्षयैकपक्षत्वं बन्धमोक्षक्षयागमः ।
तात्त्विकैकत्वसद्भावे स्वभावान्तरहानितः ॥
ज्ञाता द्रष्टा महान्सूक्ष्मः कृतिभक्त्योः स्वयं प्रभुः ।
भागायतनमात्रोऽयं स्वभावादूर्ध्वगः पुमान् ॥
ज्ञानदर्शनशून्यस्य न भेदः स्यादचेतनात् ।
ज्ञानमात्रस्य जीवस्य नैकधीश्चित्रमित्रवत् ॥
प्रेर्यते कर्म जीवेन जीवः प्रेर्येत कर्मणा ।
एतयोः प्रेरको नान्यो नौनाविक[वि]मानयोः ॥
मन्त्रवन्नियतोऽप्येषोऽचिन्त्यशक्तिः स्वभावतः ।
अतः शरीरतोऽन्यत्र न भावोऽस्य प्रमान्वितः ॥
त्रसस्थावरभेदेन चतुर्गतिसमाश्रयाः ।
जीवाः केचित्तथान्ये च पञ्चमीं गतिमाश्रिताः ॥
धर्माधर्मौ नभः कालो पुद्गलश्चेति पञ्चमः ।
अजीवशब्दवाच्याः स्युरेते विविधपर्ययाः ॥

गतिस्थित्यप्रतीघातपरिणामनिबन्धनम् ।
चत्वारः सर्ववस्तूनां रूपाद्ध्यात्मा च पुद्गलः ॥
अन्योन्यानुप्रवेशेन बन्धः कर्मात्मनो मतः ।
अनादिः सावसानश्च कालिकास्वर्णयोरिव ॥
प्रकृतिस्थित्यनुभागप्रदेशप्रविभागतः ।
चतुर्धा भिद्यते बन्धः सर्वेषामेव देहिनाम् ॥
आत्मलाभं विदुर्मोक्षं जीवस्यान्तर्मलक्षयात् ।
नाभावो नाप्यचैतन्यं न चैतन्यमनर्थकम् ॥
बन्धस्य कारणं प्रोक्तं मिथ्यात्वासंयमादिकम् ।
रत्नत्रयं तु मोक्षस्य कारणं संप्रकीर्तितम् ॥
आप्तागमपदार्थानामश्रद्धानं विपर्ययः ।
संशयश्च त्रिधा प्रोक्तं मिथ्यात्वं मलिनात्मनाम् ॥

अथ वा ।

एकान्तसंशयाज्ञानं व्यत्यासविनयाश्रयम् ।
भवपक्षाविपक्षत्वान्मिथ्यात्वं पञ्चधा स्मृतम् ॥
अव्रतित्वं प्रमादित्वं निर्दयत्वमतृप्तता ।
इन्द्रियेच्छानुवर्तित्वं सन्तः प्राहुरसंयमम् ॥
कषायाः क्रोधमानाद्यास्ते चत्वारश्चतुर्विधाः ।
संसारसिन्धुसंपातहेतवः प्राणिनां मताः ॥
मनोवाक्कायकर्माणि शुभाशुभविभेदतः ।
भवन्ति पुण्यपापानां बन्धकारणमात्मनि ॥
निराधारो निरालम्बः पवमानसमाश्रयः ।
नभोमध्यस्थितो लोकः सृष्टिसंहारवर्जितः ॥

अथ मतम्—

नैव लग्नं जगत्क्कापि भूभूध्राम्भोधिनिर्मलम् ।
धातारश्च न युज्यन्ते मत्स्यकूर्माहिपोत्रिणः ॥



एवमालोच्य लोकस्य निरालम्बस्य धारणे ।
कल्प्यते पवनो जैनैरित्येतत्साहसं महत् ॥
यो हि वायुर्न शक्तोऽत्र लोष्टकाष्ठादिधारणे ।
त्रैलोक्यस्य कथं स स्याद्धारणावसरक्षमः ॥

तदसत् ।

ये प्लावयन्ति पानीयैर्विष्टपं सचराचरम् ।
मेघास्ते वातसामर्थ्यात्किं न व्योम्नि समासते ॥

आप्तागमपदार्थेष्वपरं दोषमपश्यतः

अमज्जनमनाचामो नग्नत्वं स्थितिभोजिता ।
मिथ्यादृशो वदन्त्येतन्मुनेर्दोषचतुष्टयम् ॥

तत्रैष समाधिः—

ब्रह्मचर्योपपन्नानामध्यात्माचारचेतसाम् ।
मुनीनां स्नानमप्राप्तं दोषे त्वस्य विधिर्मतः ॥
सङ्गे कापालिकात्रेयीचाण्डालशबरादिभिः ।
आप्लुत्य दण्डवत्सम्यग्जपेन्मन्त्रमुपोषितः ॥
एकान्तरं त्रिरात्रं वा कृत्वा स्नात्वा चतुर्थके ।
दिने शुध्यन्त्यसंदेहमृतौ व्रतगताः स्त्रियः ॥
यदेवागमशुद्धं स्याददिः शोध्यं तदेव हि ।
अङ्गुलौ सर्पदष्टायां न हि नासा निकृत्यते ॥
निष्पन्दादि विधौ वक्त्रे यद्यपूतत्वमिष्यते ।
तर्हि वक्त्रापवित्रत्वे शौचं नारभ्यते कुतः ॥
विकारे विदुषां द्वेषो नाविकारानुवर्तने ।
तन्नग्नत्वे निसर्गोत्थे को नाम द्वेषकल्मषः ॥
नैष्किंचन्यमहिंसा च कुतः संयमिनां भवेत् ।
ते सङ्गाय यदीहन्ते वल्कलाजिनवाससाम् ॥
न स्वर्गाय स्थितेर्मुक्तिर्न श्वभ्रायास्थितेः पुनः ।
किं तु संयमिलोकेऽस्मिन्सा प्रतिज्ञार्थमिष्यते ॥

पाणिपात्रं मिलत्येतच्छक्तिश्च स्थितिभोजने ।
यावत्तावदहं भुञ्जे रहाम्याहारमन्यथा ॥
अदैन्यासङ्गवैराग्यपरीषहकृते कृतः ।
अत एव यतीशानां केशोत्पाटनसद्विधिः ॥

इत्युपासकाध्ययन आगमपदार्थपरीक्षणो नाम तृतीयः कल्पः ।

सूर्यार्घो ग्रहणस्नानं संक्रान्तौ द्रविणव्ययः ।
संध्यासेवाग्निसत्कारो गेहदेहार्चनो विधिः ॥
नदीनदसमुद्रेषु मज्जनं धर्मचेतसाम् ।
तरुस्तूपाग्रभक्तानां वन्दनं भृगुसंश्रयः ॥
गोपृष्ठान्तनमस्कारस्तन्मूत्रस्य निषेवणम् ।
रत्नं वाहनभूयक्षशस्त्रशैलादिसेवनम् ॥
समयान्तरपाखण्डवेदलोकसमाश्रयम् ।
एवमादिविमूढानां ज्ञेयं मूढमनेकधा ॥
वरार्थं लोकवार्तार्थमुपरोधार्थमेव वा ।
उपासनममीषां स्यात्सम्यग्दर्शनहानये ॥
क्लेशायैव क्रियामीषु न फलावाप्तिकारणम् ।
यद्भवेन्मुग्धबोधानामूषरे कृषिकर्मवत् ॥
वस्तुन्येव भवेद्भक्तिः शुभारम्भाय भाक्तिके ।
न त्वरत्नेन रत्नाय भावो भवति भूतये ॥
अदेवे देवताबुद्धिमव्रते व्रतभावनाम् ।
अतत्त्वे तत्त्वविज्ञानमतो मिथ्यात्वमुत्सृजेत् ॥
तथापि यदि मूढत्वं न त्यजेत्कोऽपि सर्वथा ।
मिश्रत्वेनानुमान्योऽसौ सर्वनाशो न सुन्दरः ॥
न स्वतो जन्तवः प्रेर्या दुरीहाः स्युर्जिनागमे ।
स्वत एव प्रवृत्तानां तद्योग्यानुग्रहो मतः ॥

इत्युपासकाध्ययने मूढतोन्मथनो नाम चतुर्थः कल्पः ।



शङ्काकाङ्क्षाविनिन्दान्यश्लाघा च मनसा गिरा ।
एते दोषाः प्रजायन्ते सम्यक्त्वक्षतिकारणम् ॥

तत्र—

अहमेको न मे कश्चिदस्ति त्राता जगत्त्रये ।
इति व्याधिव्रजोत्क्रान्तिभीतिं शङ्कां प्रचक्षते ॥
एतत्तत्त्वमिदं तत्त्वमेतद्व्रतमिदं व्रतम् ।
एष देवश्च देवोऽयमिति शङ्कां विदुः पराम् ॥
इत्थं शङ्कितचित्तस्य न स्याद्दर्शनशुद्धता ।
न चास्मिन्नीप्सितावाप्तिर्यथैवोभयवेतने ॥
एष एव भवेद्देवस्तत्त्वमप्येतदेव हि ।
एतदेव व्रतं मुक्त्यै तदेव स्यादशङ्कधीः ॥
तत्त्वे ज्ञाते रिपौ दृष्टे पात्रे वा समुपस्थिते ।
यस्य दोलायते चित्तं रिक्तः सोऽमुत्र चेह च ॥

श्रूयतामत्रोपाख्यानम्—इहैवानेकाश्चर्यसमीपे **जम्बूद्वीपे जनपदा**भिधानास्पदे जनपदे **भूमितिलकपुर**परमेश्वरस्य **गुणमाला**महादेवीरतिकुसुमशरस्य **नरपाल**नाम्नो नरेन्द्रस्य श्रेष्ठी **सुनन्दो** नाम। धर्मपत्नी चास्य जनितनिखिलपरिजनहृदयानन्दा **सुनन्दा** नाम। अनयोः सूनुर्**धनद-धनबन्धु-धनप्रिय-धनपाल-धनदत्त-धनेश्वराणा**मनुजः सकलकूटकपटचेष्टितहरि**र्धन्वन्तरि**र्नाम । तथा तन्नपतिपुरोहित**स्याग्निला**दयितस्योदितोदितधर्मकर्मणः **सोमशर्मणः** सुतो **विश्वरूप-विश्वेश्वर-विश्वमूर्ति-विश्वामित्र-विश्वावसु-विश्वावलोका**नामनवरजः समस्तसद्वृत्तप्रतिलोमो **विश्वानुलोमो** नाम । तौ द्वावपि सहपांशुक्रीडितत्वात्समानशीलव्यसनत्वाच्च क्षीरनीरवत्समाचरितसख्यौ द्यूतमदिरापरदारचौर्याद्यनार्यकार्यपर्यायप्रवर्तनमुख्यौ सन्तौ तेनावनीपतिनात्मीयनगरात्सनिकारं निर्वासितौ **कुरुजाङ्गल**देशेषु **वीरमति**महादेवीचरेण **वीरनरेश्वरे**णाधिष्ठितं **यमदण्डतरपाले**नाश्रितमशेषसंसारसारसीमन्तिनीमनोहरं **हस्तिनागपुर**मवाप्य संपादि-

तावस्थितौ कदाचिदस्तसमस्तकोत्तंसतपनातपनिश्चये संध्यासमये मदपक्षी-
मलिनकपोलपालीनिलीनालिकुलालिख्यमानमुख्यपटाभोगभङ्गीप्रसरान्नील-
गिरिकुञ्जरात्स्वच्छन्दतोऽभिमुखमागच्छतो निवृत्य श्रीधर्माचार्योच्चार्यमाण-
धर्मश्रवणोचितं **नित्यमण्डितं** नाम चैत्यालयमासादयामासतुः ।

तत्र च '**धन्वन्तरे**, यदि सीधुपिशितोपदंशप्रमुखानि संसारसुखानि
स्वेच्छयानुभवितुमिच्छसि, तदा वायममीषामम्बराम्बरावृत्तवपुषां धर्मो
न श्रोतव्यः' इत्यभिधाय च श्रवणयुगलमतिनिर्भरं प्रमीलावलम्बिलो-
चनायामो **विश्वानुलोमः** सुष्वाप । **धन्वन्तरि**स्तु 'प्राणिना हि नियमेन
किमप्यचलितात्मतया व्रतमुपात्तं भवति । उदर्केऽवश्यं स्वःश्रेयसि निमित्तम्'
इति प्रस्तावायातमाचार्योदितमुपश्रुत्य, प्रणिपत्य च 'यद्येवं तर्हि भगवन्, अय-
मपि जनोऽनुगृह्यतां कस्यापि व्रतस्य प्रदानेन' इत्यवोचत् । तदनु 'ततः सूरेः
खलतिविलोकनात्त्वयात्तव्यम्' इति व्रतेन कुलालाल्लब्धनिधानः पयःपूरा-
विष्टपिष्टशकटपरित्यागाद्विगतोरगोद्गीर्णगरलजनितमृत्युसंगतिरज्ञातनामानो-
कहपरित्यागेन व्यतिक्रान्तकिंपाकफलादितापत्तिः पुनरविचार्य किमपि
कार्यं नार्यमिति गृहीतव्रतजातिरेकदा निशि नगरनायकनिलये नटनृ-
त्यनिरीक्षणात्कृतकालक्षेपणः स्वावासमनुसृत्य शनैर्विघटितकपाटपुटसंधि-
बन्धः स्वकीयया सविज्या विहितगाढावरुण्डनमात्मकलत्रं जातनिद्रातन्त्र-
मवलोक्योपपत्तिशङ्कया मुहुरुत्खातखङ्गो भगवतोपपादितं व्रतमनुससार ।
शुश्राव च दैवात्तदैव 'मनागतः परतः सर, खरं मे शरीरसंबाधः' इति गृहि-
णीगिरम् । ततश्च 'यदीदं व्रतमहमद्य नाग्रहीषम्, तदेमां मातरमिदं च प्रियक-
लत्रमसंशयं विशस्येह दुरपवादरजसाममुत्र च दुरन्तैनसां भागी भवेयम्'
इति जातनिर्वेदः सर्वमपि ज्ञातिलोकं यथायथं मनोरथोत्सेकमवस्थाप्य 'यत्रैव
देशे दुरपवादोपहतं चेतस्तत्रैव देशे समाश्रीयमाणमाचरणं न भवति निर-
पवादम्' इति प्रकाशितोपदेशस्य तस्य भगवतो निदेशाद्धरणिभूषणभूध-
रोपकण्ठे तपस्यतः कान्तारदेवताविहितसपर्याद्वरधर्माचार्यात्सुरसुन्दरीकटा-
क्षविपक्षां दीक्षामादाय विदितवेदितव्यसंप्रदायः सन्नम्बरे स्तम्बाडम्बरितो-
पात्तपलाशिमालायामेतदचलमेखलायामातापनयोगस्थितोऽनवरतप्रवर्धमाना-



ध्यात्मध्यानावन्ध्यबोध्यनिरतः 'किमयं कर्कूरोत्कीर्णः, किं वास्मादेव पर्व-
तान्निरूढः' इति वितर्काभ्यर्णो बभूव ।

संजातसुहृत्समालोकनकामो **विश्वानुलोमो**ऽपि तत्परिजनात्परिज्ञातै-
तत्प्रजनव्यतिकरः 'मित्रधेयस्य **धन्वन्तरे**र्या गतिः सा ममापि' इति प्रति-
ज्ञाप्रवरस्तत्रागत्य जैनजनसमवस्थितिमनवबुध्यमानः 'हंहो मनोहर वयस्य,
चिरान्मिलितोऽसि । किमिति न मे गाढामङ्कपालीं ददासि, किमिति न
काममालपयसि, किमिति न सादरं वार्तामापृच्छसे' इत्यादि बहु सप्रश्र-
यमाभाष्य निजनियमानुष्ठानैकतानमनसि निरागसि **धन्वन्तरि**यतीश्वरे प्र-
रुष्य सविधाशिवतातिः प्रादुर्भवदप्रीतिर्भूतरमणीयधरणिधरसमीपसमुत्पादि-
तोटजस्य सहस्रजटस्य जटिनो निकटे शतजटोऽजनिष्ट । **धन्वन्तरि**रप्या-
तापनयोगान्ते तस्य संबोधनाय समन्ते समुपसद्य 'मत्प्रणयपान्थविश्रामाराम
**विश्वानुलोम**, जिनधर्मस्थितिमनवबुध्यमानः किमित्यकाण्डे चण्डभाव-
मादाय दुराचारप्रधानः समभूः । तदेहि । विहायेमं दुःपथकथासनाथं शम-
थावसथमनोरथं सहैव तपस्यावः' इति बहुशः कृतप्रयत्नप्रकाशोऽपि दुःशि-
क्षावशात्तमोतपोतरुतभीतपतङ्गपाकमिव मुधामौनमूकतोत्तरङ्गितचित्तोत्सेकं
तितउपात्र इव तन्मनोमत्रेऽप्राप्तसदुपदेशपयोवस्थानः प्रतिबोधयितुमश-
क्नुवन्गुरुपादमूलमनुशील्य कालेन प्रवचनोचितं चरमाचरणाधिकृतं विधिं
विधाय विबुधाङ्गनाजनोच्चार्यमाणमङ्गलपरम्परानल्पेऽच्युतकल्पे समस्तसुरस-
माजस्तूयमानमहातपःपरायणप्रतिभो**ऽमितप्रभो** नाम देवोऽभवत् ।

**विश्वानुलोमो**ऽपि पुरोपार्जितजीवितावसाने विपद्योत्पद्य च व्यन्त-
रेषु गजानीकमध्ये **विजय**नामधेयस्य **विद्युत्प्रभा**ख्यया वाहनो बभूव ।
पुनरेकदा पुरंदरपुरःसरेण दिविजवृन्देन सह **नन्दीश्वरद्वीपा**त्तत्रत्यचै-
त्यालयाश्रयामष्टाह्नपर्वक्रियां निर्वर्त्यागच्छन्नसाव**मितप्रभो** देवस्तं **विद्युत्प्र-
भ**मिभववेक्ष्याह्लादमानमानसः प्रयुज्यावधिमवबुद्धपूर्ववृत्तान्तः '**विद्युत्प्रभ**,
किं स्मरसि जन्मान्तरोदन्तम्' इत्यभाषत । **विद्युत्प्रभः** '**अमितप्रभ**, बाढं
स्मरामि । किं तु सकलत्रचरित्राधिष्ठानादनुष्ठानान्ममैवंविधः कर्मविपाकानु-
रोधः । तव तु ब्रह्मचर्यवशात्कायक्लेशादीदृशः । ये च मदीये समये **जमदग्नि**-

**मतङ्ग-पिङ्गल-कपिञ्जला**दयो महर्षयस्ते तपोविशेषादिहागत्य भवतोऽप्यभ्यधिका भविष्यन्ति । ततो न विस्मेतव्यम्' । **अमितप्रभः**—'**विद्युत्प्रभ**, संप्रत्यपि न मुञ्चसि दुराग्रहम् । तदेहि । तव मम च लोकस्य परीक्ष्यावहे चित्तम्' इति विहितविवादौ तौ द्वावपि देवौ **करहाट**देशस्य पश्चिमदिग्भागमाश्रित्य काश्यपीतलमवतेरतुः ।

तत्र च वनेचरसैन्यसौजन्याशून्ये तन्निकटदण्डकारण्यवने समित्काशकुशाशयप्रकामे बदरिकाश्रमे बहुलकालकृतकृच्छ्रतपसं चन्द्रचण्डमरीचिरुचिपानपरायणमानसमूर्ध्वबाहुमेकपादावस्थानाग्रहराहुमनल्पोल्लसत्पल्लवाविरलवल्लीगुल्मवल्मीकावरुद्धवपुषमतिप्रवृद्धवृद्धतासुधाधवलितशिरःश्मश्रुजटाजालत्विषमृषेः **कश्यप**स्य शिष्यं **जमदग्नि**मवलोक्य पत्त्ररथमिथुनकथोचिताश्लेषं विषं विरचय्य तत्कूर्चकुलायकुटीरकोटरे निविष्टौ 'कान्ते, काञ्चनाचलचमूमेखलायामशेषशकुन्तचक्रवर्तिनो **वैनतेय**स्य **वातराज**सुतया **मदनकन्दली**नामया सह महान्विवाहोत्सवो वर्तते । तत्र मयावश्यं गन्तव्यम् । त्वं तु सखि, समासन्नप्रसवसमया सती न शक्यसे नेतुम् । अहं पुनस्तद्विवाहोत्सवानन्तरमकालक्षेपमागमिष्यामि । यथा चाहं तत्र चिरं नावस्थास्ये तथा मातुः पितुश्चोपरि महान्तः शपथाः । किं च बहुनोक्तेन । यद्यहमन्यथा वदामि तदास्य पापकर्मणस्तपस्विनो दुरितभागी स्याम्' इत्यालापं चक्रतुः । तं च **जमदग्निः** कर्णकटुमालापमाकर्ण्य प्रवृद्धक्रोधः कराभ्यां तत्कदर्पणार्थं कूर्चं मलितवान् । अमरचरौ विकिरावप्युड्डीय तदग्रविटपिनि संनिविश्य पुनरपि तं तापसमवलोहलालापौ निकाममुपजहसतुः । तापसः साध्वसविस्मयोपस्तृतमानसः 'नैतौ खलु पक्षिणौ भवतः । किं तु रूपान्तरावुमामहेश्वराविव कौचिद्देवविशेषौ । तदुपगम्य प्रणम्य च पृच्छामि तावदात्मनः पापकर्मत्वकारणम् । अहो मत्पूर्वपुण्यसंपादितावलोकनदिव्यद्विजोत्तमान्वयसंभवसदनपतङ्गमिथुन, कथयतां भवन्तौ कथमहं पापकर्मा' इति । पतत्रिणौ 'तपस्विन्, आकर्णय ।

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ।
तस्मात्पुत्रमुखं दृष्ट्वा पश्चाद्भवति भिक्षुकः ॥



तथा—

अधीत्य विधिवद्वेदान्पुत्राँश्चोत्पाद्य युक्तितः ।
इष्ट्वा यज्ञे यथाकालं ततः प्रव्रजितो भवेत् ॥

इति स्मृतिकारकीर्तितमप्रमाणीकृत्य तपस्यसि' इति । 'कथं तर्हि मे शुभाः परलोकाः' । 'परिणयनकरणादौरसपुत्रोत्पादनेन' । 'किमत्र दुष्करम्' इत्यभिधाय मातुलस्य **विजया**महादेवीपतेरिन्द्रपुरैश्वर्यभाजः **काशिराज**स्य भूभुजो भवनभाग्भूत्वा तद्दुहितरं **रेणुकां** परिणीयाविरलकलापोलपालंकृतपुलिनासराले मन्दाकिनीकूले महदाश्रमपदं संपाद्य **परशुराम**पिताभूत् ।

भवति चात्र श्लोकः—

अतस्तत्त्वविहीनस्य वृथा व्रतसमुद्यमः ।
पुंसः स्वभावभीरोः स्यान्न शौर्यायायुधग्रहः ॥

इत्युपासकाध्ययने **जमदग्नि**तपःप्रत्यवसादनो नाम पञ्चमः कल्पः ।

पुनस्तौ त्रिदशौ **मगध**देशेषु **कुशाग्र**नगरोपान्तापातिनि पितृवने कृष्णचतुर्दशीनिशि निशाप्रतिमाशयवशमेकाकिनं **जिनदत्त**नामानमुपासकमवलोक्य साक्षेपम् 'अरे दुराचाराचरणमते निराकृते अविदितपरमपद मनुष्यापसद, शीघ्रमिमामूर्ध्वशोषं शुष्कस्थाणुसमां प्रतिमां परित्यज्य पलायस्व । न श्रेयस्करं खलु तवात्रावसरं पश्यावः । यस्मादावां ह्येतस्याः परेतपुरभूयस्या भूमेः पिशाचपरमेश्वरौ । तदलमत्र कालव्यालावलोकनकरप्रस्थानेन । मा हि कार्षीरन्तरायोत्कर्षाभावमतुच्छस्वच्छन्दकेलिकुतूहलबहलान्तःकरणप्रसवयोरावयोः' इत्युक्तमपि प्रकामप्रणिधानोद्युक्तमवेक्ष्य न्यक्षतः कीनाशकाशरनिकायकायाकारघोरघनघस्मराडम्बरप्रथमप्रारम्भावहैः प्रचण्डतडिद्दण्डसंघट्टोच्छलच्छब्दसंदोहदुःसहैः निःसीमसमीरासरालसूत्कारसारप्रसरधवलैः करालवेतालकुलकाहलकोलाहलानुकूलैरन्यसामान्यैरन्यैश्च परिगृहीतगृहदाहवान्धवधनविध्वंसानुबन्धैः प्रत्यूहप्रबन्धैः सबहुमानैस्तत्तद्वरप्रदानैश्च निःशेषामप्युषामध्यात्मसमाधिनिरोधनिघ्नौ विहितविघ्नावपि तमेकाग्रभावाभ्यासात्मसात्कृतान्तःकरणं बहिःकरणेहितं शर्महर्म्यनिर्माणकार्मणपरमाणुप्रबन्धनाद्धर्मध्यानाच्चालपितुं न शेकतुः । संजाते च खरकिरणविरोकनिकरनिरा-

कृतान्धकारोदये प्रभातसमये समुपहृतोपसर्गवर्गौ प्रकाशप्रसन्नसर्गौ तैस्तैर्महाभोगोचितैः प्रणयोदितैराश्लाध्य तस्मै **जिनदत्ताय** विहायोपविहाराय पञ्चत्रिंशद्वर्णानविद्यां विद्यां वितेरतुः । इयं हि विद्या तवास्मदनुग्रहादम्बरविहारायासं साधितापि भविष्यति परेषां त्वस्माद्विधेरिति **जिनदत्तो**ऽपि कुलशैलशिखण्डमण्डनजिनायतनालोकनकुतूहलिताक्षयः समाचरितामरानुवर्तनसमयस्तां विद्यां प्रतिपद्य हृदयदर्शनोत्सवसमानीतनिखिलनिलिम्पाचलचैत्यालयस्तदवलोकनकौतुकाय **धरसेनाय** परमाप्तोपासनपटवे पुष्पवटवे प्रादात् ।

पुनरप्यमितप्रभः 'विद्युत्प्रभ, **जिनदत्तो**ऽयमतीवार्हदभिमतवस्तुपरिणतचित्तः स्वभावादेव च स्थिरमतिरशेषोपसर्गसहनप्रकृतिश्च । तदत्र महदप्यकृतं कुलिशे घुणकीटचेष्टितमिव न भवति समर्थम् । अतोऽन्यमेव काञ्चनाभिनवजिनोपासनायतनचैतन्यं निकषावः' इति विमृश्योच्चलिताभ्यामेताभ्यां **मगध**मण्डलमण्डनसनाथो **मिथिला**पुरीनाथः **पद्मरथो** नाम नरपतिर्निजनगरनिकटतटीधरवृत्तदेहायां कालगुहायां निवासरसमनसो दीप्ततपसो निःशेषानिमिषपरिषन्निषेव्यमाणाचरणचातुर्यात्सुधर्माचार्यात्तदङ्गाद्भुतप्रभाप्रभावदर्शनोपशान्ताशयःसम्यग्दर्शनमणुव्रताश्रयमादाय तद्दिवस एव तदुपदेशान्निश्चितार्हत्परमेश्वरशरीरनिरतिशयप्रकाशमहिमः कृतनियमः सकलभुवनपतिस्तूयमानगुणगणोदन्तं श्रीवासपूज्यभगवन्तमुपासितुं प्रतिष्ठमानः प्रमदनादसुन्दरं दुन्दुभिरवाकारितनिरवशेषपरिजनः समासृजत्समाप्तविष्टविशिष्टादृष्टचेष्टः । स च दृष्टः कदाचिदपि क्षुद्रोपद्रवाद्विप्रलब्धः प्रारब्धश्च पुरप्लोषान्तःपुरविध्वंसवरूथिनीमथनप्रसभप्रभञ्जनोर्जितपर्जन्यपरुषवर्षोपलासारादिवसतिभिर्दुर्दमशार्दूलोत्तराकृतिभिर्विकृतिभिरुपद्रोतुं तथाप्यविचलितचेतसमवसाय सनरवरं कुञ्जरं मायामयप्रतिघे(?)स्ताघे व्याप्ताखिलदिगारामसंगमे कर्दमे निमज्जयद्भ्यां ताभ्यां 'नमः सुरासुरोपसर्गसङ्गसूदनाभिधानमात्रमन्त्रमाहात्म्यसाम्राज्याय श्रीवासुपूज्याय' इति तत्र निमज्जतो भूभृतो वचनमाकर्ण्य तद्धैर्योत्कर्षोन्मिषत्तोषमनीषाप्रसराभ्यां लघु परिमुषिताशेषव्याघ्रव्यतिकराभ्यामाचरितसत्काराभ्याम् 'अहो नूतनस्य सम्यक्त्वरत्नस्याच्छन्नसद्मपथ **पद्मरथ**, नैतच्चित्रमत्र यत्संधासत्त्वाभ्यामखिलैरपि लोकैरसदृशेषु भवादृशेषु न प्रभवन्ति प्रसभप्रसवाः क्षुद्रोपद्रवाः । यतः ।



एकापि समर्थेयं जिनभक्तिर्दुर्गतिं निवारयितुम् ।
पुण्यानि च पूरयितुं दातुं मुक्तिश्रियं कृतिनः ॥'

इति निगीर्य, वितीर्य च जिनसमयाराधनवशे भवद्वशे सर्वरुजापहारोऽयं हारः, सकलसपत्नसंतानोच्छेद्यमिदमातोद्यं च प्रेषणं करिष्यतीति कृतशंकताभ्यां तद्द्वयमभिमतावस्थानं स्थानं प्रास्थायि । त्रिदशेश्वरवदनजृम्भमाणगुणसंकथः **पद्मरथो**ऽपि तत्तीर्थकृतो गणधरपदाधिकृतो भूत्वा कृत्वा चात्मानमनूनरत्नत्रयतन्त्रं मोक्षामृतपात्रमजायत ।

भवति चात्र श्लोकः—

उररीकृतनिर्वाहसाहसोचितचेतसाम् ।
उभौ कामदुघौ लोकौ कीर्तिश्चाल्पं जगत्त्रयम् ॥

इत्युपासकाध्ययने **जिनदत्त**स्य **पद्मरथ**पृथ्वीनाथस्य च प्रतिज्ञानिर्वाहसाहसो नाम षष्ठः कल्पः ।

इतश्च संगमितसकलोपकरणसेनो **धरसेनो**ऽप्यतुच्छभूच्छायावन्ध्ये पर्वदिवसवासतेयीमध्ये सर्वतो यातुधानधावनप्रवर्धिनीषु स्मशानमेदिनीषु प्रवर्तिततदाराधनानुकूलमण्डलो न्यक्षासु दिक्षु निक्षिप्तरक्षावलोऽवगणः कृतसकलीकरणो भागधेयीविधानसमये वटविटपाग्रे पतिंवराकरकर्तितसूत्रसहस्रसंपादितमात्मासनसमानान्तरालोचितमन्तर्जल्पसंकल्पितमन्त्रवाक्यः सिक्थं निबध्य प्रबन्धनाधस्तादूर्ध्वमुखविन्यस्तनिशिताशेषशस्त्रो यथाशास्त्रं बहिर्निवेशिताष्टविधेष्टिसिद्धिस्तद्विद्याराधनसमृद्धबुद्धिर्बभूव ।

अत्रान्तरे निष्कारणकलिकार्याञ्जनसुन्दर्या निशीथपथवर्तिवीक्षणे क्षपाक्षणे मध्यदेशे प्रसिद्ध**विजयपुर**स्वामिनः **सुन्दरी**महादेवीविलासिनः स्वकीयप्रतापबहुलवाहनाहुतीकृताराातिसमितेर**रिमन्थ**महीपते**र्ललितो** नाम सुतः समस्तव्यसनाभिभूतत्वाद्दायादक्रव्यादसंपादितसाम्राज्यपदापायः परमुपायमपश्यन्नदृश्याञ्जनावर्जितोर्जितप्रज्ञः प्रतीता**ञ्जनचोरा**परसंज्ञः किलै-

वमुक्तः—'**कुशाग्रपुर**परमेश्वरस्याग्रमहिष्याः स्ताविष्याः **सौभाग्यरत्नाकरं** नाम कण्ठालंकारमिदानीमेव यद्यानीय प्रयच्छसि, तदा त्वं मे कान्तः, अन्यथा प्रणयान्तः' इति। सोऽपि 'कियद्गहनमेतत्' इत्युदाहृत्य प्रियतमामनोरथमन्वर्थकं चिकीर्षुर्निजच्छायादृश्यताशीलकज्जलबहलं लोचनयुगलं विधाय प्रयाय च तन्महीश्वरगृहम्। गृहतस्तदलंकारस्तत्प्रभाप्रसरसमुलक्ष्यमाणचरणसंचारः शब्दशस्त्रौत्तालाननकैस्तलवरानुचरैरभियुक्तो निस्तरीतुमशक्तः परित्यज्य तदाभरणमितस्ततो नगरबाहिरिकायां विहरमाणस्तं **धरसेनं** प्रदीपदीप्तिवशादधस्तादस्त्रनिवेशभयावेशान्मुहुर्मुहुरारोहावरोहावहदेहदीनमवलोक्योपढौक्य च तं देशमेवं निर्दिदेश—'अहो प्रलयकालान्धकाराविलायामस्यां वेलायां महासाहसिकवृषन्दुष्करकर्मकारिन्, को नाम भगवान्**धरसेनः**'। 'कल्याणबन्धो, महाभागवृत्तस्य **जिनदत्तस्य** विदितपुष्पबटुनियोगसंबन्धोऽहमेतदुपदेशादाकाशविहारव्यवहारनिषद्यां विद्यां सिसाधयिषुरत्रापाशिक्षम्'। **अञ्जनचोरः**—'कथमयं साध्यते **धरसेनः**'। 'कथयामि। पूजोपचारनिषेकेऽस्मिन्निःशङ्कमुपविश्य विद्यामिमामकुण्ठकुण्ठं पठन्नेकैकं शरप्रवेकं स्वच्छधीश्छिन्द्यादवसाने गगनगमने। न युज्यते यद्येवमपसरापसर'। 'त्वं हि तलोन्मुखनिखातनिशितशस्त्रसंजातभीतमतिर्न खलु भवसि। एतद्यज्ञोपवीतदर्शनेनार्थावर्जनकृतार्थः समर्थः। तत्कथय मे यथार्थवादहृद्यां विद्याम्। एनां साधयामि'। ततस्तेनात्महितकटुना **पुष्पवटुना** साधुसमर्पितविद्यः सम्यग्विदितवेद्यः संपत्त्यासन्नशिवागारोऽ**ञ्जनचौरः** स्वप्नेऽप्यपरवञ्चनाचारनिवृत्तचित्तो **जिनदत्तः**। स खलु महतामपि महान्प्रतिपन्नदेशयतिव्रततन्त्रो जन्तुमात्रस्याप्यन्यथा न चिन्तयति, किं पुनश्चिराय समाचरितोपचारस्य तनूद्भवति। निर्विशेषं पोषितस्यास्य **धरसेन**स्यान्यथा चिन्तयेत्' इति निश्चित्य निविश्य च सौत्सुक्यं सिक्थे निःशङ्कशेमुषीकः स्वकीयसाहसव्यवसायसंतोषितसुरासुरानीकः सकृदेव तच्छरप्रसरं चिच्छेद, आससाद च खेचरपदम्। पुनर्यत्र **जिनदत्त**स्तत्र मे गमनं भूयादिति विहिताशंसनः काञ्चनाचलमेखलानिलयिनि सौमनसवनोदयिनि जिनसद्मनि **जिनदत्तस्य** धर्मश्रवणकृतो **गुरुदेव**भगवतः समीपे तपो गृहीत्वावगाहित-



समस्तैतिह्यतत्त्वो हिमवच्छैलचूलिकोन्मीलितकेवलज्ञानः कैलासकेसरकान्तारगतो मुक्तिश्रीसमागमसङ्गिभोगायतनो बभूव।

भवति चात्र श्लोकः—

क्षत्रपुत्रोऽक्षविक्षिप्तः शिक्षितादृश्यकज्जलः।
अन्तरिक्षगतिं प्राप निःशङ्कोऽञ्जनतस्करः॥

इत्युपासकाध्ययने निःशङ्कितत्त्वप्रकाशनो नाम सप्तमः कल्पः।

स्यां देवः स्यामहं यक्षः स्यां वा वसुमतीपतिः।
यदि सम्यक्त्वमाहात्म्यमस्तीतीच्छां परित्यजेत्॥
उदश्वितेव माणिक्यं सम्यक्त्वं भवजैः सुखैः।
विक्रीणानः पुमान्स्वस्य वञ्चकः केवलं भवेत्॥
चित्ते चिन्तामणिर्यस्य यस्य हस्ते सुरद्रुमः।
कामधेनुर्धने यस्य तस्य कः प्रार्थनाक्रमः॥
उच्यते स्थानके यस्य चित्तवृत्तिरनाकुला।
तं श्रियः स्वयमायान्ति स्रोतस्विन्य इवाम्बुधिम्॥
तत्कुदृष्ट्यन्तरोद्भूतामिहामुत्र च संभवाम्।
सम्यग्दर्शनशुद्ध्यर्थमाकाङ्क्षां त्रिविधां त्यजेत्॥

श्रूयतामत्रोपाख्यानम्—**अङ्ग**मण्डलेषु समस्तसपत्नसमरसमारम्भानिष्प्रकम्पायां **चम्पायां** पुरि **लक्ष्मीमति**महादेवीदयितस्य **वसुवर्धना**भिधानोचितस्य वसुधापतेर्निरवशेषवैदेहकवरिष्ठः किल **प्रियदत्त**श्रेष्ठी धर्मपत्न्या गृहलक्ष्मीसपत्न्या सकलस्त्रैगुणधाम्ना**ङ्गवती**नाम्ना सहाह्नायप्राह्णेऽष्टाहीक्रियाकाण्डकरणायाभ्रंकषकूटकोटिघटितपताकापटप्रतानाञ्चलजालस्खलितनिलिम्पविमानवलयं सहस्रकूटचैत्यालयं यियासुः स्वकीयसुतावयस्या**मनङ्गमति**मेवमपृच्छत्—'वत्से, अभिनवविवाहभूषणसुभगहस्ते, क्वास्ते समुल्लिखितलाञ्छनेन्दुसुन्दरमुखी प्रियसखी तवातीव केलिशीलप्रकृतिरनन्तमति**रनङ्गमतिः**'। 'तात, वणिग्वृन्दारकदारिकोद्गीयमानमङ्गलाकृत्रिमपुत्रकवरव्याजेनात्मपरिणयनाचरणपरिणामपेशला पञ्जरास्थितशुकसारिकावदनवाद्यसुन्दरे

वासावासपरिसरे समास्ते'। 'समाहूयतामितः'। 'यथादिशति तातः'। **प्रियदत्त**श्रेष्ठी वृद्धभावात्परिहासालापनपरमेष्ठी समागतां सुतामवलोक्य 'पुत्रि, निसर्गविलासरसोत्तरङ्गापाङ्गापहसितामृतसरणिविषये सदैव पञ्चालिकाकेलिकिलहृदये संप्रत्येव तव मन्मथपथाः परिणयनमनोरथाः। तदूह्यतां तावत्समस्तव्रतैश्वर्यवर्यं ब्रह्मचर्यम्। अत्रैष ते साक्षी भगवानशेषश्रुतप्रकाशनाशयभूरि**र्धर्मकीर्तिसूरिरनन्तमतिः**'। 'तात, नितान्तं गृहीतवत्यस्मि। न केवलमत्र मे भगवानेव साक्षी, किं तु भवानम्बा च'। अन्यदा तु

> उद्भिन्ने स्तनकुड्मले स्फुटरसे हास्ये विलासालसे
> किंचित्कम्पितकैतवाधर''''प्राये वचःप्रक्रमे।
> कन्दर्पाभिभवाल्पवृत्तिचतुरे नेत्राश्रिते विभ्रमे
> प्रादायेव च मध्यगौरवगुणं वृद्धे नितम्बे सति ॥

समायाते मुहुरुत्पथप्रमाणमन्मथोन्माथमन्थरसमस्तसत्त्वस्वान्ते सद्यःप्रसूतसहकाराङ्कुरकवलकषायकण्ठकोकिलकामिनीकुहारावसरालितमनोजविजये मलयाचलमेखलानिलीनकिन्नरमिथुनमोहनामोदमेदुरपरिसरन्समीरसमुदये विकसत्कोशकुरबकप्रसवपरिमलपानलुब्धमधुकरीनिकरझङ्कारसारप्रसरे वसन्तसमयावसरे सा प्रसरत्स्मरविकारा स्मरस्खलन्मतिगति**रनङ्गमतिः** सह सहचरीसमूहेन मदनोत्सवदिवसे दोलान्दोलनलालसमानसा स्वकीयरूपातिशयसंपत्तिरस्कृतसकलभवनाङ्गनाङ्गविलासा सुकेशीप्रियतमानुगतेन कृतकामचारप्रचारचेतसा पूर्वापराकूपारपालिन्द्रीसुन्दरीसनाथोत्सङ्गधरस्य **विजयार्धा**वनीधरस्य विद्याधरविनोदपादपोत्पादक्षोण्यां दक्षिणश्रोण्यां **किन्नरगीत**नामनगरनरेन्द्रेण **कुण्डलमण्डित**नाम्नाम्बरचरेण निचायिता

> शृङ्गारसारममृतद्युतिमिन्दुकान्ति-
> मिन्दीवरद्युतिमनङ्गशरांश्च सर्वान्।
> आदाय नूनमियमात्मभुवा प्रयत्ना-
> त्सृष्टा जगत्रयवशीकरणाय बाला ॥

इति विचिन्त्याभिलषिता च। ततस्तामपजिहीर्षुधिषणेन मुहुर्निवृत्य



निर्वर्तितनिजनिलयसुकेशीनिवेशेन प्रत्यागत्यापहृत्य च पुन**र्नभश्चरपुरं** प्रत्यनुसरता गगनमार्गोद्धि प्रतिनिवृत्तकुपितसुकेशीदर्शनाशङ्किताशयेन तत्कायसंक्रमितावलोकिनीपर्णलघुविद्याद्वयेन शङ्खपुराभ्यर्णभागिनि **भीमवन**नामनि कानने मुक्ता। तत्र च मृगयाप्रशंसनमागतेन **भीम**नाम्ना किरातराजलक्ष्मीसीम्नावलोकिता, नीता चोपान्तप्रकीर्णेङ्गुदीफलच्छल्लिं पल्लिम्। एतद्रूपदर्शनदीप्तमदमदनेन च तेन स्वतः परतश्च तैस्तैरुपायैरात्मसंभोगसहायैः प्रार्थिताप्यसंजातकामिता हठात्कृतकठोरकामोपक्रमेण तत्परिगृहीतव्रतस्थैर्याश्चर्यितकान्तारदेवताप्रतिहार्यात्पर्याप्तपक्कणप्लोषेण मृत्युहेतुकातङ्कपावकपच्यमानशरीरेण च 'मातः, क्षमस्वैकमिममपराधम्' इत्यभिधाय वनेचरोपचारोपचीयमानसहचरीचित्तोत्कण्ठे **शङ्खपुर**पर्यन्तपर्वतोपकण्ठे परिहृता तत्समीपसमावासितसार्थानीकेन **पुष्पक**नामकेन वणिक्पतिपाकेनावलोकिता सती स्वीकृता च तेन तेन चार्थेन स्वस्य वशमानेतुमसमर्थेन **कोशल**देशमध्याया**मयोध्या**यां पुरि **व्यालिका**भिधानकामपल्लवकन्दल्याः शंफल्याः समर्पिता। तयापि मदनमदसंपादनावसथाभिः कथाभिः क्षोभयितुमशक्या तद्राजधानीविनिवेशस्य सिंहमहीशस्योपायनीकृता। तेनाप्यलब्धतन्मनःप्रवेशेन विलक्षिताक्षिप्तदुरभिसंधिना तत्कन्यापुण्यप्रभावप्रेरितपुरदेवतापादितान्तःपुरपुरीपरिजनापकारविधिना साधु संबोध्य नियमसमाहितहृदयचेष्टाविसृष्टा पितृस्वसुः **सुदेवी**नामधेयायाः पत्युः पितुश्च**ार्हद्दत्त**स्य गृहीतनामवृत्तस्य **जिनेन्द्रदत्त**स्योदवसितसमीपवर्तिनं विरतिचैत्यालयमवाप्य तत्र निवसन्ती यमनियमोपवासपूर्वकैर्विधिभिः क्षपितेन्द्रियमनोवृत्तिर्भवन्ती तस्मा**दङ्ग**देशनगरा**ज्जिनेन्द्रदत्तं** चिरविरहोत्तालं श्यालं विलोकितुमागतेन **प्रियदत्त**श्रेष्ठिना वीक्ष्य विषयाभिलाषमोषपरुषकचा सा विहितबहुशुचा पुनः प्रत्याप्य तस्मै **जिनेन्द्रदत्त**सुताया**र्हद्दत्ताय** दातुमुपक्रान्ता—'तात, तं भदन्तं भगवन्तं पितरं तां प्रमाणीकृत्य कृतनिरवधिचतुर्थव्रतपरिग्रहा। ततः कथमहमिदानीं विवाहविधये परिकल्पनीया' इति निगीर्य कमलश्रीसकाशे विरतिविशेषवंशरत्नत्रयकोशमभजत्।

भवति चात्र श्लोकः—

हासात्पितुश्चतुर्थेऽस्मिन्व्रतेऽनन्तमतिः स्थिता ।
कृत्वा तपश्च निष्काङ्क्षा कल्पं द्वादशमाविशत् ॥

इत्युपासकाध्ययने निष्काङ्क्षितत्त्वावेक्षणो नामाष्टमः कल्पः ।

तपस्तीव्रं जिनेन्द्राणां नेदं संवादिमन्दिरम् ।
आदौपत्रादि चेत्येवं चेतः स्याद्विचिकित्सना ॥

स्वस्यैव हि स दोषोऽयं येन शक्तः श्रुताशयम् ।
शीलमाश्रयितुं यन्तुस्तदर्थं वा निबोधितुम् ॥

स्वतःशुद्धमपि व्योम वीक्षते यन्मलीमसम् ।
नासौ दोषोऽस्य किं तु स्यात्स दोषश्चक्षुराश्रयः ॥

दर्शनाद्देहदोषस्य यस्तत्त्वाय जुगुप्सते ।
स लोहे कालिकालोकान्नूनं मुञ्चति काञ्चनम् ॥

स्वस्यान्यस्य च कायोऽयं बहिश्छायामनोहरः ।
अन्तर्विचार्यमाणः स्यादौदुम्बरफलोपमः ॥

तदैतिह्ये च देहे च याथात्म्यं पश्यतां सताम् ।
उद्वेगाय कथं नाम चित्तवृत्तिः प्रवर्तताम् ॥

श्रूयतामत्रोपाख्यानम्—मतिश्रुतावधिबोधमार्गत्रयप्रवृत्तमतिमन्दाकिनी-सान्द्रः सौधर्मेन्द्रः किल सकलसुरसेवासभावसरसमये सम्यक्त्वरत्नगुणान्गीर्वाणानुग्रहायोदाहरन्निदानी**मिन्द्रकच्छ**देशेषु **मायापुरी**त्यपरनामावसरस्य प्रभोः **प्रभावती**महादेवीविनोदायतना**दौद्दायना**न्मेदिनीपतेः सद्दर्शनशरीरगदचिकित्सायामचिकित्सायामपरः कोऽपि क्षान्तिमतिप्रसरो मोकलक्ष्मीकटाक्षावेक्षणाक्षूणपात्रे मर्त्यक्षेत्रे नास्तीत्येतच्च वासवसंज्ञेशस्त्रिदशः पुरंदरोदितासहमानप्रज्ञस्तत्र महामुनिसमूहप्रचारप्रचरे नगरेऽवतीर्य सर्वाङ्गाधिना प्रतिष्ठकुष्ठकोष्ठकं निष्ठचूतद्रवोद्रेकोपद्रुतदेहमखिलदेहिसंदोहोद्वेजनश्रवणेक्षणघ्राणगरणविनिर्गलदनर्गलदुर्गन्धपूयप्रवाहमूर्धस्फुटितस्फोटस्फुटचेष्टितानिष्टमक्षिकाक्षिप्ताशेषशरीरमभ्यन्तरोच्छूयथुकोथोत्तरङ्गत्वगन्तरालप्रलीनाखिलनख-



नासीरमविच्छिन्नोन्मूर्छदनुच्छकच्छूच्छन्नसृक्कसारिणीसरन्सततलालास्रावमनवरतस्रोतःस्रुतातीसारसंभूतबीभत्सभावनैकशो विशिखाशिखोत्पतनियताश्रिताशुचिराशिदुर्दर्शवपुषमृषिवेषमादायादनायावनीपतिभवनमभजत्। भूपतिरपि सप्ततलारब्धसौधमध्यमध्यासीनस्तमसाध्यव्याधिविधुरधिषणादाधीनविष्वाणाध्येषणाय निजनिलयमालीयमानमवलोक्य सौत्सुक्यमालोक्य स्वीकृत्य च कृत्रिमातङ्कपावकपरवशास्वनितं मुहुर्मुहुर्महीतले नियतं तमनुद्विग्नमनश्चरित्रः प्रकामदुर्जयखर्जनार्जनजर्जरितगात्रं काश्मीरपङ्कपिञ्जरेण भुजपञ्जरेणोदानीयानीय चाशनवेश्मोदरं स्वयमेव समाचरितोचितोपचारस्तदभिलाषोन्मेषसारैराहारैरुपशान्ताशयानोत्कण्ठमाकण्ठं भोजयामास ।

**मायामुनिः** पुनरपि तन्मनोजिज्ञासमानमानसः प्रसभमतिगम्भीरगलगुहाकुहरोज्जिहानघोरघोषाभिघातघनघूर्णितापघनमप्रतिघं चावमीत् । भूमीपतिरपि ‘आः, कष्टमजनिष्ट, यन्मे मन्दभाग्यस्य गृहे गृहीताहारोपयोगस्यास्य मुनेर्मनःखेदपादपवितर्दिच्छार्दिः समभूत्’ इत्युपकुष्ठानिष्टचेष्टितवर्त्मानमात्मानं विनिन्दन्मायामयमक्षिकामण्डलितकपोलरेखा तदेतन्मुखादसराललालाक्लिन्नमन्नमिन्दिरारविन्दोदरसौन्दर्यनिकटेनाञ्जलिपुटेनादायादाय मेदिन्यामुदसृजत्। पुनश्चोद्गीर्णोदीर्णदुर्वर्णकूरनिकरे भर्भिभ्रमिनिर्भरारम्भपतितशरीरं सप्रयत्नकरस्थामसीमं समुत्थाप्य जलजनितक्षालनप्रसङ्गमुत्तरीयदुकूलाञ्चलविलुप्तसलिलसङ्गमङ्गसंवाहनेनानुकम्पनविधानोचितवचनरचनेन च साधु समाश्वासयत् । तदनु प्रमोदामृतामन्दहृदयालवालवलयोल्लसत्प्रीतिलतावनिः सुरचरो मुनिर्यथैवायं सद्दर्शनश्रवणोत्कण्ठितहृदि यत्रिदिवोत्पादि परिषदि परगुणग्रहणाग्रहनिधानेन विबुधप्रधानेन प्राज्यराज्यसमज्यार्जुनसर्जितजगत्त्रयीनिजनामधेयप्रसिद्धिर्यथोक्तसमत्वाधिगमावधेयबुद्धिरुपवर्णितस्तथैवायं मया महाभागो निर्वर्णित इति विचिन्त्य प्रकटितात्मरूपप्रसरस्तमवनीश्वरममरतरुप्रसूनवर्षानन्ददुन्दुभीनादोपघातशुचिभिः साधुकारपरव्याहारावसरशुचिभिरुदारैरुपचारैरनिमिषविषयसंभूष्णुभिर्मनोभिलषितसंपादनजिष्णुभिस्तैस्तैः पठितमात्रविधेयविद्योपदेशगर्भैर्वस्त्रसंदर्भैश्च संभाव्य सुरसेव्यं देशमाविवेश।

भवति चात्र श्लोकः—

बालवृद्धगदग्लानान्मुनीनौद्दायनः स्वयम्।
भजन्निर्विचिकित्सात्मा स्तुतिं प्रापत्पुरंदरात्॥

इत्युपासकाध्ययने निर्विचिकित्सासमुत्साहनो नाम नवमः कल्पः।

अन्तर्दुरन्तसंचारं बहिराकारसुन्दरम्।
न श्रद्दध्यात्कुदृष्टीनां मतं किम्पाकसंनिभम्॥

श्रुतिशाक्यशिवाम्नायः क्षौद्रमांसासवाश्रयः।
यदन्ते मखमोक्षाय विधिरत्रैतदन्वयः॥

भर्मभस्मजटावोटयोगपट्टकटासनम्।
मेखलाप्रोक्षणं मुद्रा वृसीदण्डः करण्डकः॥

शौचं मज्जनमाचामः पितृपूजानलार्चनम्।
अन्तस्तत्त्वविहीनानां प्रक्रियेयं विराजते॥

को देवः किमिदं ज्ञानं किं तत्त्वं कस्तपःक्रमः।
को बन्धः कश्च मोक्षो वा यत्तवेदं न विद्यते॥

आप्तागमाविशुद्धत्वे क्रिया शुद्धापि देहिषु।
नाभिजातफलप्राप्त्यै विजातिष्विव जायते॥

तत्संस्तवं प्रशंसां वा न कुर्वीत कुदृष्टिषु।
ज्ञानविज्ञानयोस्तेषां विपश्चिन्न च विभ्रमेत्॥

श्रूयतामत्रोपाख्यानम्—मुक्ताफलमञ्जरीविराजितविलासिनीकर्णकुण्डलेषु **पाण्ड्यमण्डले**षु पौरपुण्याचारविदूरितविधुरायां **दक्षिणमथुरा**यामशेषश्रुतपारावारगमवधिबोधाम्बुधिमध्यसाधितसकलभुवनभागम्, अष्टाङ्गमहानिमित्तसंपत्तिसमधिकधिषणाधिकरणम्, अखिलश्रमणसंघसिंहोपास्यमानचरणम्, अत्याश्चर्यतपश्चरणगोचराचारचातुरीचमत्कृतचित्तखचरेश्वरविरचितचरणार्चनोपचारं **श्रीमुनिगुप्त**नामव्याहारं भदन्तं भगवन्तं गगनमनङ्गनापाङ्गामृतसारणीसंबन्धवीध्रस्य **विजयार्धमेदिनीध्र**स्य रतिकेलिविलासविगलितनिलिम्पललनामेखलामणौ दक्षिणश्रेणौ **मेघकूटपट्टना**धिपत्योपान्तः



मन्तिनीकान्तः संसारसुखपराङ्मुखप्रतिभश्चन्द्र**शेखराय** सुताय निजैश्वर्यं वितीर्य पर्यवसितदेशयतिरूपः सकलाम्बरचरविद्यापरिग्रहसमीपः सप्रश्रयमभिवन्द्यानवद्यविद्यामहन् भगवन्, पौराङ्गनाशृङ्गारोत्तरङ्गापाङ्गपुनरुक्तस्मरशरायामु**त्तरमथुरा**यां जिनेन्द्रमन्दिरवन्दारुहृदयदोहदवर्ती वर्तेऽहम्। अतस्तन्नगरीगमनाय तत्र भगवतानुज्ञातोऽस्मि। किं च कस्य तस्यां पुरि कथयितव्यम्'। अपृच्छन्मुनिसत्तमः—'प्रियतम, यथा ते मनोरथस्तथाभिमतपथः समस्तु। संदेष्टव्यं पुनस्तत्रैतावदेव यदुत तत्पुरीपुरंदरस्य **वरुण**धरणीश्वरस्य शचीदृशः सुदृशः पतिर्जिनपतिचित्तचरणोपचारपदव्या महादेव्या **रेवती**ति गृहीतनामया मदीयाशीर्वाच्या तथावश्यकविशेषवश्यचित्तः सुव्रतभगवतो वन्दना च देशे यतिवरः किमपरः'। 'तत्र भगवन्, जैनो जनो नास्ति'। भगवान्—'देशव्रतिन्, अलं विकल्पेन। तत्र गतस्य भविष्यति समस्ताप्यार्हतेतरशरीरिसपक्षासमक्षा स्थितिः'। 'खचरविद्याबीजप्ररोहमल्लकः क्षुल्लको यथादिशति दिव्यज्ञानसङ्गवान्भगवान्' इति निगीर्य गगनचर्ययावतीर्य **चोत्तरमथुरा**यां परीक्षेय तावदेकादशाङ्गनिधानं भव्यसेनम्। तदनु परीक्षिष्ये सम्यक्त्वरत्नवन्तीं **रेवती**मिति कृतकौतुकः कलमकणिशकिंशारुप्रकाशकेशपेशलासरालचूतमुत्तप्तकाञ्चनरुचिरुचिरशरीरगौरतानुकूलमरविन्दमकरन्दपरागपिङ्गलनयनमतिस्पष्टविकटवर्णवर्णनोदीर्णवदनमेकादशवर्षदेशीयमतिविस्मयनीयं कपटबटुवेषमाश्लिष्य तन्मुनिमतमुदवसितमयासीत्।

वेषमुनिस्तमीक्षणकमनीयं द्विजात्मजसजातीयं विलोक्य किलैव स्नेहाधिक्यमालीलपत्—'हंहो, निखिलद्विजवंशव्यतिरिक्तसुकृतकृतकल्याणप्रकृतितया समस्तलोकलोचनानन्दोत्पादनपटो बटो, कुतः खलु समागतोऽसि'। 'अभिनवजनमनोह्लादनवचनागदप्रयोग **चरक**भट्टारक, सकलकलाविलासावासविद्वज्जनपवित्रात्**पाटलिपुत्रा**त्'। 'किमर्थम्'। 'अध्ययनार्थम्'। 'काधिजिगांसाधिकरणमन्तःकरणम्'। 'वाङ्मलक्षालनकरप्रकरणे व्याकरणे'। 'यद्येवं मदन्तिके स्वाध्यायध्यानसर्वस्वसमाः स्वपरवादिमदविदारणवाक्प्रक्रमासे'।

'भगवन्, साधु । समासे' । तदन्वतीतवतीषु कियतीषु चित्कालकलासु 'बटो, ललाटंतपो वर्तते मार्तण्डः । तद्गृहाणेमं कमण्डलुम् । पर्याधागच्छावः' । बटुः—'यथाज्ञापयति भगवान्' । पुनर्नगरबाहिरिकायां निर्गते ससूपसंयते स कपटबटुर्मायामयसस्याङ्कुरनिकरनिकीर्णां विहारावतीर्णामवनिमकार्षीत् । तद्दर्शनादाकृतियतिरपि मनाग्व्यलम्बिष्ट । बटुः—'भगवन्, किमित्यकाण्डे विलम्ब्यते' । 'बटो, प्रवचने किलैते सस्याङ्कुराः स्थावराः प्राणिनः पठ्यन्ते' । 'भगवन्, श्वासादिषु मध्ये कियति गुणः खल्वमीषां प्राणः । केवलं रत्नाङ्कुरा इव धराविकारा ह्येते सस्याङ्कुराः' । वेषमुनिः 'साध्वयमभिदधाति' इति विचिन्त्य विहृत्य च निःशङ्कं निष्पादितानाहारो विरहितव्याहारः करेण किमप्यभिनयन्नेवमनेनोक्तः—'भगवन्, किमिदं मौनेनाभिनीयते जिनरूपाजीवोऽभिमानस्य रक्षार्थं प्रतीक्षार्थं श्रुतस्य च ध्वनन्ति मुनयो मौनमदनादिषु कर्मसु' इति मौनफलमविकल्पजातजल्पः 'द्विजात्मज, समन्विष्य समानीयतामावा(?)यत्कायो गोमयो भसितपटलमिष्टकाशकलं वा' । 'भगवन्, अखिललोकशौचोचितप्रवृत्तिकायां मृत्तिकायां को दोषः' । 'बटो, प्रवचनलोचननिचायिकास्तत्कायिकाः किल तत्र सन्ति जीवाः' । 'भगवन्, ज्ञानदर्शनोपयोगलक्षणो जीवगुणः' । 'न च तेषु तद्द्वयमुपलभ्यते' । 'यद्येवमानीयतां मृत्स्ना कृत्स्ना द्रसुमत्सेव्या' । बटुस्तथाचर्य कुण्डिकामर्पयति । मुधामुनिर्जलविकलां कमण्डलुं करेणाकलय्य 'बटो, रिक्तोऽयं कमण्डलुः' । 'भगवन्, इदमुदकमचिरवल्ले तल्ले समास्ते' । 'बटो, पटापूतपानीयादाने महदादीनवं किमिति यतो जन्तवः सन्ति । तदसत्यमिह स्वच्छतया विहायसीव पयसि तदनवलोकनादिति वचनात्तत्र बहिस्तन्नसंयमिनि तत्त्वाभिनिवेशवशिकाशयवेश्मनि तद्देशमुद्दिश्याश्रितशौचे खचरेण चिन्तितम् । अत एव भगवानतीन्द्रियपदार्थप्रकाशनशेमुषीं प्राप्तः । श्रीमुनिगुप्तयोऽस्य किमपि न वाचिकं प्राहिणोत् । यस्मादस्मिन्प्रदीपवर्तिवदनमिवान्तस्तत्त्वसर्गे निसर्गमलीमसं मानसं बहिः प्रकाशनसरसं च ।



भवति चात्र श्लोकः—

जले तैलमिवैतिह्यं वृथा तत्र बहिर्द्युतिः ।
रसवत्स्यान्न यत्रान्तर्बोधो वेधाय धातुषु ॥

इत्युपासकाध्ययने **भवसेन**दुर्विलसनो नाम दशमः कल्पः ।

परीक्षितस्तावत्प्रसभाविर्भविष्यद्ध्वसेनो **भवसेन**स्तदानीं भगवदाशीर्वादपादयोत्पादवसुमतीं **रेवतीं** परोक्ष इत्याक्षिप्तान्तःकरणः पुरस्य पुरंदरदिशि हंसांशोत्तंसावासवेदिकान्तरालकमलकर्णिकास्तीर्णमृगाजिनापर्यङ्कपर्यायम्, अमरसरःसंजातसरोजसूत्रवर्तितोपवीतपूतकायम्, अमृतकरकुरङ्गकुलकृष्णसारकृत्तिकृतोत्तरासङ्गसंनिवेशम्, अनवरतहोमारम्भसंभूतभसितपाण्डुपुण्ड्रकोत्कटनिटलदेशम्, अम्बरचरतरङ्गिणीजलक्षालितकल्पकुजवल्कलवलितोत्तरीयप्रतानपरिवेष्टितजटावलयम्, अमृतान्धसिन्धुरोधःसंजातकुतपाङ्कुरोक्षमालाकमण्डलुयोमुद्राङ्कितकरचतुष्टयम्, उपासनसमायात-**मतङ्ग-भृगु-भर्ग-भरत-गौतम-गर्ग-पिङ्गल-पुलह-पुलोम-पुलस्ति-पराशर-मरीचि-विरोचन**-चञ्चरीकानीकास्वाद्यमानवदनारविन्दकन्दरविनिर्गलन्निखिलवेदमकरन्दसंदोहम्, उभयपार्श्वावस्थितमूर्तिमन्निखिलकलाविलासिनीसमाजसंचार्यमाणचामरप्रवाहम्, उदारनाद**नारद**मुनिना मन्यमानप्रतीहारव्यवहारम्, अम्भोद्भवाकारमासाद्य स **विद्याधरः** समस्तमपि नगरं क्षोभयामास । सापि जिनेश्वरचरणप्रणयमण्डपमण्डनमाधवीवरुणधरणीश्वरमहादेवी नृपतिपुरोहितात्तमुदन्तमाकर्ण्य त्रिषष्टिशलाकोन्मेषेषु पुरुषेषु मध्ये **ब्रह्मा** नाम न कोऽपि श्रूयते । तथा—

आत्मनि मोक्षे ज्ञाने वृत्ते ताते च भरतराजस्य ।
ब्रह्मेति गीः प्रगीता न चापरो विद्यते ब्रह्मा ॥

इति चानुस्मृत्य विस्मयमतिरतिष्ठत् ।

पुनः कीनाशदिशि पवनाशनेश्वरशरीरशयनाश्रितापघनमितस्ततः प्रकामप्रसरत्तदङ्गोत्तरङ्गकान्तिप्रकाशपरिकल्पितमृताम्बुधिसंनिधानम्, उल्लोलसत्फणामणिमरीचिनिचयसिचयाचरितनिरालम्बाम्बरवितानभावम्, अमर्त्योद्यानप्रसूनमञ्जरीजलजटिलप्रतानवनमालामकरन्दमण्डितकौस्तुभप्रभावम्,

अ‍सितसितरत्नकुण्डलोद्द्योतसंपादितोभयपक्षपक्षद्वयाक्षेयम्, अनेकमाणि-
क्याधिकाघटितकिरीटकोटिविन्यस्तास्तोकस्तबकपारिजातप्रसवपरिमलपान-
परिचयचटुलचञ्चरीकचयरच्यमानापरेन्दीवरशेखरकलापमिति गम्भीरना-
भीनदनिर्गतोन्नालनलनिलयनिलीनहिरण्यगर्भसंभाष्यमाणनामसहस्रकलमा-
खण्डलजलधिसुतासंवाह्यमानक्रमकमलमनश्वरणशङ्खसारङ्गनन्दकसंकीर्णक-
रम्, असुरवृन्दबन्दीकृतसुन्दरीसंपाद्यमानचामरोपचरव्यतिकरम्, अरुणा-
नुजविनीयमानसेवागतसुरसमाजम्, अधोक्षजवेषं विशिष्य स विद्याधरः
समस्तमपि नगरं क्षोभयामास । सापि जिनसमयरहस्यावसायसरस्वती **रेवती**
कर्णपरम्परया किंवदन्तीमेतामुपश्रुत्य 'सन्ति खल्वर्धचक्रवर्तिनो नव कौमो-
दकीप्रभवाः । ते तु संप्रति न विद्यन्ते । अयं पुनरपर एव कश्चिदिन्द्रजा-
लिको लोकविप्रलम्भनायावतीर्णः' इति निर्णीयाविचलितचित्ता समासीत् ।

पुनः पाशभृद्दिशि शिशिरगिरिशिखराकारकायशाक्कराश्रितशरीराभोग-
मन्वग्भूतनगनन्दनानिबिरीशस्तनतुङ्गिमस्तिमितपृष्ठभागम्, अनिशवनविस-
र्पिकर्पूरोद्भिदगर्भसंभवपरागपाण्डुरितपिण्डपरिकरम्, अचिरगोचरो नाभ-
ङ्गरागपिङ्गलाम्बकपरिकल्पितभालसरःस्वर्णसरोजाकरम्, अबालकपालदल-
कलापालवालवलयविलसन्मौलिमूलव्यतिकरम्, अतिविकटजटाजूटकोटर-
पर्यटद्गगनाटनतटिनीतरङ्गकरकेलिकुतूहलितबालप्रालेयकरम्, आभरणभङ्गि-
संदर्भितानर्भकभुजङ्गभोगसंगतानेकमाणिक्यविरोकनिकरातिशयसारशार्दू-
लाजिनविराजमानम्, उड्डुमरडमरुकाजकावकृपाणपरशुत्रिशूलखट्वाङ्गादि-
सङ्गसंकटशकोटकोटिविस्तारम्, स्तम्बेरमासुरवर्मद्रवद्रुधिरदुर्दिनीकृतनर्ता-
वनीप्रतानम्, **अनलोद्भव-निकुम्भ-कुम्भोदर-हेरम्ब-भिङ्गिरिटि**-प्रभृति-
पारिषदपरिषत्परिकल्प्यमानबलिविधानम्, अहिर्बुध्नावतरनिधानमाकारमनु-
कृत्य स विद्याधरः समस्तमपि नगरं क्षोभयामास । सापि स्याद्वादसरस्व-
तीसुरभिसंभावनबल्लवीवरुणमहीशमहादेवी इमां जनश्रुतिं कुतश्चित्पश्चिम-
प्रतोलिस्तृताद्विपश्चितो निश्चित्य निशम्य ते खलु प्रवचने तपःप्रत्यवाय-
वार्ता भद्रा रुद्रास्ते पुनः संप्रति स्वकीयकर्मणां विपाकात्कालिन्दीसोदरो-



दरगर्तवर्तिनः संजाताः । तदयमपर एव कश्चिन्नरेन्द्रविद्याविनोदाविदग्धहृ-
दयमर्दीति च प्रपद्य निःसंदिग्धबोधा समासिष्ट ।

पुनः स्वापतेशदिशि विश्वंभरातलादूर्ध्वम्, अयोमुखासनदशसहस्राधो-
वकृष्टम्, एकेन्द्रनीलशिलावर्तुलाधिष्ठानोत्कृष्टम्, अखिलगतिगर्तोत्तरण-
मार्गैरिव सोपानसर्गैश्चतुर्दिशमुपाहितावतारम्, अनर्घद्रुघणमणिश्लाघ्यो-
न्नतनवप्राकारान्तराचरितस्पष्टाष्टविधवसुंधरम्, अनवधिनिर्माणमाणिक्य-
सूत्रितत्रिमेखलालंकारकण्ठीरवपीठप्रतिष्ठपरमेष्ठिप्रतिमशेषतः समासीनद्वा-
दशसभान्तरालविलसन्निलिम्पानकाशोकानोकहप्रमुखप्रातिहार्योपशोभितम्,
ईषदुन्मिषदनिमिषोद्यानप्रसूनोपहारहरिचन्दनामोदसनाथगन्धकुटीसमेतम्,
अनेकमानस्तम्भतडागतोरणस्तूपध्वजधूपनिपनिधाननिर्भरसुरगनरानिमिष-
नायकानीकानीतमहामहोत्सवप्रसरम्, अभितो **भवसेन**प्रभृत्यार्हताभास-
प्रभावितयात्राधिकरणं समवशरणं विस्तार्य स विद्याधरः समस्तमपि नगरं
क्षोभयामास । सापि जिनसमयोपदेशरसैरावती **रेवती**मं व्रतान्तोपक्रमं
कुतोऽपि जैनाभासप्रतिभातावबुध्य 'सिद्धान्ते खलु चतुर्विंशतिरेव तीर्थं-
कराः, ते चाधुना सिद्धिवधूसौधमध्यविहाराः, तदेषोऽपर एव कोऽपि
मायाचारी तद्रूपधारी' इति चावधार्याविपर्यस्तमतिः पर्यात्मधामन्येव प्रव-
र्तितधर्मकर्मचक्रे सुखेनासांचक्रे ।

पुनर्बहुकूटकपटमतिर्दर्शयतिस्ताभिर्विविधप्रकृतिभिराकृतिभिस्तदास्व-
नितमक्षुभितमवगत्योपात्तमासोपवासिवेषः क्रियामात्रानुमेयनिखिलकरणो-
न्मेषो गोचराय तदालयं प्रविष्टस्तया स्वयमेव यथाविधिप्रतिपन्नचेष्टस्त-
थापि विद्याबलादनलनाशवमनादिविकारप्रबलात्कृतानेकमानसोद्वेजनवै-
यात्यो **रेवत्याः** क्वचिदपि मनोमूढतामपश्यन् । 'अम्ब, सर्वाम्बरचरचित्ता-
लंकारसम्यक्त्वरत्नाकरक्षोणि **दक्षिणमथुरायां** प्रसिद्धावसथः सकलगुण-
मणिनिर्माणविदूरावनिः **श्रीसुनिगुप्तमुनि**र्मदर्पितरचनैर्वचनैः परिमुषिताशे-
षकल्मषसवनैरखिलकल्पपरम्पराविरोचनैर्भवती **रेवती**मभिनन्दयति । **रे-
वती** भक्तिरसवशोल्लसल्लपनरागाभिरामं ससंभ्रमं च सप्तप्रचारोपसदैः पदैस्तां

दिशमाश्रित्य श्रुतविधानेन विहितप्रणामा प्रमोदमानमनःपरिणामा तदर्पितान्याशीर्वचनान्यापादितः ।

भवति चात्र श्लोकः—

कादम्बतार्क्ष्यगोसिंहपीठाधिपतिषु स्वयम् ।
आगतेष्वप्यभून्नैषा रेवती मूढतावती ॥

इत्युपासकाध्ययनेऽमूढताप्रौढिपरिवृढो नामैकादशः कल्पः ।

उपगूहस्थितीकारौ यथाशक्तिप्रभावनम् ।
वात्सल्यं च भवन्त्येते गुणाः सम्यक्त्वसंपदे ॥

तत्र—क्षान्त्या सत्येन शौचेन मार्दवेनार्जवेन च ।
तपोभिः संयमैर्दानैः कुर्यात्समयबृंहणम् ॥
सवित्रीव तनूजानामपराधं सधर्मसु ।
दैवप्रमादसंपन्नं निगूहेद्गुणसंपदा ॥
असक्तस्यापराधेन किं धर्मो मलिनो भवेत् ।
न हि भेके मृते याति पयोधिः पूतिगन्धताम् ॥
दोषं गूहति नो जातं यस्तु धर्मं न बृंहयेत् ।
दुष्करं तत्र सम्यक्त्वं जिनागमबहिस्थिते ॥

श्रूयतामत्रोपाख्यानम्—**सुराष्ट्रदेशेषु** मृगेक्षणापक्ष्मलमूलावलोकितापहसितानगास्त्रतन्त्रे **पाटलिपुत्रे** सुसीमाकामिनीमकरध्वजस्य **यशोध्वजस्य** भूभुजः पराक्रमाक्रमाक्रान्तसकलप्रवीरः **सुवीरो** नाम सूनुरनासादितविद्यावृद्धसंयोगसमयत्वाद्विटविदूषदूषितहृदयत्वाच्च प्रायेण परद्रविणदारादानोदारक्रियः क्रीडार्थमेकदा क्रीडावने गतः कितवकिरातपश्यतोहरवीरपरिषदमिदमवादीत्—'अहो, विक्रमैकरसिकेषु महासाहसिकेषु भवत्सु मध्ये किं कोऽपि मे प्रार्थनातिथिमनोरथसारथिरस्ति, यः खलु पूर्वदेशवेशावाप्तकीर्तने **ताम्रलिप्तिपत्तने** पुण्यपुरुषकाराभ्यामात्मसात्कृतरत्नाकरस्य **जिनेन्द्रभक्त**नामावतारस्य वणिक्पतेः सप्ततलगाराग्रिमभूमिभागिनि जिनसद्मनि छत्रत्रयशिखण्डमण्डनीभूतमद्भुतमद्भुतद्योतसनीडं वैडूर्यमणिमानयति, तदानेतुः पुनरभिलाषविषयनिषेकमेव पारितोषिकम् । तत्र च



सदर्पः **सूर्यो** नाम समस्तमलिम्लुचाग्रेसरो वीरः किलैवमलापीत्—'देव, कियद्वहनमेतद्यतो योऽहं देवप्रसादाद्वियदादवसानविरचि**तामरावती**पुरस्य पुरंदरस्यापि चूडालंकारनूतनं रत्नं पातालमूलनिलीनभोगवतीनगरस्योरगेश्वरस्यापि फणगुम्फनाधिक्यं माणिक्यमपहरामि, तस्य मे मनुष्यमात्रपरित्राणधरणिं मणिलोचनगोचरागारविहारमपहरतः कियन्मात्रं महासाहसम्' इति शौर्यं गर्जित्वा निर्गत्यागत्य च **गौडमण्डल**मपरमुपायमपश्यन्मणिमोषायाक्षिप्तक्षुल्लकवेषश्चान्द्रायणाचरणैः पक्षपारणाकरणैर्मासोपवासप्रारम्भैरपरैरपि तपःसंरम्भैः क्षोभितनगनगरग्रामग्रामणीगणः क्रमेण **जिनेन्द्रभक्त**भावाधिकरणतामभजत् । एकान्तभक्तिशक्तः स **जिनेन्द्रभक्त**स्तं मायात्मसात्कृतप्रियतमाकारमपरमार्थाचारमजानन्नार्यवर्यावश्यमनेकानर्घ्यरत्नरचितजिनदेहसंदोहेऽस्माद्देवगृहे त्वया तावदासितव्यं यावदहं बहित्रयात्रां विधाय समायामि' इत्ययाचतोऽप्रकटकूटकपटक्रमः 'प्रियतम, श्रेष्ठिन्, मैवं भाषिष्ठाः, यदङ्गनाजनसंकीर्णेषु द्रविणोदीर्णेषु देशेषु विहितौकसां प्रायेणामलिनमनसामपि सुलभोदाहाराः खलु खलजनतिरस्काराः'। श्रेष्ठी—'देशयतीश, न सत्यमेतत् । अपरिज्ञातपरलोकव्यवहारस्यावशेन्द्रियव्यापारस्य हि पुरुषस्य बहिःसङ्गे स्वातं विकुरुतां नाम न पुनर्यथार्थदृशामनन्यसामान्यसंयमस्पृशां भवादृशां यतीशानाम्' इति बह्वाग्रहं देवग्रहपरिग्रहाय तमयथार्थमुनिमभ्यर्थ्य कलत्रपुत्रमित्रबान्धवेष्वकृतविश्वासो मनःपरिजनदिनशकुनपवनानुकूलतया नगरबाहिरिकायां प्रस्थानमकार्षीत् । मायामुनिस्तस्मिन्नेवावसरे तदगारमाकुलपरिवारमवबुध्यार्धावशेषायां निशि कृतरत्नापहारस्तन्मरीचिप्रचारादारक्षिकैरनुद्रुतशरीरः पलायितुमशक्तस्तस्यैव धर्महर्म्यनिर्माणपरमेष्ठिनः श्रेष्ठिनः प्रस्थानावासनिवेशमाविवेश । श्रेष्ठ्यपि दुरालापबहलात्तत्कोलाहलाद्द्राग्विद्राणनिद्रस्तदैव मृषामुनिमुद्रमवसाय स्वभावतः शुद्धाप्तागमपदार्थसमाचारनयस्य निःशेषान्यदर्शनव्यतिरिक्तान्वयस्य समयस्याविदितपरमार्थजनापेक्षया दुरपवादो माभूदिति च विचिन्त्य समस्तमप्यारक्षिकलोकमेवमभणीत्—'अहो दुर्वाणीकाः, किमित्येनं संयमिनमभल्लेन संभावयन्ति

भवन्तः, यदेष खलु महातपस्विनामपि महातपस्वी परमनिःस्पृहाणामपि परमनिःस्पृहः प्रकृत्यैव महापुरुषो मायामोहरहितचित्तवृत्तिरस्मदभिमतेन मणिमेनमानयत्कथं नाम तेन भावेन भवद्भिः संभावनीयः। तत्प्रतूर्णमभ्यर्णीभूय प्रसन्नवपुषः सदाचारकैरवार्जनज्योतिषमेनं क्षमयत स्तुत नमस्यत वरिवस्यत च।

भवति चात्र श्लोकः—

मायासंयमनोत्सूर्पे सूर्पे रत्नापहारिणि।
दोषं निषूदयामास जिनेन्द्रो भक्तवाक्परः॥

इत्युपासकाध्ययने धर्मोपबृंहणाह्वणो नाम द्वादशः कल्पः।

परीषहव्रतोद्विग्नमजातागमसंगमम्।
स्थापयेद्भ्रस्यदात्मानं समयी समयस्थितम्॥
तपसः प्रत्यवस्यन्तं यो न रक्षति संयतम्।
नूनं सद्दर्शनाद्बाह्यसमयस्थितिलङ्घनात्॥
नवैः संदिग्धनिर्वाहैर्विदध्याद्गणवर्धनम्।
एकदोषकृते त्याज्यः प्राप्ततत्त्वः कथं नरः॥
यतः समयकार्यार्थी नानापञ्चजनाश्रयः।
अतः संबोध्य यो यत्र योग्यस्तं तत्र योजयेत्॥
उपेक्षायां तु जायेत तत्त्वाद्दूरतरो नरः।
ततस्तस्य भवो दीर्घः समयोऽपि च हीयते॥

श्रूयतामत्रोपाख्यानम्—**मगधदेशेषु** राजगृहापरनामावसरे **पञ्चशैलपुरे** **चेलिनी**महादेवीप्रणयकेणिकस्य श्रेणिकस्य गोत्राकलत्रस्य पुत्रः सकलवैरिपुराभिषेणो **वारिषेणो** नाम। स किल कुमारकाल एव संसारसुखसमागमविमुखमानसः परमवैराग्योद्धूर्णः पूर्णनिर्णयरसः श्रावकधर्माराधनधन्यधिषणतया गुरूपासनसंवीणतया च सम्यगवसितोपासकाध्ययनविधिराश्चर्यशौर्यनिधिरेकदा प्रेतभूमिषु भूतवासरविभावर्यां रात्रिप्रतिमास्थितो बभूव। अत्रावसरे क्षपायाः परिणताभोगे खलु मध्यभागे **मगधसुन्दरी**नामया पण्याङ्गनयात्मन्यतीवासक्तचित्तवृत्तिप्रसरो **मृगवेग**-



नामा वीरः शयनतलमापन्नः सन्नेवमुक्तः—'राजश्रेष्ठिनो **धनदत्त**नामनिष्ठस्य **कीर्तिमती**नामायाः प्रियतमायाः स्तनमण्डनोदारमलंकारसारं हारमिदानीमेवानीय यदि विश्राणसि, तदा त्वं मे रतिरामः, अन्यथा प्रणयविरामः' इति। सोऽप्यवशानङ्गवेगो **मृगवेग**स्तद्वचनादेव तदायतनान्निःसृत्याभिसृत्य च निजकलाबलात्तस्य **धनदत्त**स्यागारमाचरितहारापहारस्तत्किरणनिकरनिश्चितचरणचारस्तलारानुचरैरनुसृतो मृगायितुमसमर्थस्तस्य व्युत्सर्गावेगमुपेयुषो **वारिषेण**स्य पुरतो हारमपहाय तिरोदधे। तदनुचरास्तत्प्रकाशविशेषवशात् '**वारिषेणो**ऽयं ननु राजकुमारः पलायितुमशक्तः पित्रोः श्रावकत्वादिमामर्हत्प्रतिमासमानाकृतिं प्रतिपद्य पुरो निहितहारः ससास' इत्यवमृश्य प्रविश्य च विश्वंभराधीशवेश्मनिवेशमेतत्पितुः प्रतिपादितवृत्तान्ताः

दण्डो हि केवलो लोकं परं चेमं च रक्षति।
राज्ञा शत्रौ च पुत्रे च यथादोषं समं धृतः॥

इति वचनात् 'नहि महीभुजां गुणदोषाभ्यामत्र मित्रामित्रव्यवस्थितिः, तदस्य रत्नापहारोपहतचरित्रस्य पुत्रशत्रोर्न प्राणप्रयाणादपरश्चण्डो दण्डः समस्ति' इति न्यायनिष्ठुरतावेशात्तज्जनकादेशादागत्य तं सदाचारमहान्तं प्रहरन्तः शरविशरान्प्रसूनशेखरतां भ्रमिलमण्डलानि कर्णकुण्डलतां कृपाणनिकरान्मुक्ताहारतामेवमपराण्यप्यस्त्राणि भूषणतामनुसरन्ति। निबुध्य तद्ध्यानधैर्यप्रवृद्धप्रमोदतया स्वयमेव पुरदेवताकरविकीर्णमाणामरतरुप्रसवोपहारमम्बरचरकुमारास्फाल्यमानानेकनिकरमनिमिषनिकायकीर्त्यमानानेकस्तुतिव्यतिकरमितस्ततो महामहोत्सवावतारं च निचाय्य सत्वरमतिभीतिविस्मितान्तःकरणः श्रेणिकधरणीश्वरायेदं निवेदयामासुः। नरवरः सोत्तालं तत्रागतः सन्कुमाराचारानुरागरसोत्सारितमृतिभीतिसज्ञान्**मृगवेगा**दवगतामूलवृत्तान्तः साधुं तं कुमारं क्षमयामास। नृपनन्दनोऽपि प्रतिज्ञातसमयावसाने 'प्राणिनां सुलभसंपाताः खलु संसारे व्यसनविनिपाताः। तदलमत्र कालकवलनावलम्बेन विलम्बेन। एषोऽहमिदानीमवाप्तयथार्थमनीषोन्मेषस्तावदात्महितस्योपस्करिष्ये' इति निश्चयमुपश्लिष्याभाष्य

पितरमापिष्य च बाह्याभ्यन्तरपरिग्रहाग्रहमाचार्यस्य सुरदेवस्यान्तिके तपो जग्राह ।

भवति चात्र श्लोकः—

विशुद्धमनसां पुंसां परिच्छेदपरात्मनाम् ।
किं कुर्वन्ति कृता विघ्नाः सदाचाराखिलैः खलैः ॥

इत्युपासकाध्ययने **वारिषेण**कुमारप्रव्रज्याव्रजनो नाम त्रयोदशः कल्पः ।

पुनः'इष्टं धर्मे नियोजयेत्, तथा आतुरस्यागदंकारोपयोग इवानिच्छतोऽपि जन्तोर्धर्मयोगः कुशलैः क्रियमाणो भवत्यायत्यामवश्यं निःश्रेयसाय' इति जातमतिस्तपःपरिग्रहेऽपि सह पांसुक्रीडितत्वाच्चिरपरिचयरूढप्रणयत्वाच्चात्मनः प्रियसुहृदं **पुष्पवती**भट्टिनीभर्तुरमात्यस्य **शाण्डिल्यायन**स्य नन्दनमभिनवविवाहविहितकङ्कणबन्धनं **पुष्पदन्ता**भिधानमेतदायतनानुगमनेन स्वामिपुत्रत्वात्प्रतिपन्नमहामुनिरूपत्वाच्चाचरिताभ्युत्थानं हस्तेनावलम्ब्य पुनः 'अतोऽतश्च प्रदेशान्मां व्यावर्तयिष्यत्ययं भगवान्' इति सहानुसरन्तमवाप्तवन्तं च गुरूपान्तम्, 'भदन्त, एष खलु महानुभावतालतालम्बतरुः स्वभावेनैव भवभीरुर्भोगानुभवने विरक्तिचित्तः सर्वसंयतवृत्तार्थी भगवत्पादमूलमायातः' इति सूचयित्वा भगवतोऽभ्यर्णे कामकरिकदलिकावहीभारमिव मूर्धजनिकरमपनाय्य दीक्षां ग्राहयामास । सोऽपि तदुपरोधाक्षेपाद्दीक्षामादाय हृदयस्याविदितवेदितव्यत्वादनङ्गग्रहग्रसितत्वाच्च पञ्जरपात्रः पतत्रीव मन्त्रशक्तिकीलितप्रतापः पृदाकुरिव गाढबन्धनालानितो व्यालशुण्डाल इव चाहर्निशं **वारिषेण**ऋषिणा रक्ष्यमाणोऽपि

अलकवलयरम्यं भ्रूलतानर्तकान्तं
नवनयनविलासं चारुगण्डस्थलं च ।
मधुरवचनगर्भं स्मेरबिम्बाधरायाः
पुरत इव समास्ते तन्मुखं मे प्रियायाः ॥
कर्णावतंसमुखमण्डनकं च भूषा
वक्षोजपत्रजघनाभरणानि रागात् ।



पादेष्वलक्तकरसेन च चर्चनानि
कुर्वन्ति ये प्रणयिनीषु त एव धन्याः ॥
लीलाविलासविलसन्नयनोत्पलायाः
स्फारस्मरोत्तरलिताधरपल्लवायाः ।
उत्तुङ्गपीवरपयोधरमण्डलाया-
स्तस्या मया सह कदा ननु संगमः स्यात् ॥

किं च ।

चित्रालेखनकर्मभिर्मनसिजव्यापारसारास्मृतै-
र्गाढाभ्यासपुरःस्थितप्रियतमापादप्रणामक्रमैः ।
स्वप्ने संगमविप्रयोगविषयप्रीत्यप्रमोदागमै-
रित्थं **वेषमुनि**र्दिनानि गमयत्युत्कण्ठितः कानने ॥

इति निर्बन्धेन ध्यायन्द्वादशसमाः समानैषीत् ।

**शूरदेव**भट्टारकोऽप्याभ्यां सह तेषु विषयेषु तीर्थकृतां पञ्च कल्याणमङ्गलानि स्थानानि वन्दित्वा पुनर्विहारवशात्तत्रैव जिनायतनोत्तंसितोपान्तशैलचूले **पञ्चशैलपुरे** समागत्यात्मनो **वारिषेण**ऋषेश्च तद्दिवसे पर्युपासितोपवासत्वात्तं **पुष्पदन्त**मेकाकिनमेव प्रत्यवसानायादिदेश । तदर्थमादिष्टेन च तेन चिन्तितं चिरात्कालात्खल्वेकस्मादपमृत्योर्जीवन्नुद्धरितोऽस्मि । संप्रति हि मे न्यूनानि पुण्यान्यवेक्ष्य दीक्षां मुमुक्षुणा मङ्क्षु पासपरिक्षेपपक्षरितेनेव पक्षिणा पलायितुमारब्धम् । **वारिषेण**स्तस्य तथा प्रस्थानात्कृतोदकं वितर्क्य 'अवश्यमयं जिनरूपं जिहासुरिव सौत्सुक्यं विक्रमते, तदेष कषायमुष्यमाणधिषणः समयप्रतिपालनाधिकरणैर्न भवत्युपेक्षणीयः' इत्यनुध्यायाच्चातमनुरुध्यैतत्स्थापनाय जनकनिकेतनं जगाम । **चेलिनी**महादेवी पुत्रं मित्रेण सत्रमुपढौकमानमवेक्ष्य तदभिप्रायपरीक्षार्थं सरागं वीतरागं चासनमयच्छत् । **वारिषेण**स्तेन समं चरमोपचारं विष्टरमलंकृत्य 'अम्ब, समाहूयतां समस्ताप्यात्मीयाः स्नुषाः' । तदनु वनदेवता इव प्रसूनोत्तंसोत्तरङ्गितकुन्तलारामाः, कल्पलता इव मणिभूषणरमणीयाङ्गनिर्गमाः, प्रावृष इव समुन्नद्धपयोधराविद्धमध्यभागाः, सकलजगल्लावण्यलवलिपि-

लिखिता इव सुभगभोगायतनाभोगाः, कङ्केल्लिकाननक्षितय इव पादपल्लवोल्लासितविहारविषयाः, कमलिन्य इव मणिमञ्जरीमणितोन्मदमरालमण्डलस्खलितचलनलेशयाः, स्वकीयरूपसंपत्तिरस्कृतत्रिभुवनरामारामणीयकाः सलीलमहमहमिकोत्सुकाः समागत्य समन्तात्परिवव्रुः पुण्यदेवता इव ताः स्ववासिन्यः। 'अम्ब, मद्भ्रातृजाया सुदत्यप्याकार्यताम्' । ततः संध्येव धातुरक्ताम्बरचराटोपा, तपसःश्रीरिव विलुप्तकुन्तकलापा, भव्यजनमतिरिव विभ्रमभ्रंशिदर्शना, हिमोन्मथिता कमलिनीव क्षामच्छायापथना, शरदिव दीनपयोधरभरा, खट्वाङ्गकरङ्काकृतिरिव प्रकटकीकसनिकरा सकलसंसारसुखव्यावृत्तिनीतिर्मूर्तिमती वैराग्यस्थितिरिव विवेश ।

**पुष्पदन्त**हृदयकन्दलोल्लासवसुमती **सुदती** **वारिषेणो**ऽवधार्य 'मित्र, सेयं तव प्रणयिनी यन्निमित्तमद्यापि न संपद्यसे मनो नो मुनिरिति । एताश्चैवंविधकायास्तव भ्रातृजायाः, तथैते च वयं तव समक्षोदयं समाचरिताभिजातजनोचितचरिताः' । **पुष्पदन्तः**—

स्नानानुलेपवसनाभरणप्रसून-
ताम्बूलवासविधिनी क्षणमात्रमेतत् ।
आधेयभावसुभगं वपुरङ्गनानां
नैसर्गिकी तु किमिव स्थितिरस्य वाच्या ॥

इत्यसंशयमासथ्य स्त्रैणेषु सुखकरणेषु विचित्सासज्जां लज्जामभिनीय 'हंहो निकामनिरुद्धमकरध्वजोद्धवविधुरबान्धव संसारसुखसरोजोत्सारनीहारायमाणचरण **वारिषेण,** पर्याप्तमत्रावस्थानेन । प्रकामं शकलितकुसुमास्त्ररसरहस्य वयस्य, इदानीं यथार्थनिर्वेदावनिर्मनो मुनिरस्मीति चावधाय विशुद्धहृदयौ द्वावपि तौ **चेलिनी**महादेवीमभिनन्द्योपसद्य च गुरुपादोपशल्यं निःशल्याशयौ साधु तपश्चक्रतुः ।

भवति चात्र श्लोकः—

**सुदती**सङ्गमासक्तं **पुष्पदन्तं** तपस्विनम् ।
**वारिषेणः** कृतत्राणः स्थापयामास संयमे ॥

इत्युपासकाध्ययने स्थितिकारकीर्तनो नाम चतुर्दशः कल्पः ।



चैत्यैश्चैत्यालयैर्ज्ञानैस्तपोभिर्विविधात्मकैः ।
पूजामहाध्वजाद्यैश्च कुर्यान्मार्गप्रभावनम् ॥
ज्ञाते तपसि पूजायां यतीनां यस्त्वसूयते ।
स्वर्गापवर्गभूर्लक्ष्मीर्नूनं तस्याप्यसूयते ॥
समर्थश्चित्तवित्ताभ्यामिहाशासनभासकः ।
समर्थश्चित्तवित्ताभ्यां स्वस्यामुत्र न भासकः ॥
तद्दानज्ञानविज्ञानमहामहमहोत्सवैः ।
दर्शनद्योतनं कुर्यादैहिका''''(?)पेयोज्झितः ॥

श्रूयतामत्रोपाख्यानम्—**पञ्चाल**देशेषु श्रीमत्पार्श्वनाथपरमेश्वरयशःप्रकाशनामत्रे अहिच्छत्रे **चन्द्रानना**ङ्गनारतिकुसुमचापस्य **द्विषंतपस्य** भूपतेरुदितोदितकुलशीलः षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतमतिरापदां दैवीनां मानुषीणां च प्रतिकर्ता **यज्ञदत्ता** भट्टिनीभर्ता **सोमदत्तो** नाम पुरोहितोऽभूत् । एकदा तु सा किल **यज्ञदत्ता**न्तर्वती सती माकन्दमञ्जरीकर्णपुरेषु तत्परिणतफलाहारेषु च समासादितदोहला व्यतिक्रान्तरसालवल्लरीफलकालतया कामितमनवाप्तवती शिफासु व्यथमाना प्रतानिनीव तनुतानवमुपेयुषी तेन पुरोहितेन ज्ञातिजनेन च प्रबन्धेन पृष्टा हृदयेष्टमभाषिष्ट । **भट्ट**स्तन्निशम्य 'कथमेतन्मनोरथमयथार्थपथमसन्मथ(त)मव्यर्थप्रार्थनं कथं करिष्यामि' इत्याकुलमनः परिच्छदच्छात्रतन्त्रानुपदः सातपत्रपदत्राणस्तद्गवेषणधिषणापरायणः सन्नितस्ततो व्रजन् **जलवाहिनी** नाम नदीतटनिकटनिविष्टप्रतनने महति **कालिदास**कानने परमतपश्चरणाचरणशुचिशरीरेण निःशेषश्रुतश्रवणप्रसृतमनस्कारेण समस्तसत्त्वनिरूपणस्वाध्यायध्वनिसिद्धौषधिसविधसाधितवनदेवतानिकरेण मूर्तिमतेव धर्मेण विनेयदैर्घिकेयमित्रेण **सुमित्रेण** मुनिनालंकृतावालवलयमेतद्ब्रह्मवर्चसमाहूही(?)त्म्यादामूलमाचूलं चैकं चूतमुल्लसल्लवलीफलगुलुच्छस्फीतमवलोक्य च्छेकच्छात्रहस्ते कलत्रस्य पिकप्रियप्रसवफलप्रतोलीं प्रहृत्य ततो भगवतोऽवधिपयोधिमध्यसंनिधायमानसकलाकलापरत्नाद्धर्मश्रवणावसरप्रयत्नात्समायातं सहस्रारकल्पे सूर्यविमानसंभूतं सूर्यचराभिधानानुगतमत्यल्प-

विभवपरिप्लुतमात्मगोचरं भवान्तरमाकर्ण्योदीर्णजातिस्मरभावः स्वप्नसमादितसाम्राज्यसमानसारात्संसाराद्विरज्य मनोजविजयप्राज्यां प्रव्रज्यामासज्य प्रबुद्धासिद्धान्तहृदयो **मगधविषये सोपारपुर**पर्यन्तधाम्नि **नाभिगिरि**नाम्नि महीधरे सम्यग्योगातापनयोगधरो बभूव ।

तदनु सा तद्वियोगातङ्कोद्धृत्तचित्ता **यज्ञदत्ता** तदन्तेवासिभ्यः **सोमदत्त**व्रतव्यतिकरमात्मखेदकरमनुभूय प्रसूय च समये स्तनंधयं पुनस्तमादाय प्रयाय च तं भूमिभृतम् 'अहो कूटकपटकपिकटमन्मानोवनदाहदावपावकनिःस्निग्ध दुर्विदग्ध, यदीमं दिगम्बरप्रतिच्छन्दमवच्छिद्य स्वेच्छयेच्छयागच्छ । नो चेद्गृहाणैनमात्मनो नन्दनम्' इति व्याहृत्यास्योर्ध्वज्ञो भगवतः पुरतः शिलातले बालकमुत्सृज्य विजहार निजं निवासम् । भगवानपि तेन सुतेन दृषदः प्लोषोत्कर्षकलुषत्वाद्विष्टरीकृतचरणवर्गः सोपसर्गस्तथैवावतस्थे ।

अत्रान्तरे सहचरानुचरसंचरत्खेचरीचरणालक्तकरक्तरन्ध्रस्य विजयार्धतटीध्रस्य दयिताविदूरविद्याधरीविनोदविहारपरिमलितकान्तारधरण्यामुत्तरश्रेण्याम**मरावती**पुरीपरमेश्वरः सुमङ्गलाबलावरः प्रकामनिखातारातिकान्ताशयशोकशङ्कु**स्त्रिशङ्कु**र्नाम नृपतिः समरावसराभिसरत्सपत्नसंतानावसानसारशिलीमुखश्चिराय राज्यसुखमनुभूय जिनागमादवगतसंसारशरीरभोगवैराग्यस्थितिर्यतिर्बुभूषुर्भूगोचरसंचाराय **हेमपुरे**श्वराय समस्तमहीशमान्यशासनाय बलवाहनाय सुतां **सुदेवीं** राज्यं च ज्येष्ठाय पुत्राय **भास्करदेवाय** प्रदाय **सुप्रभसूरि**समीपे संयमी समजनि । ततो गतेषु कतिपयेषु चिद्दिवसेषु समुत्साहितात्मीयसमूहेन स्वदोर्दर्पविद्याबलव्यूहेन दुर्विनीतवरिष्ठेन कनिष्ठेनानुजेन **पुरंदरदेवेन** विहितराज्यापहारः परिजनेन समं स **भास्करदेव**स्तत्र **बलवाहनपुरे** शिबिरमधिनिवेश्य **मणिमाल**या महिष्यानुगस्तं **सोमदत्त**भगवन्तमुपासितुमागतस्तत्पादमूले स्थलकमलमिव तं बालकमवलोक्य 'अहो महदाश्चर्यम् । यतः कथमिदमरत्नाकरमपि रत्नम्, अजलाशयमपि कुशेशयम्, अनिन्धनमपि तेजःपुञ्जम्, अचण्डकरमप्युग्रत्विषम्, अनिलामातुलमपि कमनीयम्, अपि च कथमयं



बालपल्लव इव पाणिस्पर्शेनापि म्लायमानलावण्यः, कठोरोष्मणि ग्रावणि वज्रघटित इव रिरंसमानमानसः, मातुरुत्सङ्गगत इव सुखेन समास्ते' इति कृतवति सति प्रियतमे 'कामं स्तनंधयधृतमनोरथायास्तवायं भगवत्प्रसादसंपन्नः सर्वलक्षणोपपन्नो **वज्रकुमारो** नामास्मदीयवंशविशालताविधायिपात्रम्' इत्यभिधाय विधाय च यथावत्तस्य भगवतः पर्युपासनं पुनरत एव महतोऽधिगततदपत्यवृत्तान्तो **भावपुर**मनुससार ।

भवति चात्र श्लोकः—

अन्तःसारशरीरेषु हितायैवाहिते हितम् ।
किं न स्यादग्निसंयोगः स्वर्णत्वाय तदश्मनि ॥

इत्युपासकाध्ययने **वज्रकुमार**स्य विद्याधरसमागमो नाम पञ्चदशः कल्पः ।

पुनर्बालभावाच्छोणच्छायकायः कङ्केल्लिपल्लव इव धातकीप्रसवः स्तबक इवारुणमणिकन्दुक इव च बन्धूनामानन्दितनिरीक्षितामृतपीथमन्थरितमुखः सखेलं करपरम्परया संचार्यमाणः क्रमेणोत्तानशयदरहसितजानुचङ्क्रमणगद्गदालापस्पष्टक्रियापञ्चकस्थामवस्थामनुभूय मरुमार्ग इव छायापादपेन, छायापादप इव जलाशयेन, जलाशय इव कमलाकरेण, कमलाकर इव कलहंसनिवहेन, कलहंसनिवह इव रामासमागमेन, रामासमागम इव च स्मरलीलायितेन, तरुणीजनमनोमृगप्रमदवनेन यौवनेनालंचक्रे ।

तदनु बाढं प्ररूढप्रौढयौवनावतारसारो **वज्रकुमारः** पितुर्मातुश्च वंशनिवेशानवद्याभिर्विद्याभिः प्रवलितप्रतापगुप्तः प्राप्तखचरलोकाधिक्यः सुवाक्यमूर्तिनामधामस्य मामस्य मदनमदपण्यतारुण्यलावण्यारण्यवनदेवतावतरवसुमती**मिन्दुमतीं** दुहितरं परिणीय **मणिकुण्डल-रत्नशेखर-माणिक्य-शिखण्ड-किरीट-कीर्तित-कौस्तुभ-कर्णपूर**पुरःसरैर्नभश्चरकु**मारै**रनुसृतस्तं पूर्वापरावारपारतरङ्गदन्तुरकन्दराधरं क्रीडारसवर्धनोद्धुरं **विजयार्ध**महीधरमध्यास्य विरहायश्चरीपरिमलनम्लानमृणालजलेजमशोकलशय्यादयितासाद्यविद्याधरीसुरतपरिमलबहलमिदमुपवनलतास्थानं कन्दुकविनोदपरिणमताम्बरचरीचरणालक्तकाङ्कितमदस्तमालमूलावलयमेवमिदं र-

मणीयं मन्मनोहरमदश्च सुन्दरमटनीध्रतटमिति निध्यायन् समाचरितस्वैरविहारः पुनः प्राप्तहिमवद्गिरिप्राग्भारः खेचरीलोचनचन्द्रस्य पुरेन्द्रस्याङ्कवती युवतिप्रीतिधाम्नो **गरुडवेग**नाम्नो **विद्याधर**पतेरतिशयरूपणपात्रीं प्रियपत्नीं **पवनवेगां** नाम सङ्गाप्रालेयाचलमेखलाखलतिकलतालयनिलीनाङ्गां **बहुरूपिणीं** नाम निषद्यां विद्यामाराधयन्तीमनयैव विघ्नविघ्नया जाताजगररूपया विद्यया निगीर्णवदनामुपलक्ष्य परोपकारविचक्षणस्तार्क्ष्यविद्यया तमेतल्लपनाविलतालुं मायाशयालुं वित्रासयामास । **पवनवेगा** तत्प्रत्यूहाभोगापगमानन्तरमेव विद्यायाः सिद्धिं प्रपद्य 'अवश्यमिह जन्मन्ययमेव मे कृतप्राणत्राणावेशः प्राणेशः' इति चेतस्यभिनिविश्य पुनरस्यैव नीहारमहीधरस्य नितान्तं तीरिणीपर्यन्ते सूर्यप्रतिमां समाश्रितवतो भगवतस्तपःप्रभावसंपादितसमस्तसत्वव्यापदं तस्य संयतस्य पादपीठोपकण्ठे पठतस्तवेयं सेत्स्यतीत्युपदेशावेशाभिनवमाराय **वज्रकुमाराय** गगनगमनाङ्गना जीवितभूतामभिमतार्थसाधनपर्याप्तिं प्रज्ञप्तिं विद्यां वितीर्य निजनगर्यां पर्यटन् **वज्रकुमार**स्तथैव तत्सूरिसमक्षं **फेनमालिनी**कूले विद्यां प्रसाध्यासाध्यसाधनप्रवृद्धपराक्रमस्तमक्रमविक्रमाल्पीभूतदैवं पुरंदरदेवं पितृव्यमव्याजमुच्छिद्य सद्यस्तां विजयोत्सवपरम्परावतीममरावतीं पुरमात्मपितरमखिलखचराचरितचरणसेवं भास्करदेवं निवेश्य वश्येन्द्रियः स्वयंवरव्याजेन विहिताभिलषितकान्तसङ्गामनङ्गसङ्गसंगतशृङ्गारसुभगां **पवनवेगा**मपराश्चाम्बरचरपतिंवरां विवाह्य महाभागगृह्यो विहायश्चरचित्तचिन्तामात्रायासैस्तैस्तैर्विलासैः कालमतिवाहयामास ।

अन्यदा पुनरिष्टदुष्टज्ञातिप्रज्ञातिप्रज्ञावज्ञामात्मनः परैधित्वमवबुध्य निजान्वयनिश्चये सति शारीरेषूपचारेषु प्रवृत्तिरन्यथा निवृत्तिरित्याचरितसंगरस्ताभ्यां महामुनिमाहात्म्यमन्त्रवित्रासितदूरितिनिशाचरायां **मथुरायां** तपस्यतः **सोमदत्त**स्य भगवतः सनीडे नीतस्तदङ्गमुद्राप्रायमात्मकायमावसाय संजातानन्दनिकायस्तावुभावप्युपनेतारौ मातापितरौ सादरमुक्तियुक्तिभ्यां प्रतिबोध्यावधीरितोभयग्रन्थो निग्रन्थश्चारणऋद्धिवद्धिः समपादि ।



भवति चात्रार्या—

तृणकल्पः श्रीकल्पः कान्तालोकश्चितो चितालोकः ।
पुण्यजनश्च स्वजनः कामविदूरे नरे भवति ॥

इत्युपासकाध्ययने **वज्रकुमार**स्य तपोग्रहणो नाम षोडशः कल्पः ।

पुनर्महामहोत्सवोत्साहितातोद्यवादनादमेदुरप्रासादकन्दरायामेतस्यामेव **मथुरा**यां किल गोचराय चारणऋद्धियुगलं नगरमार्गे संगतगतिसर्गे स तत्र द्वित्रिपरिवत्सर एवावस्थावसरे बालिकामेकां चिल्लचिकिनलोचनसनाथामनाथामापणाङ्गणचारिणीं स्खलद्गमनविहारिणीं निरीक्ष्य प्रतीक्ष्य पश्चाच्चरः **सुनन्दना**भिधानगोचरो भगवानेवमवादीत्—'अहो, दुरालोकः खलु प्राणिनां कर्मविपाकः, यदस्यामेव दशायां क्लेशाय प्रभवति' इति । पुरश्चारी भगवा**नभिनन्दन**नामधारी—'तपःकल्पद्रुमोत्पाद**नन्दनसुनन्द**मुने, मैवं वादीः । यद्यपीयं गर्भसंभूता सती राजश्रेष्ठिपदप्रवृत्तं **समुद्रदत्तं** पितरं जातमात्रतद्वियोगदुःखोपसदां धनदां मातरं प्रवर्धमाना च बन्धुजनमकाण्ड एव दशमीं दशामानीय इदमवस्थान्तरमनुभवन्ती तिष्ठति, तथाप्यनया प्रौढयौवनयास्य **मथुरानाथस्यौर्विला**देवीविनोदावसथस्य **पूतिकवाहन**स्य महीनस्याग्रमहिष्या भवितव्यम्' इत्यवोचत् । एतच्च तत्रैव प्रस्तावे पिण्डपाताय हिण्डमानः शाक्यभिक्षुरुपश्रुत्य 'नान्यथा मुनिभाषितम्' इति निर्विकल्पं संकल्प्य, स्वीकृत्य चैनामर्भिकामाहितविहारवसतिकामभिलषितानुहारैराहारैरवीवृधत् । जुहाव च बुद्धदासीति परिजनपरिहासतन्त्रेण गोत्रेण । ततो गतेषु केषुचिद्वर्षेषु भ्रमरकभङ्गाभिनयनभरते भ्रूविभ्रमारम्भोपाध्यायस्थानि निलोचनविचारचातुर्याचार्ये चतुरोक्तिचातुरीप्रचारगुरुणि बिम्बाधरविकारसौन्दर्यकादम्बरीयोगे निम्नोन्नतप्रदेशप्रकाशनशिल्पिनि मनसिजगजमदोद्दीपनपिण्डिपिण्डिते शृङ्गारगर्भगतिरहस्योपदेशिनि समस्तभुवनमनोमोहनसिद्धौषधे प्रतिदिनप्रादुर्भावसविधे सति यौवने सा रूपसंपन्नहीयसी बुद्धदासी सोत्तालमुत्तुङ्गतमङ्गश्रृङ्गोत्सङ्गसंगता तं श्रमणिकया कृतविहारोपान्तागमनं **पूतिकवाहनं** राजानमदर्शत् । राजा—

'अलकवलयावर्तभ्रान्ताविलोचनवीचिका
प्रसरविधुरा मन्दोद्योगा स्तनद्वयसैकते।
त्रिवलिवलनश्रान्ता नाभौ पुनश्च निमज्जना-
दिह हि सरिति प्रायेणैवं मतिर्मम वर्तते॥'

इति विचिन्त्य, चेतोभूविजृम्भप्रारम्भं निवार्य च, 'किमियं विहितविवाहोपचारा, किं वाद्यापि पतिंवरा' इति भिक्षूनापृच्छ्य तत्र 'द्वितीयपक्षे सर्वथासत्पक्षे कर्तव्या' इति समर्पिताभिलाषमाप्तपुरुषं प्रेष्य रणरणकजडीतःकरणः शरणमगात्। आप्तपुरुषोऽप्यग्रमहिषीपदपणबन्धेन साध्यसिद्धिं विधाय स्वामिनं तत्समागमिनमकरोत्।

भवति चात्रार्या—

पुण्यं वा पापं वा यत्काले जन्तुना पुराचरितम्।
तत्तत्समये तस्य हि सुखं च दुःखं च योजयति॥

इत्युपासकाध्ययने बुद्धदास्याः **पूतिकवाहन**वरणो नाम सप्तदशः कल्पः।

अथ समायाते भव्यजनानन्दसंपादितकर्मणि नन्दीश्वरपर्वणि तया प्रतिप्रणयप्रेयस्या बुद्धदास्या प्रतिचातुर्मास्य**मौर्विला**देव्याः स्यन्दनविनिर्गमेण भगवतः सकलभुवनोद्धरणस्थितेर्जिनपतेर्महामहोत्सवकरणमुत्सेतुमिच्छन्त्या शुद्धोदनतनयस्येष्टार्थमष्टाहा सकलपरिवारानुगतमेतदुचितमुपकरणजातमवनिपतिर्याचितस्तथैव प्रत्यपद्यत। **ऊर्विलादे**व्यपि सुभगभावात्सपत्नीप्रभवं दौर्जन्यमनन्यसामान्यमप्रतीकारमालप्य **सोमदत्ताचार्य**मुपसद्य 'भदन्त, यद्येतस्मिन्द्वित्रिदिनभाविन्यष्टाहामहे पूर्वक्रमेण जिनपूजार्थं **मथुरायां** मदीयो रथो भ्रमिष्यति, तदा मे देहस्थितिहेतुषु वस्तुषु साभिलाषं मनः, अन्यथा निरभिलाषम्' इति प्रतिजिज्ञासमाना तेन **सोमदत्तेन** भगवता तन्मनोरथसमर्थनार्थमवलोकितवक्त्रेण **वज्रकुमारेण** साधुना साधु संबोधिता 'मातः, सम्यग्दृशामेणीदृशामवाप्तप्रथमकथे, अलमलमावेगेन। यतो न खलु मयि तव समयविन्ध्याश्चिन्तके पुत्रके सति भविताऽर्हतामर्हणायाः प्रत्यवायः। तत्स्वस्थं पूर्वस्थित्यात्मस्थाने स्थातव्यम्' इति हृद्यमनवद्यममृषोद्यं



च निगद्य, आसाद्य च **द्युतिगतिविद्याधरपुरं** महामुनितया बान्धवधिषणतया च निखिलेन **भास्करदेव**मुख्येनाम्बरश्चक्रेण क्रमशः कृताभ्युत्थानादिक्रियः सप्रश्रयमागमनायतनमापृष्टः स्पष्टमाचष्ट।

तदनन्तरमानकदुन्दुभिनादोत्तालक्ष्वेलितमुखरमुखमण्डलैः, सामायिकालंकारसारसज्जितगजवाजिविमानगमनप्रचलत्कर्णकुण्डलैः, अनेकानणुमणिकिङ्किणीजालजटिलदुकूलकल्पितपालिध्वजराजिविराजितभुजपञ्जरैः, करिमकरसिंहशार्दूलशरभकुम्भीरशरफरशकुन्तेश्वरपुरःसराकारपताकासंतानास्तिमितकरैः, मानस्तम्भस्तूपतोरणमणिवितानदर्पणसितातपत्रचामरविरोचनचन्द्रभद्रकुम्भसंभूतशयैः, अतुच्छदेवच्छन्दाविच्छिन्नकर्णीरथस्यन्दनद्विपतुरगनरनिकीर्णशयननिचयैः, सजयघण्टापटुपटहकरटामृदङ्गशङ्खकाहलत्रिविलतालझल्लरीभेरिभम्भादिवाद्यानुगतगीतसंगताङ्गनाभोगसुभगसंचारैः, कुब्जवामनकिरातकितवनटनर्तकबन्दिवाग्जीवनविनोदानन्दितदिविजमनस्कारैः, सखेलखेचरसहचरीहस्तविन्यस्तस्वस्तिकप्रदीपधूपनिपप्रभृतिविचित्रार्चनोपकरणरमणीयप्रसरैः, पिष्टातकपटवासप्रसूनोपहाराभिरामरमणीनिकरैः, अपरैश्च तैस्तैर्विधृतपूजापर्यायपरिवारैर्विहायोविहारैः सह तं **वज्रकुमार**भगवन्तमम्बरादवतरन्तमुत्प्रेक्ष्य 'भिक्षुदीक्षापटीयसी पुण्यभूयसी खलु बुद्धदासी, यस्याः सुगतसपर्यासमये समायातं सकलमेतत्सुरसैन्यम्' इति धृतधिषणे पौरजनान्तःकरणे सति स भगवान्गगनगमनानीकैः साक**मौर्विला**निलये निलीय सावष्टम्भमष्टाह्नी **मथुरायां** चक्रचरणं परिभ्रमय्याऽर्हत्प्रतिबिम्बाङ्कितमेकं स्तूपं तत्रातिष्ठपत्। अत एवाद्यापि तत्तीर्थं **देवनिर्मिता**ख्यया प्रथते। बुद्धदासी दासीवासीद्भ्रमनोरथा।

भवति चात्र श्लोकः—

**और्विला**या महादेव्याः **पूतिक**स्य महीभुजः।
स्यन्दनं भ्रमयामास मुनि**र्वज्रकुमारकः**॥

इत्युपासकाध्ययने प्रभावनविभावनो नामाष्टादशः कल्पः।

अर्थित्वं भक्तिसंपत्तिः प्रयुक्तिः सत्क्रियाविधिः।
सधर्मसु च सौचित्यकृतिर्वत्सलता मता॥

स्वाध्याये संयमे सङ्घे गुरौ सब्रह्मचारिणि ।
यथौचित्यं कृतात्मानो विनयं प्राहुरादरम् ॥
आधिव्याधिनिरुद्धस्य निरवद्येन कर्मणा ।
सौचित्यकरणं प्रोक्तं वैयावृत्यं विमुक्तये ॥
जिने जिनागमे सूरौ तपःश्रुतपरायणे ।
सद्भावशुद्धिसंपन्नोऽनुरागो भक्तिरुच्यते ॥
चातुर्वर्ण्यस्य सङ्घस्य यथायोग्यं प्रमोदवान् ।
वात्सल्यं यस्तु नो कुर्यात्स भवेत्समयी कथम् ॥
तद्व्रतैर्विद्यया वित्तैः शारीरैः श्रीमदाश्रयैः ।
त्रिविधातङ्कसंप्राप्तानुपकुर्वन्तु संयतात् ॥

श्रूयतामत्रोपाख्यानम्—**अवन्ति**विषयेषु सुधान्धःसौधस्पर्द्धिशालायां **विशालायां** पुरि **प्रभावती**महादेवीश्रितशर्मसीमा **जयवर्म**नामा **काश्यपी**श्वरः शाक्यवाक्यवारिधिविक्रान्तिनक्रेण **शुक्रेण** चार्वाकलोकदिवस्पतिना **बृहस्पति**ना रुद्रमुद्रानुद्रितविवेकेन **प्रह्लादकेन** चानुजेनानुगतेन वेदविद्याब**लिना** सचिवेन चिन्त्यमानराज्यस्थितिरेकदा समस्तशास्त्राभ्यासवर्षविस्फारितसरस्वतीतरङ्गपरम्पराप्लावनपवित्रितविनेयजनमनोनलिननिकुरुम्बस्य परमतपश्चरणगणग्रहणाजिह्मब्रह्मस्तम्बस्य महामुनिशतीवर्यस्य भगवतो**ऽकम्पनाचार्य**स्य महद्धिषुषः **सर्वजनानन्दनं** नाम नगरोपवनमधितस्थुषश्चरणार्चनोपचाराय राजमार्गेषु महोत्सवोत्साहोत्सेकिपरिजनं पौरजनमभ्रंलिहगेहाग्रभागावसरे दिग्विलोकानन्दमन्दिरे स्थितः समवलोक्य 'कोऽयमकाण्डे प्रचण्डः पौराणामुद्यानोद्योगे नियोगः' इति वितर्कयन्, सकलसमयसंभवविप्रसूनस्तिमितहस्तपल्लवान्तरालाद्वनपालात् 'देव, भवद्दर्शनोत्सुकवनदेवतालोचने भगवत्तपःप्रभावप्रवृत्तसमस्तर्तून्मादितमेदिनीनन्दने निजलक्ष्मीविलक्ष्मीकृतगन्धमादने पुरोपवने सद्गुणश्रीसंपादितसमूहेन महता मुनिसमूहेन सर्वसत्त्वानन्दप्रदानोदाराभिधा सुधाप्रबन्धावधीरितामृतमरीचिमण्डलो निखिलदिक्पालमौलिमणिनायकमुकुरन्दीभवत्पादनखमण्डलः पुण्यद्विपयूथबन्ध**नवारिरकम्पनसूरिः** समायातः । तदुपासनाय चास्योज्जयिनीजनस्य महामहावहश्चित्तोत्साहः' इत्याकर्ण्य प्रतूर्णमेतत्पादवन्दनोद्यतहृदयस्तत्र गमनाय तं मिथ्यात्वप्रबलतालताश्रयकलिं बलिमपृच्छत् ।

सद्धर्मधुरोद्धरणगलि**र्बलिः**—'देव,

न वेदादपरं तत्त्वं न श्रद्धादपरो विधिः ।
न यज्ञादपरो धर्मो न द्विजादपरो यतिः ॥'

सन्मार्गसर्गोच्छेदकः **प्रह्लादकः**—

'अद्वैतान्न परं तत्त्वं न देवः शंकरात्परः ।
शैवशास्त्रात्परं नास्ति भुक्तिमुक्तिप्रदं वचः ॥'

तथा नास्तिक्याधिक्यवाचस्पती **शुक्रबृहस्पती** अपि राज्ञे स्वप्रज्ञां विज्ञापयामासतुः । मनागन्तःक्षुभितमतिः क्षितिपतिः—'अहो दुर्जनतालतालम्बनकुजद्द्विजाः, किं ममैव पुरतो भवतां भारती प्रगल्भते । किं वा बुधप्रवेकस्य लोकस्यापि । सन्नीतिवसुमतीविदारणहलि**र्बलिः**—'इलापाल, यदि तवासन्मनीषोत्कर्षविषये सेर्ष्यं मनः, तदास्तां तावदभ्यस्तशास्त्रप्रवीणप्रज्ञः परं प्राज्ञः । किं तु सर्वज्ञस्यापि वादेर्वादेः पुरस्तात्परिगृहीतविद्यानवद्या एव' । स्थिरप्रकृतिः क्षोणीपतिः—'यद्येवं शूराणां कातराणां च रणे व्यक्तिर्भविष्यति' इत्यभिधायानन्ददुन्दुभिरवोपार्जितपरिजनपूजोपकरणो **विजयशेखरं** नाम करिणमारुह्यान्तःपुरानुगमग्राह्योऽतिवाह्यं नगरमार्गमुपगतारामसीमसंसर्गः, ततः करिणोऽवतीर्य गृहीतार्यवेषपरिकरः कतिपयाप्तपरिवारपुरःसरस्तं व्रतविधानवद्यं भगवन्तं यथावदभिवन्द्य समाचरितनीचासनपरिग्रहः सविनयाग्रहं स्वर्गापवर्गस्वरूपनिरूपणपरायणः सद्धर्मसनाथां कथां प्रथयामास ।

सत्कर्मवंशप्रभिदलि**र्बलिः**—'स्वामिन्, कोऽयं स्वर्गापवर्गास्तित्वसंग्रहे देवस्य दुराग्रहः, यतो द्वादशवर्षा स्त्री षोडशवर्षः पुरुषः । तयोरन्योन्यमनन्यसामान्यस्नेहरसोत्सेकप्रादुर्भूतिः प्रीतिः । प्रत्यक्षसमधिसर्गः स्वर्गो न पुनरदृष्टः । कोऽपीष्टः स्वर्गः समस्ति' । गुणभूरिः सूरिः—'सकले प्रमाणबले **बले**, किं प्रत्यक्षताधिकरणमेकमेव प्रमाणं समस्ति' । नास्तिकेन्द्रमनोरथरथमातलि-

**बलिः**—'अखिलश्रुतधारोद्धारादिपुरुषविदुष, एकमेव' । भगवान्—'कथं तर्हि भवतः पित्रोर्विवाहाद्यस्तित्वतन्त्रम्, कथं वा तवादृश्यानां वंश्यानामवस्थितिः । स्वयमप्रत्यक्षप्रमेयत्वादाप्तपुरुषोपदेशाश्रितौ स्वपक्षपरिक्षतिः परमतोत्सवकृतिश्च । **बलिभट्टो** भट्ट इवेतस्ततमितो मदोत्कटः करटीति संकटप्रघटकमायतितः परं सभाजनकरमुत्तरमपश्यन्नश्लीलमसभ्यसर्गं निरर्गलमार्गं किमपि तं भगवन्तं प्रत्युवाच । क्षितिपतिरतीवमन्दाक्षविक्षिप्तवीक्षणो मुमुक्षुसमक्षमासन्नाशिवताशनिसंघट्टं **बलिभट्टं** प्रतिष्ठाभङ्गभयात्किमप्यनभिलप्य 'भगवन्, संपन्नतत्त्वसंबन्धस्य निजस्खलितप्रवृत्तचित्तमहामोहान्धस्य सद्धर्मध्वंसहेतोर्जन्तोर्निसर्गस्थैर्यमेरुषु गुणगुरुषु न खलु दुरपवादकरणात्परमवसाने प्रहरणमस्ति' इति वचनपुरःसरं कथान्तरमनुबध्य साधु समाराध्य च प्रशान्ति**हैमवती**प्रभवगिरि**मकम्पनसूरिं** विनेयजनसंभावनौचित्यज्ञया तदनुज्ञयात्मसदनमासाद्यापरेद्युरपरदोषमिषेण सनिकारकरणमनुजैः सह कर्मस्कन्धबन्धवाद्धलिं **बलिं** निजदेशान्निर्वासयामास ।

भवतश्चात्र श्लोकौ—

सन्नसंश्च समावेव यदि चित्तं मलीमसम् ।
यात्यक्षान्तेः क्षयं पूर्वः परश्चाशुभचेष्टितात् ॥
स्वमेव हन्तुमीहेत दुर्जनः सज्जनं द्विषन् ।
योऽधितिष्ठेत्तुलामेकः किमसौ न व्रजेदधः ॥

इत्युपासकाध्ययने **बलि**निवासनो नामैकोनविंशः कल्पः ।

**बलिद्विजः** सानुजस्तथा सकलजनसमक्षमसूक्ष्मसूक्ष्मणपूर्वकं निर्वासितः सन्मुनिविषयरोषोन्मेषकलुषितः **कुरुजाङ्गल**मण्डलेषु तद्विलासिनीजलकेलिविगलितकालेयपाटलकल्लोलाधरसुरसरित्सीमन्तिनीचुम्बितपर्यन्तप्रसरे **हस्तिनागपुरे** साम्राज्यलक्ष्मीमिव **लक्ष्मीमतीं** महादेवीमवहाय सरस्वतीरसावगाहसागरस्य **श्रुतसागरस्य** भगवतोऽभ्यर्णे पितृविनयविष्णुना **विष्णुना** लघुजन्मना सूनुना सार्धं प्रवर्धितदीक्षापद्मस्य महीपतेर्महान्तं **पद्म**नामनिलयं तनयमशिश्रियत् । **पद्मो**ऽपि चारसंचाराद्विदितवंशविद्याप्रभावाय तस्मै **बलि**सचिवाय सर्वाधिकारिकं स्थानमदात् । **बलिः**—'देव, गृहीतोऽयमनन्य-



सामान्यसंभावनाह्लादः प्रसादः । किं तु कर्णेजपवृत्तीनां लङ्घुलुञ्चनोचितचेतःप्रवृत्तीनां च प्रायेण पुरुषाणां नियोगिपदं हृदयास्पदं न शौर्योर्जितचित्तस्योदारवृत्तस्य च तदसाध्यसाधनेन, नन्वयं जनो निदेशदानेनागृहीतव्यः'। **पद्मः**—'सत्यमिदम्, किं तु स्वामिसमीहितसमनसंवीणेषु भवद्विधेषु सचिवेषु सत्सु किं नामासाध्यं समस्ति ।' अन्यदा तु कुम्भपराधिकृतमूर्तिः **सिंहकीर्ति**र्नाम नृपतिरनेकयोधनलब्धयशःप्रसाधनः संनद्धसारसाधनो **हस्तिनागपुरा**वस्कन्दप्रदानायागच्छन्, एतन्नगरच्छन्नावसर्पनिवेदितागमनः **पद्म**निदेशादभ्यर्णमित्रीणप्रयाणपरायणेन कूटप्रकामकदनकोविदधिषणेन **बलि**नाब्धिमध्ये प्रबन्धेन युद्धयमानः, नामनिर्गमविधानैः प्रधानैर्युद्धसिद्धान्तोपान्तैः सामन्तैश्च सार्धं प्रवध्य तस्मै हृदयशल्योन्मूलनप्रमदमतये क्षितिपतये प्राभृतीकृतः । क्षितिपतिः—'शस्त्रशास्त्रविद्याधिकरणव्याकरणपतञ्जले **बले**, निखिलेऽपि बले चिरकालमनेकशः कृतकृष्णवदनच्छायस्यास्य द्विष्टस्य विजयान्नितान्तं तुष्टोऽस्मि । तद्वाच्यतां मनोभिलाषधरो वरः'। **बलिः**—'अक(?)यदाहं याचे तदार्य, प्रसादीकर्तव्यः' इत्युदारमुदीर्य पुनश्चतुरङ्गबलप्रबलः प्रतिकूलभूपालविनयाय **पद्म**मवनीपतिमादेशं याचित्वा सत्वरमशेषाशावशनिवेशानीकसूत्रितसकलमहीतलो दिग्विजययात्रार्थमुच्चचाल ।

अत्रान्तरे विहारवशाद्भगवा**नकम्पना**चार्यस्तेन महता मुनिनिकायेन साकं **हास्तिनपुर**मनुसृत्योत्तरदिग्विलासिन्यवतंसकुसुमतरौ हेमगिरौ महावगाहायां गुहायां चातुर्मासीनिमित्तं स्थितिं बबन्ध । **बलि**रपि निखिलजलधिरोधःसविधवनविनोदितवीरवधूहृदयो दिग्विजयं विधायागतस्तं भगवन्तमवबुध्य चिरकालव्यवधानेऽप्यलर्कविषनिषेक इव जातप्रकोपोद्रेकस्तदपराधविधानाय धराधीश्वरं पुरावितीर्णवरव्याजेन समाशाखार्धमात्मैकशासनप्राज्यं राज्यमन्तःपुरप्रचारैश्वर्यमात्रसन्नतः **पद्म**तोऽभ्यर्थ्य मखमिषेण मुनिसैन्याजनोत्कर्षं चिकीर्षुर्मदनद्रव्याधिकरणैरुपकरणैरग्निहोत्रमारेभे ।

अत्रावसरे निजनिवासपवित्रित**मिथिलापुरे जिष्णुसूरे**रन्तेवासी **भ्राजिष्णु**र्नाम तमीमध्यसमये बहिर्विहितविहारः समीरमार्गे नक्षत्रवीथीं

लोचनालोकनसनाथां विदधानश्चमूरुसंचारचकितगात्रं कुरङ्गकलत्रमिव,
तरलतारकाश्रयणं श्रमणमवेक्ष्यान्तरिक्षे लक्ष्यं बध्वा किलैवमुच्चैरवोचत्—
'अहो, न जाने क्वचिन्महामुनीनां महानुपसर्गो वर्तते' इति । एतच्च
श्रमणशरणगणी समाकर्ण्य प्रयुक्तावधिबोधस्तन्नगरगिरिगुहायाम**कम्पना-
चार्य**स्य **बलि**दुर्विलसितमवधार्याकार्यं च गगनगमनप्रभावं **पुष्पकदेवं** देश-
व्रतसेवम् 'हंहो **पुष्पकदेव,** तव विक्रयर्द्धेर्वैधुर्यान्न तदुपसर्गविसर्गे सामर्थ्य-
मस्ति । ततस्तथाविधर्द्धिवृद्धिरोचिष्णवे **विष्णवे** तामदृष्टविशिष्टताभिवर्त्म-
स्थितामप्यविदुषे निवेद्य तदुपसर्गापवर्गायास्मत्सर्गान्नियोजयितव्यः' । **पुष्प-
कदेव**स्त्रिदशोचितचरणसेवस्य तस्य महर्षेर्भाषितात्तं देशमासाद्य **विष्णु-
मुनये** तथाविधर्द्धिवृत्तिं गुरुनिदेशवृत्तिं प्रतिपादयामास । **विष्णुमुनिः**
प्रदीप इव स्फाटिकभीतिमध्यलब्धप्रसरेण किरणनिकरेण वारिधिवज्रवे-
दिकानिर्भेदनेन मानुषोत्तरगिरिपर्यन्तसंवेदनेन मनुष्यक्षेत्रस्तत्र पातविडम्ब-
नकरेण करेणोर्णनाभ इव तन्तुनिकाये काये स्ववशाश्रयया व्यासस-
मासक्रियया च तामवगम्योपगम्य च **हास्तिनपुरं** 'न खल्वनिवेद्य नि-
खिलवर्णिवर्णाश्रमपालाय मध्यमलोकपालायामकर्षप्रवृत्ततन्त्रेण हुंकारमात्रे-
णाप्यकम्पितजगत्त्रया असंख्यानवनविध्वंसदावे तपःप्रभावे दुर्जनविनय-
नार्थमभिनिविशन्ते यतीशाः' इति च परामृश्य, प्रविश्य च पुरैव चिरपरि-
चितकञ्चुकिसूचितप्रचारोऽन्तःपुरं '**पद्म**महीपते, राजधानीष्वरण्यानीषु वा
तपस्यतः संयतलोकस्य न खलु नरेश्वरात्परः प्रायेणास्ति गोपायिता । तत्कथं
नाम तृणमात्रेऽप्यनपराधमतीनां यतीनामात्मन्यशुभलोकनिषेकसर्गमुपसर्गं
सहसा' इत्युक्तम् । 'भगवन्, सत्यमेवैतत् । किं तु कतिचिद्दिनानि **बलि**रत्र
राजा, नाहम्' इति प्रत्युक्तियुक्तस्थितिं **पद्म**नृपतिमवमत्य 'छलेन खलु परेषु
प्रायेण फलोल्लासनशीलास्तपःप्रभवर्द्धिलीलाः' इति वावगत्य शालाजिरसंपु-
टकोटरावकाशप्रदीपप्रकाश इव संजातवामनाकृतिः सप्ततन्तुवसुमतीमनु-
सृत्य मधुरध्वनितृतीयेन सवनेन प्राध्ययनं व्यधात् । **बलि**र्जलधरध्वान-
बन्धुरं वाक्प्रसरं सिन्धुर इव निभृतकर्णो निर्वर्ण्य 'कोऽयं खलु वेदवाचि
विरिञ्च इवोच्चारचतुरः' इति कुतूहलितहृदयः सत्रनिलयान्निर्गत्य वयसि च



निश्चिताश्चर्यसौदर्यं द्विजवर्यमेनमवादीत्—'भट्ट, किमिष्टं वस्तु चेतसि
निधाय प्राधीषे' । '**बले,** दायादविलुप्तालयत्वात्तदर्थं पादत्रयप्रमाणकलमव-
वनितलं द्विजोत्तमनिकामं दत्तम्' । 'यद्येवं बहुमानयजमान, विधीयतामुदक-
धारोत्तरप्रवृत्तिः वृत्तिः' । **बलिः** प्रबलामालूमादाय 'द्विजाचार्य, प्रसार्यतां
हस्तः' इत्युक्तवति शुक्रः संक्रन्दनमिव कुलिशनिकेतनम्, प्रासादमिव कल-
शाह्लादम्, जलाश्रयमिव मत्स्याश्रयम्, सरिन्नाथमिव शङ्खसनाथम्, विरहि-
णीवासरगणनकुड्यप्रदेशमिवोर्ध्वरेखावकाशम्, नारायणमिव चक्रलक्षणम्,
यज्ञोपकरणमिव यवाधिकरणम्, जलयानपात्रमिव निश्छिद्रतामत्रम्, स्तम्बे-
रमकरमिव दीर्घाङ्गुलिप्रसरम्, वंशकिशलयमिवानुपूर्वाप्रकृत्तपर्वसंचयम्, क-
मलकोशमिवारुणप्रकाशनिवेशम्, विद्रुमभङ्गाभोगमिव स्निग्धपाटलनखराग्रं
लक्ष्मीलताविर्भावोदयं स्वयमुपलक्ष्य **बलिना** खल्वयमेवंविधपाणितलसं-
बन्धो गोधः परेषां याचिता किं तु याच्य इति वचनवक्रं शुक्रमवगणय्य
**बलिः** स्वकीयां दत्तिमुदकधारोत्तरामकार्षीत् ।

तदनु स **विष्णुमुनि**र्विरोचविरोकनिकर इव क्रमेणोर्ध्वमधश्चानवधिवृ-
द्धिपरः, सर्वतश्चोभयतः प्रवृत्तापगाप्रवाह इव तिरःप्रसरद्देहः, कायधरमेक-
मकूपारवज्रवेदिकाय निधाय परं च क्रमं चक्रवालचूलिकायां पुनस्तृती-
यस्य मेदिनीमलभमानस्तपनरथस्खलनसेतुना सुरसरित्तुरीयस्रोतोहेतुना(?)
संपादितदिविजसुन्दरीचरणमार्गविभ्रमेण समाचरितखेचरीचेतसंभ्रमेण
भूगोलगौरवपरिच्छेदे तुलादण्डविडम्बनेन चरणेन क्षोभितान्तरिक्षचरपुर-
कक्षः किन्नरामरखचरचारणादिवृन्दैर्वन्द्यमानपादारविन्दसंयतजनोपकार-
सारस्वकीयर्द्धिवृद्धिपरितोषितमनीषैर्व्यन्तरानिमिषैरकारणखलतास्थलिं **बलिं**
सबान्धवमबन्धयत् । प्रावेशयच्च संदेहं रसातलगेहम् ।

भवति चात्र श्लोकः—

**महापद्म**सुतो **विष्णु**र्मुनीनां **हास्तिने** पुरे ।
**बलि**द्विजकृतं विघ्नं शमयामास वत्सलः ॥

इत्युपासकाध्ययने वात्सल्यरचनो नाम विंशतितमः कल्पः ।

निसर्गोऽधिगमो वापि तदाप्तौ कारणद्वयम् ।
सम्यक्त्वभाक्पुमान्यस्मादल्पानल्पप्रयासतः ॥

उक्तं च—

आसन्नभव्यताकर्महानिसंज्ञत्वशुद्धपरिणामाः ।
सम्यक्त्वहेतुरन्तर्बाह्योऽप्युपदेशकादिश्च ॥

एतदुक्तं भवति—कस्यचिदासन्नभव्यस्य तन्निदानद्रव्यक्षेत्रकालभावभवसंपत्सेव्यस्य विधूतैतत्प्रतिबन्धकान्धकारसंबन्धस्याक्षिप्तशिक्षाक्रियालापनिपुणकरणानुबन्धस्य नवस्य भाजनस्येवासंजातदुर्वासनागन्धस्य झटिति यथावस्थितवस्तुस्वरूपसंक्रान्तिहेतुभयात्स्फाटिकमणिदर्पणसगन्धस्य पूर्वभवसंभालनेन वा वेदनानुभवनेन वा धर्मश्रवणाकर्णनेन वार्हत्प्रतिनिधिनिध्यानेन वा महामहोत्सवनिहालनेन वा महर्द्धिप्राप्तचार्यवाहनेन वा नृषु नाकिषु वा तन्माहात्म्यसंभूतविभवसंभावनेन वान्येन वा केनचित्कारणमात्रेण विचारकान्तारेषु मनोविहारास्पदं खेदमनापद्य यदा जीवादिषु पदार्थेषु वा याथात्म्यसमवधानं श्रद्धानं भवति तदा प्रयोक्तुः सुकरक्रियत्वाल्लूयन्ते शालयः स्वयमेव, विनीयन्ते कुशलाशयाः स्वयमेव, इत्यादिवत्तन्निसर्गात्संजातमित्युच्यते । यदा त्वव्युत्पत्तिसशीतिविपर्यस्तिसमधिकबोधस्याधिमुक्तियुक्तिसूक्तिसंबन्धसविधस्य प्रमाणनयनिक्षेपानुयोगोपयोगावगाह्येषु समस्तेष्वैतिह्येषु परीक्षोपक्षेपादतिक्लिश्य निःशेषदुराशाविनाशाविनाशनांशुमन्मरीचिश्चिरेण तत्त्वेषु रुचिः संजायते, तदा विधातुरायासहेतुत्वान्मया निर्मापितोऽयं सूत्रानुसारो हारो मयेदं संपादितं रत्नरचनाधिकरणमाभरणमित्यादिवत्तदाधिगमादाविर्भूतमित्युच्यते । उक्तं च—

अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवतः ।
बुद्धिपूर्वव्यपेक्षायामिष्टानिष्टं स्वपौरुषात् ॥
द्विविधं त्रिविधं दशविधमाहुः सम्यक्त्वमात्महितमतयः ।
तत्त्वश्रद्धानविधिः सर्वत्र च तत्र समवृत्तिः ॥
सरागवीतरागात्मविषयत्वाद्द्विधा स्मृतम् ।
प्रशमादिगुणं पूर्वं परं चात्मविशुद्धिभाक् ॥



यथा हि पुरुषस्य पुरुषशक्तिरियमतीन्द्रियाप्यङ्गनाजनाङ्गसंभोगेनापत्योत्पादनेन च विपदि धैर्यावलम्बनेन वा प्रारब्धवस्तुनिर्वहणेन वा निश्चेतुं शक्यते, तथात्मस्वभावतयातिसूक्ष्मयत्नमपि सम्यक्त्वरत्नं प्रशमसंवेगानुकम्पास्तिक्यैरेव वाक्यैराकलयितुं शक्यम् । तत्र—

यद्रागादिषु दोषेषु चित्तवृत्तिनिबर्हणम् ।
तं प्राहुः प्रशमं प्राज्ञाः समस्तव्रतभूषिणम् ॥
शारीरमानसागन्तुवेदनाप्रभवाद्भयात् ।
स्वप्नेन्द्रजालसंकल्पाद्भीतिसंवेगमुच्यते ॥
सत्त्वे सर्वत्र चित्तस्य दयार्द्रत्वं दयालवः ।
धर्मस्य परमं मूलमनुकम्पां प्रचक्षते ॥
आप्ते श्रुतिव्रते तत्त्वे चित्तमस्ति त्वसंस्तुतम् ।
आस्तिक्यमास्तिकैरुक्तं मुक्तियुक्तिधरे नरे ॥
रागरोषधरे नित्यं निर्व्रते निर्दयात्मनि ।
संसारो दीर्घसारः स्यान्नरे नास्तिकनीतिके ॥
कर्मणां क्षयतः शान्तेः क्षयोपशमतस्तथा ।
श्रद्धानं त्रिविधं बोध्यं गतौ सर्वत्र जन्तुषु ॥

दशविधं तदाह—

आज्ञामार्गसमुद्भवमुपदेशात्सूत्रबीजसंक्षेपात् ।
विस्तारार्थाभ्यां भवभवपरभावादिगाढं च ॥

अस्यायमर्थः—भगवदर्हत्सर्वज्ञप्रणीतागमानुज्ञासंज्ञा आज्ञा, रत्नत्रयविचारसर्गो मार्गः, पुराणपुरुषचरितश्रवणाभिनिवेश उपदेशः, यतिजनाचरणनिरूपणपात्रं सूत्रम्, सकलसमयदलसूचनाव्याजं बीजम्, आप्तश्रुतव्रतपदार्थसमासालापाक्षेपः संक्षेपः, द्वादशाङ्गचतुर्दशपूर्वप्रकीर्णविस्तीर्णश्रुतार्थसमर्थनप्रस्तारो विस्तारः, प्रवचनविषये स्वप्रत्ययसमर्थोऽर्थः, त्रिविधस्यागमस्य निःशेषतोऽन्यतमदेशावगाहालीढमवगाढम्, अवधिमनःपर्ययकेवलाधिकपुरुषप्रत्ययप्ररूढं परमावगाढम् ।

गृहस्थो वा यतिर्वापि सम्यक्त्वस्य समाश्रयः।
एकादशविधः पूर्वश्चरमश्च चतुर्विधः॥
मायानिदानमिथ्यात्वशल्यत्रितयमुद्धरेत्।
आर्जवाकाङ्क्षणाभावतत्त्वभावनकीलकैः॥
दृष्टिहीनः पुमानेति न यथा पदमीप्सितम्।
दृष्टिहीनः पुमानेति न तथा पदमीप्सितम्॥
सम्यक्त्वं नाङ्गहीनं स्याद्राज्यवत्प्राज्यभूतये।
ततस्तदङ्गसंगत्यामङ्गी निःसङ्गमीहताम्॥
विद्याविभूतिरूपाद्याः सम्यक्त्वरहिते कुतः।
नहि बीजव्यपायेऽस्ति सस्यसंपत्तिरङ्गिनि॥
चक्रिश्रीः संश्रयोत्कण्ठा नाकिश्रीर्दर्शनोत्सुका।
तस्य दूरे न मुक्तिश्रीर्निर्दोषं यस्य दर्शनम्॥
मूढत्रयं मदाश्चाष्टौ तथानायतनानि षट्।
अष्टौ शङ्कादयश्चेति दृग्दोषाः पञ्चविंशतिः॥
निश्चयोचितचारित्रः सुदृष्टिस्तत्त्वकोविदः।
अव्रतस्थोऽपि मुक्तिस्थो न व्रतस्थोऽप्यदर्शनः॥
बहिःक्रिया बहिष्कर्म कारणं केवलं भवेत्।
रत्नत्रयसमृद्धेः स्यादात्मा रत्नत्रयात्मकः॥
विशुद्धवस्तुधीर्दृष्टिर्बोधः साकारगोचरः।
अप्रसङ्गस्तयोर्वृत्तं भूतार्थनयवादिनाम्॥
अज्ञाज्ज्ञानं रुचिर्मोहाद्देहाद्वृत्तं च नास्ति यत्।
आत्मन्यस्मिञ्शिवीभूते तस्मादात्मैव तत्रयम्॥
नात्मा कर्म न कर्मात्मा तयोर्यन्महदन्तरम्।
तदात्मैव तदा सत्ता वात्माद्योमेव केवलम्॥
क्लेशाय कारणं कर्म विशुद्धे स्वयमात्मनि।
नोष्णमम्बु स्वतः किंचिदुष्णं तु वह्निसंश्रयम्॥



आत्मा कर्ता स्वपर्याये कर्मकर्तृस्वपर्यये।
मिथो न जातु कर्तृत्वमपरत्रोपचारतः॥
स्वतः सर्वं स्वभावेषु सक्रियं सचराचरम्।
निमित्तमात्रमन्यत्र वार्गतेरिव सारिणि॥
जीवन्तु वा म्रियन्तां वा प्राणिनोऽमी स्वकर्मतः।
स्वं विशुद्धं मनो हिंसन्हिंसकः पापभाग्भवेत्॥
शुद्धमार्गमतोद्योगः शुद्धचेतो वचो वपुः।
शुद्धान्तरात्मसंपन्नो हिंसकोऽपि न हिंसकः॥
पुण्यायाभिभवेद्दुःखं पापायाभिभवेत्सुखम्।
स्वस्मिन्नन्यत्र वा नीतमचिन्त्यं चित्तचेष्टितम्॥
सुखं दुःखविधातापि भवेत्पापसमाश्रयः।
पेटीमध्यविनिक्षिप्तं वासः स्यान्मलिनं न किम्॥
बहिष्कार्यासमर्थोऽपि हृदि हृद्येव संस्थिते।
परं पापं परं पुण्यं परमं च पदं भवेत्॥
प्रकुर्वाणः क्रियास्तास्ताः केवलं क्लेशभाजनः।
यो न चित्तप्रचारज्ञस्तस्य मोक्षपदं कुतः॥
यज्जानाति यथावस्थं वस्तुसर्वस्वमञ्जसा।
तृतीयं लोचनं नृणां सम्यग्ज्ञानं तदुच्यते॥
यष्टिवज्जनुषान्धस्य तत्स्यात्सुकृतचेतसः।
प्रवृत्तिचितिवृत्त्यङ्गं हिताहितविवेचनात्॥
मतिर्जागर्ति दृष्टेऽर्थे दृष्टेऽदृष्टे तथागमः।
अतो न दुर्लभं तत्त्वं यदि निर्मत्सरं मनः॥
यद्यर्थे दर्शितेऽपि स्याज्जन्तोः संतमसा मतिः।
ज्ञानमालोकवत्तस्य वृथा रविरिपोरिव॥
ज्ञातुरेव स दोषोऽयं यदबाधेऽपि वस्तुनि।
मतिर्विपर्ययं धत्ते यथेन्दौ मन्दचक्षुषः॥

ज्ञानमेकं पुनर्द्वेधा पञ्चधा चापि तद्भवेत् ।
अन्यत्र केवलज्ञानात्तत्प्रत्येकमनेकधा ॥
अधर्मकर्मनिर्मुक्तिर्धर्मकर्मविनिर्मितिः ।
चारित्रं तच्च सागारानगारयति संश्रयम् ॥
देशतः प्रथमं तत्स्यात्सर्वतस्तु द्वितीयकम् ।
चारित्रं चारुचारित्रविचारोचितचेतसाम् ॥
देशतः सर्वतो वापि नरो न लभते व्रतम् ।
स्वर्गापवर्गयोर्यस्य नास्त्यन्यतरयोग्यता ॥
तुण्डकण्डूहरं शास्त्रं सम्यक्त्वविधुरे नरे ।
ज्ञानहीने तु चारित्रं दुर्भगाभरणोपमम् ॥
सम्यक्त्वात्सुगतिः प्रोक्ता ज्ञानात्कीर्तिरुदाहृता ।
वृत्तात्पूजामवाप्नोति त्रयाच्च लभते शिवम् ॥
रुचिस्तत्त्वेषु सम्यक्त्वं ज्ञानं तत्त्वनिरूपणम् ।
औदासीन्यं परं प्राहुर्वृत्तं सर्वक्रियोज्झितम् ॥
वृत्तमग्निरुपायो धीः सम्यक्त्वं च रसौषधिः ।
साधुसिद्धो भवेदेष तल्लाभादात्मपारतः ॥
सम्यक्त्वस्याश्रयश्चित्तमभ्यासो मतिसंपदः ।
चारित्रस्य शरीरं स्याद्वित्तं दानादिकर्मणः ॥

इत्युपासकाध्ययने रत्नत्रयस्वरूपनिरूपणो नामैकविंशतितमः कल्पः ।

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन **श्रीसोमदेव**सूरिणा विरचिते **यशोधर**महाराजचरिते **यशस्तिलका**परनाम्न्यपवर्गमार्गमहोदयो नाम षष्ठ आश्वासः ।

---



सप्तम आश्वासः ।

पुनर्गुणमणिकटकचेकटकर्मेव माणिक्यस्य, सुधाविधानमिव प्रासादस्य, पुरुषकारानुष्ठानमिव दैवसंपदः, परक्रमावलम्बनमिव नीतिमार्गस्य, विशेषवेदित्वमिव सेव्यत्वस्य, व्रतं हि खलु सम्यक्त्वरत्नस्योपबृंहकमाहुः । तच्च देशयतीनां द्विविधं मूलोत्तरगुणाश्रयणात् । तत्र—

मद्यमांसमधुत्यागाः सहोदुम्बरपञ्चकाः ।
अष्टावेते गृहस्थानामुक्ता मूलगुणाः श्रुतेः ॥
सर्वदोषोदयो मद्यान्महामोहकृतेर्मतेः ।
सर्वेषां पातकानां च पुरःसरतया स्थितम् ॥
हिताहितविमोहेन देहिनः किं न पातकम् ।
कुर्युः संसारकान्तारपरिभ्रमणकारणम् ॥
मद्येन यादवा नष्टा नष्टा द्यूतेन पाण्डवाः ।
इति सर्वत्र लोकेऽस्मिन्सुप्रसिद्धं कथानकम् ॥
समुत्पद्य विपद्येह देहिनोऽनेकशः किल ।
मद्यीभवन्ति कालेन मनोमोहाय देहिनाम् ॥
मद्यैकबिन्दुसंपन्नाः प्राणिनः प्रचरन्ति चेत् ।
पूरयेयुर्न संदेहं समस्तमपि विष्टपम् ॥
मनोमोहस्य हेतुत्वान्निदानत्वाच्च दुर्गतेः ।
मद्यं सद्भिः सदा त्याज्यमिहामुत्र च दोषकृत् ॥

श्रूयतामत्र मद्यप्रवृत्तिदोषस्योपाख्यानम्—तदुर्वीश्वराखर्वगर्वौर्वानलाहुतीभूताहितान्वयनक्रादेकचक्रात्पुरादेकपान्नाम परिव्राजको जाह्नवीजलेषु मज्जनाय व्रजन्निजच्छायापरद्विपाशङ्कातिक्रुद्धमदान्धगन्धसिन्धुरोद्धुरविषाणविदार्यमाणमेदिनीहृदये विन्ध्याटवीविषये प्ररूढप्रौढयौवनासवास्वादपुनरुक्तकादम्बरीपानप्रसूतासरालविलासग्रहिलाभिर्महिलाभिः सह पलोपदंशवश्यकमासेवमानस्य महतो मातङ्गसमूहस्य मध्ये निपतितः सन् सीधुसंबन्धविधुरसङ्गैर्मातङ्गैरुपबध्य असौ किलैवमुक्तः—'त्वया मद्यमांसमहिलासु मध्येऽन्यतमसमागमः कर्तव्यः, अन्यथा जीवन्न पश्यसि मन्दाकिनीम्' इति।

सोऽप्येवमुक्तस्तिलसर्षपप्रमितस्यापि हि पिशितस्य प्राशने स्मृतिषु महाव्रत ....(?)विपत्तयः श्रूयन्ते। मातङ्गीसङ्गे च मृतिनिकेतनं प्रायश्चेतनम्। य एवंविधां सुरां पिबति न तेन सुरा पीता भवतीति निखिलमखशिखामणौ सौत्रामणौ मदिरास्वादाभिसंधिरनुमतविधिरस्ति। यैश्च पिष्टोदकगुडधातकीप्रायैर्वस्तुकार्यैः सुरा संधीयते तान्यपि वस्तूनि विशुद्धान्येवेति चिरं चेतसि विचार्यानार्यविद्याविधानः कृतमद्यपानस्तन्माहात्म्यात्समाविर्भूतमनोमहामोहः कौपीनमपहाय हारहूरव्यवहारातिलङ्घितमातङ्गिकागीतानुगतकरतालिकाविडम्बनावसरो ग्रहगृहीतशरीर इवानीतानेकविकारः पुनर्बुभुक्षाशुशुक्षिणिक्षीणकुक्षिकुहरस्तरसमपि भक्षितवान्। प्रादुर्भवद्दुःसहोद्रेकमदनो मातङ्गीं कामितवान्।

भवति चात्र श्लोकः—

हेतुशुद्धेः श्रुतेर्वाक्यात्पीतमद्यः **किलैकपात्**।
मांसमातङ्गिकासङ्गमकरोन्मूढमानसः॥

इत्युपासकाध्ययने मद्यप्रवृत्तिदोषदर्शनो नाम द्वाविंशः कल्पः।

श्रूयतां मद्यनिवृत्तिगुणस्योपाख्यानम्—अशेषविद्यावैशारद्यमदमत्तमनीषिमत्तालिकुलकेलिकमलनाभ्यां **वलभ्यां** पुरि खात्रचरित्रशीलः करवालः, कपाटोद्घाटनपटुर्बटुः, महानिद्रासंपादनकुशलो धूर्तिलः, परगोपायितद्रविणदेशविशारदः शारदः, खरपटागमविलासः कुकिलासश्चेति पञ्च मलिम्लुचाः प्रतिपन्नपरस्परप्रीतिप्रपञ्चाः स्वव्यवसायसाहसाभ्यामीश्वरशरीरार्धवासिनीं भवानीमपि मुकुन्दहृदयाश्रयधियं श्रियमपि कात्यायनीलोचनासज्जनमञ्जनमपि हर्तुं समर्थाः, पश्यतोहराणामपि पश्यतोहराः, कृतान्तदूतानामपि कृतान्तदूताः, कदाचिदेकस्यां निशि चेलालोपं वर्षति देवे कज्जलपटलकालकायप्रतिष्ठासु सकलासु काष्ठासु विहितपुरसारापहाराः पुरबाहिरिकोपवने धनं विभजन्तस्तवेदं ममेदमिति विवदमानाः कन्दलमपहाय समानायितमैरेयाः पानगोष्ठीमनुतिष्ठन्तः पूर्वाहितकलहकोपोन्मेषकलुषधिषणाः यष्टायष्टि मुष्टामुष्टि च युद्धं विधाय सर्वेऽपि मम्रुरन्यत्र



**धूर्तिलात्**। स किल यथादर्शनसंभवं महामुनिविलोकनात्तस्मिन्नहन्येकं व्रतं गृह्णाति। तत्र च दिने तद्दर्शनादासवव्रतमग्रहीत्।

तदनु **धूर्तिलः** समानशीलेषु कस्य वश्यं विनाशलेश्यामात्मसमक्षमुपयुज्य विरज्याजवं जवादसुखबीजादुत्पाद्य च मनोजकुजजटाजालनिवेशमिव केशपाशं चिरन्नाय(?)परत्राहितजैत्राय समीहांचक्रे।

भवति चात्र श्लोकः—

एकस्मिन्वासरे मद्यनिवृत्तेर्**धूर्तिलः** किल।
एतद्दोषात्सहायेषु मृतेष्वापदनापदम्॥

इत्युपासकाध्ययने मद्यनिवृत्तिगुणनिदानो नाम त्रयोविंशतितमः कल्पः।

स्वभावाशुचिदुर्गन्धमन्यापायदुरास्पदम्।
सन्तोऽदन्ति कथं मांसं विपाके दुर्गतिप्रदम्॥
कर्माकृत्यमपि प्राणी करोतु यदि चात्मनः।
हन्यमानविधिर्न स्यादन्यथा वा न जीवनम्॥
धर्माच्छर्मभुजां धर्मे किं तु विद्वेषकारणम्।
प्रार्थितार्थप्रदं द्वेष्टुः को नामामरपादपम्॥
अल्पात्क्लेशात्सुखं सुष्टु सुधीश्चेत्स्वस्य वाञ्छति।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥
स सुखं सेवमानोऽपि जन्मान्तरसुखाश्रयः।
यः परानुपघातेन सुखसेवापरायणः॥
स पुमान्ननु लोकेऽस्मिन्नुदर्के दुःखवर्जितः।
यस्तदा त्वसुखासङ्गान्न मुह्येद्धर्मकर्मणि॥
स भूभारः परं प्राणी जीवन्नपि मृतश्च सः।
यो न धर्मार्थकामेषु भवेदन्यसमाश्रयः॥
स मूर्खः स जडः सोऽज्ञः स पशुश्च पशोरपि।
योऽश्नन्नपि फलं धर्माद्धर्मे भवति मन्दधीः॥
स विद्वान्स महाप्राज्ञः स धीमान्स च पण्डितः।
यः स्वतो वान्यतो वापि नाधर्माय समीहते॥

तत्स्वस्य हितमिच्छन्तो मुञ्चन्तश्चाहितं मुहुः ।
अन्यमांसैः स्वमांसस्य कथं वृद्धिविधायिनः ॥
यत्परत्र करोतीह सुखं वा दुःखमेव वा ।
वृद्धये धनवद्दत्तं स्वस्य तज्जायतेऽधिकम् ॥
मद्यमांसमधुप्रायं कर्म धर्माय चेन्मतम् ।
अधर्मः कोऽपरः किं वा भवेद्दुर्गतिदायकम् ॥
स धर्मो यत्र नाधर्मस्तत्सुखं यत्र नासुखम् ।
तज्ज्ञानं यत्र नाज्ञानं सा गतिर्यत्र नागतिः ॥
स्वकीयं जीवितं यद्वत्सर्वस्य प्राणिनः प्रियम् ।
तद्वदेतत्परस्यापि ततो हिंसां परित्यजेत् ॥
मांसादिषु दया नास्ति न सत्यं मद्यपायिषु ।
आनृशंस्यं न मर्त्येषु मधूदुंबरसेविषु ॥
मक्षिकागर्भसंभूतबालाण्डविनिपीडनात् ।
जातं मधु कथं सन्तः सेवन्ते कललाकृति ॥
उच्क्रान्तार्भकगर्भेऽस्मिन्नण्डजाण्डकखण्डवत् ।
कुतो मधु मधुच्छत्रे व्याधलुब्धकजीवितम् ॥
अश्वत्थोदुम्बरप्लक्षन्यग्रोधादिफलेष्वपि ।
प्रत्यक्षाः प्राणिनः स्थूलाः सूक्ष्माश्चागमगोचराः ॥
मद्यादिस्वादिगेहेषु पानमन्नं च नाचरेत् ।
तदमत्रादिसंपर्कं न कुर्वीत कदाचन ॥
कुर्वन्नव्रतिभिः सार्धं संसर्गं भोजनादिषु ।
प्राप्नोति वाच्यतामत्र परत्रेह च सत्फलम् ॥
दृतिप्रायेषु पानीयं स्नेहं च कुतपादिषु ।
व्रतस्थो वर्जयेन्नित्यं योषितश्चाव्रतोचिताः ॥
जीवयोग्या विशेषेण मयमेषादिकायवत् ।
मुद्गमाषादिकायोऽपि मांसमित्यपरे जगुः ॥



तदयुक्तम् । तदाह—

मांसं जीवशरीरं जीवशरीरं भवेन्न वा मांसम् ।
यद्वन्निम्बो वृक्षो वृक्षस्तु भवेन्न वा निम्बः ॥

किं च ।

द्विजाण्डजनिहन्तृणां यथा पापं विशिष्यते ।
जीवयोगाविशेषेऽपि तथा पलपलाशिनाम् ॥
स्त्रीत्वपेयत्वसामान्याद्दारवारिवदीहताम् ।
एष वादी वदन्नेवं मद्यमातृसमागमे ॥
शुद्धं दुग्धं न गोर्मांसं वस्तुवैचित्र्यमीदृशम् ।
विषघ्नं रत्नमाहेयं विषं च विपदे यतः ॥

अथवा ।

हेयं पलं पयः पेयं समे सत्यपि कारणे ।
विषद्रोरायुषे (?) पत्रं मूलं तु मृतये मतम् ॥

अपि च ।

शरीरावयवत्वेऽपि मांसे दोषो न सर्पिषि ।
जिह्वावन्न हि दोषाय पादे मद्यं द्विजातिषु ॥
विधिश्चेत्केवलं शुद्ध्यै द्विजैः सर्वं निषेव्यताम् ।
शुद्ध्यै चेत्केवलं वस्तु भुज्यतां श्वपचालये ॥
तद्द्रव्यदातृपात्राणां विशुद्धौ विधिशुद्धता ।
यत्संस्कारशतेनापि नाजातिर्द्विजतां व्रजेत् ॥
तच्छाक्यसांख्यचार्वाकवेदवैद्यकपर्दिनाम् ।
मतं विहाय हातव्यं मांसं श्रेयोऽर्थिभिः सदा ॥
यस्तु लौल्येन मांसाशी धर्मधीः स द्विपातकः ।
परदारक्रियाकारी मात्रा सत्रं यथा नरः ॥

श्रूयतामत्र मांसाशनाभिध्यानमात्रस्यापि पातकस्य फलम्—श्रीमत्पुष्पदन्तभदन्तावतारावतीर्णत्रिदिवपतिसंपादितो द्यावेन्दिरासद्यां **काकान्द्यां** पुरि चार्वाकान्वयसंभूतिः **सौरसेनो** नाम नृपतिः कुलधर्मानुरोध-

बुद्धया गृहीतपिशितव्रतः पुनर्वेदवैद्याद्वैतमतमोहितमतिः संजातजाङ्गलिजिघित्सानुमतिरङ्गीकृतवस्तुनिर्वहणाज्जनापवादाज्जुगुप्समानो मनोविश्रान्तिहेतुना **कर्मप्रिय**नामकेतुना बल्लवेन रहसि बिलस्थलजलान्तरालचरतरसमानाययन्नप्यनेकराजकार्यपर्याकुलमानसतया मांसभक्षणक्षणं नावाप ।

**कर्मप्रियो**ऽपि तथा पृथिवीश्वरनिदेशमनुदिनमनुतिष्ठन्नेकदा पृदाकुपाकोपद्रुतः प्रेत्य स्वयंभूरमणाभिधानमुद्रे समुद्रे महादेवबलस्तिमिङ्गिलगिलो बभूव । भूपालो चिरकालेन कथाशेषतामाश्रित्य पिशिताशनाशयानुबन्धात्तत्रैव सिन्धौ तस्यैव महामीनस्य कर्णबिले तन्मलाशनशीलः शालिसिक्थकलकलेवरः शफरोऽभूत् । तदन्वेष पर्याप्तोभयकरणस्तस्य वदनं व्यादाय निद्रायत्तो गलगुहावगाहे वेलानदीप्रवाह इवानेकं जलचरानीकं प्रविश्य तथैव निष्क्रामन्निरीक्ष्य पापकर्मा निर्भाग्याणां चाग्रणीधर्मा खल्वेष झषो यद्वक्रसंपातनचेतांस्यपि न शक्नोति अशितुं यादांसि । मम पुनर्यदि हृदयेप्सितप्रभावाद्दैवादेतावन्मात्रं गात्रं स्यात्तदा समस्तमपि समुद्रं विद्रुतसकलसत्त्वसंचारमुद्रं विदधामि' इत्यभिध्यानादल्पकायकलः शकुलो निखिलनक्रचक्रचाराच्च महादेहाधीनो मीनः कालेन विपद्योत्पद्य चोत्तमतस्त्रयस्त्रिंशत्सागरोपमायुर्निलये निरये भवप्रत्ययायत्ताविर्भूतज्ञानविशेषौ तावनिमिषचरौ नारकपर्यायधरौ किलैवमालापं चक्रतुः—'अहो क्षुद्रमत्स्य, तथा निर्मितकर्मणो दुष्कर्मणो ममात्रागतिरुचितैव । तव तु मत्कर्णबिले मलोपजीवनस्य कथमत्रागमनमभून्महामत्स्यचेष्टितादपि दुरन्तदुःखसंबन्धनिबन्धनादशुभध्यानात् ।'

भवति चात्र श्लोकः—

क्षुद्रमत्स्यः किलैकस्तु स्वयंभूरमणोदधौ ।
महामत्स्य····कर्णस्थः स्मृतिदोषादधो गतः ॥

इत्युपासकाध्ययने मांसाभिलाषमात्रफलप्रलपनो नाम चतुर्विंशतितमः कल्पः ।

श्रूयतामत्र मांसनिवृत्तिफलस्योपाख्यानम्—**अवन्तिमण्डलनलिनाभिनिवाससरस्यामेकानस्यां** पुरि पुरबाहिरिकायां देविलामहिलाविलासविशिखवृत्तिकोदण्डस्य **चण्डनाम्नो** मातङ्गस्यैकस्यां दिशि निवेशितपिशितोपदंशस्यापरस्यां दिशि विन्यस्तसुरासुरसंभृतकलशस्य तां पलादंशोदारां सुरां पायं पायं तदुभयान्तराले चर्मनिर्माणतन्त्रां वरत्रां वर्तयतो वियद्विहारोड्डीनाण्डजडिम्भतुण्डखण्डनविनिष्पन्दिविषधरविषदोषावसरा सुरासीत् । अत्रैवावसरे तत्समीपवर्त्मगोचरे धर्मश्रवणजन्मान्तरादिप्रकाशनपथाभिः कथाभिर्विनेयजनोपकाराय कृतकामचारप्रचारमम्बरान्मूर्तिमत्स्वर्गापवर्गमार्गयमलमिवावतरच्चारणर्षियुगलमवलोक्य संजातकुतूहलस्तं देशमनुगम्य नगरे तद्दर्शनेन श्रावकलोकं व्रतानि समाददानमनुस्मृत्य समाचरितप्रणामः सुनन्दनाग्रे सरगमनमभिनन्दनं भगवन्तमात्मोचितं व्रतमयाचत भोगवान् ।



उपकाराय सर्वस्य पर्जन्य इव धार्मिकः ।
तत्स्थानास्थानचिन्तेयं वृष्टिवन्न हितोक्तिषु ॥

इत्यवगम्य सम्यगवधिबोधापयोगादवगतैतदासन्नपरासुतायोगस्तन्मातङ्गमेवमवोचत्—'अहो मातङ्ग, तदुभयान्तरालसज्जां रज्जूं सृजतस्तन्मध्ये तव तन्निवृत्तिव्रतम्' इति । मातङ्गस्तथा प्रतिपद्योपसद्य च तमवकाशं पिशितं प्राश्य 'यावदहमिदं स्थानकं नायामि तावन्मेऽस्य निवृत्तिः' इत्यभिधाय समासादितमदिरास्थानः प्रतिपन्नपानस्तदुग्रतरगरभराल्लघूल्लङ्घितमतिप्रसरस्तन्निवृत्तिमलभमानचितोऽपि प्रेत्य तावन्मात्रव्रतमाहात्म्येन यक्षकुले यक्षमुख्यत्वं प्रतिपेदे ।

भवति चात्र श्लोकः—

**चण्डोऽवन्तिषु** मातङ्गः पिशितस्य निवृत्तितः ।
अत्यल्पकालभाविन्याः प्रपेदे यक्षमुख्यताम् ॥

इत्युपासकाध्ययने मांसनिवृत्तिफलाख्यानो नाम पञ्चविंशतितमः कल्पः ।

अथ के ते उत्तरगुणाः—

अणुव्रतानि पञ्चैव त्रिप्रकारं गुणव्रतम् ।
शिक्षाव्रतानि चत्वारि गुणाः स्युर्द्वादशोत्तरे ॥

तत्र—

हिंसास्तेयानृताब्रह्मपरिग्रहविनिग्रहाः ।
एतानि देशतः पञ्चाणुव्रतानि प्रचक्षते ॥

संकल्पपूर्वकः सेव्यो नियमो व्रतमुच्यते ।
प्रवृत्तिविनिवृत्ती वा सदसत्कर्मसंभवे ॥
हिंसायामनृते चौर्यामब्रह्मणि परिग्रहे ।
दृष्टा विपत्तिरत्रैव परत्रैव च दुर्गतिः ॥
यत्स्यात्प्रमादयोगेन प्राणिषु प्राणहापनम् ।
सा हिंसा रक्षणं तेषामहिंसा तु सतां मता ॥
विकथाक्षकषायाणां निद्रायाः प्रणयस्य च ।
अभ्यासाभिरतो जन्तुः प्रमत्तः परिकीर्तितः ॥
देवतातिथिपित्रर्थं मन्त्रौषधिभयाय वा ।
न हिंस्यात्प्राणिनः सर्वानहिंसा नाम तद्व्रतम् ॥
गृहकार्याणि सर्वाणि दृष्टिपूतानि कारयेत् ।
द्रवद्रव्याणि सर्वाणि पटपूतानि योजयेत् ॥
आसनं शयनं मार्गमन्नमन्यच्च वस्तु यत् ।
अदृष्टं तन्न सेवेत यथाकालं भजन्नपि ॥
दर्शनस्पर्शसंकल्पसंसर्गत्यक्तभोजिताः ।
हिंसनाक्रन्दनप्रायाः प्राशप्रत्यूहकारकाः ॥
अतिप्रसङ्गहानाय तपसः परिवृद्धये ।
अन्तरायाः स्मृता सद्भिर्व्रतबीजविनिक्रियाः ॥
अहिंसाव्रतरक्षार्थं मूलव्रतविशुद्धये ।
निशायां वर्जयेद्भुक्तिमिहामुत्र च दुःखदाम् ॥
आश्रितेषु च सर्वेषु यथावद्विहितस्थितिः ।
गृहाश्रमी समीहेत शारीरेऽवसरे स्वयम् ॥
संधानं पातकं धान्यं पुष्पं मूलं फलं धनम् ।
जीवयोनि न संग्राह्यं यच्च जीवैरुपद्रुतम् ॥
अमिश्रं मिश्रमुत्सार्गि कालदेशदशाश्रयम् ।
वस्तु किंचित्परित्याज्यमपीहास्ति जिनागमे ॥



यदन्तःशुषिरप्रायं हेयं नालीनलादि तत् ।
अनन्तकायिकप्रायं वल्लीकन्दादिकं त्यजेत् ॥
द्विदलं द्विदलं प्राश्यं प्रायेणानवतां गतम् ।
सिद्धयः सकलास्त्याज्याः साधिताः सकलाश्च याः ॥
तत्राहिंसा कुतो यत्र बह्वारम्भपरिग्रहः ।
वञ्चके च कुशीले च नरे नास्ति दयालुता ॥
शोकसंतापसंक्रन्दपरिदेवनदुःखधीः ।
भवन्स्वपरयोर्जन्तुरसद्वेद्याय जायते ॥
कषायोदयतीव्रात्मा भावो यस्योपजायते ।
जीवो जायेत चारित्रमोहस्यासौ समाश्रयः ॥
मैत्रीप्रमोदकारुण्यमाध्यस्थानि यथाक्रमम् ।
सत्वे गुणाधिके क्लिष्टे निर्गुणेऽपि च भावयेत् ॥
कायेन मनसा वाचा परे सर्वत्र देहिनि ।
अदुःखजननी वृत्तिर्मैत्री मैत्रीविदां मता ॥
तपोगुणाधिके पुंसि प्रश्रयाश्रयनिर्भरः ।
जायमानो मनोरागः प्रमोदो विदुषां मतः ॥
दीनाभ्युद्धरणे बुद्धिः कारुण्यं करुणात्मनाम् ।
हर्षामर्षोज्झिता वृत्तिर्माध्यस्थ्यं निर्गुणात्मनि ॥
इत्थं प्रयतमानस्य गृहस्थस्यापि देहिनः ।
करस्थो जायते स्वर्गो नास्य दूरे च तत्पदम् ॥
पुण्यं तेजोमयं प्राहुः प्राहुः पापं तमोमयम् ।
तत्पापं पुंसि किं तिष्ठेद्दयादीधितिमालिनि ॥
सा क्रिया कापि नास्तीह यस्यां हिंसा न विद्यते ।
विशिष्येते परं भावावत्र मुख्यानुषङ्गिकौ ॥
अघ्नन्नपि भवेत्पापी निघ्नन्नपि न पापभाक् ।
अभिध्यानविशेषेण यथा धीवरकर्षकौ ॥

कस्यचित्संनिविष्टस्य दारान्मातरमन्तरा ।
वपुःस्पर्शाविशेषेऽपि शेमुषी तु विशिष्यते ॥

तदुक्तम्—

परिणाममेव कारणमाहुः खलु पुण्यपापयोः कुशलाः ।
तस्मात्पुण्योपचयः पापापचयश्च सुविधेयः ॥
वपुषो वचसो वापि शुभाशुभसमाश्रया ।
क्रियान्यत्र क्रमेण स्यात्क्रियत्स्वेव च वस्तुषु ।
जगत्त्रयादपि स्फारा चित्ते तु क्षणतः क्रिया ॥

तथा च लोकोक्तिः—

एकस्मिन्मनसः कोणे पुंसामुत्साहशालिनाम् ।
अनायासेन संमान्ति भुवनानि चतुर्दश ॥
भूपयःपवनाग्नीनां तृणादीनां च हिंसनम् ।
यावत्प्रयोजनं स्वस्य तावत्कुर्यादयं तु यत् ॥
ग्रामस्वामिस्वकार्येषु यथालोकं प्रवर्तताम् ।
गुणदोषविभागेऽत्र लोक एव यतो गुरुः ॥
दर्पेण वा प्रमादाद्वा धीन्द्रियादिविराधने ।
प्रायश्चित्तविधिं कुर्याद्यथादोषं यथागमम् ॥
प्राय इत्युच्यते लोकस्तस्य चित्तं मनो भवेत् ।
एतच्छुद्धिकरं कर्म प्रायश्चित्तं प्रचक्षते ॥
द्वादशाङ्गधरोऽप्येको न कृच्छ्रं दातुमर्हति ।
तस्माद्बहुश्रुताः प्राज्ञाः प्रायश्चित्तप्रदाः स्मृताः ॥
मनसा कर्मणा वाचा यद्दुष्कृतमुपार्जितम् ।
मनसा कर्मणा वाचा तथैव····विहापयेत् ॥
आत्मदेशपरिस्पन्दो योगो योगविदां मतः ।
मनोवाक्कायतस्त्रेधा पुण्यपापश्रवाश्रयः ॥
हिंसनाब्रह्मचौर्यादि काये कर्माशुभं विदुः ।
असत्यासभ्यपारुष्यप्रायं वचनगोचरम् ॥



मदेर्ष्यासूयनादि स्यान्मनोव्यापारसंश्रयम् ।
एतद्विपर्ययाज्ज्ञेयं शुभमेतेषु तत्पुनः ॥
हिरण्यपशुभूमीनां कन्याशय्यान्नवाससाम् ।
दानैर्बहुविधैश्चान्यैर्न पापमुपशाम्यति ॥
लङ्घनौषधसाध्यानां व्याधीनां बाह्यको विधिः ।
यथाकिंचित्करो लोके तथा पापोऽपि मन्यताम् ॥
निहत्य निखिलं पापं मनोवाग्देहदण्डनैः ।
करोतु सकलं कर्म दानपूजादिकं ततः ॥
आप्रवृत्तेर्निवृत्तिर्मे सर्वस्येति कृतक्रियः ।
संस्मृत्य गुरुनामानि कुर्यान्निद्रादिकं विधिम् ॥
दैवादायुर्विरामे स्यात्प्रत्याख्यानफलं महत् ।
भोगशून्यमतः कालं नावहेदव्रतं व्रती ॥
एका जीवदयैकत्र परत्र सकलाः क्रियाः ।
परं फलं तु पूर्वत्र कृषेश्चिन्तामणेरिव ॥
आयुष्मान्सुभगः श्रीमान्सुरूपः कीर्तिमान्नरः ।
अहिंसाव्रतमाहात्म्यादेकस्मादेव जायते ॥

श्रूयतामत्र हिंसाफलस्योपाख्यानम्—**अवन्ति**देशेषु सकललोकमनोहरागमारामे **शिरीषग्रामे** **मृगसेना**भिधानो मत्स्यबन्धः स्कन्धावलम्बितगलजालाद्युपकरणः पृथुरोमसमानयनोपनीतविहारणः कल्लोलजलप्लावितकूलशालेयमालवप्रां **सृप्रां** सरितमनुसरन्नशेषमहर्षिपरिषद्वर्षमखिलमहाभागभूपतिपरिकल्पितसपर्यं मिथ्याविरहितधर्मचर्यं **श्रीयशो(?)चार्यं** निचाय्य समासन्नसुकृतासाद्यहृदयत्वाद्दूरादेव परित्यक्तपापसंपादनोपकरणग्रामः ससंभ्रमं संपादित(?)दीप्रणामः प्रकामप्रगल्ददेनाः समाहितमनाः 'साधुसमाजसत्तम, समस्तमहामुनिजनोत्तम, दैवादुपपन्नपुण्यगृह्यभावोऽनुगृह्यतां कस्यचिद्व्रतस्य प्रदानेनायं जनः' इत्यभाषत। भगवान्—'ननु कथमस्य पयःपतङ्गस्येव सदैव शकुलिविनाशनिःसूकाशयवयस्य व्रतग्रहणोपदेशे प्रवीणमन्तःकरणमभूत्। अस्ति हि लोके प्रवादः, न खलु प्रायेण प्राणिनां प्रकृतेर्विकृतिरापत्त्यां

शुभमशुभं वा विना भवति' इत्युपयुक्तावधिः सम्यगवबुद्धसविधैतज्जीविताव-धिस्तमेवमवादीत्—'अहो शुभाशयायतन, अद्यतनाहनि यस्त्वादावेवानाये मीनः समापतितः स त्वया न प्रमापयितव्यः । यावच्चात्मवृत्तिविषयमामिषं प्राप्नोषि तावत्तव तन्निवृत्तिः । अयं पुनः पञ्चत्रिंशदक्षरपवित्रो मन्त्रः सर्वदा सुस्थितेन दुःस्थितेन च त्वया ध्यातव्यः' इति । **मृगसेनः** 'यथादिशति बहुमानस्तथास्तु' इत्यभिनिविश्य तां शैवलिनीमनुसृत्य जनितजालक्षेपो कालक्षेपमतनुकारणं वैसारिणमासाद्य स्मृतव्रतस्तस्य श्रवसि चिह्नाय चीरचीरीं निबध्यात्याक्षीत् । पुनरपरावकाशे तीरिणीप्रदेशे तथैवादूरतरशर्मा समाचरितकर्मा तमेवाषडक्षीणमक्षीणायुषमवाप्यामुञ्चत । तदेवमेतस्मिन्ननणिष्ठे पाठीनवरिष्ठे पञ्चकृत्वो लग्ने विपदमग्ने मुच्यमाने सति, असमस्तकमध्यास्त घनघुसृणरसारुणितवरुणपुरपुरंध्रीकपोलकान्तिशाली गभस्तिमाली । तदनु तं गृहीतव्रतापरित्यागमोदमानचेतनं **मृगसेन**मधार्मिकलोकव्यतिरिक्तं रिक्तमागच्छन्तं परिच्छिद्य, अतुच्छकोपापरिहार्या तद्भार्या **घण्टा**ख्या यमघटेव किमपि कर्णकटुः क्वणन्ती कुटीरान्तःश्रितशरीरा निर्विवरमररं प्रदायास्थात् । **मृगसेनो**ऽपि तया निरुद्धवेश्मप्रवेशनस्तन्मन्त्रस्मरणसक्तचित्तः पुराणतरतरुभित्तमुच्छीर्षं विधाय सान्द्रं निन्द्रायन्नेतत्तरुभित्ताभ्यन्तरविनिःसृतेन सरीसृपसुतेन दष्टः कष्टमवस्थान्तरमाविष्टो व्युष्टसमये **घण्टया** दृष्टः । पुनरनेन सार्धमुषर्बुधमध्यानुमोचितनिश्चयात्मनि विहितबहुनिन्दया शोचितश्च । ततः सा 'यदेवास्य व्रतं तदेव ममापि । जन्मान्तरे चायमेव मे पतिः' इत्यावेदितनिदाना समित्समिद्धमहसि द्रविणोदसि हव्यसमस्नेहं देहं जुहाव ।

अथ विलासिनीविलोचनोत्पलपुनरुक्तवन्दनमालायां **विशालायां** पुरि विश्वगुणो महादेवीश्वरो विश्वंभरो **विश्वंभरो** नाम नृपतिः । **धनश्री**पतिः पिता च दुहितुः **सुबन्धोर्गुणपालो** नाम श्रेष्ठी । तस्य किल **गुणपाल**स्य मनोरथपान्थप्रीतिप्रपालिकायामेतस्यां कुलपालिकायामनेन **मृगसेनेन** समापन्नसत्त्वायां सत्याम्, असौ वसुधापतिर्विटकथासंसृष्टतया प्रतिपन्नपाञ्चजनीनभावो **नर्मभर्म**नाम्नो नर्मसचिवस्य सुताय **नर्मधर्मणे**



**गुणपाल**श्रेष्ठिनमखिलकलाकलापालंकृतरूपसमन्वितां सुतामयाचत । श्रेष्ठी दुष्प्रज्ञेन राज्ञा तथा याचितः 'यदि नर्मसचिवसुताय सुतां वितरामि तदावश्यं कुलक्रमव्यतिक्रमो दुरपवादोपक्रमश्च । अथ स्वामिशासनमतिक्रम्यात्रैवासे तदा सर्वस्वापहारः प्राणसंहारश्च' इति निश्चित्य प्रियसुहृदः **श्रीदत्त**स्य वणिक्पतेर्निकेतने समणिमेखलकलत्रं कलत्रमवस्थाप्य स्थपतेयसारं दुहितरं चात्मसात्कृत्य सुलभकेलिवनवनाशयनिवेशं **कौशाम्बी**देशमयासीत् ।

अत्रान्तरे श्रीमद्दरिद्रमन्दिरनिर्विशेषमाचरितचर्यापर्यटनौ **शिवगुप्त**-**मुनिगुप्त**नामानौ मुनी **श्रीदत्त**प्रतिवेशनिवासिनोपासकेन यथाविधिविहितप्रतिग्रहौ कृतोपचारविग्रहौ च तामङ्गणाश्रयां **धनश्रिय**मपश्यताम् ।

तत्र **मुनिगुप्त**भगवान्किल केवलखलिस्नानपरुषमुद्गमनीयसंगताङ्गाभोगत्विषमवैधव्यचिह्नदवरकमात्रालंकारजुष्टमाप्तकान्तापत्यपरिजनविरहदेहसादां गर्भगौरवखेदां च शिशिराजसूवास्त्रवशवर्तिनीं स्थलमलिनीमिव मलिनच्छविमुदवसितपरिसरे परगृहवासविशीर्यमाणमुखश्रियं **धनश्रियं** निध्याय 'अहो, महीयसां खलु एनसामावासः कोऽप्यस्याः कुक्षौ महापुरुषोऽवतीर्णः, येनावतीर्णमात्रेणापि दुष्पुत्रेणेव वराकी इयदावेशां दशामशिश्रयत्' इत्यभाषत । मुनिवृषा **शिवगुप्तः**—'मैवं भाषिष्ठाः । यतो यद्यपीयं श्रेष्ठिनी कानिचिद्दिनान्येवंभूता सती पराधिष्ठाने तिष्ठति, तथाप्येतन्नन्दनेन सकलवणिक्पतिना राजश्रेष्ठिना निरवधिशेवधीश्वरेण **विश्वंभरे**श्वरसुतावरेण च भवितव्यम्' इत्यवोचत् ।

एतच्च स्वकीयमन्दिरालिन्दगतः **श्रीदत्तो** निशम्य 'न खलु प्रायेणासत्यमिदमुक्तं भविष्यति महर्षेः' इत्यवधार्य सूचीमुखसर्पवद्दुरीहितदत्तचेतोवृत्तिरासीत् । **धनश्रीश्च** परिप्राप्तप्रसवदिवसा सती सुतमसूत ।

**श्रीदत्तः**—'चित्रभानुरिवायमाश्रयाशः खलु बालिशः । तदसंजातस्नेहायामेवास्य जनन्यामुपांशुदण्डः श्रेयान्' इति परामृश्य प्रसूतिदुःखेनातुच्छमूर्छापाश्रयां **धनश्रिय**माकलय्य निजपरिजनजरतीमुखेन 'प्रमीत एवायं

तनयः संजातः' इति प्रसिद्धिं विधायाकार्यं चैकमाचरितोपचारप्रपञ्चं श्वपचं जिह्मब्राह्मीरहस्यनिकेतः कृतापायसंकेतस्तं स्तन्यपमेतस्मै समर्पयामास ।

सोऽपि जनंगमः स्वर्भानुप्रभेण करेण रामरश्मिमिव तं स्तनंधयमुपरुध्य निःशलाकावकाशं देशमाश्रित्य पुण्यपरमाणुपुञ्जमिव शुभशरीरभाजमेनमवेक्ष्य संजातकरुणारसप्रसरप्रसन्नमुखः सुखेन विनिधाय स्वकीयमटीकत । पुनरस्यैवाधरभवभगिनिपतिरशेषापणिकपणपरमेष्ठी **इन्द्रदत्त**श्रेष्ठी विक्रयाडम्बरितशण्डमण्डलाधीनं पेठोपकण्ठगोष्ठीनमनुसृतो वत्सीयविषयसनीडक्रीडागतगोपालबालकलपनपरम्परालापद्रुतसतरतानकसंतानपरिवृतमनेकचन्द्रकान्तोपलान्तरालनिलीनमरुणमणिनिधानमिव तं जातमुपलभ्य स्वयमदृष्टनन्दनवदनत्वात्तद्बुद्ध्या साध्वनुरुध्य 'स्तनंधयावधानधृतबोधे **राधे,** तवायं गूढगर्भसंभवस्तनूद्भवः' इति प्रवर्धितप्रसिद्धिर्महान्तमपत्योत्पत्तिमहोत्सवमकार्षीत् ।

**श्रीदत्तः** श्रवणपरम्परया तमेनं वृत्तान्तमुपश्रुत्य शिशुविनाशनाशयेन कीनाश इव तन्निवेशम् '**इन्द्रदत्त,** अयं महाभागधेयो भागिनेयो ममैव तावद्धाम्नि वर्धताम्' इत्यभिधाय सभागिनीकं तोकमात्मावासमानीय पुरावत्क्रूरप्रज्ञः संज्ञपनार्थमन्तावसायिने प्रायच्छत । सोऽपि दिवाकीर्तिरुपात्तपुत्रभाण्डः सत्वरमुपह्वरानुसारी समीरवशविगलितघनाम्बरावरणं हरिणकिरणमिव ईक्षणरमणीयं **गुणपाल**तनयमालोक्य सदयहृदयः प्रबलविटपिसंकटे सरित्तटनिकटे परित्यज्य यथायथमश्वलीत्(?) ।

तत्राप्यसौ पुरोपार्जितपुण्यप्रभावादुपमातृभिरिव एतद्वीक्षणात्क्षरत्क्षीरस्तनाभिरानन्दोदीरितनिर्भरहंभाध्वनिभिः प्रचारायागताभिः कुण्डोध्नीभिर्व्रजलोकधेनुभिरुपरुद्धसविधभागोऽपदान्तरमागतेन तद्रक्षणदक्षेण गोपालजनेन अस्तावतंसिभासिन्यशोकस्तबकसुन्दरे सरोजसुहृदि सति विलोकितः । कथितश्च सकलगोष्ठज्येष्ठाय बल्लवकुलवरिष्ठाय निजाननापहसितारविन्दाय **गोविन्दाय** । सोऽपि पुत्रप्रेम्णा प्रमोदगरिम्णा चानीय जनितहृदयानन्दायाः **सुनन्दा**याः समर्पितवान् । अस्येन्दिरामन्दिरस्य **धनकीर्ति**रिति नाम । ततोऽसौ क्रमेण मकरन्दपरित्यक्तशैशवदशः कमलेश



इव युवजनमनःपुण्यतारुण्योत्फुल्लबल्लवीलोचनालिकुलावलेह्यलावण्यमकरन्दममन्दानन्दकामदमतिकान्तरूपायतनं यौवनमासादितः पुनरपि प्राज्याज्यवणिज्योपार्जनसज्जागमनेन तेन **श्रीदत्तेन** दृष्टः । पृष्टश्च **गोविन्द**स्तदवाप्तिप्रपञ्चः । **श्रीदत्तः**—'**गोविन्द,** मदीये सदने किमपि महत्कार्यमात्मजस्य निवेद्यमस्ति । तदयं प्रज्ञुरिमं लेखं ग्राहयित्वा सत्वरं प्रहेतव्यः ।' **गोविन्दः**—'श्रेष्ठिन्, एवमस्तु ।' लेखं चैवमलिखत्—'अहो विदितसमस्तपौतवकल **महाबल,** एष खल्वसद्वंशविनाशवैश्वानरोऽवश्यं विष्यो मुशल्यो वा विधातव्यः' इति । **धनकीर्ति**स्तथा तातवणिक्पतिभ्यामादिष्टः सावष्टम्भं गलालंकारसखं लेखं कृत्वा गत्वा च जन्मान्तरोपकाराधीनमीनावतारसरसीमेकानस्यां तत्प्रवेशपदिरपर्यन्तवर्तिनि वने वर्त्मश्रमापनयनाय पिकप्रियालवालपरिसरे निःसंज्ञमस्वाप्सीत् ।

अत्रावसरे विहितपुष्पावचयविनोदा सपरिच्छदा निखिलविद्याविदग्धा पूर्वभवोपकारस्निग्धा संजीवनौषधिसमाना**नङ्गसेना**नामिका गणिका तस्यैव सहकारतरोस्तलमुपढौक्य विलोक्य च निस्पन्दलोचना चिराय तमनङ्गमिव मुक्तकुसुमास्त्रतन्त्रं लोकान्तरमित्रमशेषलक्षणोपलक्षितमूर्तिं **धनकीर्तिं** पुनरायुःश्रीसरस्वतीसमागमादेश(?)खा····त्रयेणेव प्रकटवितर्कितकर्कोटत्रयेण बन्धुरमध्यप्रदेशात्कण्ठदेशादादायापायप्रतिपादनाक्षरालेखं लेखमवाचयत् ।

लिलेख च तं वाणिजकापसदं हृदयेन विकुर्वती लोचनाञ्जनकरण्डादुपात्तेन वनवल्लिपल्लवनिर्यासरसद्रुतेन कज्जलेनार्जुनशलाकया तत्रैव परिम्लिष्टपुरातनसूत्रे पत्रे लेखान्तरम् । तथा हि—'यदि श्रेष्ठिनी मामवधेयवचनं श्रेष्ठिनं मन्यते, **महाबल**श्च यदि मामनुल्लङ्घनीयवाक्प्रसरं पितरं गणयति, तदास्मै निकामं सप्तपुरुषपर्यन्तपरीक्षितान्वयसंपत्तये **धनकीर्त**ये रूपदप्रक्रमेण द्विजदेवसमक्षमविचारापेक्षं **श्रीमति**र्दातव्या' इति । ततो यथाम्नातविशिखमिमं लेखमामुच्य समाचरितगमनायाम**नङ्गसेना**यां **धनकीर्ति**श्चिरेण विद्राणसान्द्रनिद्रोद्रेकः सोत्सेकमुच्छ्रूाय प्रयाय च **श्रीदत्त**निकेतनं जननीसमन्विताय **महाबलाय** प्रदर्शितलेखः **श्रीमति**सखोऽभवत् ।

**श्रीदत्तो** वार्तामिमामाकर्ण्य प्रतूर्णं प्रत्यावर्त्य निधाय च तद्वधाय
राजधानीबाहिरिकायां चण्डिकायतने कृतसंकेत संनद्धवपुषं पुरुषं कच्च-
राचरणपिशाचीं देवद्रीचीं च परिप्राप्तोदवसितो रहसि **धनकीर्तिं** मुहुरा-
हूय बहुकूटकपटमतिरेवमाबभाषे—'वत्स, मदीये कुले किलैवमाचारो
पटुतर्यामिनीमुखे कात्यायिनीप्रमुखे प्रदेशे प्रतिपन्नाभिनवकङ्कणबन्धेन
स्तनंधयागोधेन महारजनरसरक्तांशुकसमाश्रयः स्वयमेव माषमयमोर-
मौकुलिर्बलिरुपहर्तव्यः ।' **धनकीर्तिः**—'तात तात, यथा तातादेशः' इति
निगीर्य गृहीतकुलदेवतादेयहन्तकारोपकरणस्तेन श्यालेन **महाबलेन** पुर-
प्रदेशान्निःसरन्नवलोकितः । समालापितश्च—'हंहो **धनकीर्ते,** प्रवर्धमानान्ध-
कारावन्ध्यायामस्यां वेलायामवगणः क्वोच्चालितोऽसि ।' '**महाबल,** मातुल-
निदेशान्नमसितनिवेदनाय दुर्गालये ।' 'यद्येवं नगरजनासंस्तुतत्वात्त्वं निवासं
प्रति निवर्तस्व । अहमेतदुपयाचितमैशान्याः स्पर्शयितुं प्रगच्छामि । यद्यत्र
तातो रोचिष्यति तदा तद्दोषमहमपनेष्यामि ।' ततो **धनकीर्ति**र्मन्दिरमगात्,
**महाबलश्च** कृतान्तोदरकन्दरम् । **श्रीदत्तः** सुतमरणशोकातङ्कोपान्तः
प्रकाशिताशेषवृत्तान्तः 'सकलनिकाय्यकार्यानुष्ठानपरमेष्ठिनि मन्मनोह्लाद-
चन्द्रलेखे **विशाखे,** कथमयं वैधेयो ममान्वयापायहेतुः प्रयुक्तोपायविलोप-
नकेतुः प्रवाशयितव्यः ।' **विशाखा**—'श्रेष्ठिन्, भेलभावात्सर्वमनुपपन्नं त्वया
चेष्टितम् । अतः कुरुण्डतो भीतः कुक्कुटपोत इव तूष्णीमास्स्व । भविष्यति
भवतोऽशेषं मनीषितम्' इत्याभाष्य अपरेद्युर्दयितजीवितव्यतोदकेषु मोद-
केषु विषं संचार्य 'सुते **श्रीमते,** य एते कुन्दकुमुदकान्तयो मोदकास्ते
स्वकीयाय कान्ताय देयाः, श्यावश्यामाकश्यामलरुचयश्च जनकाय' इति
समर्पितसमया समासन्नमरणसमया सरिति सवनायानुससार । **श्रीमतिः** 'य-
च्चोक्ष(?)भक्षन्तप्रतीक्षाय ताताय वितरीतव्यम्' इत्यवगत्याविज्ञातसवित्रीचि-
त्तकौटिल्या निःशल्यहृदया तानेतयोर्विपर्ययेणावीवृधत् । **विशाखा** पतिशू-
न्यमरण्यसामान्यमगारमाप्य परिदेव्य च सुचिरं पुनः 'पुत्रि, किमन्यथा
भवति महामुनिभाषितम् । केवलं तव चापेन मया च स्वेयात्मीयान्वयवि-
लोपायकृत्योत्थापनमाचरितम् । तदलमत्र बहुप्रलापेन। कल्पद्रुमेण कल्पयतेव



त्वमनेन दैवदेयदेहरक्षाविधानेन धवेन सार्धमाकल्यमिन्द्रियैश्वर्यसुखमनुभ-
व' इति संभाविताशीर्वादा तमेकं मोदकमास्वाद्य पत्युः पथि प्रतस्थे ।

एवं विहितदुरीहितवशादुपात्तामिततोकशोकावतस्थे दशमीस्थे तस्मिञ्श्व-
शुरे श्वश्रूजने च सति स पुरातनपुण्यमाहात्म्यादुल्लङ्घितघोरप्रतिघपञ्चकापत्प्र-
तिदिनमुदीयमानसंपदेकदा तेन **विश्वंभरेण** क्षितीश्वरेण निरीक्षितः । तद्रूप-
संपत्तौ जातबहुविस्मयेन तनूजया सह उभयेन विशामाधिपत्यपदेन योजि-
तश्च । **गुणपालः** किंवदन्तीपरम्परया अस्य कल्याणपरम्परामुपश्रुत्य **कौ-
शाम्बीदेशात्पद्मावतीपुरमागत्य** अनेनाश्चर्यैश्वर्यभाजानुजा सह संजग्मे ।

अथान्यदा सकलत्रपुत्रमित्रतन्त्रेण **धनकीर्तिना** दर्शनायागतया**नङ्गसे-
नया** चानुगतिनिष्ठो **गुणपालश्रेष्ठी** मतिश्रुतावधिमनःपर्ययविषयसम्राज-
मखिलमुनिमण्डलीराजं श्री**यशोध्वजा**नामभाजनं भगवन्तमभिवन्द्य सब-
हुप्रश्रयमेवमपृच्छत्—'भगवन्, किं नाम जन्मान्तरे धर्ममूर्तिना **धन-
कीर्तिना** सुकृतमुपार्जितम्, येन बालकालेऽपि तानि तानि दैवैकशरप्रती-
काराणि व्यसनानि व्यतिक्रान्तः, येनास्मिन्व्यतिरिक्तरसारूपसंपन्नोऽभूत्,
येनादभ्राभ्रियविभावसुप्रभासंसार इव देवानामप्यप्रतिहतमहः समजनि, येन
चापरेषामपि तेषां तेषां महापुरुषकक्षावग्रहाणां गुणानां समवायोऽभवत् ।
तथा हि—स्थानं वदान्यतायाः, समाश्रयो वदान्यभावस्य, निकेतनम-
वदानकर्मणः, क्षेत्रं मैत्रेयिकायाः, स्वप्नेऽपि न स्वजनस्याजनि मनो मतुः(?)
कन्तुरिव च कामिनीलोकस्य । तदस्य भदन्त, प्रापणिकपरिषत्प्रवणस्य
निःशेषशास्त्रप्रवीणान्तःकरणस्य निसर्गादेव निखिलपरिजनालापनसक्तस्य
विनेयजनमनःकुवलयानन्दिकथावतारामृतमूर्तेः सुकीर्तेर्**धनकीर्तेः** पुरोपा-
र्जितं सुकृतं कथयितुमर्हसि ।' भगवान्—'श्रेष्ठिन्, श्रूयताम् ।' तत्संबन्धसक्तं
पूर्वोक्तं वृत्तान्तमचकथत्—'या चास्य पूर्वभवनिकटा घण्टा वधूटी सा कृतनि-
दानादमूनसिप्रवेशादियं संप्रति **श्रीमतिः** संजाता । यश्च स मीनः स का-
लक्रमेण व्यतिक्रम्य पूर्वं पर्यायपर्वैयम**नङ्गसेना**भूत् । अतोऽस्य महाभागस्यै-
कदिवसा हिंसाफलमेतद्विजृम्भते । **धनकीर्ति**रेतद्वचत्रपवित्रश्रोत्रवर्त्मा ।
तथा **श्रीमतिरनङ्गसेना** च पुराभवं भवं संभाल्योन्मूल्य च तमःसंतानतरु-

निवेशमिव केशपाशं तस्यैव दोषज्ञस्यान्तिके यथायोग्यताविकल्पं तपः-कल्पमादाय जिनमार्गोचितेनाचरितेन चिरायाराध्य रत्नत्रयं विधाय च विधिवन्निरजन्यमनोवर्तनं प्रायोपवेशनम्। तदनु **धनकीर्तिः** सर्वार्थसिद्धि-माधनकीर्तिर्बभूव। **श्रीमतिरनङ्गसेना** च कल्पान्तरसंयोज्यं देवसायुज्य-मभजत्।

भवति चात्र श्लोकः सर्वार्थः—

पञ्चकृत्वः किलैकस्य मत्स्यस्याहिंसनात्पुरा।
अभूत्पञ्चापदोऽतीत्य **धनकीर्तिः** पतिः श्रियः॥

इत्युपासकाध्ययने अहिंसाफलावलोकनो नाम षड्विंशः कल्पः।

अदत्तस्य परस्वस्य ग्रहणं स्तेयमुच्यते।
सर्वभोग्यात्तदन्यत्र भावात्तोयतृणादितः॥
ज्ञातीनामत्यये वित्तमदत्तमपि संमतम्।
जीवतां तु निवेशेन व्रतक्षतिरतोऽन्यथा॥
संक्लेशाभिनिवेशेन प्रवृत्तिर्यत्र जायते।
तत्सर्वं राज्ञि विज्ञेयं स्तेयं स्वान्यजनाश्रये॥
रिक्थं निधिनिधानोत्थं न राज्ञोऽन्यस्य युज्यते।
यत्स्वस्यास्वामिकस्येह दायादो मेदिनीपतिः॥
आत्मार्जितमपि द्रव्यं द्वापरायान्यथा भवेत्।
निजान्वयादतोऽन्यस्य व्रती स्वं परिवर्जयेत्॥
मन्दिरे पदिरे नीरे कान्तारे धरणीधरे।
तन्नान्यदीयमादेयं स्वापतेयं व्रताश्रयैः॥
पौतवन्यूनताधिक्ये स्तेनकर्म ततो ग्रहः।
विग्रहे संग्रहोऽर्थस्यास्तेयस्यैते निवर्तकाः॥
रत्नरत्नाङ्गरत्नस्त्रीरत्नाम्बरविभूतयः।
भवन्त्यचिन्तितास्तेषामस्तेयं येषु निर्मलम्॥
परप्रमोषतोषेण तृष्णाकृष्णधियां नृणाम्।
अत्रैव दोषसंभूतिः परत्रैव च दुर्गतिः॥



श्रूयतामत्र स्तेयफलस्योपाख्यानम्—**प्रयागदेशेषु** निवासविलासवार-लाप्रलापवाचालितविलासिनीनूपुरे **सिंहपुरे** समस्तमुद्रमुद्रितमेदिनीप्रसा-धनसेनः पराक्रमेण सिंह इव **सिंहसेनो** नाम नृपतिः। तस्य निखिलभुव-नजनस्तवनोचितवृत्ता **रामदत्ता** नामाग्रमहिषी। सुतौ चानयोराश्चर्यसौ-न्दर्यपरितोषितानिमिषेन्द्रौ **सिंहचन्द्र-पूर्णचन्द्रौ** नाम। निःशेषशास्त्रविशा-रदमतिः **श्रीभूतिरस्य** पुरोहितः सुनृताधिकधिषणतया **सत्यघोष**परनाम-धेयः। धर्मपत्नी चास्य पतिहितैकचित्ता **श्रीदत्ता** नामाभूत्।

स किल **श्रीभूति**र्विश्वासरसनिर्विघ्नतया परोपकारनिघ्नतया च विभ-क्तानेकापवरकरचनाशालिनीभिर्महाभाण्डवाहिनीभिर्गोशालोपशल्याभिः कुल्याभिः समन्वितमतिसुलभजलयवसेन्धनप्रचारं भाण्डनारम्भोद्भटभ-रीरपेटकपक्षरक्षासारं गोरुतप्रमाणवप्रप्राकारप्रतोलिपरिखासूत्रितत्राणं प्रपा-सत्रसभासनाथवीथिनिवेशनं पण्यपुटभेदनं विदूरितकितवविटविदूषकपी-ठमर्दावस्थानं पेण्ठास्थानं विनिर्माय नानादिग्देशोपसर्पणयुजां वणिजां प्रशान्तशुल्कभाटकभागहारव्यवहारमचीकरत्।

अत्रान्तरे **पद्मिनीखेट**पत्तनविनिविष्टावासतन्त्रस्य **सुदत्ता**कलत्रचरित्र-पवित्रितगोत्रस्य वणिक्पतेः **सुमित्रस्य** निजासनाभिजनाम्भोजभानुः सू-**नुर्भद्रमित्रो** नाम समानधनचारित्रैर्वणिक्पुत्रैः सत्रं वहित्रयात्रायां यियासुः

'यादमायान्निविं कुर्यात्पादं वित्ताय कल्पयेत्।
धर्मोपभोगयोः पादं पादं भर्तव्यपोषणे॥' इति पुण्यश्लोकाः।

श्लोकार्थमवधार्य विचार्य चातिचिरमुपनिधिन्यासयोग्यमावासम् उदिता-चारसेव्योऽवधारितेतिकर्तव्यस्तस्याखिललोकश्लाघ्यविश्वासप्रसूतेः **श्रीभूते-**र्हस्ते तत्पत्नीसमक्षमनर्घकक्षमनुगताप्तकं रत्नसप्तकं निधाय विधाय च जल-यात्रासमर्थमर्थमेकवर्णप्रजाप्रलापसुवर्णद्वीपमनुससार।

पुनरगण्यपण्यविनिमयेन तत्रत्यमचिन्त्यमात्माभिमतवस्तुस्कन्धमादाय प्रत्यावर्तमानस्यादूरसागरावसानस्याकाण्डप्रचण्डबलादनिलात्परिवर्तितपो-त्रस्य यद्भविष्यतया आयुषः शेषत्वात्तस्यैकस्य प्रमादफलकावलम्बनो-

घतस्य कण्ठप्रदेशप्राप्तजीवितस्य कथंकथमपि क्षणदायाः क्षपणिचरमयामक्षणेऽब्धिरोधोपलब्धिरभवत् ।

ततोऽसौ सुखैधितशरीरत्वादपाराकूपारक्षारवारिवशवशिकाशयश्चिरायापचितमूर्छोदयः करप्रचारचूर्णितचक्रवाकचिन्तामणौ प्रागचलचूलिकाचक्रवालचूडामणौ कमलिनीकुलविकासाहितहंसवासिताशर्मणि विश्वकर्मणि दरन्नलिनान्तरालरुचिरे लोचनगोचरे संजाते सति बान्धवजमरणाद्रविणसंद्रवणाच्चातीवार्तमनस्तया छातच्छायकायः पटच्चरचेलचीरीनिचिताङ्गशकटिः कर्पटिः परपस्त्योपास्तिनिरस्ताभिमानाध्वनिरवर्तनिः सन् क्रमेण **सिंहपुरं** नगरमागत्य गीर्मात्रावसेयपूर्वपर्यायस्तं महामोहरसोत्सारितप्रीतिं **श्रीभूति**मभिज्ञानाधिकवाक्यो माणिकसप्तकमयाचत । परप्रतारणाभ्यस्तश्रुतिगीतिः **श्रीभूतिः**

'सुप्रयुक्तेन दम्भेन स्वयंभूरपि वञ्च्यते ।
का नामालोचनान्यत्र संवृत्तिः परमा यदि ॥'

इति परामृश्य महाघङ्घाघ्रातचेतास्तमायातशुचमेवमवोचत्—'अहो दुर्दुरूट किराट, किमिह खलु त्वं केनचित्पिशाचेन छलितः, किमु मनोमहानुरोधेन मोहनौषधेनातिलङ्घितः, किं वा कितवव्यवहारेषु हारितसमस्तचित्तवृत्तिः, उत अहो परचित्तवञ्चनपिशाचिकया कयाचिल्लिङ्गिकया जनितदुष्प्रवृत्तिः, आहोस्वित्फलवतः पादपस्येव श्रीमतेः क्रियमाणोऽभियोगो न खलु किमपि फलमसंपाद्य विश्राम्यतीति चेतसा केनचिद्दुर्मेधसा विप्रलब्धबुद्धिर्येनैवमतिविरुद्धमभिधत्से । क्वाहम्, क्व भवान्, क्व मणयः, कश्चावयोः संबन्धः । तत्कूटकपटचेष्टिताकरपट्टनपाटच्चर, अणकपणिक, सकलमण्डलप्रतीतप्रत्ययिकशीलमतिवेलमेव मामकाण्डे चण्डकर्मन्पर्येनुयुञ्जानः कथं न लज्जसे' । पुनश्चैनमर्थप्रार्थनपथमनोरथविशालं शब्दालं बलात्पालिन्दमन्दिरमनुचरैरानाय्यानाय्यमतिः, 'देव, अयं वणिग्निष्कारणमस्माकं दुरपवादमृदङ्गवन्मुखरमुखः सुखेनानस्तितस्नातक इवास्तितुं न ददाति' इत्यादिभिरुदितैरवाप्तप्रसरतयोत्तेजितराजहृदयस्तथैव पृथिवीनाथेनापि निराकारयत् । **भद्रमित्रः** 'चित्रमेतन्ननु यन्मामपि परविप्रलम्भाय कुल-



क्रमायाताखिलकमलानिलयमनन्यसामान्यसाहसालयमोषमौषधिषणानिधिरपर इवापायजलधिर्नगरमध्येऽपि मोषितुमभिलषति' इति जातामर्षोत्कर्षस्तं न्यासार्पणेऽतिचिक्कणचित्तं निश्चित्य स्वाध्यायिपरिषदि महापरिषदि च तदन्यायोपविन्यासेन साध्यसिद्धिमनवबुध्यानधीनधीः अशङ्कशुकमतिर्महादेवीधाम नेमनिवेशमम्लिकानोकहशिखादेशमारुह्यापद्गृह्यः कुररीविरहावसरः कुरर इव तमस्विनीप्रथमपश्चिमयामसमये 'सुहृच्चराहुतिः **श्रीभूति**रेवंविधकरण्डविन्यस्तम्, इयत्संस्थानसदनम्, एतद्वर्णम्, अदः संख्याभ्यर्णं च मदीयं मणिगणमुपनिधिनिधेयं न प्रतिददातीत्यत्र चास्यैव धर्मरमणी साक्षिणी च । यदि मद्वदतयैतदन्यथा मनागपि भवति तदा मे चित्रवधो विधातव्यः' इति दीर्घघोषघूर्णितमूर्धमध्यमूर्ध्वबाहुः सर्वर्तुपरिवर्तार्घं पूत्कुर्वन्नेकदा नगराङ्गनाजनस्य चन्द्रामृतपात्रयन्त्रधारागृहावगाहगौरितजगत्त्रयं कौमुदीमहोत्सवसमयमालोकमानया तमङ्गोत्सङ्गसमासीनया **निपुणिका**भिधानोपसवित्रीसमेतया अनाथलोकलोचनचकोरकौमुदीकल्पवृत्तया **रामदत्त**या करुणारसप्रचारपदव्या महादेव्याकर्णितानुक्रोशान्निर्वर्णितश्च । तदनु 'सन्मनसंधात्रि धात्रि, न खल्वेष मनुष्यः पिशाचपरिप्लुतो नाप्युन्मत्ताचरितो यतस्तं दिवसमाद्यं कृत्वा सकलमपि परिवत्सरदलमेकवाक्यव्याहाराकण्ठपाठकठोरनालः । तद्विचारयेयं तावदचिरकालं शारविशारहृदयाम्बुजस्य एतत्क्रीडाव्याजेन मन्त्रैरन्तःकरणम् । अम्बिके, त्वयापि द्यूतदेवनावसरे यद्यहमेनमेनककुचनाचारनिचितचित्तमतिबहुकुक्कुटिचेष्टितं बकोटवृत्तमुदन्तजातं पृच्छामि, यद्यच्चास्य कटकोर्मिकांशुकादिकं जयामि, तत्तदेवाभिज्ञानीकृत्य मृगीमुखव्याघ्रीसमाचारकुट्टिनी **श्रीदत्ता** भट्टिनी तिन्तिणीकातरुभाजोऽस्य वणिजो विषमरुचिमरीचिसंख्यासंपन्नानि रत्नानि याचयितव्या' इति **निपुणिका**याः कृतसंगीतिः श्वस्त्येहानि 'सदैव मदीयहृदयानन्ददुन्दुभे दुन्दुभे, त्वयापि भगवत्या साधु विजृम्भितव्यम्, यद्यस्य चिञ्चापुरुषस्यास्ति सत्यता' इत्यध्येष्य तथैवाचरिताचरणा शतशस्तत्तदभिज्ञानज्ञापनानुबन्धतन्त्रात्तत्कलत्रान्मणीनुपप्रणीय राज्ञः समर्पयामास । राज्ञाद्भुतांशौ स्वकीयरत्नराशौ तानि संकीर्य आकार्य चैनमासन्नलक्ष्मीकल्पलताविलासनन्दनं वैदेहकन-

न्दनम्, 'अहो वणिक्तनय, यान्यत्र रत्ननिचये तव रत्नानि सन्ति तानि त्वं विचिन्त्य गृहाण' इत्यभाणीत् । **भद्रमित्रः** 'चिरत्राय ननु दिष्ट्या वर्धेऽहम्' इति मनस्यभिनिविश्य 'यथादिशति विशां पतिः' इत्युपादिश्य विमृश्य च तस्यां माणिक्यपुञ्जौ निजान्येव मनाग्विलम्बितपरिचयानि रत्नानि समग्रहीत् ।

ततः स नरवरः सपरिवारः प्रकामं विस्मितमतिः 'वणिक्पते, त्वमेवात्रान्वर्थतः **सत्यघोषः**, त्वमेव च परमनिस्पृहमनीषः, यत्तव चेतसि च न मनागप्यन्यथाभावः समस्ति' इति प्रतीतिभिः पारितोषिकप्रदानपुरःसरप्रक्लृप्तिभिस्तत्तदौपयिकोपचितिवसतिभिश्च भणितिभिस्तमखिलब्रह्मस्तम्बस्तिनीविजृम्भमाणगुणगणस्तोत्रं **भद्रमित्रं** कथंकारं न श्लाघयामास । पुनरदूराशिवतातिं **श्रीभूतिं** निखिललोकलपनालवालमूलकौलीनतालताश्रयशाखिनं न्युब्जाननं निसर्गेण हरिणीसमच्छायमपि महासाहसानुष्ठानात्सूमीसमानकायमनल्पवैलक्ष्यस्फुटदास्वनितमतीव भयाविर्भूतोत्पथवेपथुस्तिमितमवेक्ष्य बह्वाक्षेपम्, 'आः सोमपायिनामपाङ्क्तेय वैधेय, विश्वासघातपातकप्रसवश्रोत्रिय, कितवदुराचारप्रवर्तितनूत्नरत्नापहार, कुशिककुलपांसन, बकानुष्ठानसदन, साधुजनमनःशकुनिबन्धनायातनुतन्त्रीजालमिव खलु तदेवं यज्ञोपवीतम् । असदाचारावधिक वेदवैवधिक, सद्धर्मधामध्यामलताविधानाय विश्वभोजः समेधन, अकृत्यचैत्यवात्यामात्यजरायमदूतिकोपपत्तिक दुर्गतिक, किमात्मनो न पश्यसि चर्मितरुत्वचमिवातिप्रवृद्धविश्रो वात्योन्माथशिथिलितां प्रभातप्रदीपिकामिवास्तासन्नजीवितरविमङ्गच्छविं येनाद्यापि वयोधसि वर्तमान इव चेष्टसे । तदिदानीं यदि घनाभिधारघोरतेजसि विश्ववेदसि निक्षिप्यसे, तदा चिरोपचितदुरावारग्रहस्य स तवाचिरदुःखदायिपरिग्रहोऽनुग्रहोऽनुग्रह इव । ततो द्विजापसद, कदाचित्त्वयेदमतिदुर्गन्धगोर्वरोद्रवितमध्याशयं शालाजिरत्रयमशितव्यम्, नो चेदशरालवलोत्फुल्लगल्लानां मल्लानां मल्लानां त्रयस्त्रिंशदपहस्तप्रदूतानि सहितव्यानि । ध्रुवमन्यथा तव सर्वस्वापहारः ।' प्राणाशावकाशविभूतिः **श्रीभूति**राद्यनयं दण्डद्वयं क्रमेणातितिक्षमाणः पर्याप्तसमस्तद्रविणः क्रिमिकिर्मीरपरिषत्परिकल्पितमाष्टिक्लृतकशलकपालमालावासि-



कसृष्टिरुत्सृष्टसरावस्रक्परिष्कृतः पुरादवालवालेयकमारोह्य सनिकारं निष्कासितः पापविपाकोपपन्नाप्रतिष्टकुष्टो दुष्परिणामकनिष्टः शुभाशयारण्यविनाशमहसि हिरण्यरेतसि तनुविसर्गादतिरौद्रसर्गादाहयेऽन्वपाये प्रादुर्भूय चिरायापराध्य च प्राणिषु जातजीवितावधिरधःप्रधानानिधिर्बभूव ।

भवति चात्र श्लोकः—

> **श्रीभूतिः** स्तेयदोषेण पत्युः प्राप्य पराभवम् ।
> रोदिदश्वप्रवेशेन दंशेरः सन्नधोगतः ॥

इत्युपासकाध्ययने स्तेयफलप्रलपनो नाम सप्तविंशतितमः कल्पः ।

> अत्युक्तिमन्यदोषोक्तिमसभ्योक्तिं च वर्जयेत् ।
> भाषेत वचनं नित्यमभिजातं हितं मितम् ॥
> तत्सत्यमपि नो वाच्यं यत्स्यात्परविपत्तये ।
> जायन्ते येन वा स्वस्य व्यापदश्च दुरास्पदाः ॥
> प्रियशीलः प्रियाचारः प्रियकारी प्रियंवदः ।
> स्यादानृशंसधीर्नित्यं नित्यं परहिते रतः ॥
> केवलश्रुतिसङ्घेषु देवधर्मतपःसु च ।
> अवर्णवादवाञ्जन्तुर्भवेद्दर्शनमोहवान् ॥
> मोक्षमार्गं स्वयं जानन्नार्थने यो न भाषते ।
> मदापह्नवमात्सर्यैः स स्यादावरणद्वयी ॥
> मन्त्रभेदः परीवादः पैशून्यं कूटलेखनम् ।
> मुधासाक्षिपदोक्तिश्च सत्यस्यैते विघातकाः ॥
> परस्त्रीराजविद्विष्टलोकविद्विष्टसंश्रयाम् ।
> अनायकसमारम्भां न कथां कथयेद्बुधः ॥
> असत्यं सत्यगं किंचित्किंचित्सत्यमसत्यगम् ।
> सत्यसत्यं पुनः किंचिदसत्यासत्यमेव च ॥

अस्येदमैदंपर्यमसत्यमपि किंचित्सत्यमेव, यथान्धांसि रन्धयति वयति वासांसीति । सत्यमप्यसत्यं किंचिद्यथार्धमासतमे दिवसे तवेदं देयमित्या-

स्थाय मासतमे संवत्सरतमे वा दिवसे ददातीति । सत्यसत्यं किंचिद्यद्वस्तु यद्देशकालाकारप्रमाणं प्रतिपन्नं तत्र तथैवाविसंवादः । असत्यासत्यं किंचित्स्वस्यासत्संगिरते कल्पे दास्यामीति ।

तुरीयं वर्जयेन्नित्यं लोकयात्रात्रये स्थिता ।
सा मिथ्यापि न गीर्मिथ्या या गुर्वादिप्रसादिनी ॥
न स्तूयादात्मनात्मानं न परं परिवादयेत् ।
न सतोऽन्यगुणान्हिंस्यान्नासतः स्वस्य वर्णयेत् ॥
तथा कुर्वन्प्रजायेत नीचैर्गोत्रोचितः पुमान् ।
उच्चैर्गोत्रमवाप्नोति विपरीतकृतेः कृती ॥
यत्परस्य प्रियं कुर्यादात्मनस्तत्प्रियं हि तत् ।
अतः किमिति लोकोऽयं पराप्रियपरायणः ॥
यथा यथा परेष्वेतच्चेतो वितनुते तमः ।
तथा तथात्मनाडीषु तमोधारा निषिञ्चति ॥
दोषतोयैर्गुणग्रीष्मैः संगन्तृणि शरीरिणाम् ।
भवन्ति चित्तवासांसि गुरूणि च लघूनि च ॥
सत्यवाक्सत्यसामर्थ्याद्वचःसिद्धिं समश्नुते ।
वाणी चास्य भवन्मान्या यत्र यत्रोपजायते ॥
तर्षेर्ष्यामर्षहर्षाद्यैर्मृषाभाषामनीषितः ।
जिह्वाच्छेदमवाप्नोति परत्र च गतिक्षतिम् ॥

श्रूयतामत्रासत्यफलस्योपाख्यानम्—**जाङ्गलदेशेषु** **हस्तिनाग**नामावनीश्वरकुञ्जरजनिजतावतारे **हस्तिनागपुरे** प्रचण्डदोर्दण्डमण्डलीमण्डनमण्डलाग्रखण्डितमण्डनकण्डूलारातिकीर्तिलतानिबन्धनोऽभू**द्दयोधनो** नाम नृपतिः । अनवरतवसुविश्राणनप्रीणितातिथि**रतिथि**र्नामा चास्य महादेवी । सुता चानयोः सकलकलावलोकानलसा **सुलसा** नाम । सा किल तया महादेव्या गर्भगतापि ज्ञाते येनैकोदरशालिनोरम्यकदेशनिवेशोपेत**पोदनपुरनिवेशिनो** निर्विपक्षलक्ष्मीलक्षिताक्षूणमङ्गलस्य **मधुपिङ्गलस्य** गुणगीर्वा-



णाचलरत्नसानवे सूनवे दुर्वारवैरिवक्षःस्थलोद्दशनावदानोद्योगलाङ्गलाय **मधुपिङ्गलाय** परिणीता बभूव ।

भूभुजा च महोदयेन तेन विदितमहादेवीहृदयेनापि 'यस्यकस्यचिन्महाभागस्य भाग्यैर्भोग्यतया योग्यमिदं स्त्रैणं द्रविणं तस्यैतद्भूयात् । अत्र सर्वेषामपि वपुष्मतामचिन्तितसुखदुःखागमानुमेयप्रभावं दैवमेव शरणम्' इति विगणय्य स्वयंवरार्थं **भीम-भीष्म-भरत-भाग-सङ्ग-सगर-सुबन्धु-मधुपिङ्गला**दीनामवनिपतीनामुपदानं कूलं मूलं प्रस्थापयांबभूवे ।

अत्रान्तरे **मगध**मध्यप्रसिद्ध्याराध्यायाम**योध्या**यां नरवरः **सगरो** नाम । स किल लास्यादिविलासकौशलसरसायाः **सुलसायाः** कर्णपरम्परया श्रुतसौरूप्यातिशयो मनागुपरमत्तारुण्यलावण्योदयः प्रयोगेण तामात्मसाच्चिकीर्षुस्तौर्यत्रिकसूत्रे प्रतिकर्मविकल्पेषु संभोगसिद्धान्ते विप्रश्नविद्यायां स्त्रीपुरुषलक्षणेषु कथाख्यायिकाख्यानप्रवाह्लीकास्वपरासु च तासु तासु कलासु परमसंवीणतालताधरित्रीं **मन्दोदरीं** नाम धात्रीं ज्योतिषादिशास्त्रनिशितमतिप्रसूतिं **विश्वभूतिं** च बहुमानसंभावितमनसं पुरोधसं तत्र पुरि प्राहिणोत् ।

विशिकाशयशार्दूलदरी **मन्दोदरी** तां पुरमुपगम्य परप्रतारणप्रगल्भमनीषा कृतकात्यायिनीवेषा तत्तत्कलावलोकनकुतूहल**मयोधन**धरापालं निजनाथार्थसिद्धिपरवती रञ्जितवती सती शुद्धान्तोपाध्यायी भूत्वा **सुलसां सगरे सगरं** ग्राहयामास । तथा बकोटवृत्तिवेधाः स पुरोधाश्च तैस्तैरादेशैस्तस्य नृपस्य महादेव्याश्च वशीकृतचित्तवृत्तिः

कुण्डे(ब्जे) षष्टिरशीतिः स्यादेकाक्षे बधिरे शतम् ।
वामने च शतं विंशं दोषाः पिङ्गे त्वसंख्यया ॥
मुखस्यार्धं शरीरं स्याद्घ्राणार्धं मुखमुच्यते ।
नेत्रार्धं घ्राणमित्याहुस्तत्तेषु नयने परे ॥

इत्यादिभिः स्वयं विहितविरचनैर्मधुपिङ्गले विप्रीतिं कारयामास ।

ततश्चाम्पेयमञ्जरीसौरभपयःपानलुब्धवोघस्तनंधयेषु पुष्पंधयेष्विव मिलि-

तेषु स्वयंवराह्वानशृङ्गारिताहंकारेषु महीश्वरेषु सा **मन्दोदरी**वशमानसा **सुलसा** श्रुतिमनोहरं **सगर**मवृणीत्तन्निम्नधरोपगापगेव सागरम् ।

भवति चात्र श्लोकः—

अल्पैरपि समर्थैः स्यात्सहायैर्विजयी नृपः ।
कार्यायान्तो हि कुन्तस्य दण्डस्त्वस्य परिच्छदः ॥

इत्युपासकाध्ययने **सुलसायाः सगर**संगमो नामाष्टाविंशः कल्पः ।

प्ररूढनिर्वेदकन्दलो **मधुपिङ्गलः** 'धिगिदमभोगायतनं भोगायतनं यदेकदेशदोषादिमामुचितसमागमामपि मामतनूद्वहामहं नालप्सि' इति मत्वा विमुक्तसंसारपक्षः परिगृहीतदीक्षः क्रमेण तांस्तान्ग्रामारामनिवेशान्निरनुक्रोजङ्घारिक इव लोचनोत्सवतां नयन्नशनायाबुद्ध्या**योध्या**मागत्यानेकोपवासपरवशहृदयोत्साहस्तीव्रतयातिश्रान्तदेहो वाष्पीह इव क्लमथुव्यपोहाय **सगरा**गारद्वारमन्दिरे मनाग्व्यलम्बत । तत्र च पुराप्रयुपरिणयापायनीति**विश्वभूतिः** प्रगल्भमतये **शिवभूतये** रुचिष्याय शिष्याय रहितरहस्यमुद्रकं सामुद्रकमशेषविदुषविचक्षणो व्याचक्षाणो बभूव । **परामर्शवशा**शीतिः **शिवभूति**स्तं न्यक्षलक्षणपेशलं **मधुपिङ्गल**मवलोक्य उपाध्यायघनघृताहुतिवृद्धिमद्धामशालिनि क्ष्वालामालिनि 'दह्यतामेतदैतिह्यस्वाध्यायो यदेवंविधमूर्तिरप्ययमीदृगवस्थाकीर्तिः सदाचारनिगृहीति**र्विश्वभूतिः** । अपर्यासपूर्वापरसंगीते **शिवभूते,** मा गाः खेदम्, यदेष नृपवरस्य **सगरस्य** निदेशादेशादसदुपदेशादनन्यसामान्यलावण्यविनिवासां **सुलसा**मलभमानस्तपस्वी तपस्वी समभूत् । एतच्चासन्नारिष्टतते**र्विश्वभूते**र्वचनमेकायतमनाः स यतिर्निशम्य प्रवृद्धक्रोधानलः कालेन विपद्योत्पद्य चासुरेषु **कालासुर**नामा भवप्रत्ययमाहात्म्यादुपजातावधिसन्निधिस्तपस्याप्रपञ्चमसुरान्वयोदश्चं चात्मनो विनिश्चित्य यदीदानीमेव महापराधनगरं **सगर**मकारणं प्रकाशितदोषजातिं **विश्वभूतिं** च चूर्णपेषं पिनष्मि । तदानयोः सुकृतभूयिष्ठत्वात्प्रेत्यापि सुरश्रेष्ठत्वावाप्तिरिति न साध्वपराधः स्यात् । ततो यथेहानयोर्बहुविडम्बनावरोधो वधः, परत्र च दुःखपरम्परानुरोधो भवति, तथा विधेयम् । न चैकस्य बृहस्प-



तेरपि कार्यसिद्धिरस्ति' इत्यभिप्रायेणात्मवैकारिकर्द्धप्रदर्शनातिथिं वैरनिर्यातनमनोरथरथसारथिमन्वेषणमतिरासीत् ।

अथ कामकोदण्डकारणकान्तारैरिवेक्षुवणावतारैर्विराजितमण्डलायां **डहालाया**मस्ति **स्वस्तिमती** नाम पुरी । तस्या**मभिचन्द्रा**परनाम**वसुविश्वावसु**र्नाम नृपतिः । तस्य निखिलगुणमणिप्रसूति**र्वसुमती** नामाग्रमहिषी । सूनुरनयोः समस्तसपत्नभूरुहविभावसु**र्वसुः** । पुरोहितश्च निश्चिताशेषशास्त्ररहस्यनिकुरम्बः **क्षीरकदम्बः** । कुटुम्बिनी पुनरस्य सती व्रतोपास्तिमती **स्वस्तिमती** नाम । जन्युरनयोरनेकनमसितपर्वतप्राप्तः **पर्वतो** नाम । स किल सदाचारणभूरिः **क्षीरकदम्बक**सूरिः शिष्यशेमुष्यामिव स्वाध्यायसंपादनविशालायां सुवर्णगिरिगुहाङ्गणशिलायामेकदा तस्मै मुदा गतस्मयाय यथाविधि समाधिगासवे **वसवे** प्रगलितपितृपाण्डित्यगर्वपर्वताय तस्मै **पर्वताय** गिरिकूटपत्तनवसते**र्विश्व**नाम्नो विश्वंभरापतेः पुरोहितस्य विहितानवद्यविद्याचार्यचरणसेवस्य **विश्वदेवस्य** नन्दनाय **नारदा**भिधानाय च निखिलभुवनव्यवहारतन्त्रमागमसूत्रमतिमधुरस्वरापदेशमुपदिशन्नम्बरादवतरद्भ्यां सूर्याचन्द्रमोभ्या**ममितगत्यनन्तगति**भ्यामृषिभ्यामीक्षांचक्रे ।

तत्र समासन्नसुगति**रनन्तगति**र्भगवान्किलैवमभाषत—'भगवन्, अत एव खलु विदुष्याः शिष्याः, यदेवमनवद्यं ब्रह्मोद्यविद्यमेतस्माद्ग्रन्थार्थप्रयोगभङ्गीषु यथार्थप्रदर्शनतया विधूतोपाध्यायादुपाध्यायादेकसर्गाधियोऽधीयते' । प्रयुक्तावधिबोधस्थिति**रमितगति**र्भगवान्—'मुनिवृषन्, सत्यमेवैतत् । किंत्वेतेषु चतुर्षु मध्ये द्वाभ्यामसितगौरवोपेतपदार्थवदधःप्रबोधोचितमतिभ्यामिदमतिपवित्रमपि सूत्रं विपर्यासयितव्यम्' । एतच्च प्रवचनलोचनालोकितब्रह्मस्तम्बः **क्षीरकदम्बः** संश्रुत्य 'नूनमस्मिन्महामुनिवाक्येऽर्थात्सप्तरुचिमरीचिवद्द्वाभ्यामूर्ध्वगाभ्यां भवितव्यमिति प्रतीयते । तत्राहं तावदेकदेशयतिपूतात्मानमधरधामसंनिधानं न संवर्ययम् । नरकान्तं राज्यम्, धनान्तो नियोगः, मरणान्तः स्त्रीषु विश्वासः, विपदन्ता खलेषु मैत्री, इति वचनादिन्दिरामदिरामदमलिनप्रचारे राज्यभरे प्रसरदसुं **वसुं** च नोर्ध्वं यियासुम् । **तन्नारदपर्वतौ** परीक्षाधिकृतौ' इति निश्चित्य समिधमयमूर्णायुद्वयं निर्माय प्रदाय च

ताभ्याम् 'अहो, द्वाभ्यामपि भवद्भ्यामिदमुरणयुगलं यत्र न कोऽप्यालोकते तत्र विनाश्य प्राशितव्यम्' इत्यादिदेश । तावपि तदादेशेन हव्यवाहनद्वितयं प्रत्येकमादाय यथायथमयासिष्टाम् । तत्र सत्ख्यातिखर्वः **पर्वतः** पस्त्यपाश्चात्यकुम्बामुपसद्याहृस्वः संपाद्य च भटित्रसुरभ्रमुत्रमुदरानलपात्रमकार्षीत् । शुभाशयविशारदो **नारद**स्तु 'यत्र न कोऽप्यालोकते' इत्युपाध्यायोक्तं ध्यायन् 'को नामात्र पुरे कान्तारे वा सद्गुघणो योऽधिकरणं नात्मेक्षणस्य व्यन्तरगणस्य महामुनिजनान्तःकरणस्य च' इति विचिन्त्य तथैव तं वृष्णिमुपाध्यायाय समर्पयामास ।

उपाध्यायो **नारद**मप्यूर्ध्वगमवबुद्ध्य संसारतरुस्तम्बमिव कचनिकरम्बमुत्पाद्य स्वर्गलक्ष्मीसपक्षां दीक्षामादाय निखिलागमसमीक्षां शिक्षामनुश्रित्य चातुर्वर्ण्यश्रमणसङ्घसंतोषणं गणपोषणमात्मसात्कृत्य एकत्वादिभावनापुरस्कारमात्मसंस्कारं विधाय कायकषायकर्शनां सल्लेखनामनुष्ठाय निःशेषदोषालोचनपूर्वकाङ्गविसर्गसमर्थमुत्तमार्थं च प्रतिपद्य सुरसुखकृतार्थो बभूव । पूर्वमेव तदादेशादात्मदेशोपदेशः सकलसिद्धान्तकोविदो **नारदः** सद्गुणभूरेः **क्षीरकदम्ब**सूरेः प्रव्रज्याचरणं स्वर्गावरोहणं चावगत्य 'गुरुवद्गुरुपुत्रं च पश्येत्' इति कृतसूक्तस्मरणपर्यासतदाराधनोपकरणस्तद्विरहदुःखदुर्मनसमुपाध्यायानीं जननीं सह पांसुक्रीडितं **पर्वतं** च द्रष्टुमागतः । अपरेद्युस्तं **पर्वतम्** 'अजैर्यष्टव्यम्' इति वाक्यम् 'अजैरजात्मजैर्यष्टव्यं हव्यकव्यार्थो विधिर्विधातव्यः' इति श्रद्धामात्रावभासिभ्योऽन्तेवासिभ्यो व्याहरन्तमुपश्रुत्य बृहस्पतिप्रज्ञः—'**पर्वत**, मैवं व्याख्यः । किं तु 'न जायन्त इत्यजा वर्षत्रयवृत्तयो व्रीहयस्तैर्यष्टव्यं शान्तिपौष्टिकार्थां क्रिया कार्या' इति परार्येवाचार्यादिदं वाक्यमेवमश्रौष्व परुत्सजूस्तथैवाचिन्तयाव । तत्कथमैषम एव तव मतिर्द्वापरवसतिः समजनीति बहुविस्मयं मे मनः । आचार्यनिकेत **पर्वत**, यद्येवमद्यश्वीनेऽप्यथाभिधाने भवानपरवानपि विपर्यस्यति, तदा पराधीने मादृग्विधीने को नाम संप्रत्ययः' । **पर्वतः**—'**नारद**, नेदमस्तु कारं यदस्य पदस्य मन्निरुक्त एवातिसूक्तोऽर्थः । यदि चायमन्यथा स्यात्तदा रसवाहिनीखण्डनमेव मे दण्डः' । **नारदः**—'**पर्वत**, को नु खल्वत्र विवदमानयोर्निकष-



भूमिः' । **पर्वतः**—'**नारद**, **वसुः** । कर्हि तर्हि तं समयानुसर्तव्यम् । इदानीमेव नात्रोद्धारः' इत्यभिधाय द्वावपि तौ **वसुं** निकषा प्रास्थिषाताम्, ऐक्षिषातां च । तथोपस्थितौ तेन **वसुना** गुरुनिर्विशेषमाचरितसंमानौ यथावत्कृतकसिपुविधानौ विहितोचितोचितकाञ्चनदानौ समागमनकारणमापृष्टौ स्वाभिप्रायमभाषिषाताम् । **वसुः**—'यथाहतुस्तत्रभवन्तौ तथा प्रातरेवानुतिष्ठेयम्' ।

अत्रान्तरे वसुलक्ष्मीक्षयक्षपेव क्षपायां सा किलोपाध्याया **नारद**पक्षानुमतं **क्षीरकदम्बा**चार्यकृतं तद्वाक्यव्याख्यानं स्मरन्ती **स्वस्तिमती पर्वत**परिभवापाद्यबुद्ध्या **वसु**मनुसृत्य 'वत्स **वसो**, यः पूर्वमुपाध्यायादन्तर्धानापराधलक्षणावसरो वरस्त्वयादायि, स मे संप्रति समर्पयितव्यः' इत्युवाच । सत्यप्रतिपालनासुर्**वसुः**—'किमम्ब, संदेहस्तत्र । यद्येवं यथा सहाध्यायी **पर्वतो** वदति, तथा त्वया साक्षिणा भवितव्यम्' । **वसु**स्तथा स्वयमाचार्याण्याभिहितः—'यदि साक्षी भवामि तदावश्यं निरये पतामि । अथ न भवामि तदा सत्यात्प्रचलामि' इत्युभयाशयशार्दूलविद्रुतमनोमृगश्चिरं विचिन्त्य

> 'न व्रतमस्थिग्रहणं शाकपयोमूलभैक्षचर्या वा ।
> व्रतमेतदुन्नतधियामङ्गीकृतवस्तुनिर्वहणम् ॥'

इति च विमृश्य निरयनिदानदक्षं चरमपक्षमेव पक्षमाक्षेप्सीत् ।

तदनु मुमुदिषमाणारविन्दहृदयविनिद्रेन्दिन्दिरचरणप्रचारोदञ्चन्मकरन्दसिन्दूरितनीरदेवतासीमन्तान्तराले प्रभातकाले, सेवासमागतसमस्तसामन्तोपास्तिपर्यस्तोत्तंसकुसुमसंपादितोपहारमहीयसि च सति सदसि मृगयाव्यसनव्याजशरव्यीकृते कुरङ्गपोते, अपराद्धेषु प्रत्यावृत्यासादितस्पर्शमात्रावशेषाकाशस्फटिकघटितविलसनं सिंहासनमुपगत्य 'सत्यशौचादिमाहात्म्यादहं विहायसि गतो जगद्व्यवहारं निहालयामि' इत्यात्मानमुत्कुर्वाणो विवादसमये तेन विनतवरदेन **नारदे**न 'अहो, मृषोद्योद्भिदविभावसो **वसो**, अद्यापि न किंचिन्नश्यति । तत्सत्यं ब्रूहि' इत्यनेकशः कृतोपदेशः काश्यपीतलं यियासुर्**वसुः**—'**नारद**, यथैवाह **पर्वत**स्तथैव सत्यम्' इत्यसमीक्ष्यं साक्ष्यं वदन् 'देव, अद्यापि यथायथं वद' इत्यालापवदुले समन्युमानसविलासिनीस्खलितोक्तिलोहले विषादासादिहृदयप्रजाप्रजल्पकाहले स्फुटद्ब्रह्माण्डखण्डध्वनिकुतू-

हले समुच्छलति परिच्छदकोलाहले सत्यधर्मकर्मप्रवर्तनकुपितपुरदेवतावश-दुर्विलसनः ससिंहासनः क्षणमात्रमप्यनासादितसुखकालं पातालमूलं जगाहे। अत एवाद्यापि प्रथममाहुतिवेलायां प्रजा जल्पन्ति—'उत्तिष्ठ **वसो**, स्वर्गं गच्छ' इति ।

भवति चात्र श्लोकः—

> अस्थाने बद्धकक्षाणां नराणां सुलभं द्वयम् ।
> परत्र दुर्गतिर्दीर्घा दुष्कीर्तिश्चात्र शाश्वती ॥

इत्युपासकाध्ययने **वसो रसाला**सादनो नामैकोनत्रिंशः कल्पः ।

**नारद**स्तमेव निर्वेदमुररीकृत्य नतभ्रूविभ्रमभ्रमरकुलनिलयनीलोत्पलस्तूपमिव कुन्तलकलापमुन्मूल्य परमनिष्किंचनतानिरूपं जातरूपमास्थाय सकलसत्त्वाभयप्रदानामृतवर्षाधिकरणं संयमोपकरणमाकलय्य मुक्तिलक्ष्मीसमागमसंचारिकामिवोदकपरिचारिकामादृत्य शिवश्रीवशीकरणाध्यायमिव स्वाध्यायमनुबद्ध्य मनोमर्कटक्रीडाप्रकाममिन्द्रियाराममुपरम्य अन्तरात्महेमाश्मसमस्तमलदहनं ध्यानदहनमुद्दीप्य संजातकेवलस्तत्पदाप्तिपेशलो बभूव।

**पर्वत**स्तु तथा सर्वसभासमाजोदीरितोद्दीर्घदुरपवादरजसि मिथ्यासाक्षिपक्षविचक्षणवक्षसि दुराचारे क्षणक्षुभितसहस्राक्षानुचरीक्षितजीवितमहसि कथाशेषतेजसि वासौ सति अह्नस्त्रह्रीणतया पौरापचिकीर्षया च निरन्तरोदञ्चरोमाञ्चनिकायः शललशलाकानिकीर्णकाय इव निजागणेयदुरीहितान्ध्मातोदरचर्मपुटः स्फुटन्निव च तैर्नृपतिविनाशयशामर्षिभिः संभूयोपदिष्टलोष्टवर्षिभिरतुच्छपिञ्छोलदलास्फालनप्रकर्षिभिः प्रतिघातोच्छलच्छकलकषाप्रहारतर्षिभिर्नगरनिवासहर्षिभिर्जनैरगणितापकारं सरासभारोहणावतारो महान्कण्ठप्रदेशप्राप्तप्राणः पुरुहूतोल्वणक्वाणः सकलपुरवीथिषु विश्वरघुष्टानुजातो निष्काशितः श्वपचस्मशानांशुकपिहितमेहनो विपरीतक्षुरधाराचरितमार्गमुण्डनः प्रकाशितशिखाश्रीफलजालो गलनालावलम्बितशरावमालः प्रथीयसि वनगहनरहसि प्रविष्टः तुच्छोदकद्वीपिनीतटिनीतटनिकटोपविष्टस्तेन **कालासुरेण** दृष्टः। प्रत्यवमृष्टहृच्चेष्टेन चाहं तावद्वैकारिकर्द्धिप्रचिकाशयिषुशक्तिः 'एषोऽपि स्वमतप्रतिष्ठीपयिषुमतिप्रशक्तिरतः । निष्प्र-



तिघः खलु मे कार्योल्लाघः' इति निभृतं वितर्क्य पर्याप्तपरिव्राजकवेषेण मायामयमनीषेण भाषितश्च । तथा हि—'**पर्वत**, केन खलु समासन्नकीनाशकेलिनर्मणा दुष्कर्मणा विनिर्मापितनिर्वरापकारः'। **पर्वतः**—'तात, को भवान्'। '**पर्वत**, भवत्पितुः खलु प्रियसुहृदहं सहाध्यायी **शाण्डिल्य** इति नामाभिधायी । यदा हि वत्स, भवान्समभवत्तदाहं तीर्थयात्रायामगाम् । इदानीं चागाम् । अतो न भवान्मां सम्यगवधारयति । तत्कथय हन्त कारणमस्य व्यतिकरस्य' । **पर्वतः**—'मत्प्राणितपरित्राणसद्मन् भगवन्, समाकर्णय । समस्तागमरत्नसंनिधातरि सुकृतमणिसमाहर्तरि निजरूपानुजातरि पितरि नाकलोकमिते समिते सति स्वातन्त्र्यादेकदा प्रदीप्तनिकामकामोद्गमः संपन्नपण्याङ्गनाजनसमागमः कृतपिशिकापिस्वापनस्वादः पापकर्मप्रसादः चेतन्नप्यार्योपदिष्टं विशिष्टं व्याख्यानमहं दुरात्माख्यानः स्वव्यसनविवृद्धये धर्मबुद्ध्या साधुमध्ये अजैर्यष्टव्यमितीदं वाक्यमशेषकल्मषनिषेक्योऽन्यथोपन्यस्यमानो **नारदे**नापादितवचनस्खलनः सन् एतावद्विपत्तिस्थामवस्थामवापम्'। **कालासुरः**—'**पर्वत**, मा शोच । मुञ्च त्वमशेषं धिषणाकलुषम्। अङ्ग, साधु संबोधयात्मानम्। न खलु निरीहस्य नरस्यास्ति काचिन्मनीषितावाप्तिः । तदलं हन्त हृदयदाहानुगेनावेगेन। हंहो पुत्र **पर्वत**, यथा स्वकीयसंकेताङ्कं ब्राह्मगोसवाश्वमेधसौत्रामणिवाजपेयराजसूयपुण्डरीकप्रभृतीनां सप्ततन्तूनां प्रतिपादकानि वाक्यानि विरचय्य अन्तरान्तरा वेदवचनेषु निवेशय । वत्स, मयि भूर्भुवःस्वस्त्रयीविपर्यासनसमर्थमन्त्रमाहात्म्ये, त्वयि च तरसासवसवित्रीप्रवृत्तिहेतुश्रुतिगीतिसमभ्यस्तसात्म्ये, किं नु नामेहासाध्यम्' इत्युत्साह्य स्वयं विद्यावष्टम्भसृष्टाभिरष्टाभिरपीतिभिरुपद्रूयमाणजनपदहृदय**मयोध्या**विषयमागत्य नगरबाहिरिकायां स देवश्चतुराननोऽभूत् । अध्वर्युः **पर्वतः** समासीत् । मायामयसृष्टयः **पिङ्गल-मनु-मतङ्ग-मरीचि-गौतमा**दयश्च ऋत्विजोऽजनिषत । तत्र श्रुतिधृतिश्चतुर्भिर्वदनैरुपदिशति ।

**पर्वत**स्तु

> यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा ।
> यज्ञो हि भूत्यै सर्वेषां तस्माद्यज्ञे वधोऽवधः ॥

ब्राह्मणो ब्राह्मणमालभेत इन्द्राय, क्षत्रियं मरुद्भ्यः, वैश्यं तमसे, शूद्रमूत्तमसे, तस्करं आत्मने, क्लीबं कामाय, पुंश्चलमतिक्रुष्टाय, मागधं गीताय, सुतमादित्याय, स्त्रियं गर्भिणीं सौत्रामणौ। य एवंविधां सुरां पिबति, न तेन सुरा पीता भवति। सुराश्च तिस्र एव श्रुतौ संमताः—पैष्टी, गौडी, मागधी चेति। गोसवे ब्राह्मणो गोसवेनेष्ट्वा संवत्सरान्ते मातरमप्यभिलषति। उपेहि मातरम्, उपेहि स्वसारम्।

षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।
अश्वमेधस्य कचनानि''''''''पशुभिस्त्रिभिः॥
महोक्षो वा महाजो वा श्रोत्रियाय विशस्यते।
''''''''तु दिव्याय स्रक्सुगन्धे निधिर्विधिः॥
गोसवे सुरभिं हन्याद्राजसूये तु भूभुजम्।
अश्वमेधे हयं हन्यात्पौण्डरीके च दन्तिनम्॥
औषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणो नराः।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितां गतिम्॥
मानवं व्यासवासिष्ठं वचनं वेदसंयुतम्।
अप्रमाणं तु यो ब्रूयात्स भवेद्ब्रह्मघातकः॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥

इति **मनु-मरीचि-मतङ्ग**प्रभृतयश्च सवषट्कारमजद्विजगजवाजिप्रभृतीन्देहिनो जुह्वति। तदेवं श्रुतिशस्त्रवाणिज्यजित्योपजीविनामीताः(?) **पर्वतो** व्यपोहति। **कालासुरः** पुनरालभ्यमानाः प्राणिनः साक्षाद्विमानारूढान्स्वर्गे सांवर्या पर्यटतो दर्शयति। **मनु**प्रमुखाश्च मुनयः प्रभावयन्ति। ततो मायाप्रदर्शितत्रिदशवेश्मप्रदेशादिलोभे संजाते सकलजनक्षोभे सप्रत्यासन्ननरकनगरः सगरः। स च श्वश्रविभ्रमोचितस्थितिर्**विश्वभूति**स्तदुपदेशात्तांस्तान्हत्वा प्सात्वा च दुरन्तदुरितचित्तचेतसौ मखमिषात्**कालासुरेण** स्मारितपूर्वभवागसौ वीतिहोत्राहुतिविहितविचित्रवधरहसौ विचित्राया धरित्र्या द्राघीयो दुःखदवथुमन्थरं तलमगाताम्।



**पर्वतो**ऽप्यग्नायीपतिविजये जठरधनंजये च हव्यकव्यकर्मभिः समाचरितसमस्तसत्त्वसंहारः **कालासुर**तिरोधानविधुरविधिसारस्तद्विरहातङ्कशोचिः क्लेशकृश्यच्छरीरः कालेन जीनजीवितप्रचारः सप्तमरसावसरः समपादि।

भवति चात्र श्लोकः—

मृषोद्यादीनवोद्योगात्**पर्वते**न समं वपुः।
जगाम जगतीमूलं ज्वलदातङ्कपावकम्॥

इत्युपासकाध्ययने असत्यफलसूचनो नाम त्रिंशत्तमः कल्पः।

वधूवित्तस्त्रियौ मुक्त्वा सर्वत्रान्यत्र तज्जने।
माता स्वसा तनूजेति मतिर्ब्रह्म गृहाश्रमे॥
धर्मभूमौ स्वभावेन मनुष्यो नियतस्मरः।
यज्जात्यैव परा जातिबन्धुलिङ्गिस्त्रियस्त्यजेत्॥
रक्ष्यमाणे हि बृंहन्ति यत्राहिंसादयो गुणाः।
उदाहरन्ति तद्ब्रह्म ब्रह्मविद्याविशारदाः॥
मदनोद्दीपनैर्वृत्तैर्मदनोद्दीपनै रसैः।
मदनोद्दीपनैः शास्त्रैर्मदमात्मनि नाचरेत्॥
हव्यैरिव हुतप्रीतिः पाथोभिरिव नीरधिः।
तोषमेति पुमानेष न भोगैर्भवसंभवैः॥
विषवद्विषयाः पुंसामापाते मधुरागमाः।
अन्ते विपत्तिफलदास्तत्सतामिह को ग्रहः॥
बहिस्तास्ताः क्रियाः कुर्वन्नरः संकल्पजल्पवान्।
भावाप्तावेव निर्वाति क्लेशस्तत्राधिकः परम्॥
निकामं कामकामात्मा तृतीया प्रकृतिर्भवेत्।
अनन्तवीर्यपर्यायस्तस्यानारतसेवने॥
सर्वा क्रियानुलोमा स्यात्फलाय हितकामिनाम्।
अपरत्रार्थकामाभ्यां यत्तौ स्ता''''तदर्थिषु॥

क्षमामयसमः कामः सर्वदोषोदयद्युतिः।
उत्सूत्रे तत्र मर्त्यानां कुतः श्रेयःसमागमः॥
देहद्रविणसंस्कारसमुपार्जनवृत्तयः।
जितकामे वृथा सर्वास्तत्कामः सर्वदोषभाक्॥
स्वाध्यायध्यानधर्माद्याः क्रियास्तावन्नरे कुतः।
इन्धे चित्तेन्धने यावदेष कामाशुशुक्षणिः॥
ऐदंपर्यमतो मुक्त्वा भोगानाहारवद्भजेत्।
देहदाहोपशान्त्यर्थमभिध्यानविहानये॥
परस्त्रीसंगमानङ्गक्रीडान्योपयमक्रियाः।
तीव्रता रतिकैतव्ये हन्युरेतानि तद्व्रतम्॥
मद्यं द्यूतमुपद्रव्यं तौर्यत्रिकमलंक्रियाः।
मदो विटा वृथाद्येति दशधानङ्गजो गणः॥
हिंसनं साहसं द्रोहः पैरे भाग्यार्थदूषणे।
ईर्षावाग्दण्डपारुष्ये कोपजः स्याद्गणोऽष्टधा॥
ऐश्वर्यौदार्यशौण्डीर्यधैर्यसौन्दर्यवीर्यता।
लोभेताद्भुतसंचारांश्चतुर्थव्रतपूतधीः॥
अनङ्गानलसंलीढे परस्त्रीरतिचेतसि।
सद्यस्का विपदो ह्यत्र परत्र च दुरास्पदाः॥

श्रूयतामत्राब्रह्मफलस्योपाख्यानम्—**काशिदेशेषु** सुरसुन्दरीसपत्नपौराङ्गनाजनविनोदारविन्दसरस्यां **वाराणस्यां** संपादितसमस्तारातिसंतानप्रकर्षकर्षणो **धर्षणो** नाम नृपतिः। अस्यातिचारप्ररूढप्रणयसहकारमञ्जरी **सुमञ्जरी** नामाग्रमहादेवी। पञ्चतन्त्रादिशास्त्रविस्तृतवचन **उग्रसेनो** नाम सचिवः। पतिहितैकमनोमुद्रा **सुभद्रा** नामास्य पत्नी। दुर्विलासरसरङ्गः **कडारपिङ्गो** नामानयोः सूनुः। अनवद्यविद्योपदेशप्रकाशिताशेषशिष्यः **पुष्यो** नाम पुरोहितः। सौरूप्यातिशयापहसितपद्मा **पद्मा** नामास्य धर्मपत्नी। समस्ताभिजातजनत्राह्यव्यवहारानुगः सकडारपिङ्गः स **कडारपिङ्गः** स्वापतेयतारुण्यमदमन्दमानबलाचापलाङ्कुरालपनभण्डेन खिङ्गखण्डेन सह न-



तभ्रूविभ्रमाभ्यर्थ्यमानभुजङ्गातिथिषु वीथिषु संचरमाणस्तामेकदा प्रासादतलोपसदामरालपक्ष्मेक्षणाक्षिप्तपद्मां **पद्मामवलोक्य**

'एषेन्द्रियद्रुमसमुल्लसनाम्बुवृष्टि-
रेषा मनोमृगविनोदविहारभूमिः।
एषा स्मरद्विरदबन्धनवारिवृत्तिः
किं खेचरी किममरी किमियं रतिर्वा॥'

इति च विचिन्त्य मकरकेतुवशव्यापारनिधिः प्रवृत्तदुरभिसंधिः पुरुषप्रयोगेणाभिमतसिद्धिमनवबुध्यमानः पराशयशैलविदारणतडिल्लतामिव **तडिल्लतां** नाम धात्रीं अषडक्षीणे शरणे सुनयायतनादिभिः पादपतनादिभिः प्रश्रयैरसदाशयाश्रयैरवन्ध्यसाध्यमुपरुध्य स्वकीयाकूतकान्तारप्रवर्धनधरित्रीमकरोत्।

तदुपारोधात्तविधविधिविधात्री **धात्री**—(स्वगतम्।) 'परपरिग्रहोऽन्यतरानुरागग्रहश्चेति दुर्घटप्रतिभासः खलु कार्योपन्यासः। अथवा सुघट एवायं कार्यघटः। यतस्तप्तातप्तप्लवयसोरसयसोरिव चेतसोः संगत्याय खलु पण्डितैर्दौत्यं दौत्यमन्यथा सरसतरसोरम्भसोरिव द्वयोरपि द्रवस्वभावयोरेकीकरणे किं नु नाम प्रतिभाविजृम्भितम्। किं च।

सा दूतिकाभिमतकार्यविधौ बुधानां
चातुर्यवर्यवचनोचितचित्तवृत्तिः।
या चुम्बकोपलकलेव····शल्यमन्त-
श्चेतोनिरूढमपरस्त्यबहिष्करोति॥

तदलं विलम्बेन। परिपक्वफलमिव न खलु व्यतिक्रान्तकालमदः सरसवाधिष्ठानमनुष्ठानम्। किं त्वस्य साहसावलम्बनधर्मणः कर्मणः सिद्धावसिद्धौ वा दैवात्परेङ्गिताकारसर्वज्ञैः प्राज्ञैः कथमपि बहुजनावकाशे कृते सति पुरश्चारी हि शरीरी भवति। दुरपवादपरागावसरो व्यसनगोचरश्च। तद्भूतयेयमिदमवसेयमद्वितीयापत्यप्रसवाय सचिवाय तदुदाहरन्ति। न चानिवेद्य भर्तुः किंचिदारम्भं कुर्यादन्यत्रापत्प्रतीकारेभ्यः।' इति। (प्रकाशम्।)

'प्राणप्रियैकापत्य अमात्य, ईदृश इव ननु भवादृशोऽपि जनो जातजीवितामृतानिषेकाय अचिरात्तं यत्नं कर्तुमर्हति।'

**अमात्यः**—'समस्तमनोरथसमर्थनकथासार्ये आर्ये, तज्जीवितामृतनिषेकाय मज्जीवितोचितविवेकाय च तत्रभवत्येवत्येव प्रभवति।'

**धात्री**—'अथ किम्। तथाप्यबलाजनमनोतिरिक्तप्रतिभावता तत्रभवतापि प्रतियतितव्यम्।' इत्यभिधाय धृतकात्यायिनीप्रतिकर्मा करतलामलकमिवाकलितसकलस्त्रैणधर्मा तैस्तैः परचित्ताकर्षणमन्त्रैर्वचनैश्चक्षुश्चेतोह्लादवास्तुभिश्च अतिचिरायाचरितोपचारा परिप्राप्तप्रणयप्रसरावतारा च एकदा मुदा रहसीमं प्रस्तुतकार्यघटनासमसीमं तां पुष्यकान्तामुद्दिश्य श्लोकमुदाहार्षीत्।

'स्त्रीषु धन्यात्र गङ्गेव परभोगोपगापि या।
मणिमालेव सोल्लासं ध्रियते मूर्ध्नि शंभुना॥'

**भट्टिनी**—(स्वगतम्।) इत्वरीजनाचरणहर्म्यनिर्माणाय प्रथमसूत्रपात इवायं वाक्योपोद्घातः। तथा चाह येयं तावदेतदाकूतपरिपाकम्। (प्रकाशम्।) आर्ये, किमस्य सुभाषितस्य ऐदंपर्यम्।

**धात्री**—परमसौभाग्यभागिनि भट्टिनि, जानासि एवास्य सुभाषितस्य कैंपर्यम्, यदि न वज्रघटितहृदयासि।

**भट्टिनी**—(स्वगतम्।) सत्यं वज्रघटितहृदयाहम्, यदि भवत्प्रयुक्तोपघातघणजर्जरितकाया न भविष्यामि। (प्रकाशम्।) आर्ये, हृदयेऽभिनिविष्टमर्थं श्रोतुमिच्छामि।

**धात्री**—वत्से, कथयामि। किं तु।

चित्तं द्वयोः पुरत एव निवेदनीयं
ज्ञानाभिमानधनधान्यधिपा नरेण।
यः प्रार्थितं न रहयत्यभियुज्यमानो
यो वा भवेन्ननु जनो मनसोऽनुकूलः॥

**भट्टिनी**—(स्वगतम्।) अहो नभःप्रकृतिमपीयं पङ्कैरुपलेप्तुमिच्छति। (प्रकाशम्।) आर्ये, उभयत्रापि समर्थाहं न चैतन्मदुपज्ञं भवदुपक्रमं वा।



**धात्री**—(स्वगतम्।) अनुगुणेयं खलु कार्यपरिणतिः, यदि निकटतटतन्त्रस्य वहित्रपात्रस्येव दुर्वाताल्लीसंनिपातो न भवेत्। (प्रकाशम्।) अत एव भद्रे, वदन्ति पुराणविदः—

'विधुर्गुरोः कलत्रेण गोतमस्यामरेश्वरः।
संतनोश्चापि दुश्चर्मा समगंस्त पुरा किल॥'

**भट्टिनी**—आर्ये, एवमेव। यतः।

स्त्रीणां वपुर्बन्धुभिरग्निसाक्षिकं परत्र विक्रीतमिदं न मानसम्।
स एव तस्याधिपतिर्मतः कृती विस्रम्भगर्भा ननु यत्र निर्वृतिः॥

**धात्री**—पुत्रि, तर्हि श्रूयताम्। त्वं किलैकदा कस्यचित्कुसुमकिंसारुनिर्विशेषवपुषः पुराङ्गनाजनलोचनोत्पलोत्सवामृतरोचिषः प्रासादपरिसरविहारिणी वीक्षणपथानुसारिणी सती कौमुदीव हृदयचन्द्रकान्तानन्दस्पन्दसंपादिनी अभूः। तत्प्रभृति ननु तस्य मदनसुन्दरस्य यूनः प्रत्यवसितवसन्तश्रीसमागमसमयस्य पुष्पंधयस्येव रसालमञ्जर्यामिव भवत्यां महान्ति खलु मन्दमकरन्दास्वादने दोहदानि, नितान्तं चिन्ताचक्रपरिक्रान्तं स्वान्तम्, प्रसभं गुणस्मरणपरिणामाधिकरणमन्तःकरणम्, अनवरतं रामणीयकानुकीर्तनसंकेतं चेतः, प्रविकसत्कुसुमविलासोचितसंनिहितेऽप्यन्यस्मिल्लताकान्ताजने महानुद्वेगः, पिशाचछलितस्येवास्थानानुबन्धः, संजातोन्मादस्येव विचित्रोपलम्भक्रियाप्रारम्भः, स्कन्धगदगृहीतस्येव प्रतिवासरं कार्श्यावतारः, स्मराराधनप्रणीतप्रणिधानस्येवेन्द्रियेषु सन्नता, प्राणेषु चाद्यश्वीनपथाकथा। अपि च।

अनवरतजलार्द्रान्दोलनस्पन्दमन्दै-
रतिसरसमृणालीकन्दलैश्चन्दनार्द्रैः।
अमृतरुचिमरीचिप्रौढितायां निशायां
प्रियसखि सुहृदस्ते किंचिदात्मप्रबोधः॥

**भट्टिनी**—आर्ये, किमित्यद्यापि गोपायते।

**धात्री**—(कर्णजाहमनुसृत्य।) एवमेवम्।

**भट्टिनी**—को दोषः ।

**धात्री**—कदा ।

**भट्टिनी**—यदा तुभ्यं रोचते ।

इतश्चानन्तरायतया तयानुमता हि मता हि मतिपाटवः सचिवोऽपि नृपतिनिवासोचितप्रचारेषु वासरेषु गुणव्यावर्णनावसरायातमेतस्य महीपतेः पुरस्ताच्छ्लोकमिममुपन्यास्थत्—

'राज्यं प्रवर्धते तस्य किञ्जल्पो यस्य वेश्मनि ।
शत्रवश्च क्षयं यान्ति सिद्धाच्चिन्तामणेरिव ॥'

**राजा**—अमात्य, क्व तस्य प्रादुर्भूतिः, कीदृशी च तस्याकृतिः ।

**अमात्यः**—देव, भगवतः पार्वतीपतेः श्वशुरस्य मन्दाकिनीस्पन्दनिदानकन्दरनीहारस्य रमणसहचरखेचरीसुरतपरिमलमत्तमत्तालिमण्डलीविलिख्यमानमरकतमणिमेखलस्य वृक्षोत्पलखण्डमण्डितशिखण्डस्य **रत्नशिखण्ड**नाम्नः शिखरस्याभ्यासे निःशेषकुन्तसंभवावहा गुहा समस्ति । यस्यां **जटायु-वैनतेय-वैशम्पायन**प्रभृतयः शकुन्तयः प्रादुरासन् । तस्यामेव तस्योत्पत्तिः । तां च गुहामहं **पुष्य**श्चानेकशो नन्दाभगवतीयात्रानुसारित्वात्साधु जानीवः । प्रकृतिश्चास्यानेकवर्णा मनुष्यसवर्णा च ।

**भूपालः**—(संजातकुतूहलः ।) अमात्य, कथं तद्दर्शनोत्कण्ठा ममानुकण्ठा स्यात् ।

**अमात्यः**—देव, मयि **पुष्ये** चागते सति ।

**राजा**—अमात्य, भवानतीव प्रवयाः । तत्**पुष्यः** प्रयातु ।

**अमात्यः**—देव, तर्हि दीयतामस्मै सरत्नालंकारप्रवेकं पारितोषिकम्, अगणेयं पाथेयं च ।

**राजा**—बाढम् ।

स्वामिचिन्ताचारचक्षुष्यः **पुष्य**स्तथादिष्टो गेहमागत्य 'आदेशं न विकल्पयेत्' इति मतानुसारी प्रयाणसामग्रीं कुर्वाणस्तया सतीव्रतपवित्रितसद्मया **पद्मया** पृष्टः—'भट्ट, किमकाण्डे प्रयाणाडम्बरः ।



**पुष्यः** प्रस्तुतमाचष्टे ।

**भट्टिनी**—भट्ट, सर्वमेतत्सचिवस्य कूटकपटचेष्टितम् ।

**भट्टः**—भट्टिनि, किं नु खल्वेतच्चेष्टितस्यायतनम् ।

भट्टिनी प्रक्रान्तमभाषिष्ट ।

**भट्टः**—किमत्र कार्यम् ।

**भट्टिनी**—कार्यमेतदेव । दिवा सप्रकाशमेतस्मात्पुरात्प्रस्थाय निशि निभृतं च प्रत्यावृत्य अत्रैव महावकाशे निजनिवासनिवेशे सुखेन वस्तव्यम् । उत्तरत्राहं जानामि ।

**भट्टः**—तथास्तु ।

ततोऽन्यदा तया परनिकृत्तिपाट्या धात्र्या स दुराचाराभिषङ्गः **कडारपिङ्गः** सुप्तजनसमये समानीतः 'समभ्यसतु तावदिहैवेयमयं च महीमूलं यियासुः पातालवासदुःखम्' इत्यनुध्याय तया **पद्मया** महावर्तस्य गर्तस्योपरि कल्पितायामवानीयां खट्वायां क्रमेणोपवेशितवपुषौ तौ द्वावपि दुरातङ्काबन्धे श्वभ्रमध्ये विनिपेततुः । अनुबभूवतुश्च निखिलपरिजनोच्छिष्टसिक्थजीविनौ कुम्भीपाकोपक्रमं षट्समाशाखान्दुःखक्रमम् ।

पुनरेकदा 'स्वाम्यादेशविशेषविदुष्यः **पुष्यः** तथाविधपक्षिप्रसवसमर्थयक्षिणीसहितं कृतपञ्जरपरिकल्पं किंजल्पमादाय अगच्छंस्त्रिचतुरेषु वासरेष्वस्यां पुरि प्रविशति' इति प्रसिद्धम् । प्रवर्तिनी भट्टिनी विविधवर्णविडम्बितकायेन चटकचकोरचाषचातकादिछद्मच्छादितप्रतीकनिकायेन पञ्जरालयेन तद्द्वयेन सह रुचिरप्रवासोचितवेषजोष्यं **पुष्यं** पुरो वने विनिवेश्य भट्टोद्भूतारम्भसंभाषणसनाथसखीजनसंकल्पा धृतप्रोषितभर्तृकाकल्पाभिमुखमयासीत् । अपरेद्युः स निखिलगुणविणविशेष्यः **पुष्यः** पृथिवीपतिभवनमनुगम्य 'देव, अयं स किंजल्पः पक्षी, इयं च तत्प्रसवित्री पतत्रिणी च' इत्याचरत् ।

**राजा**—(चिरं निर्वर्ण्य निर्णीय च स्वरेण ।) पुरोहित, नैष खलु किंजल्पः पक्षी, किं तु **कडारपिङ्गो**ऽयम् । एषापि विहङ्गी न भवति, किं तु **तडिल्लतेयं** कुट्टिनी ।

**पुष्यः**—देव, एतत्परिज्ञाने प्रगल्भमतिप्रसवः सचिवः।

राज्ञा सचिवस्तथा पृष्टः क्ष्मातलं प्रविविक्षुरिव क्षोणीतलमवालोकत।

**राजा**—पुष्य, समास्ताम्। अयं भवानैतिह्यनिकरं कथयितुमर्हति।

**पुष्यः**—स्वामिन्, कुलपालिकात्र प्रगल्भते।

भूपतिः भट्टिनीमाहूय 'अम्ब, कोऽयं व्यतिकरः' इत्यपृच्छत्। भट्टिनी दन्तमाख्यत्—**काश्यपीश्वरः** शैलूष इव हर्षामर्षोत्कर्षगतमुस्थामवस्थामनुभवन्निखिलान्तःपुरपुरंध्रीजनवन्द्यमानपादपद्मां **पद्मां** तैस्तैः सतीजनप्रह्लादवचनैः संमानसंनिधानैरलंकारदानैश्चोपचर्य, प्रवेश्य च वेदविद्विजोह्यमानकर्णीरथारूढां वेश्म, पुनः 'अरे निहीन, किमिह नगरे न सन्ति सकललोकसाधारणभोगाः सुभगाः सीमन्तिन्यः, येनैवमाचरः। कथं च दुराचार, एवमाचरन्नात्र विलायं विलीनोऽसि। तदिदानीमेव यदि भवन्तं तृणाङ्कुरमिव तृणेद्मि तदा तव हुंकृतमपकृतं स्यात्' इति निर्वरं निर्भर्त्स्य दुर्नयगरभुजङ्गं **कडारपिङ्गं** कुट्टिनीमनोरथातिथिसतृणमुग्रसेनमन्त्रिणं च निखिलजनसमक्षमाक्षारणापूर्वकं प्रावासयत्। दुष्प्रवृत्तानङ्गमातङ्गः **कडारपिङ्ग**स्तथा प्रजाप्रत्यक्षमाक्षारितः सुचिरमेतदेनःफलमनुभूय दशमीस्थः सन् श्वभ्रप्रभवभाजनं जनमभजत।

भवति चात्र श्लोकः—

मन्मथोन्माथितस्वान्तः परस्त्रीरतिजातधीः।
**कडारपिङ्गः** संकल्पान्निष्पपात रसातले॥

इत्युपासकाध्ययनेऽब्रह्मफलसाधारणो नामैकत्रिंशत्तमः कल्पः।

ममेदमिति संकल्पो बाह्याभ्यन्तरवस्तुषु।
परिग्रहो मतस्तत्र कुर्याच्चेतोनिकुञ्चनम्॥

क्षेत्रं धान्यं धनं वास्तु कुप्यं शयनमासनम्।
द्विपदाः पशवो भाण्डं बाह्या दश परिग्रहाः॥

समिथ्यात्वास्त्रयो वेदा हास्यप्रभृतयोऽपि षट्।
चत्वारश्च कषायाः स्युरन्तर्ग्रन्थाश्चतुर्दश॥



अथ वा।

चेतनाचेतनासङ्गाद्द्विधा बाह्यपरिग्रहः।
अन्तः स एक एव स्याद्भवहेत्वाशयाश्रयः॥

धनायाविद्धबुद्धीनामधनाः स्युर्मनोरथाः।
न ह्यनर्थक्रियारम्भा धीस्तदर्थिषु कामधुक्॥

सहसंभूतिरप्येष देहो यत्र न शाश्वतः।
द्रव्यदारकदारेषु तत्र कास्था महात्मनाम्॥

स श्रीमानपि निःश्रीकः स नरश्च नराधमः।
यो न धर्माय भोगाय विनयेत धनागमम्॥

प्राप्तेऽर्थे ये न माद्यन्ति न प्राप्तिस्पृहयालवः।
लोकद्वयश्रितां श्रीणां त एव परमेश्वराः॥

चित्तस्य चित्तचिन्तायां न फलं परमेनसः।
अस्थाने क्लिश्यमानस्य न हि क्लेशात्परं फलम्॥

अन्तर्बहिर्गते सङ्गे निःसङ्गं यस्य मानसम्।
सोऽगण्यपुण्यसंपन्नः सर्वत्र सुखमश्नुते॥

बाह्यसङ्गरते पुंसि कुतश्चित्तविशुद्धता।
सतुषे हि बहिर्धान्ये दुर्लभान्तर्विशुद्धता॥

सत्पात्रविनियोगेन योऽर्थसंग्रहतत्परः।
लुब्धेषु स परं लुब्धः सहामुत्र धनं न यत्॥

कृतप्रमाणाल्लोभेन धनादधिकसंग्रहः।
पञ्चमाणुव्रतं ज्यानिं करोति गृहमेधिनाम्॥

यस्य द्वन्द्वद्वयेऽप्यस्मिन्निस्पृहं देहिनो मनः।
स्वर्गापवर्गलक्ष्मीणां क्षणात्पक्षे सदक्षते॥

अत्यर्थमर्थकाङ्क्षायामवश्यं जायते नृणाम्।
अथ संघचितं चेतः संसारावर्तवर्तगः॥

श्रूयतामत्र परिग्रहाग्रहस्योपाख्यानम्—**पञ्चालदेशेषु** त्रिदशनिवेशानुकूलोपशल्ये **काम्पिल्ये** निजमतिमाहात्म्यापहसितामराचार्यप्रतिभो **रत्न-**

**प्रभो** नाम नृपतिः । आत्मीयकपोलकान्तिविजितामृतमरीचिमण्डला **मणिकुण्डला** नामास्य महादेवी । कुलक्रमागतात्मोपार्जितामितवित्तः **सागरदत्तो** नाम श्रेष्ठी । गृहस्य श्रीरिव **धनश्री**र्नामास्य भार्या । सूनुरनयोन्र्याय्यार्थोपार्जनैकचित्तः **सुदत्तो** नाम । स महालोभविभावसुज्वलच्चित्तभित्तः **सागरदत्तः** पुरुषपरम्परायातायाः काञ्चनकोटेरेकस्याः स्वयमुपार्जितार्धकोटेः पतिर्भवन्नपि शालीयादिभक्तभोजने द्वितयतुषापनीतिर्द्वावनाश्रावणकृतिश्च, शाकपाकविधाने संभारादिकृतिः प्रसभाभ्यवहृतिश्च, घार्तपूरपूरिमावेष्टिमादिभक्ष्योपक्षेपे महती स्नेहापहतिरिन्धनविरतिश्च, दुग्धदधिघोलरसाद्युपयोगे न विक्रयाय घृतं न च तक्रं कडङ्गरायेति च मन्य स्वयमेव प्रतिदिवसवृद्धिग्रहणाय ध्वजलोकपाटके विहरमाणः प्रतिपितृप्रिययन्त्रमुपसृत्य 'आः, सुरभिः खल्वेष खलः संजातः' इति सस्मेरं व्याहरन्, गृहीतपिण्डिखण्डः प्रत्यवसानसमये तद्गन्धमाजिघ्रन्सन्, सर्वलोकपरिहृतमनवधिकालोषितमतिसमर्घतां गतमकण्डितमेव च स्थालीविलयं भवति तत्केवलावन्तिसोमसहायमाहरति । अत एवास्य महामोहानुबन्धस्य **पिण्याकगन्ध** इति जगति नाम पप्रथे । 'मुखामोदमात्रेण च प्रयोजनम् । तदलं ताम्बूलार्थमर्थव्ययेन' इति विचिन्त्य विष्णुतरुत्वचः कालवल्लीदलोत्तरास्वादरुचः कवलयति । 'अर्धघ्राणोदरः परिवारः कदाचिदपि देहे हृदये वा न मनागपि विकुरुते' इति मत्वा न कमप्यूर्धपूरं पूरयति । प्रतिचारकांश्चैवं शिक्षयति—'न तैलार्थं लवणार्थं वित्तं व्ययितव्यम्, किं तु कार्षापणं मापं चादाय आपणमुपढौक्य तदुभयं गृहीत्वा पुनरिदं साधु न भवतीति प्रतिसमर्पयंस्तत्र मापे किंचिल्लग्नमायाति तेन शारीरो विधिर्विधातव्यः ।' परिजनार्भकान्स्वकीयांश्चैवमुपजयति—'न भवद्भिरङ्गाभ्यङ्गार्थं भवनमुपप्रोतव्यम्, किं तु सस्नेहदेहैः प्रातिवेशिकशिशुसंदोहैः सहाजिसंबाधं योद्धव्यम् । अतो भवतामनुपायसंनिधिः स्नानविधिः । क्षपायां च प्रतिवेशवेश्मप्रदीपप्रभाप्रज्वलितेन वलीकान्तावलम्बितेन काचमुकुरेण गृहाङ्गणे प्रदीपकार्यं निकाय्य मध्ये च सणसरण्डप्रोतैर्विषमरुचिदीप्तैरुरुबूकबीजैः करोति । सकलजनसाधारणाश्च नवीनसङ्गा एव युगाः सपरिच्छदः परिदधाति । मनाग्मलीमसरागाश्च विक्रीणाते । ततोऽस्य वसनधा-



वनार्थमपि न कपर्दकोपक्षयः । पर्वाणि च पुराणपल्लवकचवरापनयनकरणोत्करेणातपतप्तसंघाटस्नेहद्रवेण गुडगोणीक्षालनकषायेण च निवर्तयति । प्रत्यामन्त्रणेन द्रविणव्ययात्परागारभोजनावलोकनेनाश्रितजनमनोविनाशभयाच्चामन्त्रितो न कस्यापि निकेतने प्साति ।

एवमतीवतर्षोत्कर्षरसहार्ये सकलकदर्याचार्ये तस्मिञ्जीवत्यपि मृतकल्पमनसि वसति सति एकदा स लक्ष्मीकमलिनीपरिमलनकलमो **रत्नप्रभो** राजसिन्धुरप्रबाधावसंदर्शनप्रासादसंपादनाय श्रवणाश्रयवृत्तस्य **ब्रह्मदत्तस्य** महीपतेः कालेन स्थण्डिलतालुप्तावकाशे भवनप्रदेशे भूशोधनं विधाय यत्ने तदास्थानमण्डपाभोगबन्धयुषः प्रकामोषरदोषकलुषवपुषः संपूर्णविस्तारयुषः प्रथिमगुणविशिष्टकाः सुवर्णेष्टकाः समालोक्य बहिर्निकामं कलङ्कमलिनत्वादितरेष्टकाविशिष्टत्वमाकलयन् 'एताः खलु चैत्यालयनिर्माणाय योग्याः' इति चेतसैकत्र स्तूपतामानयामास ।

अत्रान्तरे समस्तमितंपचपुरोगमसंबन्धः **पिण्याकगन्धः** सरभसमपतितामिष्टकावहतां वैवधिकनिवहानां सायंसमये मार्गविषये पतितामेकामिष्टकामवाप्य चलनक्षालनदेशे न्यधात् । तत्र च प्रतिधस्मङ्क्षिसंघर्षादशेषकालुष्यमोषे भर्मनिर्मितत्वमवेत्य तैस्तैः प्रलोभनवस्तुभिः काचवहानां विहितोपचारस्ताः संगृह्णन् श्रुतस्वस्रीयापायोदन्तः फायमानमनोमन्युकृतान्तः **पिण्याकगन्धः** 'पुत्र, निखिलकलावदातचित्त **सुदत्त**, भवत्पितृस्वसुः सुतशोकमनायं मयावश्यं तत्र गन्तव्यमपस्नातव्यं च । ततस्त्वय्यप्येताः परिस्कन्दलोकप्रलोभनेन साधु संग्रहीतव्याः' इत्युपह्वरे व्याहृत्य सकलजगद्व्यवहारावतारत्रिवेद्यां **काकन्द्यां** तोकशोकभूयिष्ठायास्त्रूणां कनिष्ठाया दर्शनार्थमगच्छत् । असद्व्यवहारव्यावृत्तः **सुदत्तः** ततोपदेशमनिश्रेयसमवश्यन् यतो राजपरिगृहीतं तृणमपि काञ्चनीभवति संपद्यते च पूर्वोपार्जितस्याप्यर्थस्यापहाराय प्राणसंहाराय चेति जातमतिर्नैकामपीष्टकां समग्रहीत् ।

महालोभलोलतान्धः **पिण्याकगन्धस्तस्याः** पुरोपस्नातायागतः सुतमप्राक्षीत्—'वत्स, कियतीः खलु त्वमिष्टकाततीः पर्यग्रहीः ।'

स्तेययोगविनिवृत्तः **सुदत्तः**—'तात, नैकामपि ।'

प्रादुर्भवद्दीर्घदुर्गतिदुरितबन्धः **पिण्याकगन्धः** समर्थे सदाचारकृतार्थे पुण्यभाजि तुजि परमुत्तरमपश्यन्, 'यदीमौ क्रमौ परिक्रमणक्षमौ मम नाभविष्यतां तदा कथंकारमहं मन्मनोरथवन्ध्यां **काकन्द्याम**गमिष्यम् । अत एतावेवात्र श्रीविरामावहो द्रोहौ' इति विचिन्त्योद्वर्तनं वर्तयन्त्याः स्ववासिन्याः करादाक्षिप्तशरीरेण शिलापुत्रकेण तौ जर्जरितावजीजनत् । एतच्च वैदेहकाव्यञ्जनपरिजनात्प्राचीनबर्हिर्निभः क्षितिरमणीकरिणीभः **रत्नप्रभः** श्रुत्वा दासीवक्रेण शिल्पिभिर्विधापितेष्टकातक्षणः सुवर्णत्वं निर्णीय विहितसर्वस्वापहारं सनिकारं नगरजनोच्चार्यमाणदुरपवादप्रबन्धं **पिण्याकगन्धं** निरवासयत् । 'इन्द्रियमस्थानं हि गुणदोषयोर्महीपतयः' इति नीतिवाक्यमनुस्मृत्य मूलधनप्रदानेनान्वयागतनिवासनिवेदनेन च परद्रव्यादाननिवृत्तं **सुदत्तं** साधु समाश्वासयत् । स तथा निर्वासितः संजातनरकनिबन्धः कृतप्रकाम मलोभसंबन्धश्चिरायोपार्जितदुरन्तदुष्कर्मस्कन्धः **पिण्याकगन्धः** प्रेत्य पातालमगात् ।

भवति चात्र श्लोकः—

षष्ठ्याः क्षितेस्तृतीयेऽस्मिंल्लके दुःखमल्लके ।
पेते **पण्याकगन्धेन** धनायाविद्धचेतसा ॥

इत्युपासकाध्ययने परिग्रहाग्रहफलप्रलापनो नाम द्वात्रिंशः कल्पः ।

दिग्देशानर्थदण्डानां विरतिस्त्रितयाश्रयम् ।
गुणव्रतत्रयं सद्भिः सागारयतिषु स्मृतम् ॥
दिक्षु सर्वास्वधःप्रोर्ध्वदेशेषु निखिलेषु च ।
एतस्यां दिशि देशेऽस्मिन्नियत्येवं गतिर्मम ॥
दिग्देशनियमादेवं ततो बाह्येषु वस्तुषु ।
हिंसालोभोपभोगादिनिवृत्तेश्चित्तयन्त्रणा ॥
रक्षन्निदं प्रयत्नेन गुणव्रतत्रयं गृही ।
आज्ञैश्वर्यं लभेतैष यत्र यत्रोपजायते ॥



आशादेशप्रमाणस्य गृहीतस्य व्यतिक्रमात् ।
देशव्रती प्रजायेत प्रायश्चित्तसमाश्रयः ॥
शिखण्डिकुक्कुटश्येनबिडालव्यालबभ्रवः ।
विषकण्टकशस्त्राग्निकषापाशकरज्जवः ॥
पापाख्यानाशुभाध्यानहिंसाक्रीडावृथाक्रियाः ।
परोपतापपैशून्यशोकाक्रन्दनकारिता ॥
वधबन्धनसंरोधहेतवोऽन्येऽपि चेदृशाः ।
भवन्त्यनर्थदण्डाख्याः सांपरायप्रवर्धकात् ॥
पोषणं क्रूरसत्त्वानां हिंसोपकरणक्रियाम् ।
देशव्रती न कुर्वीत स्वकीयाचारचारुधीः ॥
अनर्थदण्डनिर्मोक्षादवश्यं देशतो यतिः ।
सुहृतां सर्वभूतेषु स्वामित्वं च प्रपद्यते ॥
वञ्चनारम्भहिंसानामुपदेशात्प्रवर्तनम् ।
भाराधिक्याधिकक्लेशौ तृतीयगुणहानये ॥

इत्युपासकाध्ययने गुणव्रतत्रयसूत्रणो नाम त्रयस्त्रिंशत्तमः कल्पः ।

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन **श्रीसोमदेव**सूरिणा विरचिते **यशोधरमहाराजचरिते यशस्तिलका**परनाम्नि महाकाव्ये सच्चरित्रचिन्तामणिर्नाम सप्तम आश्वासः ॥

---

अष्टम आश्वासः ।

आदौ सामायिकं कर्म प्रोषधोपासनक्रिया ।
सेव्याथ नियमो दानं शिक्षाव्रतचतुष्टयम् ॥
आप्तसेवोपदेशः स्यात्समयः समयार्थिनाम् ।
नियुक्तं तत्र यत्कर्म तत्सामायिकमूचिरे ॥
आप्तस्यासन्निधानेऽपि पुण्यायाकृतिपूजनम् ।
तार्क्ष्यमुद्रा न किं कुर्याद्विषसामर्थ्यसूदनम् ॥
अन्तःशुद्धिं बहिःशुद्धिं विदध्याद्देवतार्चनम् ।
आद्या दौश्चित्यनिर्मोक्षादन्या स्नानाद्यथाविधिः ॥
नित्यस्नानं गृहस्थस्य देवार्चनपरिग्रहे ।
यतेस्तु दुर्जनस्पर्शात्स्नानमन्यद्विगर्हितम् ॥
वातातपादिसंस्पृष्टे भूरितोये जलाशये ।
अवगाह्याचरेत्स्नानमतोऽन्यद्गालितं भजेत् ॥
पादजानुकटिग्रीवाशिरःपर्यन्तसंश्रयम् ।
स्नानं पञ्चविधं ज्ञेयं यथादोषं शरीरिणाम् ॥
ब्रह्मचर्योपपन्नस्य निवृत्तारम्भकर्मणः ।
यद्वा तद्वा भवेत्स्नानमन्त्यमन्यस्य तद्द्वयम् ॥
सर्वारम्भविजृम्भस्य ब्रह्मजिह्मस्य देहिनः ।
अविधाय बहिःशुद्धिं नाप्तोपास्त्यधिकारिता ॥
अद्भिः शुद्धिं निराकुर्वन्मन्त्रमात्रपरायणः ।
स मन्त्रैः शुद्धिभाङ् नूनं भुक्त्वा हत्वा विहृत्य च ॥
मृत्स्नयेष्टकया वापि भस्मना गोमयेन च ।
शौचं तावत्प्रकुर्वीत यावन्निर्मलता भवेत् ॥
बहिर्विहृत्य संप्राप्तो नानाचम्य गृहं विशेत् ।
स्थानान्तरात्समायातं सर्वं प्रोक्षितमाचरेत् ॥
आप्लुतः संप्लुतः स्वान्तः शुचिवासो विभूषितः ।
मौनसंयमसंपन्नः कुर्याद्देवार्चनाविधिम् ॥



दन्तधावनशुद्धास्यो मुखवासोचिताननः ।
असंजातान्यसंसर्गः सुधीर्देवानुपाचरेत् ॥
होमभूतबलीपूर्वैरुक्तौ भक्तविशुद्धये ।
भुक्त्यादौ सलिलं सर्पिरूधस्यं च रसायनम् ॥
एतद्विधिर्न धर्माय नाधर्माय तदक्रियाः ।
दर्भपुष्पाक्षतश्रोत्रवन्दनादिविधानवत् ॥
द्वौ हि धर्मौ गृहस्थानां लौकिकः पारलौकिकः ।
लोकाश्रयो भवेदाद्यः परः स्यादागमाश्रयः ॥
जातयोनादयः सर्वास्तत्क्रियापि तथाविधाः ।
श्रुतिः शास्त्रान्तरं वास्तु प्रमाणं कात्र नः क्षितिः ॥
स्वजात्यैव विशुद्धानां वर्णानामिह रत्नवत् ।
तत्क्रियाविनियोगाय जैनागमविधिः परम् ॥
यद्भवभ्रान्तिनिर्मुक्तिहेतुधीस्तत्र दुर्लभा ।
संसारव्यवहारे तु स्वतःसिद्धे वृथागमः ॥

तथा च ।

सर्व एव हि जैनानां प्रमाणं लौकिको विधिः ।
यत्र सम्यक्त्वहानिर्न यत्र न व्रतदूषणम् ॥

इत्युपासकाध्ययने स्नानविधिर्नाम चतुस्त्रिंशत्तमः कल्पः ।

द्वये देवसेवाधिकृताः संकल्पिताप्तपूज्यपरिग्रहाः कृतप्रतिमापरिग्रहाश्च संकल्पोऽपि दलफलोपलादिष्विव न समयान्तरप्रतिमासु विधेयः । यतः ।

शुद्धे वस्तुनि संकल्पः कन्याजन इवोचितः ।
नाकारान्तरसंक्रान्ते यथा परपरिग्रहे ॥

तत्र प्रथमं प्रतिसमयसमाचारविधिमभिधास्यामः । तथा हि ।

अर्हन्न तनुमध्ये दक्षिणतो गणधरस्तथा पश्चात् ।
श्रुतगीः साधुस्तदनु च पुरोऽपि दृगवगमवृत्तानि ॥
भूर्जे फलके सिचये शिलातले सैकते क्षितौ व्योम्नि ।
हृदये चेति स्थाप्याः समयसमाचारवेदिभिर्नित्यम् ॥

रत्नत्रयपुरस्काराः पञ्चापि परमेष्ठिनः ।
भव्यरत्नाकरानन्दं कुर्वन्तु भुवनेन्दवः ॥

ॐ निखिलभुवनपतिविहितनिरतिशयसपर्यापरम्परस्य परानपेक्षापर्याyप्रवृत्तसमस्तार्थावलोकलोचनकेवलज्ञानसाम्राज्यलाञ्छनपञ्चमहाकल्याणाष्टकमहाप्रातिहार्यचतुस्त्रिंशदतिशयविराजितस्य षोडशार्धलक्षणसहस्राङ्कितदिव्यदेहमाहात्म्यस्य द्वादशगणप्रमुखमहामुनिमनःप्रणिधानसंनिधीयमानपरमेश्वरपरमसर्वज्ञादिनामसहस्रस्य विरहितारिरजोरहःकुहकभावस्य समवसरणसरोवतीर्णजगत्त्रयपुण्डरीकखण्डमार्तण्डमण्डलस्य दुष्पाराजवञ्जवीभावजलनिमज्जज्जन्तुजातहस्तावलम्बपरमागमस्य भक्तिभरविनतविष्टपत्रयीपालमौलिमणिप्रभाभोगनभोविजृम्भमाणचरणनक्षत्रनिकुरुम्बस्य सरस्वतीवरप्रसादचिन्तामणेर्लक्ष्मीलतानिकेतकल्पानोकहस्य कीर्तिपोतिकाप्रवर्धनिकामध्ये नीरवीचिपरिचयखलीकारकारणाभिधानपात्रमन्त्रप्रभावस्य सौभाग्यसौरभसंपादनपारिजातप्रसवस्तबकस्य सौरूप्योत्पत्तिमणिमकरिकाघटनविकटाकारस्य रत्नत्रयपुरःसरस्य भगवतोऽर्हत्परमेष्ठिनोऽष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

नरोरगसुराम्भोजविरोचनरुचिश्रियम् ।
आरोग्याय जिनाधीशं करोम्यर्चनगोचरम् ॥

ॐ सहचरसमीचीनचार्वीत्रयविचारगोचरोचितहिताहितप्रविभागस्य अतएव परनिरपेक्षतया स्वयंभुवः सलिलान्मुक्ताफलमिव उपलादिव च कीचनमदेवात्मनः कारणविशेषोपसर्पणवशादाविर्भूतमखिलबलविलयलब्धात्मस्वभावमसमसहायमक्रममवधीरितान्यसंनिधिव्यवधानमनवधिमयत्नसाध्यमवसितातिशयसीमानमात्मस्वरूपैकनिबन्धनमन्तःप्रकाशमध्यासितवन्तमनन्तदर्शनवैशद्यविशेषसाक्षात्कृतसकलवस्तुसर्वस्वमनवसानसुखस्रोतसमपर्यन्तवीर्यमचाक्षुषसूक्ष्मावभासमसदृशाभिनिवेशावगाहमलघुव्यपदेशमपगतबाधापराकारसंक्रममतिविशुद्धस्वभावतया निवृत्ताशेषशारीरद्वारतया च मनाङ्मुक्तपूर्वावस्थान्तरमरूपरसगन्धशब्दस्पर्शमशेषभुवमाशिरःशेखरायमाणपदविश्वंभरमुपशान्तसकलसंसारदोषप्रसरं परमात्मानमुपेयुषो गुरुणापि प्रतिपन्नगुरुभावस्य रत्नत्रयपुरःसरस्य भगवतः सिद्धपरमेष्ठिनोऽष्टतयीमिष्टिं करोमीति स्वाहा ।



अपि च ।

प्रत्नकर्मविनिर्मुक्तान्नूत्नकर्मविवर्जितान् ।
यत्नतः संस्तुवे सिद्धान्रत्नत्रयमहीयसः ॥

ॐ पूज्यतमस्य उदिगेतोदितकुलशीलगुरुपरम्परोपात्तसमस्तैतिह्यरहस्यसारस्य अध्ययनाध्यायविनियोगविनयनियमोपनयनादिक्रियाकाण्डनिःस्नातचित्तस्य चातुर्वर्ण्यसंघप्रवर्धनाधुरंधरस्य द्विविधात्मधर्मावबोधनविधूतैहिकव्यपेक्षासंबन्धस्य सकलवर्णाश्रमसमयसमाचारविचारोचितवचनप्रपञ्चमरीचिविदलितनिखिलजनतारविन्दनीमिथ्यात्वमोहान्धकारपटलस्य ज्ञानतपःप्रभावप्रकाशितजिनशासनस्य शिष्यसंपदाशेषमिव भुवनमुद्धर्तुमुद्यतस्य भगवतो रत्नत्रयस्य पुरःसरस्याचार्यपरमेष्ठिनोऽष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

विचार्य सर्वमैतिह्यमाचार्यकमुपेयुषः ।
आचार्यवर्यानर्चामि संचार्य हृदयाम्बुजे ॥

ॐ श्रीमद्भगवदर्हद्वदनारविन्दविनिर्गतद्वादशाङ्गचतुर्दशपूर्वप्रकीर्णविस्तीर्णश्रुतपारावारपारंगमस्य अपारसंपरायारण्यविनिर्गमानुपसर्गमार्गणनिरतविनेयजनशरण्यस्य दुरन्तैकान्तवादमदमषीमलिनपरवादिकरिकण्ठीरवोत्कण्ठकण्ठारवायमाणप्रमाणनयनिक्षेपानुयोगवाग्व्यतिकरस्य श्रवणग्रहणावगाहनावधारणप्रयोगवाग्मित्वकवित्वगमकशक्तिविस्मापितविततनरनिलिम्पाम्बरचरचक्रवर्तिसीमन्तप्रीतपर्यस्तोत्तंसस्रक्सौरभाधिवासितपादपीठोपकण्ठस्य व्रतविधानवद्यहृदयस्य भगवतो रत्नत्रयपुरःसरस्य उपाध्यायपरमेष्ठिनोऽष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

अपास्तैकान्तवादीन्द्रानपारागमपारगान् ।
उपाध्यायानुपासेहमुपायाय श्रुताप्तये ॥

ॐ विदितवेदितव्यस्य बाह्याभ्यन्तराचरणकरणत्रयविशुद्धित्रिपथगापगाप्रवहनिर्मूलितमनोजकुजकुटुम्बाडम्बरस्य अमराम्बरचरनितम्बिनीकदम्बनदप्रादुर्भूतमदनमदमकरन्ददुर्दिनविनोदारविन्दचन्द्रायमाणोदितोदितव्रतव्रातापहसितार्वाचीयकामनचरित्रच्युतविरञ्चविरोचनादिवैखानसरसस्य अनेकशस्त्रिभुवनक्षोभविधायिभिर्ध्याननधैर्यावधूतविश्वक्प्रत्यूहव्यूहैरनन्यजनसामान्यवृत्तिभिर्मनोगोचरातिचरैराश्चर्यप्रभावभूमिभिरनवधारितविधानैस्तैस्तैर्मूलोत्तरगुणग्रामणीभिस्तपःप्रारम्भैः सकलैहिके सुखसाम्राज्यवरप्रदानावहितायातावधीरितविस्मितोपनतवनदेवतालकालिकुलविलुप्यमानचरणसरसि सहपरागस्य निर्वाणपथनिष्ठितात्मनो रत्नत्रयस्य पुरःसरस्य भगवतः सर्वसाधुपरमेष्ठिनोऽष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

बोधापगाप्रवाहेण विध्यातानङ्गवह्नयः ।<br>
विध्याराध्याङ्घ्रयः सन्तु साध्यबोधाय साधवः ॥

ॐ जिनजिनागमजिनधर्मजिनोक्तजीवादितत्त्वावधारणद्वयविजम्भितनिरतिशयाभिनिवेशाधिष्ठानासु प्रकाशितशङ्काप्राकाम्यावह्लादनकुमतार्तिशल्योद्धारासु प्रशमसंवेगानुकम्पास्तिक्यस्तम्भसंभृतासु स्थितिकरणोपगूहनवात्सल्यप्रभावनोपचरितोत्सवसपर्यासु अनेकत्रिदशविशेषनिर्मापितभूमिकासु सुकृतिचेतःप्रासादपरम्परासु कृतक्रीडाविहारमपि च यन्निसर्गान्महामुनिमनःपयोधिपरिचितं अशेषभरतैरावतविदेहवर्षधरचक्रवर्तिचूडामणिकुलदैवतं अमरेश्वरमतिदेवतावतंसकल्पवल्लीपल्लवं अम्बरचरलोकहृदयैकमण्डनं अपवर्गपुरप्रवेशागण्यपण्यात्मसात्करणसत्यंकारं अनुल्लङ्घ्यदुरघघनघटादुर्दिनेष्वपि जन्तुषु ज्योतिर्लोकादिगतिगर्तपातनमस्काण्डभेदनमामनन्ति मनीषिणः, तस्य संसारपादपोच्छेदप्रथमकारणस्य सकलमङ्गलविधायिनः पञ्चपरमेष्ठिपुरःसरस्य भगवतः सम्यग्दर्शनरत्नस्याष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

भुक्तिलक्ष्मीलतामूलं युक्तिश्रीवल्लरीवनम् ।<br>
भक्तितोऽर्हामि सम्यक्त्वं भुक्तिचिन्तामणिप्रदम् ॥



ॐ यन्निखिलभुवनतार्तीयलोचनम्, आत्महिताहितविवेकयाथात्म्यावबोधसमासादितसमीचीनभावम्, अधिगमसम्यक्त्वरत्नोत्पत्तिस्थानम्, अखिलास्वपि दशासु क्षेत्रज्ञस्वभावसाम्राज्यपरमलाञ्छनम्, अपि च यस्मिन्निदानीमपि नदीस्नातचेतोभिः सम्यगुपाहितोपयोगसंमार्जने द्युमणिमणिदर्पण इव साक्षाद्भवन्ति ते ते भावैकसंप्रत्ययाः स्वभावक्षेत्रसमयविप्रकार्षिणोऽपि भावास्तस्यात्मलाभनिबन्धभयहेतुविहितविचित्रपरिणतिभिर्मतिश्रुतावधिमनःपर्ययकेवलैः पञ्चतयीमवस्थामवगाहमानस्य सकलमङ्गलविधायिनः पञ्चपरमेष्ठिपुरःसरस्य भगवतः सम्यग्ज्ञानरत्नस्याष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

नेत्रं हिताहितालोके सूत्रं धीसौधसाधने ।<br>
पात्रं पूजाविधेः कुर्वे क्षेत्रं लक्ष्म्याः समागमे ॥

ॐ यत्सकललोकालोकावलोकनप्रतिबन्धकान्धकारविध्वंसनम्, अनवद्यविद्यामन्दाकिनीधरम्, अशेषसत्त्वोत्सवानन्दचन्द्रोदयम्, अखिलव्रतगुप्तिसमितिलतारामपुष्पाकरसमयम्, अनल्पफलप्रदायितरुः कल्पद्रुमप्रसवभूमिमस्मयो पशमसौमनस्यवृत्तिधैर्यप्रधानैरनुष्ठीयमानमुशन्ति सद्धीमनाः परमपदप्राप्तेः प्रथममिव सोपानम्, तस्य पञ्चतयात्मनः सर्वक्रियोपशमानिशपावनस्य सकलमङ्गलविधायिनः पञ्चपरमेष्ठिपुरःसरस्य भगवतः सम्यक्चारित्ररत्नस्याष्टतयीमिष्टिं करोमीति स्वाहा ।

अपि च ।

धर्मयोगिनरेन्द्रस्य कर्मवैरिजयार्जने ।<br>
शर्मकृत्सर्वसत्त्वानां धर्मधीर्वृत्तमाश्रये ॥




जिनसिद्धसूरिदेशकसाधुश्रद्धानबोधरत्नानाम् ।<br>
कृत्वाष्टतयीमिष्टिं विदधामि ततः स्तवं युक्त्या ॥

तत्त्वेषु प्रणयं परोऽस्य मनसः श्रद्धानमुक्तं जिनै-<br>
रेतद्द्वित्रिदशप्रभेदविषयं व्यक्तं चतुर्भिर्गुणैः ।<br>
अष्टाङ्गं भुवनत्रयार्चितमिदं मूढैरपोढं त्रिभि-<br>
श्चित्ते देव दधामि संसृतिलतोल्लासावसानोत्सवम् ॥

ते कुर्वन्तु तपांसि दुर्धरधियो ज्ञानानि संचिन्वतां
चित्तं वा वितरन्तु देव तदपि प्रायो न जन्मच्छिदः।
एषा येषु न विद्यते तव वचः श्रद्धावधानोद्धुरा
दुष्कर्माङ्कुरकुञ्जवज्रदहनद्योतावदाता रुचिः॥
संसाराम्बुधिसेतुबन्धमसमप्रारम्भलक्ष्मीवन-
प्रोल्लासामृतवारिवाहमखिलत्रैलोक्यचिन्तामणिम्।
कल्याणाम्बुजखण्डसंभवसरः सम्यक्त्वरत्नं कृती
यो धत्ते हृदि तस्य नाथ सुलभाः स्वर्गापवर्गश्रियः॥

(इति दर्शनभक्तिः)

अत्यल्पा यतिरक्षजा मतिरियं बोधोऽवधिः सावधिः
साश्चर्यः क्वचिदेव योगिनि स च स्वल्पो मनःपर्ययः।
दुष्प्रापं पुनरद्य केवलमिदं ज्योतिःकथागोचरं
माहात्म्यं निखिलार्थगे तु सुलभे किं वर्णयामः श्रुते॥
यद्देवैः शिरसा धृतं गणधरैः कर्णावतंसीकृतं
न्यस्तं चेतसि योगिभिर्नृपवरैराघ्रातसारं पुनः।
हस्ते दृष्टिपथे मुखे च निहितं विद्याधराधीश्वरै-
स्तत्स्याद्वादसरोरुहं मम मनोहंसस्य भूयान्मुदे॥
मिथ्यातमःपटलभेदनकारणाय स्वर्गापवर्गपुरमार्गनिबोधनाय।
तत्तत्त्वभावनमनाः प्रणमामि नित्यं त्रैलोक्यमङ्गलकराय जिनागमाय॥

(इति ज्ञानभक्तिः)

ज्ञानं दुर्भगदेहमण्डनमिव स्यात्स्वस्य खेदावहं
धत्ते साधु न तत्फलश्रियमयं सम्यक्त्वरत्नाङ्कुरः।
कामं देव यदन्तरेण विफलास्तास्तास्तपोभूमय-
स्तस्मै त्वच्चरिताय संयमदमध्यानादिधाम्ने नमः॥
यच्चिन्तामणिरीप्सितेषु वसतिः सौरूप्यसौभाग्ययोः
श्रीपाणिग्रहकौतुकं कुलबलारोग्यागमे संगमः।



यत्पूर्वैश्चरितं समाधिनिधिभिर्मोक्षाय पञ्चात्मकं
तच्चारित्रमहं नमामि विविधं स्वर्गापवर्गाप्तये॥
हस्ते स्वर्गसुखान्यतर्कितभवास्ताश्चक्रवर्तिश्रियो
देवाः पादतले लुठन्ति फलति द्यौः कामितं सर्वतः।
कल्याणोत्सवसंपदः पुनरिमास्तस्यावतारालये
प्रागेवावतरन्ति यस्य चरितैर्जैनैः पवित्रं मनः॥

(इति चारित्रभक्तिः)

बोधोऽवधिः श्रुतमशेषनिरूपितार्थमन्तर्बहिःकरणजा सहजा मतिस्ते।
इत्थं स्वतः सकलवस्तुविवेकबुद्धेः का स्याज्जिनेन्द्र भवतः परतो व्यपेक्षा॥
ध्यानावलोकविगलत्तिमिरप्रताने तां देव केवलमयीं श्रियमादधाने।
आसीत्त्वयि त्रिभुवनं मुहुरुत्सवाय व्यापारमन्थरमिवैकपुरं महाय॥
छत्रं दधामि किमु चामरमुत्क्षिपामि हेमाम्बुजान्यथ जिनस्य पदेऽर्पयामि।
इत्थं मुदामरपतिः स्वयमेव यत्र सेवापरः परमहं किमु वच्मि तत्र॥
त्वं सर्वदोषरहितः सुनयं वचस्ते सत्त्वानुकम्पनपरः सकलो विधिश्च।
लोकस्तथापि यदि भोक्ष्यति न त्वयीश कर्मास्य तन्ननु रवाविव कौशिकस्य॥
पुष्पं त्वदीयचरणार्चनपीठसङ्गाच्चूडामणी भवति देव जगत्त्रयस्य।
अस्पृश्यमन्यशिरसि स्थितमप्यतस्ते को नाम साम्यमनुशास्त्रमनीश्वराद्यैः॥
मिथ्यामहान्धतमसावृतमप्रबोधमेतत्पुरा जगदभूद्भवगर्तपाति।
तद्देव दृष्टिहृदयाब्जविकासकान्तैः स्याद्वादरश्मिभिरथोद्धृतवांस्त्वमेव॥
पादाम्बुजद्वयमिदं तव देव यस्य स्वच्छे मनःसरसि संनिहितं समास्ते।
तं श्रीः स्वयं भजति तं नियतं वृणीते स्वर्गापवर्गजननीव सरस्वतीयम्॥

(इत्यर्हद्भक्तिः)

सम्यग्ज्ञानत्रयेण प्रविदितनिखिलज्ञेयतत्त्वप्रपञ्चाः
प्रोद्धूय ध्यानवातैः सकलमथ रजःप्राप्तकैवल्यरूपाः।
कृत्वा सत्त्वोपकारं त्रिभुवनपतिभिर्दत्तयात्रोत्सवा ये
ते सिद्धाः सन्तु लोकत्रयशिखरपुरीवासिनः सिद्धये वः॥

दानज्ञानचरित्रसंयमनयप्रारम्भगर्भं मनः
कृत्वान्तर्बहिरिन्द्रियाणि मरुतः संयम्य पञ्चापि च।
पश्चाद्वीतविकल्पजालमखिलं भ्रस्यत्तमःसंतति
ध्यानं तत्प्रविधाय ये च मुमुचुस्तेभ्योऽपि बद्धोऽञ्जलिः॥

इत्थं येऽत्र समुद्रकन्दरसरःस्रोतस्विनीभूनभो-
द्वीपाद्रिद्रुमकाननादिषु धृतध्यानावधानोर्द्धयः।
कालेषु त्रिषु मुक्तिसंगमजुषस्तुत्यास्त्रिभिर्विष्टपै-
स्ते रत्नत्रयमङ्गलानि दधती भव्येषु रत्नाकरः॥

(इति सिद्धभक्तिः)

भौमव्यन्तरमर्त्यभास्करसुरश्रेणीविमानाश्रिताः
स्वर्ज्योतिःकुलपर्वतान्तरधरारन्ध्रप्रबन्धस्थितीः।
वन्दे तत्पुरपालमौलिविलसद्रत्नप्रदीपार्चिताः
साम्राज्याय जिनेन्द्रसिद्धगणभृत्स्त्राध्यायिसाध्वीकृती॥

(इति चैत्यभक्तिः)

समवसरणवासान्मुक्तिलक्ष्मीविलासा-
न्सकलसमयनाथान्वाक्यविन्यासनाथान्।
भवनिगलविनाशोद्योगयोगप्रकाशा-
न्निरुपमगुणभावान्संस्तुवेऽहं क्रियावान्॥

(इति पञ्चगुरुभक्तिः)

भवदुःखानलशान्तिर्धर्मामृतवर्षजनितजनशान्तिः।
शिवशर्मास्त्रवशान्तिः शान्तिकरः स्ताज्जिनः शान्तिः॥

(इति शान्तिभक्तिः)

मनोमात्रोचितायापि यः पुण्याय न चेष्टते।
हताशस्य कथं तस्य कृतार्थाः स्युर्मनोरथाः॥

येषां तृष्णातिमिरभिदुरस्तत्त्वलोकावलोका-
त्पारेवारे प्रशमजलधेः सङ्गवार्धेः परेऽस्मिन्।



बाह्यव्याप्तिप्रसरविधुरश्चित्तवृत्तिप्रचार-
स्तेषामर्चाविधिषु भवताद्वारिपूरः श्रियेव॥

दूरारूढे प्रणिधितरणावन्तरात्माम्बरेऽस्मि-
न्नास्ते येषां हृदयकमलं मोदनिस्पन्दवृत्तिः।
तत्त्वालोकावगमगलितध्वान्तबन्धस्थिलीना-
मिष्टिं तेषामहमुपनये पादयोश्चन्दनेन॥

येषामन्तस्तदमृतरसास्वादमन्दप्रचारे
क्षेत्राधीशे विगतनिखिलारम्भसंभोगभावः।
ग्रामोक्षाणामुदुषित इवाभाति योगीश्वराणां
कुर्मस्तेषां कलमसदकैः पूजनं निर्ममाणाम्॥

देहारामेऽप्युपरतधियः सर्वसंकल्पशान्ते-
र्येषामूर्मिस्मयविरहिता ब्रह्मधामामृतासेः।
आत्मात्मीयामुगमविगमाद्भूतयः शुद्धबोधा-
स्तेषां पुष्पैश्चरणकमलान्यर्चयेयं शिवाय॥

येषामङ्गे मलयजरसैः संगमः कर्दमैर्वा
स्त्रीबिब्बोकैः पितृवनचिताभस्मभिर्वा समानः।
मित्रे शत्रावपि च विषये निस्तरङ्गोऽनुषङ्ग-
स्तेषां पूजाव्यतिकरविधावस्तु भूत्यै हविर्वः॥

योगाभोगाचरणचतुरे दीर्णकन्दर्पदर्पे
स्वान्ते ध्वान्तोद्धरणसविधे ज्योतिरुन्मेषभाजि।
संमोदेतामृतभृत इव क्षेत्रनाथोऽन्तरुच्चै-
र्येषां तेषु क्रमपरिचयात्स्याच्छ्रिये वः प्रदीपः॥

येषां ध्येयाशयकुवलयानन्दचन्द्रोदयानां
बोधाम्भोधिः प्रमदसलिलैर्माति नात्मावकाशे।
लब्धाप्येतामखिलभुवनैश्वर्यलक्ष्मीं निरीहं
चेतस्तेषामपमयचितौ श्रेयसे वोऽस्तु धूपः॥

चित्ते चित्ते विशति करणेष्वन्तरात्मस्थितेषु
स्रोतस्यूते बहिरखिलतो व्याप्तिशून्ये च पुंसि ।
येषां ज्योतिः किमपि परमानन्दसंदर्भगर्भं
जन्मच्छेदि प्रभवति फलैस्तेषु कुर्मः सपर्याम् ॥

वाग्देवतावर इवायमुपासकानामागामितत्फलविधाविव पुण्यपुञ्जः ।
लक्ष्मीकटाक्षमधुपागमनैकहेतुः पुष्पाञ्जलिर्भवतु तच्चरणार्चनेन ॥

(इत्याचार्यभक्तिः)

इत्युपासकाध्ययने समयसमाचारविधिर्नाम पञ्चत्रिंशत्तमः कल्पः ।

इदानीं ये कृतप्रतिमापरिग्रहास्तान्प्रति स्नपनार्चनस्तवजपध्यानश्रुतदेवताराधनविधीन् षट् प्रोदाहरिष्यामः । तथा हि—

श्रीकेतनं वाग्वनितानिवासं पुण्यार्चनक्षेत्रमुपासकानाम् ।
स्वर्गापवर्गागमनैकहेतुं जिनाभिषेकाश्रयमाश्रयामि ॥

भावामृतेन मनसि प्रतिलब्धशुद्धिः पुण्यामृतेन च तनौ नितरां पवित्रः ।
श्रीमण्डपे विविधवस्तुविभूषितायां वेद्यां जिनस्य सवनं विधिवत्तनोमि ॥

उदङ्मुखं स्वयं तिष्ठेत्प्राङ्मुखं स्थापयेज्जिनम् ।
पूजाक्षणे भवेन्नित्यं यमी वाचंयमक्रियः ॥

प्रस्तावना पुराकर्म स्थापना संनिधापनम् ।
पूजा पूजाफलं चेति षड्विधं देवसेवनम् ॥

यः श्रीजन्मपयोनिधिर्मनसि च ध्यायन्ति यं योगिनो
येनेदं भुवनं सनाथममरा यस्मै नमस्कुर्वते ।
यस्मात्प्रादुरभूच्छ्रुतिः सुकृतिनो यस्य प्रसादाज्जना
यस्मिन्नेष भवाश्रयो व्यतिकरस्तस्यारभे स्नापनाम् ॥

वीतोपलेपवपुषो न मलानुषङ्गस्त्रैलोक्यपूज्यचरणस्य कुतः परोऽर्घ्यः ।
मोक्षामृते धृतधियस्तव नैव कामः स्नानं ततः कमुपकारमिदं करोतु ॥

तथापि स्वस्य पुण्यार्थं प्रस्तुवेऽभिषवं तव ।
को नाम रूपकारार्थं फलार्थी विहितोद्यमः ॥

(इति प्रस्तावना)



रत्नाम्बुभिः कुशकृशानुभिरात्तशुद्धौ भूमौ भुजङ्गमपतीनमृतैरुपास्य ।
कुर्मः प्रजापतिनिकेतनदिङ्मुखानि दूर्वाक्षतप्रसवदर्भविदर्भितानि ॥

पाथः पूर्णान्कुम्भान्कोणेषु सुपल्लवप्रसूनार्चान् ।
दुग्धाब्धीनिव विदधे प्रवालमुक्तोल्बणांश्चतुरः ॥

(इति पुराष्कर्म)

यस्य स्थानं त्रिभुवनशिरःशेखराग्रे निसर्गा-
त्तस्यामर्त्यक्षितिभृति भवेन्नाद्भुतं स्नानपीठी ।
लोकानन्दामृतजलनिधेर्वारि चैतत्सुधात्वं
धत्ते यत्ते सवनसमये तत्र चित्रीयते कः ॥

तीर्थोदकैर्मणिसुवर्णघटोपनीतैः पीठे पवित्रवपुषि प्रतिकल्पितार्थे ।
लक्ष्मीश्रुतागमनबीजविदर्भगर्भे संस्थापयामि भुवनाधिपतिं जिनेन्द्रम् ॥

(इति स्थापना)

सोऽयं जिनः सुरगिरिर्ननु पीठमेतदेतानि दुग्धजलधेः सलिलानि साक्षात् ।
इन्द्रस्त्वहं तव सवप्रतिकर्मयोगात्पूर्णा ततः कथमियं न महोत्सवश्रीः ॥

(इति संनिधापनम्)

योगेऽस्मिन्नाकनाथ ज्वलनपितृपते नैगमेय प्रचेतो
वायो रैदेशशेषोडुपसपरिजना यूयमेत्य ग्रहाग्राः ।
मन्त्रैर्भूः स्वः सुधाद्यैरधिगतवलयः स्वासु दिक्षूपविष्टाः
क्षेपीयः क्षेमदक्षाः कुरुत जिनसवोत्साहिनं विघ्नशान्तिम् ॥

देहेऽस्मिन्विहितार्चने निनदति प्रारब्धगीतध्वना-
वातोद्यैः स्तुतिपाठमङ्गलरवैश्चानन्दिनि प्राङ्गणे ।
मृत्स्नागोमयभूतिपिण्डहरितादर्भप्रसूनाक्षतै-
रम्भोभिश्च सचन्दनैर्जिनपतेर्नीराजनां प्रस्तुवे ॥

पुण्यद्रुमश्चिरमयं नवपल्लवश्रीश्चेतः सरः प्रमदमन्दसरोजगर्भम् ।
वागापगा च मम दुस्तरतीरमार्गस्नानामृतैर्जिनपतेस्त्रिजगत्प्रमोदैः ॥

द्राक्षाखर्जूरचोचेक्षुप्राचीनामलकोद्भवैः ।
राजादनाम्रपूगोत्थैः स्नापयामि जिनं रसैः ॥

आयुः प्रजासु परमं भवतात्सदैव धर्मावबोधसुरभिश्चिरमस्तु भूयः।
पुष्टिं विनेयजनता वितनोतु कामं हैयंगवीनसवनेन जिनेश्वरस्य॥

येषां कर्मभुजङ्गनिर्विषविधौ बुद्धिप्रबन्धो नृणां
येषां जातिजरामृतिव्युपरमध्यानप्रपञ्चाग्रहः।
येषामात्मविशुद्धबोधविभवालोके सतृष्णं मन-
स्ते धारोष्णपयःप्रवाहधवलं ध्यायन्तु जैनं वपुः॥

जन्मस्नेहच्छिदपि जगतः स्नेहहेतुर्निसर्गा-
त्पुण्योपाये मृदुगुणमपि स्तब्धलब्धात्मवृत्तिः।
चेतोजाड्यं हरदपि दधिप्राप्तजाड्यस्वभावं
जैनस्नानानुभवनविधौ मङ्गलं वस्तनोतु॥

एलालवङ्गकङ्कोलमालयागरुमिश्रितैः।
पिष्टैः कल्कैः कषायैश्च जिनदेहमुपास्महे॥

नन्द्यावर्तस्वस्तिकफलप्रसूनाक्षताम्बुकुशपूलैः।
अवतारयामि देवं जिनेश्वरं वर्धमानैश्च॥

ॐ भक्तिभरविनतोरगनरसुरासुरेश्वरशिरःकिरीटकोटिकल्पतरुपल्लवायमानचरणयुगलम्, अमृताशनाङ्गनाकरविकीर्यमाणमन्दारनमेरुपारिजातसंतानकवनप्रसूनस्पन्दमानमकरन्दस्वादोन्मदमिलन्मत्तालिकुलप्रलोपोत्तालितनिलिम्पालस्विव्यापारगिलसः वरचरकमारहेलास्फालितवेणुवल्लकीपणवानकमृदङ्गशङ्खकाहलत्रिविलतालझल्लरीभेरीभम्माप्रभृत्यनवधिघनशुषिरततावनद्धवादनादनिवेदितनिखिलविष्टिपाधिपोपासनावसरम्, अनेकामरविकिरत्तुलकीर्णकिशलयाशोकानोकहोल्लसत्प्रसवपरागपुनरुक्तसकलदिक्पालहृदयरागप्रसरम्, अखिलभुवनैश्वर्यलाञ्छनातपत्त्रत्रयशिखण्डमण्डनमणिमयूखरेखालिख्यमानमखमुखरखेचरीभालतलतिलकपत्त्रम्, अनवरतयक्षविक्षिप्यमाणोभयपक्षचामरपरम्परांशुजालधवलितविनेयजनमनःप्रासादचरित्रम्, अशेषप्रकाशितपदार्थातिशायीशारीरप्रभापरिवेषमुषितपरिषत्स्वभास्तारमतितिमिरनिकरम्, अनवधिवस्तुविस्तारात्मसात्कारासारविस्फारितसरस्वतीतरङ्गसङ्गसंतर्पितसमस्तसत्त्वसरोजाकरम्, इभारातिपरिवृढोपवाह्यमानासनावसा-



नलग्नरत्नकरप्रसरपल्लवितवियत्पादपादपाभोगम्, अनन्यसामान्यसमवसरणसभासीनमनुजदिविजभुजङ्गेन्द्रवृन्दवन्द्यमानपादारविन्दयुगलम्,

मद्धाविलक्ष्मीलतिकावनस्य प्रवर्धनावर्जितवारिपूरैः।
जिनं चतुर्भिः स्नपयामि कुम्भैर्नभःसदो धेनुपयोधराभैः॥

लक्ष्मीकल्पलते समुल्लस जनानन्दैः परं पल्लवै-
र्धर्माराम फलैः प्रकामसुभगस्त्वं भव्यसेव्यो भव।
बोधाधीश तिमुन्त संप्रति मुहुर्दुष्कर्मधर्मक्लमं
त्रैलोक्यप्रमदावहैर्जिनपतेर्गन्धोदकैः स्नापनात्॥

शुद्धैर्विशुद्धबोधस्य जिनेशस्योत्तरोदकैः।
करोम्यवभृथस्नानमुत्तरोत्तरसंपदे॥

अमृतक्कृतकर्णिकेऽसिन्निजाङ्कबीजे कलादले कमले।
संस्थाप्य पूजयेयं त्रिभुवनवरदं जिनं विधिना॥

पुण्योपार्जनशरणं पुराणपुरुषं स्तवोचिताचरणम्।
पुरुहूतविहितसेवं पुरदेवं पूजयामि तोयेन॥

मन्दमदमदनदमनं मन्दरगिरिशिखरमज्जनावसरे।
कन्दमुमालतिकायाश्चन्दनचर्चार्चितं जिनं कुर्वे॥

अवम तरुगहनदहनं निकाससुखसंभवामृतस्थानम्।
आगमदीपालोकं कलमभवैस्तन्दुलैर्भजामि जिनम्॥

सररसविमुक्तसूक्तिं विज्ञानसमुद्रमुद्रिताशेषम्।
श्रीमानसकलहंसं कुसुमशरैरर्चयामि जिननाथम्॥

अर्हन्तममितनीतिं निरञ्जनं मिहिरमाधिदावाग्नेः।
आराधयामि हविषा मुक्तिस्त्रीरमितमान[स]मनङ्गम्॥

भक्त्या नेतमराशयकमलवनारालतिमिरमार्तण्डम्।
जिनमुपचरामि दीपैः सकलसुखारामकामदमकामम्॥

अनुपमकेवलवपुषं सकलकलाविलयवर्तिरूपस्थम्।
योगावगम्यनिलयं यजामहे निखिलगं जिनं धूपैः॥

स्वर्गापवर्गसंगतिविधायिनं व्यस्तजातिवृतिदोषम् ।
व्योमचरामरपतिभिः स्मृतं फलैर्जिनपतिमुपासे ॥
अम्भश्चन्दनतन्दुलोद्गमहविर्दीपैः सधूपैः फलै-
रर्चित्वा त्रिजगद्गुरुं जिनपतिं स्नानोत्सवान्तरम् ।
तं स्तौमि प्रजपामि चेतसि दधे कुर्वे श्रुताराधनं
त्रैलोक्यप्रभवं च तन्महमहं कालत्रये श्रद्दधे ॥
यज्ञैर्मुदावभृथभाग्भिरुपास्य देवं पुष्पाञ्जलिप्रकरपूरितपादपीठम् ।
श्वेतातपत्रचमरीरुहदर्पणाद्यैराराधयामि पुनरेनमिनं जिनानाम् ॥

(इति पूजा)

भक्तिर्नित्यं जिनचरणयोः सर्वसत्त्वेषु मैत्री
सर्वातिथ्ये मम विभवधीर्बुद्धिरध्यात्मतत्त्वे ।
सद्विद्येषु प्रणयपरता चित्तवृत्तिः परार्थे
भूयादेतद्भवति भगवन्धाम यावत्त्वदीयम् ॥
प्रातर्विधिस्तव पदाम्बुजपूजनेन मध्याह्नसंनिधिरयं मुनिमाननेन ।
सायंतनोऽपि समयो मम देव यायान्नित्यं त्वदाचरणकीर्ति(र्त)नकामितेन ॥
धर्मेषु धर्मनिरतात्मसु धर्महेतोर्धर्माद्वाप्तमहिमास्तु नृपोऽनुकूलः ।
नित्यं जिनेन्द्रचरणार्चनपुण्यधन्याः कामं प्रजाश्च परमां श्रियमाप्नुवन्तु ॥

(इति पूजाफलम्)

आलस्याद्वपुषो हृषीकहरणैर्व्याक्षेपतो वात्मन-
श्चापल्यान्मनसो मतेर्जडतया मान्द्येन वाक्सौष्ठवे ।
यः कश्चित्तव संस्तवेषु समभूदेष प्रमादः समे
मिथ्यास्तात्स्तनुदेवताः प्रणयिनां तुष्यन्ति भक्त्या यतः ॥
देवपूजामनिर्माय मुनीननुपचर्य च ।
यो भुञ्जीत गृहस्थः सन्स भुञ्जीत परं तमः ॥

इत्युपासकाध्ययने स्नपनार्चनविधिर्नाम षट्त्रिंशः कल्पः ।

नमदमरमौलिमण्डलविलसद्रत्नांशुनिकरगगनेऽस्मिन् ।
अरुणायतेऽङ्घ्रियुगलं यस्य स जीयाज्जिनो देवः ॥



सुरपतियुवतिश्रवसाममरतरुस्मेरमञ्जरीरुचिरम् ।
चरणनखकिरणजालं यस्य स जयताज्जिनो जगति ॥

वर्णदिविजकुञ्जरमौलिमन्दारमकरन्दस्यन्दकरविसरसारधूसरपदाम्बुज वैदग्धापरमपद प्राप्तवादजय विजितमनसिज,

मात्रा—

यस्त्वामतितगुणं जिन कश्चिरसावधिबोधः स्तौति विपश्चित् ।
नूनमसौ ननु काञ्चनशैलं तुलयति हस्तेनाचिरकालम् ॥
स्तोत्रे यत्र महामुनिपक्षाः सकलैतिह्याम्बुधिविधिदक्षाः ।
मुमुचुश्चिन्तामनवधिबोधास्तत्र कथं ननु सादृग्वेधाः ॥
तदपि च देयं किमपि जिन त्वयि यद्यपि शक्तिर्नास्ति तथा मयि ।
यदियं भक्तिर्मा मौनस्थं देव नमस्कुरुते·····स्वस्थम् ॥

चतुष्पदी—

सुरपतिविरचितसंस्तव दलिताखिलभव परमधामलब्धोदय ।
कस्तव जन्तुर्गुणमघहरण चरणप्रवितनुतां हतनतभय ॥
जय निखिलनिलिम्पालापकल्प जगतीस्तुतकीर्तिकलत्रतल्प ।
जय परमधर्महर्म्यावतार लोकत्रितयोद्धरणैकसार ॥
जय लक्ष्मीकरकमलार्चिताङ्ग सारस्वतरसनटनाद्यरङ्ग ।
जय बोधमध्यसिद्धाखिलार्थ मुक्तिश्रीरमणीरतिकृतार्थ ॥
नमदमरमौलिमन्दरतटान्त राज्यत्पदनख·····त्रकान्त ।
विबुधस्त्रीनेत्राम्बुजविबोध मकरध्वजधनुरुद्धवनिरोध ॥
बोधत्रयविदितविधेयतन्त्र का नामापेक्षा तव परत्र ।
दधतः प्रबोधमसुभृज्जनस्य गुरुरस्ति कोऽपि किमिहारुणस्य ॥
निजबीजबलान्मलिनापि महति धीः शुद्धिं परमामभव भजति ।
युक्तेः कनकाश्मा भवति हेम किं कोऽपि तत्र विवदेत नाम ॥
परिणाममिवातिशयेन विपति मतिरुच्चैर्नरि गुरुतामुपैति ।
तद्विश्ववेदिनिन्दा द्विजस्य विश्राम्यति चित्ते देव·····स्य ॥

कपिलो यदि वाञ्छति वित्तिमचिति सुरगुरुगीर्गुम्फेष्वेष पतति ।
चैतन्यं बाह्यग्राह्यरहितमुपयोगि कस्य वद तत्र विदित ॥
भूपवनवनानलतत्वे(?)षु धिषणो निगृणाति विभागमेषु ।
न पुनर्विदितद्विपरीतधर्म धाम्नि ब्रवीति तत्तस्य कर्म ॥
विज्ञानप्रमुखाः सन्ति विमुचि न गुणाः किल यस्य न योऽत्र वाचि ।
तस्यैष पुमानपि नैव तत्र दाहाद्दहनः क इहापरोऽत्र ॥
धरणीधरधरणिप्रभृति सृजति ननु नियमगृहादि गिरिशः करोति ।
चित्रं तथापि यत्तद्वचांसि लोकेषु भवन्ति महायशांसि ॥
पुरुषत्रयमबलासक्तमूर्त्ति तस्मात्परस्तु गतकायकीर्ति ।
एवं सति नाथ कथं द्विजसूत्रमाभाति हिताहितविषयमत्र ॥
सोऽहं योऽभूवं बालवयसि निश्चिन्वन्क्षणिकमतं जहासि ।
संतानोऽप्यत्र न वासनापि यद्यन्वयभावस्तेन नापि ॥
चित्तं न विचारकमक्षजनितमखिलं सविकल्पं स्वांशयति ।
तमुदितानि वस्तु नैव स्पृशन्ति शाक्याः कथमात्महितान्युशन्ति ॥
अद्वैतं तत्त्वं वदति कोऽपि सुधियां धियमातनुते न सोऽपि ।
यत्पक्षहेतुदृष्टान्तवचन संस्थाः कुतोऽत्र शिवशर्मसदन ॥
हेतावनेकधर्मप्रवृद्धिराख्याति जिनेश्वर तत्त्वसिद्धि- ।
मन्यत्पुनरखिलमतव्यतीतमुद्भाति सर्वमुरुनयनाङ्कित ॥
मनुजत्वपूर्वनयनायकस्य भवतो भवतोऽपि गुणोत्तमस्य ।
ये द्वेषकलुषधिषणा भवन्ति ते जडजं मौक्तिकमपि रहन्ति ॥
नाप्तेषु बहुत्वं यः सहेत पर्यायविभूतिष्वपि महेत ।
नूनं द्रुहिणादिषु दैवतेषु कं तस्य स्फुटति तथाविधेषु ॥
दीक्षासु तपसि वचसि त्व[यी] न यदिहैक्यं सकलगुणैरहीन ।
तस्माद्ब्रवीमि जगतां त्वमेव नाथोऽसि बुधोचितपादसेव ॥
देव त्वयि कोऽपि तथापि विमुख चित्तो यदि विदलितमदनविशिख ।
निन्द्यः स एव घूके दिवापि विदृशीनमुपालभते न कोऽपि ॥



निष्किञ्चनोऽपि जगतेन कानि जिन दिशसि निकामं कामितानि ।
नैवात्र चित्रमथवा समस्ति वृष्टिः किमु स्वादिह नो चकास्ति ॥

पद्धतिका—

इति तदमृतनाथ स्मरशरमाथ त्रिभुवनपतिमतिकेतन ।
मम दिश जगदीश प्रशमनिवेश त्वत्पदनुतिहृदयं जिन ॥

घत्ता—

अमरतरुणीनेत्रानन्दे महोत्सवचन्द्रमाः
स्मरमदमयध्वान्तध्वंसे मतः परमोऽर्यमा ।
अदयहृदयः कर्मारातौ न ते च कृपात्मवा-
नित विसदृशव्यापारस्त्वं तथापि भवान्महान् ॥
अनन्तगुणसंनिधौ नियतबोधसंपन्निधौ
श्रुताब्धिबुधसंस्तुते परिमितोक्तवृत्तस्थिते ।
जिनेश्वर सतीदृशे त्वयि मयि स्फुटं तादृशे
कथं सदृशनिश्चयं तदिदमस्तु वस्तुद्वयम् ॥
तदलमतुलत्वादृग्वाणीपथस्तवनोचिते
त्वयि गुणगणापात्रैः स्तोत्रैर्जडस्य हि मादृशः ।
प्रणतिविषये व्यापारेऽस्मिन्पुनः सुलभे जनः
कथमयमवागास्तां स्वामिन्नतोऽस्तु नमोऽस्तु ते ॥
जगन्नेत्रं पात्रं निखिलविषयज्ञानमहसां
महान्तं त्वां सन्तं सकलनयनीतिस्मृतगुणम् ।
महोदारं सारं विनतहृदयानन्दविषये
ततो याचे नो चेद्भवसि भगवन्नर्थिविमुखः ॥
मनुजदिविजलक्ष्मीलोचनालोकलाला-
श्चिरमिह चरितार्थास्त्वत्प्रसादात्प्रजाताः ।
हृदयमिदमिदानीं स्वामिसेवोत्सुकत्वा-
त्सह वसति सनाथं छात्रमित्रे विदेहि ॥

इत्युपासकाध्ययने स्तवनविधिर्नाम सप्तत्रिंशत्तमः कल्पः ।

सर्वाक्षरनामाक्षरमुख्याक्षराद्येकवर्णविन्यासात् ।
निगिरन्ति जयं केचिदहं तु सिद्धक्रमैरेव ॥
पातालमर्त्यखेचरसुरेषु सिद्धक्रमस्य मन्त्रस्य ।
अधिगानात्संसिद्धेः समवाये देवयात्रायाम् ॥
पुष्पैः पर्वभिरम्बुजबीजस्वर्णार्ककान्तरत्नैर्वा ।
निष्कम्पिताक्षवलयः पर्यङ्कस्थो जपं कुर्यात् ॥
अङ्गुष्ठे मोक्षार्थी तर्जन्यां साधु बहिरिदं नयतु ।
इतरास्वङ्गुलिषु पुनर्बहिरन्तश्चैहिकापेक्षी ॥
वचसा वा मनसा वा कार्यो जाप्यः सव्याहितस्वान्तैः ।
शतगुणमाद्ये पुण्यं सहस्रसंख्यं द्वितीये तु ॥
नियमितकरणग्रामः स्थानासनमानसप्रचारज्ञः ।
पवनप्रयोगनिपुणः सम्यक्सिद्धो भवेदशेषज्ञः ॥
इममेव मन्त्रमन्ते पञ्चत्रिंशत्प्रकारवर्णस्थम् ।
मुनयो जपन्ति विधिवत्परमपदावाप्तये नित्यम् ॥
मन्त्राणामखिलानामयमेकः कार्यकृद्भवेत्सिद्धः ।
अस्यैकदेशकार्यं परे तु कुर्युर्न ते सर्वे ॥
कुर्यात्करयोर्न्यासं कनिष्ठिकान्तः प्रकारयुगलेन ।
तदनु हृदाननमस्तककवचास्त्रविधिर्विधातव्यः ॥
संपूर्णमतिस्थपुसो नादमानन्दसुन्दरं जपतः ।
सर्वसमीहितसिद्धिर्निःसंशयमस्य जायेत ॥
मन्त्रोऽयमेव सेव्यः परत्र मन्त्रे फलोपलम्भेऽपि ।
यद्यप्यग्रे विटपी फलति तथाप्यस्य सिच्यते मूलम् ॥
अत्रामुत्र च नियतं कामितफलसिद्धये परो मन्त्रः ।
नाभूदस्ति भविष्यति गुरुपञ्चकवाचकान्मन्त्रात् ॥
अभिलषितकामधेनौ दुरितद्रुमपावके हि मन्त्रेऽस्मिन् ।
दृष्टादृष्टफले सति परत्र मन्त्रे कथं सजतु ॥



इत्थं मनोमनसि वाह्यमवाह्यवृत्तिं कृत्वा हृषीकनगरं मरुतो नियम्य ।
सम्यग्जपं विदधतः सुधियः प्रयत्नाल्लोकत्रयेऽस्य कृतिनः किमसाध्यमस्ति ॥

इत्युपासकाध्ययने जपविधिर्नामाष्टत्रिंशत्तमः कल्पः ।

आदिध्यासुः परंज्योतिरीप्सुस्तद्धाम शाश्वतम् ।
इमं ध्यानविधिं यत्नादभ्यस्यतु समाहितः ॥
तत्त्वचिन्तामृताम्भोधौ दृढमग्नातया मनः ।
बहिर्व्याप्तौ जडं कृत्वा द्वयमासनमाचरेत् ॥
सूक्ष्मप्राणयमायामः सन्नसर्वाङ्गसंचरः ।
ग्रावोत्कीर्ण इवासीत ध्यानानन्दसुधां लिहन् ॥
यदेन्द्रियाणि पञ्चापि स्वात्मस्थानि समासते ।
तदा ज्योतिः स्फुरत्यन्तश्चित्ते······निमज्जति ॥
चित्तस्यैकाग्रता ध्यानं ध्यातात्मा तत्फलप्रभुः ।
ध्येयमात्माग····ज्योतिस्तद्विधिर्देहयातना ॥
तैरश्चमामरं मार्त्यं नाभसं भौममङ्गजम् ।
सहेतुसमधीः सर्वमन्तरायं द्वयातिगः ॥
वाक्षमित्वमविज्ञाय न क्लीबत्वममृत्यवे ।
तस्मादक्लिश्यमानात्मा परं ब्रह्मैव चिन्तयेत् ॥
यत्रायमिन्द्रियग्रामो व्यासङ्गस्तेन विप्लवम् ।
नाश्नुवीत तमुद्देशं भजेताध्यात्मसिद्धये ॥
फल्गुजन्माप्ययं देहो यदलाबुफलायते ।
संसारसागरोत्तारे रक्षस्तस्मात्प्रयत्नतः ॥
नरे धीरे वृथा वर्मक्षेत्रे सस्ये वृतिर्वृथा ।
यथा तथा वृथा सर्वो ध्यानशून्यस्य तद्विधिः ॥
बहिरन्तस्तमोवातैरस्पन्दं दीपवन्मनः ।
यत्तत्त्वालोकनोल्लासि तत्स्याद्ध्यानं सबीजकम् ॥
निर्विचारावतारासु चेतः स्रोतःप्रवृत्तिषु ।
आत्मन्येव स्फुरन्नात्मा भवेद्ध्यानमबीजकम् ॥

चित्तेऽनन्तप्रभावेऽस्मिन्प्रकृत्या रसवच्चले ।
तत्तेजसि स्थिरे सिद्धे न किं सिद्धिं जगत्त्रये ॥
निर्मनस्के मनोहंसे पुंहंसे सर्वतः स्थिरे ।
बोधहंसोऽखिलालोक्य सरोहंसः प्रजायते ॥
यद्यप्यस्मिन्मनःक्षेत्रे क्रियां तां तां समादधत् ।
किंचिद्वेदयते भावं तथाप्यत्र न विभ्रमेत् ॥
विपक्षे क्लेशराशीनां यस्मान्नैष विधिर्मतः ।
तस्मान्न विस्मयेतास्मिन्परं ब्रह्मसमाश्रितः ॥
प्रभावैश्वर्यविज्ञानदेवतासंगमादयः ।
योगोन्मेषाद्भवन्तोऽपि नामी तत्त्वविदां मुदे ॥
भूमौ जन्मेति रत्नानां यथा सर्वत्र नोद्भवः ।
तथात्मजमिति ध्यानं सर्वत्राङ्गिनि नोद्भवेत् ॥
तस्य कालं वदन्त्यन्तमुहूर्तं मुनयः परम् ।
अपरस्पन्दमानं हि तत्परं दुर्धरं मनः ॥
तत्कालमपि तद्ध्यानं स्फुरदेकाग्रमात्मनि ।
उच्चैः कर्मोच्चयं भिन्द्याद्वज्रं शैलमिव क्षणात् ॥
कल्पैरप्यम्बुभिः शक्यश्चुलुकैर्नोच्चुलुम्पितुम् ।
कल्पान्तभूः पुनर्वातस्तं मुहुः शोषमानयेत् ॥
रूपे मरुति चित्ते च तथान्यत्र····यो विशेत् ।
लभेत कामितं तद्वदात्मना परमात्मनि ॥
वैराग्यं ज्ञानसंपत्तिरसङ्गः स्थिरचित्तता ।
ऊर्मिस्मयसहत्वं च पञ्च योगस्य हेतवः ॥
आधिव्याधिविपर्यासप्रमादालस्यविभ्रमाः ।
अलाभः सङ्गितास्थैर्यमेते तस्यान्तरायकाः ॥
यः कण्टकैस्तुदत्यङ्गं यश्च लिम्पति चन्दनैः ।
रोषतोषाविशिक्तात्मा तयोरासीत लोष्ठवत् ॥



ज्योतिर्बिन्दुः कलानादः कुण्डलीवायुसंचरः ।
मुद्रामण्डलचोद्यानि निर्बीजीकरणादिकम् ॥
नाभौ नेत्रे ललाटे च ब्रह्मग्रन्थौ च तालुनि ।
अग्निमध्ये रवौ चन्द्रे लूतातन्तौ हृदङ्कुरे ॥
मृत्युंजयं यदन्तेषु तत्तत्त्वं किल मुक्तये ।
अहो मूढधियामेष नयः स्वपरवञ्चनः ॥
कर्माण्यपि यदीमानि साध्यान्येवंविधैर्नयैः ।
अलं तपोजपाप्तेष्टिदानाध्ययनकर्मभिः ॥
यो विचारितरम्येषु क्षणं देहार्तिहारिषु ।
इन्द्रियार्थेषु वश्यात्मा सोऽपि योगी किलोच्यते ॥
यस्येन्द्रियार्थतृष्णापि जर्जरीकुरुते मनः ।
तन्निरोधभुवो धाम्नः स ईप्सीत(?)कथं नरः ॥
आत्मज्ञः संचितं दोषं यातनायोगकर्मभिः ।
कालेन क्षपयन्नेति योगी रोगी च कल्पताम् ॥
लाभेऽलाभे वने वासे मित्रेऽमित्रे प्रियेऽप्रिये ।
सुखे दुःखे समानात्मा भवेत्तद्ध्यानधीः सदा ॥
परे ब्रह्मण्यनूचानो धृतिमैत्रीदयान्वितः ।
अन्यत्र सूनृताद्वाक्यान्नित्यं वाचंयमी भवेत् ॥
संयोगो विप्रलम्भे च निदाने परिदेवने ।
हिंसायामनृते स्तेये भोगरक्षासु तत्परे ॥
जन्तोरनन्तसंसारभूमैनोरथवर्त्मनी ।
आर्तरौद्रे त्यजेद्ध्याने दुरन्तफलदायिनी ॥
बोध्यागमकपाटे ते मुक्तिमार्गार्गले परे ।
सोपाने श्वभ्रलोकस्य तत्त्वेक्षावृत्तिपक्ष्मणी ॥
लेशतोऽपि मनो यावदेते समधितिष्ठतः ।
एष जन्मतरुस्तावदुच्चैः समधिरोहति ॥

ज्वलन्नञ्जनमाधत्ते प्रदीपो न रविः पुनः।
तथाशयविशेषेण ध्यानमारम्भते फलम् ॥
प्रमाणनयनिक्षेपैः सानुयोगैर्विशुद्धधीः।
मतिं तनोति तत्त्वेषु धर्मध्यानपरायणः ॥
अरहस्ये यथा लोके सती काञ्चनकर्मणी।
अरहस्यं तथेच्छन्ति सुधियः परमागमम् ॥
यः स्खलत्यल्पबोधानां विचारेष्वपि मादृशी।
स संसारार्णवे मज्जज्जन्त्वालम्बः कथं भवेत् ॥

(इत्याज्ञा।)

अहो मिथ्यातमः पुंसां युक्तिद्योतैः स्फुरत्यपि।
यदन्धयति चेतांसि रत्नत्रयपरिग्रहे ॥
आशास्महे तदेतेषां''''यत्रास्तकल्मषाः।
इदमेते प्रपश्यन्ति तत्त्वं दुःखनिबर्हणम् ॥

(इत्यपायः।)

अकृत्रिमो विचित्रात्मा मध्ये च त्रसराजिमान्।
मरुत्त्रयीवृतो लोकः प्रान्ते तद्धामनिष्ठितः ॥

(इति लोकः।)

रेणुवज्जन्तवस्तत्र तिर्यगूर्ध्वमधोऽपि च।
अनारतं भ्रमन्त्येते निजकर्मानिलेरिताः ॥

(इति विपाकः।)

इति चिन्तयतो धर्म्यं यतात्मेन्द्रियचेतसः।
तमांसि द्रवमायान्ति द्वादशात्मोदयादिव ॥
भेदं विवर्जिताभेदमभेदं भेदवर्जितम्।
ध्यायन्सूक्ष्मक्रियाशुद्धो निष्क्रियं प्रतिपद्यते ॥
प्रक्षीणोभयकर्माणं जन्मदोषैर्विवर्जितम्।
लब्धात्मगुणमात्मानं मोक्षमाहुर्मनीषिणः ॥



मार्गसूत्रमनुप्रेक्षाः सप्ततत्त्वं जिनेश्वरम्।
ध्यायेदागमचक्षुष्मान्प्रसंख्यानपरायणः ॥
जाने तत्त्वं यथैतिह्यं श्रद्दधे तदनन्यधीः।
मुञ्चेऽहं सर्वमारम्भमात्मन्यात्मानमादधे ॥
आत्मायं बोधिसंपत्तेरात्मन्यात्मानमात्मना।
यदा सूते तदात्मानं लभते परमात्मना ॥
ध्याताात्मा ध्येयमात्मैव ध्यानमात्मा फलं तथा।
आत्मा रत्नत्रयात्मोक्तो यथा युक्तिपरिग्रहः ॥
सुखामृतसुधासूतिस्तद्द्रवेरुदयाचलः।
परं ब्रह्माहमत्रासे तमःपाशवशीकृतः ॥
यदा चकास्ति मे चेतस्तद्ध्यानोदयगोचरम्।
तदाहं जगतां चक्षुः स्यामादित्य इवातमाः ॥
आदौ मध्वमधुप्रान्ते सर्वमिन्द्रियजं सुखम्।
प्रातःस्नायिषु हेमन्ते तोयमुष्णमिवाङ्गिषु ॥
यो दुरामयदुर्देशे बद्धग्रासो यमोऽङ्गिनि।
स्वभावसुभगे तस्य स्पृहा केन निवार्यते ॥
जन्मयौवनसंयोगसुखानि यदि देहिनाम्।
निर्विपक्षाणि को नाम सुधीः संसारमुत्सृजेत् ॥
अनुयाचेत नायूंषि नापि मृत्युमुपाहरेत्।
भृतो भृत्य इवासीत कालावधिमविस्मरन् ॥
महाभोगोऽहमद्यास्मि यत्तत्त्वरुचितेजसा।
सुविशुद्धान्तरात्मासे तमःपारे प्रतिष्ठितः ॥
तन्नास्ति यदहं लोके सुखं दुःखं च नाप्तवान्।
स्वप्नेऽपि न मया प्राप्तो जैनागमसुधारसः ॥
सम्यगेतत्सुधाम्भोधेर्बिन्दुमप्यालिहन्मुहुः।
जन्तुर्न जातु जायेत जन्मज्वलनभाजनः ॥

देवं देवसमासीनं पञ्चकल्याणनायकम्।
चतुस्त्रिंशद्गुणोपेतं प्रातिहार्योपशोभितम्॥
निरञ्जनं जिनाधीशं परमं रमयाश्रितम्।
अच्युतं च्युतदोषौघमभवं भवभृद्गुरुम्॥
सर्वसंस्तुत्यमस्तुत्यं सर्वेश्वरमनीश्वरम्।
सर्वाराध्यमनाराध्यं सर्वाश्रयमनाश्रयम्॥
प्रभवं सर्वविद्यानां सर्वलोकपितामहम्।
सर्वसत्त्वहितारम्भं गतसर्वमसर्वगम्॥
नम्रामरकिरीटांशुपरिवेषनभस्तले।
भवत्पादद्वयद्योतिनखनक्षत्रमण्डलम्॥
स्तूयमानमनूचानैर्ब्रह्मोद्यैर्ब्रह्मकामिभिः।
अध्यात्मागमवेधोभिर्योगिमुख्यैर्महर्द्धिभिः॥
नीरूपं रूपिताशेषमशब्दं शब्दमिष्ठितम्।
अस्पर्शं योगसंस्पर्शमरसं सरसागमम्॥
गुणैः सुरभितात्मानमगन्धगुणसंगमम्।
व्यतीतेन्द्रियसंबन्धमिन्द्रियार्थावभासकम्॥
भुवमानन्दसस्यानामम्भस्तृष्णानलार्चिषाम्।
पवनं दोषरेणूनामग्निमेनोवनीरुहाम्॥
यजमानं सदर्थानां व्योमालेपादिसंपदाम्।
भानुं भव्यारविन्दानां चन्द्रं मोक्षामृतश्रियाम्॥
अतावकगुणं सर्वं त्वं सर्वगुणभाजनः।
त्वं सृष्टिः सर्वकामानां कामसृष्टिनिमीलनः॥
खसुमदीपनिर्वाणे प्राकृते वा त्वयि स्फुटम्।
खसुमदीपनिर्वाणं प्राकृतं स्याज्जगत्रयम्॥
त्रयीमार्गं त्रयीरूपं त्रयीमुक्तं त्रयीपतिम्।
त्रयीव्याप्तं त्रयीतत्त्वं त्रयीचूडामणिस्थितम्॥



जगतां कौमुदीचन्द्रं कामकल्पावनीरुहम्।
गुणचिन्तामणिक्षेत्रं कल्याणागमनाकरम्॥
प्रणिधानप्रदीपेषु साक्षादिव चकास तम्।
ध्यायेज्जगत्त्रयार्चार्हमर्हन्तं सर्वतोमुखम्॥
आहुस्तस्मात्परं ब्रह्म तस्मादैन्द्रं पदं करे।
इमास्तस्मादयत्नाप्याश्चक्राङ्काः क्षितिपश्रियः॥
यं यमध्यात्ममार्गेषु भावमस्यमत्सराः।
तत्पदाय दधत्यन्तः स स तत्रैव लीयते॥
अनुपायानिलोद्भ्रान्तं पुंस्तरूणां मनोदलम्।
तद्भूमावेव भज्येत लीयमानं चिरादपि॥
ज्योतिरेकं····वेषः करीषाश्मसमित्समः।
तत्प्राह्युपायदिङ्मूढा भ्रमन्ति भवकानने॥
परापरपरं देवमेवं चिन्तयतो यतेः।
भवन्त्यतीन्द्रियास्ते ते भावा लोकोत्तरश्रियः॥
व्योमच्छाया नरोत्सङ्गि यथामूर्तमपि स्वयम्।
योगयोगात्तथात्मायं भवेत्प्रत्यक्षवीक्षणः॥
न ते गुणा न तज्ज्ञानं न सा दृष्टिर्न तत्सुखम्।
यद्योगद्योतनेन स्यादात्मन्यस्ततमश्चये॥
देवं जगत्रयीनेत्रं व्यन्तराद्याश्च देवताः।
समं पूजाविधानेषु पश्यन्दूरं व्रजेदधः(म्)॥
ताः शासनाधिरक्षार्थं कल्पिताः परमागमे।
अतो यज्ञांशदानेन माननीयाः सुदृष्टिभिः॥
तच्छासनैकभक्तीनां सुदृशां सुव्रतात्मनाम्।
स्वयमेव प्रसीदन्ति ताः पुंसां सपुरंदराः॥
तद्धामबद्धकक्षाणां रत्नत्रयमहीयसाम्।
उभे कामदुघे स्यातां द्यावाभूमी मनोरथैः॥

कुर्यात्तपो जपेन्मन्त्रान्नमस्येद्वापि देवताः।
सस्पृहं यदि तच्चेतो रिक्तः सोऽमुत्र चेह च॥
ध्यायेद्वा वाङ्मयं ज्योतिर्गुरुपञ्चकवाचकम्।
एतद्धि सर्वविद्यानामधिष्ठानमनश्वरम्॥
ध्यायन्विन्यस्य देहेऽस्मिन्निदं मन्दरमुद्रया।
सर्वनामादिवर्णाहं वर्णाद्यन्तं सबीजकम्॥
तपःश्रुतविहीनोऽपि तद्ध्यानाविद्धमानसः।
न जातु तमसां स्पृष्टा तत्तत्त्वरुचिदीप्रधीः॥
अधीत्य सर्वशास्त्राणि विधाय च तपः परम्।
इदं मन्त्रं स्मरन्त्यन्ते मुनयोऽनन्तचेतसः॥
मन्त्रोऽयं स्मृतिधाराभिश्चित्तं यस्याभिवर्षति।
तस्य सर्वे प्रशाम्यन्ति क्षुद्रोपद्रवपांसवः॥
अपवित्रः पवित्रो वा सुस्थितो दुःस्थितोऽपि वा।
भवत्येतत्स्मृतिर्जन्तुरास्पदं सर्वसंपदाम्॥
उक्तं लोकोत्तरं ध्यानं किंचिल्लौकिकमुच्यते।
प्रकीर्णकप्रपञ्चेन दृष्टादृष्टाफलाश्रयम्॥
पञ्चमूर्तिमयं बीजं नासिकाग्रे विचिन्तयन्।
निधाय संगमं चेतो दिव्यज्ञानमवाप्नुयात्॥
यत्र यत्र हृषीकेऽस्मिन्निदधीताचलं मनः।
तत्र तत्र लभेतायं बाह्यग्राह्याश्रयं सुखम्॥
स्थूलं सूक्ष्मं द्विधा ध्यानं तत्त्वबीजसमाश्रयम्।
आद्येन लभते कामं द्वितीयेन परं पदम्॥
पद्ममुत्थापयेत्पूर्वं नाडीं संचालयेत्ततः।
मरुच्चतुष्टयं पश्चात्प्रचारयतु चेतसि॥
दीपहस्तो यथा कश्चित्किंचिदालोक्य तं त्यजेत्।
ज्ञानेन ज्ञेयमालोक्य पश्चात्तं ज्ञानमुत्सृजेत्॥



सर्वपापाश्रवे क्षीणे ध्याने भवति भावना।
पापोपहतबुद्धीनां ध्यानवार्तापि दुर्लभा॥
दधिभावगतं क्षीरं न पुनः क्षीरतां व्रजेत्।
तत्त्वज्ञानविशुद्धात्मा पुनः पापैर्न लिप्यते॥
मन्दं मन्दं क्षपेद्वायुर्मन्दं मन्दं विनिक्षिपेत्।
न क्वचिद्धार्यते वायुर्न च शीघ्रं प्रमुच्यते॥
रूपं स्पर्शं रसं गन्धं शब्दं चैव विदूरतः।
आसन्नमिव गृह्णन्ति विचित्रा योगिनो गतिः॥
दग्धे बीजे यथात्यन्तं प्रादुर्भवति नाङ्कुरः।
कर्मबीजे तथा दग्धे न रोहति भवाङ्कुरः॥
नाभौ चेतसि नासाग्रे दृष्टौ भाले च मूर्धनि।
विहारयेन्मनो हंसं सदा कायसरोवरे॥
यायाद्व्योम्नि जले तिष्ठेन्निषीदेदनलार्चिषि।
मनोमरुत्प्रयोगेण शस्त्रैरपि न बाध्यते॥
जीवः शिवः शिवोर्जः.... किं भेदोऽस्त्यत्र कश्चन।
पाशबद्धो भवेज्जीवः पाशमुक्तः शिवः पुनः॥
साकारं नश्वरं सर्वमनाकारं न दृश्यते।
पक्षद्वयविनिर्मुक्तं कथं ध्यायन्ति योगिनः॥
अत्यन्तं मलिनो देहः पुमानत्यन्तनिर्मलः।
देहादेनं पृथक्कृत्वा तस्मान्नित्यं विचिन्तयेत्॥
तोयमध्ये यथा तैलं पृथग्भावेन तिष्ठति।
तथा शरीरमध्येऽस्मिन्पुमानास्ते पृथक्तया॥
दध्नः सर्पिरिवात्मायमुपायेन शरीरतः।
पृथक्क्रियेत तत्त्वज्ञैश्चिरं संसर्गवानपि॥
पुष्पामोदौ तरुच्छाये यद्वत्सकलनिष्कले।
तद्वत्तौ देहदेहस्थौ यद्वा लपनबिम्बवत्॥

एकस्तम्भं नवद्वारं पञ्च पञ्चजनाश्रितम् ।
अनेककक्षमेवेदं शरीरं योगिनां गृहम् ॥
ध्यानामृतान्न तृप्तस्य क्षान्तियोषिद्रतस्य च ।
अत्रैव रमते चित्तं योगिनो योगबान्धवे ॥
रज्जुभिः कृष्यमाणः स्याद्यथा पारिप्लवो हयः ।
कष्टस्तथेन्द्रियैरात्मा ध्याने लीयेत न क्षणम् ॥
रक्षां संहरणं सृष्टिं गोमुद्रामृतवर्षणम् ।
विधाय चिन्तयेदाप्तमाप्तरूपधरः स्वयम् ॥
धूमवन्निर्वमेत्पापं गुरुबीजेन तादृशा ।
गृह्णीयादमृतं तेन तद्वर्णेन मुहुर्मुहुः ॥
संन्यस्ताभ्यामधोङ्घ्रिभ्यामूर्वोरुपरि युक्तितः ।
भवेच्च समगुल्फाभ्यां पद्मवीरसुखासनम् ॥

तत्र सुखासनस्येदं लक्षणम्—

गुल्फोत्तानकराङ्गुष्ठे रेखारोमालिनासिकाः ।
समदृष्टिः समाः कुर्युर्नातिस्तब्धो न वामनः ॥
तालत्रिभागमध्याङ्घ्रिः स्थिरशीर्षशिरोऽधरः ।
समनिष्पन्दपार्ष्ण्यग्रजानुभ्रूहस्तलोचनः ॥
नखाक्रुतिर्न कण्डूतिर्नौष्ठभक्तिर्न कम्पति ।
न पर्वगणितिः कार्या नोक्तिरन्दोलितः स्मितिः ॥
न कुर्याद्दूरदृक्पातं नैव केकवदीक्षणम् ।
न स्पन्दं पक्ष्ममालानां तिष्ठेन्नासाग्रदर्शनः ॥
विक्षेपाक्षेपसंमोहदूरीहररहिते हृदि ।
लब्धतत्त्वे करस्थोऽयमशेषो ध्यानजो विधिः ॥

इत्युपासकाध्ययने ध्यानविधिर्नामैकोनचत्वारिंशः कल्पः ।

यस्यां पदद्वयमलंकृतियुग्मयोग्यं लोकत्रयाम्बुजसरः प्रविहारिहारि ।
तां वाग्विलासवसतिं सलिलेन देवीं सेवे कविद्युतरुमण्डनकल्पवल्लीम् ॥
(इति तोयम् ।)



यामन्तरेण सकलार्थसमर्थनोऽपि बोधोऽवकेशितरुवन्न फलार्थिसेव्यः ।
सोऽस्य''''वेद्यपि ययानुगतस्त्रिलोक्या सेव्यः सुरद्रुरिव तं प्रयजेयगन्धैः ॥
(इति गन्धम् ।)

या स्वल्पवस्तुरचनापि मितप्रवृत्तिः संस्कारतो भवति तद्विपरीतलक्ष्मीः ।
स्वर्वल्लरीवनलतेव सुधानुबन्धात्तामक्षतस्थितिमहं सदकैः श्रयामि ॥
(इत्यक्षतम् ।)

यद्बीजमल्पमपि सज्जनधीधरायां लब्धप्रवृद्धिविविधानवधिप्रबन्धैः ।
सस्यैरपूर्वरसवृत्तिभिरेव रोहत्याश्चर्यगोचरविधिं प्रसवैर्भजेताम् ॥
(इति पुष्पम् ।)

यास्पष्टताधिकविधिः परतन्त्रनीतिः प्रायः कलापरिगतापि मनः प्रसूते ।
स्पष्टं स्वतन्त्रमुपशान्तकलं नृणां च चित्रा हि वस्तुगतिरन्नविधैर्यजेत ॥
(इति चरुम् ।)

एकं पदं बहुपदापि ददासि तुष्टा वर्णात्मिकापि च करोषि न वर्णभाजम् ।
सेवे तथापि भवतीमथवा जनोऽर्थी दोषं न पश्यति तदस्तु तवैष दीपः ॥
(इति दीपम् ।)

चक्षुः परं करणकन्दरदूरितेऽर्थे मोहान्धकारविधुतौ परमः प्रकाशः ।
तद्धामगामिपथवीक्षणरत्नदीपस्त्वं सेव्यसे तदिह देवि जनेन धूपैः ॥
(इति धूपम् ।)

चिन्तामणित्रिदिवधेनुसुरद्रुमाद्याः पुंसां मनोरथपथप्रथितप्रभावाः ।
भावा भवन्ति नियतं तव देवि सम्यक्सेवाविधेस्तदिदमस्तु मुदे फलं ते ॥
(इति फलम् ।)

कलधौतकमलमौक्तिकदुकूलमणिजालचामरप्रायैः ।
आराधयामि देवीं सरस्वतीं सकलमङ्गलैर्भावैः ॥

स्याद्वादभूधरभवा मुनिमाननीया देवैरनन्यशरणैः समुपासनीया ।
स्वान्ताश्रिताखिलकलङ्कहरप्रवाहा वागापगास्तु मम बोधगजावगाहा ॥
मूर्धाभिषिक्तोऽभिषवाज्जिनानामर्च्योऽर्चनात्संस्त''''वांस्तवार्हः ।
जपी जपाद्ध्यानविधेरबाध्यः श्रुताश्रितश्रीः श्रुतसेवनाच्च ॥

दृष्टस्त्वं जिन सेवितोऽसि नितरां भावैरनन्याश्रयैः
स्निग्धस्त्वं ....तथापि यत्समविधिर्भक्ते विरक्तेऽपि च ।
मच्चेत्तः पुनरेतदीश भवति प्रेमप्रकृष्टं ततः
किं भाषे परमत्र यामि भवतो भूयात्पुनर्दर्शनम् ॥

इत्युपासकाध्ययने श्रुताराधनविधिर्नाम चत्वारिंशत्तमः कल्पः ।

पर्वाणि प्रोषधान्याहुर्मासे चत्वारि तानि च ।
पूजाक्रियाव्रताधिक्याद्धर्मकर्मात्र बृंहयेत् ॥
रसत्यागैकभक्तैकस्थानोपवसनक्रियाः ।
यथाशक्तिविधेयाः स्युः पर्वसन्धौ च पर्वणि ॥
तन्नैरन्तर्यतिथि....तीर्थनक्षत्रपूर्वकः ।
उपवासविधिश्चित्रश्चिन्त्यः श्रुतसमाश्रयः ॥
स्नानगन्धाङ्गसंस्कारभूषायोषाविषक्तधीः ।
निवृत्तिसर्वसावद्यक्रियः संयमतत्परः ॥
देवागारे गिरौ चापि गृहे वा गहनेऽपि वा ।
उपोषितो भवेन्नित्यं धर्मध्यानपरायणः ॥
पुंसः कृतोपवासस्य बह्वारम्भरतात्मनः ।
कायक्लेशः प्रजायेत गजस्नानसमक्रियः ॥
अनवेक्षाप्रतिलेखनदुष्कर्मारम्भदुर्मनस्काराः ।
आवश्यकविरतियुताश्चतुर्थमेते विनिघ्नन्ति ॥
विशुद्धेन्नान्तरात्मायं कायक्लेशविधिं विना ।
किमग्नेरन्यदस्तीह काञ्चनाश्मविशुद्धये ॥
हस्ते चिन्तामणिस्तस्य दुःखद्रुमदवानलः ।
पवित्रं यस्य चारित्रैश्चित्तं सुकृतिजन्मनः ॥

इत्युपासकाध्ययने प्रोषधोपवासविधिर्नामैकचत्वारिंशत्तमः कल्पः ।

यः सकृत्सेव्यते भावः स भोगो भोजनादिकः ।
भूषादिपरिभोगः स्यात्पौनःपुन्येन सेवनात् ॥



परिमाणं तयोः कुर्याच्चित्तव्याप्तिनिवृत्तये ।
प्राप्ते योग्ये च सर्वस्मिन्निच्छया नियमं भजेत् ॥
यमश्च नियमश्चेति द्वे त्याज्ये वस्तुनी स्मृते ।
यावज्जीवं यमो ज्ञेयः सावधिर्नियमः स्मृतः ॥
पलाण्डुकेतकीनिम्बसुमनःसूरणादिकम् ।
त्यजेदाजन्म तद्रूपबहुप्राणिसमाश्रयम् ॥
दुष्पक्वस्य निषिद्धस्य जन्तुसंबन्धमिश्रयोः ।
अवीक्षितस्य च प्राशस्तत्संख्याक्षतिकारणम् ॥
इत्थं नियतवृत्तिः स्यादनिच्छोऽप्याश्रयाश्रयः ।
नरो नरेषु देवेषु मुक्तिश्रीसविधागमः ॥

इत्युपासकाध्ययने भोगपरिभोगपरिमाणविधिर्नाम द्विचत्वारिंशत्तमः कल्पः ।

यथाविधि यथादेशं यथाद्रव्यं यथागमम् ।
यथापात्रं यथाकालं दानं देयं गृहाश्रमैः ॥
आत्मनः श्रेयसेऽन्येषां रत्नत्रयसमृद्धये ।
स्वपरानुग्रहायेत्थं यत्स्यात्तद्दानमिष्यते ॥
दातृपात्रविधिद्रव्यविशेषात्तद्विशिष्यते ।
यथा घना घनोद्गीर्णं तोयं भूमिसमाश्रयम् ॥
दातानुरागसंपन्नः पात्रं रत्नत्रयोचितम् ।
सत्कारः स्याद्विधिद्रव्यं तपःस्वाध्यायसाधकम् ॥
परलोकधिया कश्चि.......दैहिकचेतसा ।
औचित्य मनसा कश्चित्सतां वित्तव्ययस्त्रिधा ।
परलोकैहिकौचित्येष्वस्ति येषां न धीः समाः ॥
धर्मः कार्यं यशश्चेति तेषामेतत्त्रयं कुतः ।
अभयाहारभैषज्यश्रुतभेदाच्चतुर्विधम् ॥
दानं मनीषिभिः प्रोक्तं भक्तिशक्तिसमाश्रयम् ।
सौरूप्यमभयादाहुराहाराद्भोगवान्भवेत् ॥

आरोग्यमौषधाज्ज्ञेयं श्रुतात्स्याच्छ्रुतकेवली ।
अभयं सर्वसत्त्वानामादौ दद्यात्सुधीः सदा ॥
तद्धीने हि वृथा सर्वः परलोकोचितो विधिः ।
दानमन्यद्भवेन्मा वा नरश्चेदभयप्रदः ॥
सर्वेषामेव दानानां यतस्तद्दानमुत्तमम् ।
तेनाधीतं श्रुतं सर्वं तेन तप्तं तपः परम् ॥
तेन कृत्स्नं कृतं दानं यः स्यादभयदानवान् ।
नवोपचारसंपन्नः समेतः सप्तभिर्गुणैः ।
अन्नैश्चतुर्विधैः शुद्धैः साधूनां कल्पयेत्स्थितिम् ॥
प्रतिग्रहोच्चासनपादपूजाप्रणामवाक्कायमनःप्रसादाः ।
विधाविशुद्धिश्च नवोपचाराः कार्या मुनीनां गृहसंश्रितेन ॥
श्रद्धा तुष्टिर्भक्तिर्विज्ञानमलुब्धता क्षमा शक्तिः ।
यत्रैते सप्त गुणास्तं दातारं प्रशंसन्ति ॥

तत्र विज्ञानस्येदं लक्षणम्—

विवर्णं विरसं विद्धमसात्म्यं प्रभृतं च यत् ।
मुनिभ्योऽन्नं न तद्देयं यच्च भुक्तं गदावहम् ॥
उच्छिष्टं नीचलोकार्हमन्योद्दिष्टं विगर्हितम् ।
न देयं दुर्जनस्पृष्टं देवयक्षादिकल्पितम् ॥
ग्रामान्तरात्समानीतं मन्त्रातीतमुपायनम् ।
न देयमापणक्रीतं विरुद्धं वा यथर्तुकम् ॥
दधिसर्पिषयोभक्ष्यप्रायं पर्युषितं मतम् ।
गन्धवर्णरसभ्रष्टमन्यत्सर्वं विनिन्दितम् ॥
बालग्लानतपःक्षीणवृद्धव्याधिसमन्वितान् ।
मुनीनुपचरेन्नित्यं यथा ते स्युस्तपःक्षमाः ॥
शाठ्यं सर्वमवज्ञानं परिप्लवमसंयमम् ।
वाक्पारुष्यं विशेषेण वर्जयेद्भोजनक्षणे ॥



अभक्तानां कदर्याणामव्रतानां च सद्मसु ।
न भुञ्जीत तथा साधुर्दैन्यकारुण्यकारिणाम् ॥
नाहरन्ति महासत्त्वाश्चित्ते नाप्यनुकम्पिताः ।
किं तु ते दैन्यकारुण्यसंकल्पोचितवृत्तयः ॥
धर्मेषु स्वामिसेवायां सुतोत्पत्तौ च कः सुधीः ।
अन्यत्र कार्यदैवाभ्यां प्रतिहस्तं समादिशेत् ॥
आत्मवित्तपरित्यागात्परैर्धर्मविधायने ।
निःसंदेहमवाप्नोति परभोगाय तत्फलम् ॥
भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरस्त्रियः ।
विभवो दानशक्तिश्च स्वयं धर्मकृतेः फलम् ॥
शिल्पिकारुकवाक्पण्यसंभलीपतितादिषु ॥
देहस्थितिं न कुर्वीत लिङ्गिलिङ्गोपजीविषु ।
दीक्षायोग्यास्त्रयो वर्णाश्चत्वारश्च विधोचिताः ॥
मनोवाक्कायधर्माय मताः सर्वेऽपि जन्तवः ।
पुष्पादिरशनादिर्वा न स्वयं धर्म एव हि ॥
क्षित्यादिरिव धान्यस्य किं तु भावस्य कारणम् ।
युक्तं हि श्रद्धया साधु सकृदेव मनो नृणाम् ।
परां शुद्धिमवाप्नोति लोहं विद्धं रसैरिव ।
तपोदानार्चनाहीनं मनः सदपि देहिनाम् ।
तत्फलप्राप्तये न स्यात्कुशूलस्थितबीजवत् ।
आवेशिकाश्रितज्ञातिदीनात्मसु यथाक्रमम् ।
यथौचित्यं यथाकालं यज्ञपञ्चकमाचरेत् ॥
काले कलौ चले चित्ते देहे चान्नादिकीटके ।
एतच्चित्रं यदद्यापि जिनरूपधरा नराः ।
यथा पूज्यं जिनेन्द्राणां रूपं लेपादिनिर्मितम् ॥
तथा पूर्वमुनिच्छाया पूज्याः संप्रति संयताः ॥

तदुत्तमं भवेत्पात्रं यत्र रत्नत्रयं नरे ।
देशव्रती भवेन्मध्यमन्यच्चासंयतः सुदृक् ॥
यत्र रत्नत्रयं नास्ति तदपात्रं विदुर्बुधाः ।
उप्तं तत्र वृथा सर्वमूषरायां क्षिताविव ॥
पात्रे दत्तं भवेदन्नं पुण्याय गृहमेधिनाम् ।
शुक्ताविव हि मेघानां जलं मुक्ताफलं भवेत् ॥
मिथ्यात्वग्रस्तचित्तेषु चारित्राभासभागिषु ।
दोषायैव भवेद्दानं पयःपानमिवाहिषु ॥
कारुण्यादथवौचित्यात्तेषां किंचिद्दिशन्नपि ।
दिशेदुद्धृतमेवान्नं गृहे भुक्तिं न कारयेत् ॥
सत्कारादिविधावेषां दर्शनं दूषितं भवेत् ।
यथा विशुद्धमप्यम्बु विषभाजनसंगमात् ॥
शाक्यनास्तिकयागज्ञजटिलाजीवकादिभिः ।
सहावासं सहालापं तत्सेवां च विवर्जयेत् ॥
अज्ञाततत्त्वचेतोभिर्दुराग्रहमलीमसैः ।
युद्धमेव भवेद्गोष्ठ्यां दण्डादण्डि कचाकचि ॥
भयलोभोपरोधाद्यैः कुलिङ्गिषु निषेवणैः ।
अवश्यं दर्शनं म्लायेन्नीचैराचरणे सति ॥
बुद्धिपौरुषयुक्तेषु दैवायत्तविभूतिषु ।
नृषु कुत्सितसेवायां दैन्यमेवातिरिच्यते ॥
समयी श्रावकः साधुः सूरिः समयदीपकः ।
तत्पुनः पञ्चधा पात्रमामनन्ति मनीषिणः ॥
गृहस्थो वा यतिर्वापि जैनं समयमाश्रितः ।
यथाकालमनुप्राप्तः पूजनीयः सुदृष्टिभिः ॥
ज्योतिर्मन्त्रनिमित्तज्ञः सुप्रज्ञः कार्यकर्मसु ।
मान्यः समयिभिः सम्यक्परोक्षार्थसमर्थधीः ॥



दीक्षायात्राप्रतिष्ठाद्याः क्रियास्तद्विरहे कुतः ।
तदर्थं परपृच्छायां कथं च समयोन्नतिः ॥
मूलोत्तरगुणश्लाघ्यैस्तपोभिर्निष्ठितस्थितिः ।
साधुः साधु भवेत्पूज्यः पुण्योपार्जितपण्डितैः ॥
ज्ञानकाण्डे क्रियाकाण्डे चातुर्वर्ण्यपुरःसरः ।
सूरिर्देव इवाराध्यः संसाराब्धितरण्डकः ॥
लोकवित्वकवित्वाद्यैर्वादवाग्मित्वकौशलैः ।
मार्गप्रभावनोद्युक्ताः सन्तः पूज्या विशेषतः ॥
मान्यं ज्ञानं तपोहीनं ज्ञानहीनं तपोर्हितम् ।
द्वयं यत्र स देवः स्याद्विहीनो गुणपूरणः ॥
अर्हद्रूपे नमोऽस्तु स्याद्विरतौ विनयक्रिया ।
अन्योन्यक्षुल्लके चार्हमिच्छाकारवचः सदा ॥
अनुवीचीवचो भाष्यं सदा पूज्यादिसंनिधौ ।
यथेष्टं हसनालापान्वर्जयेद्गुरुसंनिधौ ॥
मुक्तिमात्रप्रदाने हि का परीक्षा तपस्विनाम् ।
ते सन्तः सन्त्वसन्तो वा गृही दानेन शुद्धयति ॥
सर्वारम्भप्रवृत्तानां गृहस्थानां धनव्ययः ।
बहुधास्ति ततोऽत्यर्थं न कर्तव्या विचारणा ॥
यथा यथा विशिष्यन्ते तपोज्ञानादिभिर्गुणैः ।
तथा तथाधिकं पूज्या मुनयो गृहमेधिभिः ॥
दैवाल्लब्धं धनं धन्यैर्वप्तव्यं समयाश्रिते ।
एको मुनिर्भवेल्लभ्यो न लभ्यो वा यथागमम् ॥
उच्चावचजनप्रायः समयोऽयं जिनेशिनाम् ।
नैकस्मिन्पुरुषे तिष्ठेदेकस्तम्भ इवालयः ॥
ते नामस्थापनाद्रव्यभावन्यासैश्चतुर्विधाः ।
भवन्ति मुनयः सर्वे दानमानादिकर्मसु ॥

उत्तरोत्तरभावेन विधिस्तेषु विशिष्यते ।
पुण्यार्जनगृहस्थानां जिनप्रतिकृतिष्विव ॥

अतद्गुणेषु भावेषु व्यवहारप्रसिद्धये ।
यत्संज्ञाकर्म तन्नाम नरेच्छावशवर्तनात् ॥

साकारे वा निराकारे काष्ठादौ यन्निवेशनम् ।
सोऽयमित्यवधानेन स्थापना सा निगद्यते ॥

आगामिगुणयोग्यार्थो द्रव्यन्यासस्य गोचरः ।
तत्कालपर्ययाक्रान्तं वस्तुभावो विधीयते ॥

यदात्मवर्णनप्रायं क्षणिकाहार्यविभ्रमम् ।
परप्रत्ययसंभूतं दानं तद्राजसं मतम् ॥

पात्रापात्रे समावेक्ष्यमसत्कारमसंस्तुतम् ।
दासभृत्यकृतोद्योगं ज्ञानं तामसमूचिरे ॥

अतिथेयं स्वयं यत्र यत्र पात्रनिरीक्षणम् ।
गुणाः श्रद्धादयो यत्र दानं तत्सात्त्विकं विदुः ॥

उत्तमं सात्त्विकं दानं मध्यमं राजसं भवेत् ।
दानानामेव सर्वेषां जघन्यं तामसं पुनः ॥

यद्दत्तं तदमुत्र स्यादित्यसत्यपरं वचः ।
गावः पयः प्रयच्छन्ति किं न तोयतृणाशनाः ॥

मुनिभ्यः शाकपिण्डोऽपि भक्त्या काले प्रकल्पितः ।
भवेदगण्यपुण्यार्थं भक्तिश्चिन्तामणिर्यतः ॥

अभिमानस्य रक्षार्थं विनयायागमस्य च ।
भोजनादिविधानेषु मौनमूचुर्जिनेश्वराः ॥

लौल्यत्यागात्तपोवृद्धिरभिमानस्य रक्षणे ।
ततश्च समवाप्नोति मनःसिद्धिं जगत्त्रये ॥

श्रुतस्य प्रश्रयाच्छ्रेयः समृद्धेः स्यात्तमाश्रयः ।
ततो मनुजलोकस्य प्रसीदति सरस्वती ॥



शारीरमानसागन्तुव्याधिसंबाधसंभवे ।
साधुसंयमिनां कार्यः प्रतीकारो गृहाश्रितैः ॥

तत्र दोषधातुमलविकृतिजनिताः शारीराः, दौर्मनस्यदुःस्वप्नसाध्वसादिसंपादिता मानसाः, शीतकृताभिघातादिकृता आगन्तवः ।

मुनीनां व्याधियुक्तानामुपेक्षायामुपासकैः ।
आवासपुस्तकाहारसौकार्यादिविधानकैः ॥

अङ्गपूर्वप्रकीर्णोक्तं सूक्तं केवलिभाषितम् ।
नश्येन्निर्मूलतः सर्वं श्रुतस्कन्धधरात्यये ॥

प्रश्रयोत्साहतानन्दस्वाध्यायोचितवस्तुभिः ।
श्रुतवृद्धान्मुनीन्कुर्वञ्जायते श्रुतपारगः ॥

श्रुतात्तत्त्वपरिज्ञानं श्रुतात्समयवर्धनम् ।
श्रेयोर्थिना श्रुताभावे सर्वमेतत्तमस्यते ॥

अस्त्रधारणवद्बाह्ये क्लेशे हि सुलभा नराः ।
यथार्थज्ञानसंपन्नाः सौडीरा इव दुर्लभाः ॥

ज्ञानभावनया हीने कायक्लेशिनि केवलम् ।
कर्मवाहीकवत्किंचिद्व्येति किंचिदुदेति च ॥

सृणिवज्ज्ञानमेवास्य वशायाशयदन्तिनः ।
तद्वते च बहिः क्लेशः क्लेश एव परं भवेत् ॥

बहिस्तपः स्वतोऽभ्येति ज्ञानं भावयतः सतः ।
क्षेत्रज्ञे यन्निमग्नेऽत्र कुतः स्युरपराः क्रियाः ॥

यदज्ञानी युगैः कर्म बहुभिः क्षपयेन्न वा ।
तज्ज्ञानी योगसंपन्नः क्षपयेत्क्षणतो ध्रुवम् ॥

ज्ञानी पटुस्तदैव स्याद्बहिः क्लेष्टुर्व्रतेऽखिले ।
ज्ञातुर्ज्ञानलवे यस्मान्न पटुत्वं युगैरपि ॥

शब्दैतिह्यैर्न गीः शुद्धा यस्य शुद्धा न धीर्नयैः ।
स परप्रत्ययात्क्लिश्यन्भवेदन्धसमः पुमान् ॥

स्वरूपं रचना शुद्धिर्भूषार्थश्च समासतः ।
प्रत्येकमागमस्यैतद्वैविध्यं प्रतिपद्यते ॥

तत्र स्वरूपं च द्विविधम्—अक्षरम्, अनक्षरं च । रचना द्विविधा—गद्यम्, पद्यं च । शुद्धिर्द्विविधा—प्रमादप्रयोगविरहः, अर्थव्यञ्जनविकलतापरिहारश्च । भूषा द्विविधा—वागलंकारः, अर्थालंकारश्च । अर्थो द्विविधः—चेतनोऽचेतनश्च, जातिर्व्यक्तिश्चेति वा ।

सार्धं सचित्तनिक्षिप्तवृत्ताभ्यां दानहानये ।
अन्योपदेशमात्सर्यकालातिक्रमणक्रियाः ॥
नतेर्गोत्रं श्रियो दानादुपास्ते सर्वसेव्यताम् ।
भक्तेः कीर्तिमवाप्नोति स्वयं दाता यतीन्भजन् ॥

इत्युपासकाध्ययने दानविधिर्नाम त्रिचत्वारिंशत्तमः कल्पः ।

मूलव्रतं व्रतान्यर्चापर्वकर्माकृषिक्रियाः ।
दिवा नवविधं ब्रह्म सचित्तस्य विवर्जनम् ॥
परिग्रहपरित्यागो भुक्तिमात्रानुमान्यता ।
तद्धानौ च वदन्त्येतान्येकादश यथाक्रमम् ॥
अवधिव्रतमारोहेत्पूर्वपूर्वव्रतस्थितः ।
सर्वत्रापि समाः प्रोक्ता ज्ञानदर्शनभावनाः ॥
षडत्र गृहिणो ज्ञेयास्त्रयः स्युर्ब्रह्मचारिणः ।
भिक्षुकौ द्वौ तु निर्दिष्टौ ततः स्यात्सर्वतो यतिः ॥
तत्तद्गुणप्रधानत्वाद्यतयोऽनेकधा स्मृताः ।
निरुक्तिं युक्तितस्तेषां वदतो मन्निबोधत ॥
जित्वेन्द्रियाणि सर्वाणि यो वेत्त्यात्मानमात्मना ।
गृहस्थो वानप्रस्थो वा स जितेन्द्रिय उच्यते ॥
मानमायामदामर्षक्षपणात्क्षपणः स्मृतः ।
यो न श्रान्तो भवेद्भ्रान्तेस्तं विदुः श्रमणं बुधाः ॥
यो हताशः प्रशान्ताशस्तमाशाम्बरमूचिरे ।
यः सर्वसङ्गसंत्यक्तः स नग्नः परिकीर्तितः ॥



रेषणात्क्लेशराशीनामृषिमाहुर्मनीषिणः ।
मान्यत्वादात्मविद्यानां महद्भिः कीर्त्यते मुनिः ॥
यः पापपाशनाशाय यतते स यतिर्भवेत् ।
योऽनीहो देहगेहेऽपि सोऽनगारः सतां मतः ॥
आत्माशुद्धिकरैर्यस्य न सङ्गः कर्मदुर्जनैः ।
स पुमाञ्शुचिराख्यातो नाम्बुसंप्लुतमस्तकः ॥
धर्मकर्मफलेऽनीहो निवृत्तो धर्मकर्मणः ।
तं निर्ममभुशन्तीह केवलात्मपरिच्छदम् ॥
यः कर्मद्वितयातीतस्तं मुमुक्षुं प्रचक्षते ।
पाशैर्लोहस्य हेम्नो वा यो बद्धो बद्ध एव सः ॥
निर्ममो निरहंकारो निर्माणमदमत्सरः ।
निन्दायां संस्तवे चैव समधीः शंसितव्रतः ॥
योऽवगम्य यथा नाद्यं तत्त्वं तत्त्वैकभावनः ।
वाचंयमः स विज्ञेयो न मौनी पशुवन्नरः ॥
श्रुते व्रते प्रसंख्याने संयमे नियमे यमे ।
यस्योच्चैः सर्वदा चेतोः सोऽनूचानः प्रकीर्तितः ॥
योऽक्षस्तेनेष्वविश्वस्तः शाश्वते पथि तिष्ठितः ।
समस्तसत्त्वविश्वास्यः सोऽनाश्वानिह गीर्यते ॥
तत्त्वे पुमान्मनः पुंसि स तुष्यक्षकदम्बकम् ।
यस्य युक्तं स योगी स्यान्न परेच्छादुरीहितः ॥
कामः क्रोधो मदो माया लोभश्चेत्यग्निपञ्चकम् ।
येनेदं साधितं स स्यात्कृती पञ्चाग्निसाधकः ॥
ज्ञानं ब्रह्मदयाब्रह्मब्रह्मकामविनिग्रहः ।
सम्यगत्र वसन्नात्मा ब्रह्मचारी भवेन्नरः ॥
क्षान्तियोषिति यो सक्तः सम्यग्ज्ञानातिथिप्रियः ।
स गृहस्थो भवेन्नूनं मनोदैवतसाधकः ॥

ग्राम्यमर्थं बहिश्चान्तर्यः परित्यज्य संयमी।
वानप्रस्थः स विज्ञेयो न वनस्थः कुटुम्बवान्॥
संसाराग्निशिखाच्छेदो येन ज्ञानासिना कृतः।
तं शिखाच्छेदिनं प्राहुर्न तु मुण्डितमस्तकम्॥
कर्मात्मनोर्विवेक्ता यः क्षीरनीरसमानयोः।
भवेत्परमहंसोऽसौ नाग्निवत्सर्वभक्षकः॥
ज्ञानैर्मनो वपुर्वृत्तैर्नियमैरिन्द्रियाणि च।
नित्यं यस्य प्रदीप्तानि स तपस्वी न वेषवान्॥
पञ्चेन्द्रियप्रवृत्ताख्यास्तिथयः पञ्च कीर्तिताः।
संसारे श्रयहेतुत्वात्ताभिर्मुक्तोऽतिथिर्भवेत्॥
अद्रोहः सर्वसत्त्वेषु यज्ञो यस्य दिने दिने।
स पुमान्दीक्षितात्मा स्यान्नत्वजादियमाशयः॥
दुष्कर्मदुर्जनास्पर्शी सर्वसत्त्वहिताशयः।
स श्रोत्रियो भवेत्सत्यं न तु यो बाह्यशौचवान्॥
अध्यात्माग्नौ दयामन्त्रैः सम्यक्कर्मसमिच्चयम्।
यो जुहोति स होता स्यान्न बाह्याग्निसमेधकः॥
भावपुष्पैर्यजेद्देवं व्रतपुष्पैर्वपुर्गृहम्।
क्षमापुष्पैर्मनोवह्निं यः स यष्टा सतां मतः॥
षोडशानामुदारात्मा यः प्रभुर्भावनर्त्विजाम्।
सोऽध्वर्युरिह बोद्धव्यः शिवशर्माध्वरोद्धुरः॥
विवेकं वेदयेदुच्चैर्यः·········शरीरिणोः।
स प्रीत्यै विदुषां वेदो नाखिलक्षयकारणम्॥
जातिर्जरा मृतिः पुंसां त्रयी संसृतिकारणम्।
एषा त्रयी यतस्त्रय्याः क्षीयते सा त्रयी मता॥
अहिंसः सद्व्रतो ज्ञानी निरीहो निष्परिग्रहः।
यः स्यात्स ब्राह्मणः सत्यं न तु जातिमदान्धलः॥



सा जातिः परलोकाय यस्याः सद्धर्मसंभवः।
न हि सस्याय जायेत शुद्धा भूर्बीजवर्जिता॥
स शैवो यः शिवज्ञात्मा स बौद्धो योऽन्तरात्मभृत्।
स सांख्यो यः प्रसंख्यावान्स द्विजो यो न जन्मवान्॥
ज्ञानहीनो दुराचारो निर्दयो लोलुपाशयः।
दानयोग्यः कथं स स्याद्यश्चाक्षानुमतक्रियः॥
अनुमान्या समुद्देश्य त्रिशुद्धा भ्रामरी तथा।
भिक्षा चतुर्विधा ज्ञेया यतिद्वयसमाश्रया॥

इत्युपासकाध्ययने यतिनामनिर्वचनश्चतुश्चत्वारिंशः कल्पः।

तरुदलमिव परिपक्वं स्नेहविहीनं प्रदीपमिव देहम्।
स्वयमेव विनाशोन्मुखमवबुध्य करोतु विधिमन्त्यम्॥
गहनं न शरीरस्य हि विसर्जनं किं तु गहनमिह वृत्तम्।
तन्न स्थास्नु विनाश्यं न नश्वरं शोच्यमिदमाहुः॥
प्रतिदिवसं विजहद्बलमुज्झद्भुक्तिं त्यजत्प्रतीकारम्।
वपुरेव नृणां निगिरति चरमचरित्रोदयं समयम्॥
सविधा पापकृतेरिव जनिताखिलकायकम्पनातङ्का।
यमदूतीव जरा यदि समागता जीवितेषु कस्तर्षः॥
कर्णान्तकेशपाशग्रहणविधिर्बोधितोऽपि यदि जरया।
स्वस्य हितैषी न भवति तं किं मृत्युर्न संग्रसते॥
उपवासादिभिरङ्गे कषायदोषे च बोधिभावनया।
कृतसल्लेखनकर्मा प्राणायामायतेत गणमध्ये॥
यमनियमस्वाध्यायास्तपांसि देवार्चनाविधिर्दानम्।
एतत्सर्वं निष्फलमवसाने चेन्मनो मलिनम्॥
द्वादशवर्षाणि नृपः शिक्षितशस्त्रो रणेषु यदि मुह्येत्।
किं स्यात्तस्यास्त्रविधेर्यथा तथान्ते यतेः पुराचरितम्॥
स्नेहं विधाय बन्धुषु मोहं विभवेषु कलुषता महिते।
गणिनि च निवेद्य निखिलं दुरीहितं तदनु भजतु विधिमुचितम्॥

अशनं क्रमेण हेयं स्निग्धं पानं ततः खरं चैव ।
तदनु च सर्वनिवृत्तिं कुर्याद्गुरुपञ्चकस्मृतौ निरतः ॥
कदलीघातवदायुषि कृतिनां सकृदेव विरतिमुपयाति ।
तत्र पुनर्नैष विधिर्यद्दैवे क्रमविधिर्नास्ति ॥
सूरौ प्रवचनकुशले साधुजने यत्नकर्मणि प्रवणे ।
चित्ते च समाधिरते किमिहासाध्यं यतेरस्ति ॥
जीवितमरणाशंसे सुहृदनुरागः सुखानुबन्धविधिः ।
एते सनिदानाः स्युः सल्लेखनहानये पञ्च ॥
आराध्य रत्नत्रयमित्थमर्थी समर्पितात्मा गणिने यथावत् ।
समाधिभावेन कृतात्मकार्यः कृती जगन्मान्यपदप्रभुः स्यात् ॥

इत्युपासकाध्ययने सल्लेखनाविधिर्नाम पञ्चचत्वारिंशः कल्पः ।

---

अथ प्रकीर्णकम् ।

विप्रकीर्णार्थवाक्यानामुक्तिरुक्तं प्रकीर्णकम् ।
उक्तानुक्तामृतस्यन्दबिन्दुस्वादनकोविदैः ॥
अदुर्जनत्वं विनयो विवेकः परीक्षणं तत्त्वविनिश्चयश्च ।
एते गुणाः पञ्च भवन्ति यस्य स आत्मवान्धर्मकथापरः स्यात् ॥
असूयकत्वं शठता विचारो दुराग्रहः सूक्तविमाननी च ।
पुंसाममी पञ्च भवन्ति दोषास्तत्त्वावबोधप्रतिबन्धनाय ॥
पुंसो यथा संशयिताशयस्य दृष्टा न काचित्सफला प्रवृत्तिः ।
धर्मस्वरूपेऽपि विमूढबुद्धेस्तथा न काचित्सफला प्रवृत्तिः ॥
जातिपूजाकुलज्ञानरूपसंपत्तपोबले ।
उत्वान्त्यहं(?)युतोद्रेकं मदमस्मयमानसाः ॥
यो मदात्समयस्थानामवह्लादेन मोदते ।
स नूनं धर्महा यस्मान्न धर्मो धार्मिकैर्विना ॥
देवसेवागुरूपास्तिः स्वाध्यायः संयमस्तपः ।
दानं चेति गृहस्थानां षट् कर्माणि दिने दिने ॥



स्नपनं पूजनं स्तोत्रं जपो ध्यानं श्रुतस्तवः ।
षोढा क्रियोदिता सद्भिर्देवसेवासु गेहिनाम् ॥
आचार्योपासनं श्रद्धा शास्त्रार्थस्य विवेचि(च)नम् ।
तत्क्रियाणामनुष्ठानं श्रेयःप्राप्तिकरो गणः ॥
शुचिर्विनयसंपन्नस्तनुचापलवर्जितः ।
अष्टदोषविनिर्मुक्तमधीतं गुरुसंनिधौ ॥
अनुयोगगुणस्थानमार्गणास्थानकर्मसु ।
अध्यात्मतत्त्वविद्यायाः पाठः स्वाध्याय उच्यते ॥
गृही यतः स्वसिद्धान्तं साधुबुध्येन धर्मधीः ।
प्रथमः सोऽनुयोगः स्यात्पुराणचरिताश्रयः ॥
अहो मध्योर्ध्वलोकेषु चतुर्गतिविचारणम् ।
शास्त्रकरणमित्याहुरनुयोगपरीक्षणम् ॥
ममेदं स्यादनुष्ठानं तस्यायं रक्षणक्रमः ।
इत्थमात्मा चरित्रार्थोऽनुयोगश्चरणाश्रितः ॥
जीवाजीवपरिज्ञानं धर्माधर्मावबोधनम् ।
बन्धमोक्षज्ञता चेति फलं द्रव्यानुयोगतः ॥
जीवस्थानगुणस्थानमार्गणास्थानगो विधिः ।
चतुर्दशविधो बोध्यः प्रत्येकं····यथागमम् ॥
आदितः पञ्च तिर्यक्षु चत्वारि श्वभ्रनाकिनोः ।
गुणस्थानानि मन्यन्ते नृषु चैव चतुर्दश ॥
अनिगूहितवीर्यस्य कायक्लेशस्तपः स्मृतम् ।
तच्च मार्गाविरोधेन गुणाय गदितं जिनैः ॥
अथवा ।
अन्तर्बहिर्मलप्लोषादात्मनः शुद्धिकारणम् ।
शारीरं मानसं कर्म तपः प्राहुस्तपोधनाः ॥
कषायेन्द्रियदण्डानां विजयो व्रतपालनम् ।
संयमः संयतैः प्रोक्तः श्रेयः श्रयितुमिच्छताम् ॥

अस्यायमर्थः—कषन्ति संतापयन्ति दुर्गतिसङ्गसंपादनेनात्मानमिति कषायाः क्रोधादयः । अथवा यथा विशुद्धस्य वस्तुनो नैयग्रोधादयः कषायाः कालुष्यकारिणः, तथा निर्मलस्यात्मनो मलिनत्वहेतुत्वात्कषाया इव कषायाः। तत्र स्वपरापराधाभ्यामात्मेतरयोरपायोपायानुष्ठानमशुभपरिणामजननं वा क्रोधः । विद्याविज्ञानैश्वर्यादिपूज्यपूजाव्यतिक्रमहेतुरहंकारो युक्तिदर्शनेऽपि दुराग्रहापरित्यागो वा मानः । मनोवाक्कायक्रियाणामयाथातथ्यात्परवञ्चनाभिः प्रायेण प्रवृत्तिः ख्यातिपूजालाभाद्यभिवेशेन वा माया । चेतनाचेतनेषु वस्तुषु चित्तस्य महान्ममेदं भावस्तदभिवृद्धिविनाशयो महान्संतोषो वा लोभः ।

सम्यक्त्वं घ्नन्त्यनन्तानुबन्धिनस्ते कषायिकाः ।<br>
अप्रत्याख्यानरूपाश्च देशव्रतविघातिनः ॥<br>
प्रत्याख्यानस्वभावाः स्युः संयमस्य विनायकाः ।<br>
चारित्रे तु यथाख्याते कुर्युः संज्वलनाः क्षितिम् ॥<br>
पाषाणभूरजोवारिलेखाप्रख्यत्वभाग्भवेत् ।<br>
क्रोधो यथाक्रमं गत्यै श्वभ्रतिर्यङ्नृनाकिनाम् ॥<br>
शिलास्तम्भास्थिसार्द्रैष्मवेत्रवृत्तिर्द्वितीयकः ।<br>
अधःपशुनरस्वर्गगतिसंगतिकारणम् ॥<br>
वेणुमूलैरजाशृङ्गैर्गोमूत्रैश्चामरैः समाः ।<br>
माया तथैव जायेत चतुर्गतिवितीर्णये ॥<br>
क्रिमिनीलीवपुर्लेपहरिद्रारागसंनिभः ।<br>
लोभः कस्य न संजातस्तद्वत्संसारकारणम् ॥

किंच ।

यथौषधक्रियारिक्ता रोगिणो पथ्यसेविनः ।<br>
क्रोधलस्य तथा रिक्ताः समाधिश्रुतसंयमाः ॥<br>
मानदावाग्निदग्धेषु मदोषरकषायिषु ।<br>
नृद्रुमेषु प्ररोहन्ति न सच्छायोचिताङ्कुराः ॥



यावन्मायानिशालेशोऽप्यात्माम्बुषु कृतास्पदः ।<br>
न प्रबोधश्रियं तावद्धत्ते चित्ताम्बुजाकरः ॥<br>
लोमकीकसचिह्नानि चेतः श्रोतांसि दूरतः ।<br>
गुणा धन्यास्त्यजन्तीह चण्डालसरसीमिव ॥<br>
तस्मान्मनोनिकेतेऽस्मिन्निदं शल्यचतुष्टयम् ।<br>
यतेतोद्धर्तुमात्मज्ञः क्षेमाय शमकीलकैः ॥<br>
षट्स्वर्थेषु विसर्पन्ति स्वभावादिन्द्रियाणि षट् ।<br>
तत्स्वरूपपरिज्ञानात्प्रत्यावर्तेत सर्वदा ॥<br>
आपाते सुन्दरारम्भैर्विपाके विरसक्रियैः ।<br>
विषैर्वा विषयैर्ग्रस्ते कुतः कुशलमात्मनि ॥<br>
दुश्चिन्तनं दुरालापं दुर्व्यापारं च नाचरेत् ।<br>
व्रती व्रतविशुध्यर्थं मनोवाक्कायसंश्रयम् ॥<br>
अभङ्गानतिचाराभ्यां गृहीतेषु व्रतेषु यत् ।<br>
रक्षणं क्रियते शश्वत्तद्भवेद्व्रतपालनम् ॥<br>
वैराग्यभावना नित्यं नित्यं तत्त्वविचिन्तनम् ।<br>
नित्यं यत्नश्च कर्तव्यो यमेषु नियमेषु च ॥

तत्र दृष्टानुश्रावकविषयवितृष्णस्य मनोवशीकारसंज्ञा वैराग्यम् । प्रत्यक्षानुमानागमानुभूतपदार्थविषया संप्रमोषस्वभावा स्मृतिः । तत्त्वविचिन्तनं बाह्याभ्यन्तरशौचतपःस्वाध्यायप्रणिधानानि यमाः । अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा नियमाः ।

इत्युपासकाध्ययने प्रकीर्णकविधिर्नाम षट्चत्वारिंशत्तमः कल्पः ।

इत्येष गृहिणां धर्मः प्रोक्तः क्षितिपतीश्वरः ।<br>
यतीनां तु श्रुताज्ज्ञेयो मूलोत्तरगुणाश्रयः ॥

इत्थं मुनेर्द्वितयधर्मकथावतारं<br>
श्रुत्वा तदर्भकयुगाचरणप्रचारम् ।<br>
जग्राह धर्ममुचितं भवभाववृत्तेः<br>
सा देवता स नृपतिः स च पौरलोकः ॥

मुनिकुमारकयुगलमपि क्रमेण व्यतिक्रान्तबालकालं सुधाशनवेश्माधिरोहणं यतिविरतिविषभाषितानल्पविकल्पप्रासादकलशाधिरोहणमतिचिरं चरित्रमाचर्य

**अभयरुचि**रवापत्सानुजस्तत्र देवी-
वनरहसि विधाय प्रायमैशानकल्पम्।
धृतयतिपतिवृत्तो **मारदत्तो**ऽपि भूयः
समभजत तथैव स्वर्गलक्ष्मीविलासम्॥
रत्नद्वयेन समलंकृतचित्तवृत्तिः
सा देवतापि गणिनो महमाचरय्य।
द्वीपान्तरद्युनगजातजिनेन्द्रसद्म-
वन्दारुतानुमतकामपरायणाभूत्॥
ध्यानं सिद्धगिरौ विधाय स मुनिः **सम्यक्सुदत्ताह्वयः**
कल्पे लान्तवनाम्न्यजायत सुरः सर्वामरग्रामणीः।
अन्ये ये च **यशोमति**प्रभृतयस्तेऽपि प्रक्लृप्तव्रताः
संजातास्त्रिदशेश्वराः सुकृतिभिः संकीर्त्यमानश्रियः॥
जयतु जगदानन्दस्पन्दी जिनोक्तिसुधारस-
स्तदनु जयतात्कामारामः सतां फलसंगमैः।
जयतु कवितादेवी शश्वत्ततश्च यदाश्रया-
त्कृतिमतिरियं सूते सूक्तिं जगत्त्रयभूषणम्॥
अभिधाननिधानेऽस्मिन्**यशस्तिलक**नामनि।
**यशोधरमहाराजचरिते** स्तान्मतिः सताम्॥
एतामष्टसहस्रीमजस्रमनुपूर्वशः कृती विमृशन्।
कवितारहस्यमुद्रामवाप्नुयादासमुगं(?) च यशः॥
श्रीमानस्ति सदैव सङ्घतिलको देवो **यशः**पूर्वकः
शिष्यस्तस्य बभूव सद्गुणनिधिः **श्रीनेमिदेवाह्वयः**।
तस्याश्चर्यतपःस्थितेस्त्रिनवतेर्जेतुर्महावादिनां
शिष्योऽभूदिह **सोमदेव** इति यस्तस्यैष काव्यक्रमः॥



विद्याविनोदवनवासितकच्छुकेन
पुस्तं व्यलेखि विलसल्लिपिरच्छुकेन।
श्री**सोमदेव**रचितस्य **यशोधरस्य**
सल्लोकमान्यगुणरत्नमहीधरस्य॥

अपि च।

यस्याक्षरावलिरधीरविलोचनाभि-
राकाङ्क्ष्यते मदनशासने लेखेषु(?)।
तस्मै विवेकिषु न यच्छति रच्छकाय
को नाम लेखकशिखामणिनामधेयम्॥

शकनृपकालातीतसंवत्सरशतेष्वष्टस्वेकाशीत्यधिकेषु गतेषु(अङ्कतः८८१) सिद्धार्थसंवत्सरान्तर्गतचैत्रमासमदनत्रयोदश्यां **पाण्डवसिंहलचोलचेरम**प्रभृतीन्महीपतीन्प्रसाध्य **मेल्याटी**प्रवर्धमानराज्यप्रभावे **श्रीकृष्णराजदेवे** सति तत्पादपद्मोपजीविनः समधिगतपञ्चमहाशब्दमहासामन्ताधिपतेश्**चालुक्य**कुलजन्मनः सामन्तचूडामणेः श्रीम**दरिकेसरिणः** प्रथमपुत्रस्य श्रीम**द्वागराज**प्रवर्धमानवसुधारायां **गङ्गधारायां** विनिर्मापितमिदं काव्यमिति॥

इति सकलतार्किकलोकचूडामणेः श्रीम**न्नेमिदेव**भगवतः शिष्येण सद्योनवद्यगद्यपद्यविद्याधरचक्रचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्री**सोमदेव**सूरिणा विरचिते **यशोधरमहाराजचरिते यशस्तिलका**परनाम्नि महाकाव्ये धर्मामृतवर्षमहोत्सवो नामाष्टम आश्वासः।

वर्णः पदं वाक्यविधिः समासो लिङ्गं क्रिया कारकमन्यतन्त्रम्।
छन्दो रसो रीतिरलंक्रियार्थो लोकस्थितिश्चात्र चतुर्दशः स्युः॥

अब्दे सुधांशुयुगसिद्धिधरायुतेऽस्मि-
ञ्शुक्रानुजन्मनि शुभे युगपक्ष्मके च।
दर्शातिथौ गुरुदिने वरकाव्यमेत-
द्याशोधरीयमगमत्सुसमग्रतां हि॥